श्री

श्रीमद्भारतभूषण

पण्डित मदनमोहन मालवीयजी–

महाशयैः कृता ग्रन्थप्रशस्तिः ॥

महात्मनो गान्धे सत्यशोधनाख्यग्रन्थस्य श्रीमता होसकेरे नागप्प शास्त्रिणा कृतोऽनुवादो मया दृष्ट । गीर्वाणवाण्या परिष्कृतललितपदविभूषितोऽयमनुवाद सहृदयाना विदुषा विनोदाय भविष्यतीत्यह मन्ये । अनुवादकर्तुरय परिश्रम प्रशसनीय ॥

मालवीयो मदनमोहनः ।

मुम्बई श्रावण शु २

सवत् १९८८

---

## ॥ नायकप्रशंसा ॥

शमिनामग्रणीर्धीमानहिंसादिव्यशास्त्रभृत् ।
गुणरत्नमहापण्यो लोकसेवापरायण ॥ १ ॥

विप्रय ब्राह्मण पूज्य किंवा क्षत्रियपुङ्गव ।
उताहो वणिजा वर्य शूद्रो वा निजधर्मभाक् ॥ २ ॥

चतुर्णामपि वर्णाना गुणसम्पन्निकेतनम् ।
अनघाद्भुतचरित्रो महात्मा ब्रूहि कोन्वयम् ॥ ३ ॥

अहिंसामेव सश्रित्य हिंसा गन्धयितु क्षम ।
गाधिरेको महात्मा स्यात्कुटुम्बी जगतो मुनि ॥ ४ ॥

ग्रन्थानुवादक

पंडित होसकेरे नागप्प शास्त्री ।

# प्राक्कथनम्

"सत्यशोधनम्" इतिसंज्ञोऽयं ग्रन्थो गान्धीमहात्मनां "सत्यना प्रयोगो अथवा आत्मकथा" इत्याख्यस्य मूलतो गुजरातीभाषायां षट्त्रिंशद्वत्सरेभ्यः प्राग्विरचितस्यात्मचरित्रस्यानुवादः। मूलग्रन्थो जगत्यां नितरां लब्धवर्ण इति सुविदितमेव। प्रथितयशसोऽस्य ग्रन्थराजस्य पृथिव्यां विविधासु भाषासु व्यधायिषतानुवादा इति न विस्मयावहम्। नैतच्च चित्रं यद्भारतस्य प्रायोऽखिलासु लोकभाषासु विहितचरा अनुवादाः। आश्चर्यकुतूहलयोः स्थानं त्वेतदेव यदद्य यावन्न निरमायि केनापि पुस्तकस्यास्य भारतीयसंस्कृतिललामभूतस्य गैर्वाण्यामनुवादः परिकीर्तितायाः अप्यस्या भारतीयभाषाजनन्या अस्मत्संविधाने। इदं पुरःस्फुरद्वैकल्यमधुना प्रस्तुतेनानुवादेन निमील्यते।

"आत्मकथा" या आङ्ग्लभाषायामनुवादः स्व. महादेवदेसाईमहोदयैरक्रियत। स च स्वयं गान्धीमहात्मभिः परिशोधितोऽभूत्। परिशोधविधौ दत्तहस्ता आसन् श्रीनिवासशास्त्रिमहोदयाः। भूयिष्ठमनेनैवानुवादेन प्रसिद्धेः परां कोटिमध्यरोहदियमसाधारणी निर्मितिर्गान्धीमहात्मनाम्।

न पुनः साहित्यनिर्माणचिकीर्षया प्रचोदिता आसन् गान्धीमहात्मन आत्मकथां लिखन्तः। न च विरचितवन्तो ग्रन्थमिममात्मप्रकाशनार्थं न च स्वजनानामपरेषां वोपदेशाय। अद्वितीयमिदमात्मचरित्रं केवलमात्मपरीक्षाहेतुकमासीत्। परिणामतो ग्रन्थस्य शीर्षकमपि तमेवोद्भवं निर्मिमीषायाः प्रकटयति। एवंविधे सत्यपि निर्माणहेतौ ग्रन्थोऽयं साहित्यनिकषे परीक्षितप्रतीतानां ग्रन्थानां तुलामधिरोहति प्रणेतुः शीलस्य शुद्धिबलादनागसो वृत्तेश्च। प्रकृष्टोऽयं ग्रन्थो न शैलीगुणेभ्यः किन्तु शीलविलासेभ्यः। प्रणेतुर्विचाराचारयोर्निग्रहः प्रतिबिम्बित इव खलु तस्य मितवचनत्वे। लेखनशैल्या मर्म न सालङ्कृतिवाक्षु प्रत्युत सहमंवेदने प्रतिवसतीति प्रत्याययतीदं पुस्तकम्।

अनुवादकारैः स्व. पण्डित होसकेरे नागप्पाशास्त्रिभिरयमेवोररीकृतः साहित्यगुणः। अतः प्रसादगुणं पर्याप्तं पुष्णन्ननुवादोऽयं सहृदयमनांसि चिराय प्रीणयिष्यतीति दृढं विश्वसिमि।

नवदिल्लीतः<br>
ई. स. २३-४-६५

चिं. द्वा. देशमुख

## PUBLISHERS' PREFACE

The autobiography of Mahatma Gandhi is one of those rare world classics which never ceases to delight and grip the reader Aptly called "The Story of My Experiments with Truth", one of the hallmarks of the Gandhi autobiography is its utter simplicity and truthfulness

Gandhiji wrote it originally in Gujarati and it was serialized, as it came to be written, in *Navajivan* from November 1925 to February 1929 Simultaneously an English translation of it, done by Mahadev Desai was serialized in *Young India* during the same period

The first edition of the book, both in Gujarati and in English, appeared in 1927 Since then it has been published in at least eight Indian and six foreign languages

This first Sanskrit edition of the book is the result of some endeavours made by Sri R R Diwakar, himself a lover of the classic language The translation is the life work of the late Pandit Hosakere Nagappa Sastri, former Professor of Sanskrit and Kannada in the Khalsa College Bombay He began the work at an early age, but could apply himself wholly to it only during his later years He passed away at the age of 85, while the book was still in print, but with the satisfaction that his life-work was being crowned with success

We are specially indebted to Dr C D Deshmukh, Vice Chancellor of the University of Delhi for his Foreword in Sanskrit with which this book goes out into the world Among others whose cooperation has been invaluable in bringing out the volume, we must mention the unfailing courtesy of the translator's son and daughter and the competence with which Prof S A Upadhyaya and Prof N N Pandya helped us with the proofs

We believe it is a natural consummation that this great world classic should also thus become accessible to lovers of the classic world of Sanskrit

इतः प्राक् चतुःपञ्चवत्सरेभ्यः केषाञ्चित्परमाप्तानां मदीयसहोद्योगिनामिच्छानुरोधेन स्वीयामात्मकथामुपनिबद्धुं प्रतिज्ञामकरवम्। उपक्रान्तलेखनेन च प्रथमपुटं परिसमाप्य यावदावर्तितं पत्रं तावन्मोहमयीनगरे हस्ताहस्तिमहाक्षोभमसमुद्भवात्कार्यमेतद्विरतमभूत्। तदनन्तरवृत्तघटनाभिश्च पर्यन्ते 'यरवडा' कारागृहवासो मया लब्धः। तत्र मे सहबन्दिनामेकतमः श्रीजयरामदासार्यः सर्वथा कार्यान्तरं परित्यज्यात्मकथाप्रबन्धः परिसमापनीय इति मामबोधयत्। तदा कश्चिदभ्यासक्रमः पूर्वमेव मया निश्चित्याङ्गीकृतः। स यावन्न परिसमाप्यते तावदन्यत्र मनो न हि व्यापारयिष्यामीत्यभिधाय तं व्यसर्जयम्। यद्यहं क्रमावधिपर्यन्तं 'यरवडा' ख्यमेवाध्यासिष्ये तदावश्यमेवात्मकथां समापयिष्यम्। परन्तु तदुपक्रमादेकवत्सरात्प्रागेव मां न्यायनादमूमुचन्। तत्रभवद्भिः श्रीमदानन्दस्वामिभिः पुनरस्य कृते प्रबोधितोऽस्मि। अतो दक्षिणाफ्रिकादेशसम्बन्धिसत्याग्रहेतिहासस्य पूर्वमेव मया प्रणीतत्वादिदानीं स्वजीवनचरितस्य 'नवजीवन' वृत्तपत्रिकाया लेखनमङ्गीकर्तुमिच्छामि। स्वामिनस्तु पुस्तकरूपेण पृथक् प्रकाशनार्थं प्रथितव्यमित्यभिलषन्ते। परन्तु न तावदेव कर्तुं शक्यतेऽवसराल्लाभात्। प्रतिसप्ताहमेकप्रकरणक्रमेण लेखनं सुकरम्। 'नवजीवन' स्यार्थे प्रतिसप्ताहमवश्यमेव खलु यत्किञ्चिल्लेखितव्यम्। तदेतदात्मकथैवास्तु। इत्यावेदिताः स्वामिनस्तथेति प्रत्यपद्यन्त। अतोऽहमेव तल्लेखनपरिश्रमे प्रवृत्तोऽस्मि॥

परन्तु भगवद्भक्तः कश्चिन्मे सखा कदाचित्सोमवासरे मौनव्रतस्य मामुपसृत्यास्मिन्प्रसङ्गे स्वमनोगतान् मनोभावानित्थमभिव्याञ्जयत्। यथा—

कुतोऽस्मिन्साहसे प्रवृत्तो भवान्। ईदृक्प्रबन्धस्य पाश्चात्यदेशमात्रे खलु प्रथा दृश्यते। पाश्चात्यसंस्कृत्या परिवृत्तिमप्राप्तः स्वकथोपनिबद्धा पौरस्त्यो जनः कोऽपि मे न विदितः। अपि च किमित्यत्र लेखनीयम्। यदेवाद्य सिद्धान्ततया परिगृहीतं तदेव श्वः परित्यक्तमिति। यदेवाद्य कर्तव्यतया समुद्दिष्टं तदेव परेद्युरन्यथानुष्ठितमिति। नन्वेवं भवद्वाक्यमेव प्रमाणीकृत्य व्यवहरतो जनान्बहूनिदं मार्गाद्भ्रंशयेत्। तस्मादात्मकथालेखनं वरं विलम्बयितुम्। अथवात्यन्तमेव तत्परित्यागोऽपि युज्यत इति॥

सैष तर्को मे मनसि लग्नोऽभूत्। किन्तु नेदं ममोद्देश्यं यन्मदीयमितिवृत्तं प्रकाशनीयमिति। सत्यमन्विच्छता यानि मयानुष्ठितानि बहूनि साधनानि तत्कथा परं वर्णनीयेत्येव ममाशयः। मम जीवितस्येदृक्साधनानुष्ठानरूपाभिन्नत्वात्तदाख्यानं च जीवनचरित्रस्वरूपमेवापद्यत इत्येतदपरिहार्यम्। प्रतिपुटमेतत्साधनविषयमात्रप्रतिपादनेनापि ग्रन्थस्य चारितार्थ्यं सिध्यति। नास्मात्परं किंचिदवेक्ष्यते। एतत्साधनवृत्तान्तः पाठकानां न लाभप्रदो न स्यादिति प्रत्येमि। ये मया राजनीयविषयेषु

कृता प्रयत्नास्ते खलु न केवलमस्मिन् भरतखण्डे सर्वत प्रथामागता परमन्यत्रापि नागरिक-प्रपञ्चस्य सामान्यत सुविदिता एव भवन्ति। न पुनरेते बहुमन्तुमर्हा। एतैर्मे सम्पादितस्य 'महात्मे'तिविरुदस्य सम्भावनाप्यल्पीयस्येव। अनेकशस्तेन मे मनसि पर यातना समुपन्ना। न खलु स्मराम्येकमपि तादृश क्षण यत्र मया विरुदप्राप्तिहेतुकोऽभिमान कदाप्याकलित। किन्तु राजकीयक्षेत्रे कार्यनिर्वाहदक्षतोपलम्भकानि स्वमात्रविदितान्याध्यात्मिकसाधनानि वर्णयितव्यानीति मे कुतूहलमस्ति। वस्तुतस्तेषामाध्यात्मिकत्वे सति नम्रता पर वर्धेत एव। न च स्वप्रशसाया क्वचिदास्पद लभ्येत। यथा यथा स्वपूर्ववृत्तमभिसमालोच्य विचार क्रियते तथा तथा मम न्यूनता स्पष्टमुपलक्ष्यते॥

आत्मज्ञानमीश्वरसाक्षात्कार मोक्ष च लक्ष्यीकृत्य तत्साधनायैवत्रिंशद्वत्सरेभ्य प्रभृति प्रयतमान स्थितोऽस्मि। मम स्थितिर्गतिर्जीवित चेत्येतत्सर्वमप्येतदर्थमेव। मया क्रियमाणाना कथालाप लेखनराजकीयप्रयत्नाना च लक्ष्यमप्येतदेव। एकपुरुषेण यत्साधित तत्सर्वेषामपि शक्यसाधनमिति मम सार्वदिक प्रत्यय। अत एव मम साधनानि सर्वलोकप्रत्यक्षतयानुष्ठीयन्ते न तु निभृतम्। अनेन हेतुना तेषामाध्यात्मिकत्वस्य न कापि हानिरिति प्रत्येमि। केचिदर्था सुष्ठु स्वात्ममात्रसवेद्या भवन्ति। परात्मशोधन पुनरशक्यमेव। मया तु वक्ष्यमाणानि साधनानि न क्षेत्रविधानि। तानि नैतिकविचारसम्बद्धतया विज्ञायाध्यात्मिकानीत्युपचर्यन्ते। नीतिरेव हि जीवातुर्धर्मस्य॥

यथैव प्रौढाना तथैव बालानामपि सुखावगाह्या एव धार्मिकविचारा वृत्तान्तेऽस्मिन्नवरुध्यन्ते। यथेनानह तन्मयभावेन निरभिमानेन च वर्णयितु शक्नुया तदा मद्विधेन सिसाधयिषूणामितरेषा-मप्युपकारिणी सामग्री प्रबन्धेऽस्मिन्नुपरुध्यते। मदीयप्रयत्नेषु सम्पूर्णताभिमानो मम लेशतोऽपि नास्ति। वैज्ञानिकेन यद्यपि नियमपुरस्सर सावधान च शोधन विधीयते तथापि तत्तोऽभिव्यक्तार्थानसौ स्वन सिद्धान्तिव न मन्यते परन्तु कारणमद्धात्रे स्वमतमन्यथा नेतु न विकल्पते। स्वप्रयत्नाना विषयेऽप्यहमेतादृश एव। मया हि सुतरामात्मपरामर्श कृत। मनस्याविर्भूता सर्वेऽपि भावा परीक्षिता। तथाप्येतेषाम् प्रत्यक्षीकृताना परिणामानामध्ययच या स्वत सिद्धता ता नाह समर्थये। एतावन्मात्र तु मया समर्थ्यते यदेते परिणामा ममैवस्यात्यन्त-दृष्ट्या स्थिरतमाश्च प्रतिभासन्त इति। अन्यथा तानवलम्ब्य न किंचिदपि कार्यमनुष्ठातु शक्यते स्म। मया हि पदे पदे मत्यादि त्याज्यमिदमिति विविच्य मार्ग वस्तु पुरस्कृत्य तदनुसारेणैव प्रवृत्तम्। एवं सुविधिना प्रवृत्तिर्मम बुद्धस्तामनघ सम्मता यदि स्यात्तदा प्रस्तुतपरिणामा नान्यथापि निर्दोषा इति चावश्यमेवाभ्युपेतव्यम्॥

पर सिद्धान्तास्तत्वानि या यद्यहं जिज्ञासितुकामोऽभविष्य तदा स्वात्मकथालेखनप्रयत्न नैवाकरिष्यम्। वस्तुतस्तु तत्तत्प्रश्नेषु शास्त्रीयत्वेन मया यद्यदाचरित तत्तदेवाभिधातुमारेऽयमप्रवृत्तोऽस्मि। अत एवास्य सत्यशोधनमिति नाम दत्तमपि। सत्यभिन्नतया प्रतीयमानानामहिंसाब्रह्मचर्यादीनामपि

साधनविचारोऽत्र निरूप्यते । सत्यं हि सर्वव्यापकमिति मे प्रत्ययः । अत्र ह्यसङ्ख्यातानि तत्त्वान्यन्तर्भवन्ति । सत्यं नाम न केवलं वाङ्मयमेव । यथेदं वाङ्मयं तथा मनोमयं च । तथाप्येतन्न काल्पनिकं परं स्वतन्त्रं चिरस्थायि च । इत्थं च सत्यं नामेश्वरस्वरूपमेव । ईश्वरविभूतीनामनन्त्यात्तथादीश्वरशब्दस्य व्याख्यानान्यप्यनन्तानि भवन्ति । एतानि मामाश्चर्यचकितं कुर्वन्ति । क्षणमात्रं बुद्धिं व्यामोहयन्ति । किन्त्वहं सत्यमूर्तेरीश्वरस्योपासकोऽस्मि । स एव सत्यस्वरूपः शिष्टमखिलं मिथ्या । स तु नाद्यापि मया साक्षात्कृतः । तदर्थमेव नैरन्तर्येण शोधनपरायणोऽस्मि । तत्प्राप्तये ममात्यन्तप्रियाण्यपि वस्तूनि परित्यक्तुं सन्नद्धचित्तोऽस्मि । एतत्साधनयज्ञे मच्छरीरस्याप्याहुतीकर्तुं न विकम्पिष्ये । एवं हि मे श्रद्धा । तथापि यावदस्य स्वतन्त्रस्य चिरस्थायिनः सत्यस्य साक्षात्कारो मे न जातस्तावदन्तरात्मना मन्यते येनाद्य परिगृहीतं काल्पनिकं सत्यमेव प्रमाणतयाङ्गीकृत्य तदेव मार्गदर्शकं प्रवृत्त्याश्रयभूतं च विधाय जीवनयात्रा निर्वहणीया भवति । एषा सरणिरसिधारेव निशितसङ्कटापि मदनुभवे सुलभा च शीघ्रफला च दृष्टा । एतं मार्गं नियतमवलम्ब्य प्रवर्तमानस्य मे दोषा हिमालयस्थूला अप्यणुमात्रतया प्रत्यभासन्त । अयं मार्गं सम्भाविभ्यो महद्भ्यः सङ्कटेभ्यो मामरक्षीत् । अपि च मे प्रयाणं बहुशः सुकरमकरोत् । अस्मिन्मार्गे तस्य विशुद्धसत्यस्य प्रभामयूखा दूराद्दूरे मया प्रत्यक्षीकृता । ईश्वरस्त्वेक एव जगति सत्यं तदन्यदखिलमप्यसत्यमिति श्रद्धा मे मनसि दिने दिने दार्ढ्यमापद्यते । कथमियं श्रद्धा मयि स्थैर्यमापन्नेति जिज्ञासवोऽवगच्छन्तु । मदीयसाधनानामपि च मे दृढप्रत्ययानाममी भागिनो भवन्तु । यन्मया साधितं तद्बालापत्यस्यापि शक्यसाधनमिति प्रत्ययो मे प्रतिदिनं दृढीभवति । ईदृग्विश्वासदार्ढ्यस्य प्रबला सन्ति हेतवः । सत्यशोधनस्य साधनानि यथा कठिनानि प्रतिभान्ति तथा सरलान्यपि भवन्ति । अहङ्कारिणः पुरुषस्य यदसाध्यमिव प्रतीयेत तदेव बालकस्य सर्वथा शक्यं भवेत् । सत्यशोधकेन रजःकणादप्यतिकनम्रतासम्पन्नेन भवितव्यम् । लोकः किल रजःकणं पादेनाहन्ति । तस्यापि कणस्य स्वयमधोवर्ती पादाहतियोग्योऽहमस्मि इति सत्यशोधको यावन्न जानाति तावदस्योपरि स्वतन्त्रसत्यस्य प्रकाशो नाविर्भवति । इदं वसिष्ठविश्वामित्रयोः संवादे स्पष्टम् । क्रिस्तमतं धर्मं 'इस्लाममतं' च वाक्यमेतत्समर्थयतः ॥

यदि मदीयलेखनेषु यत्र क्वापि मे स्वाभिमानग्रहः पाठकानां प्रतिभासेत तदा नूनमवबोद्धव्यं यदस्य शोधनक्रमे किमप्यसाधु विद्यते । अनेन यत्प्रत्यक्षीकृतं सा मृगतृष्णिका न तु प्रकाश इति । प्रणश्यन्तु नाम परस्सहस्रा मादृशाः । सत्यं पुनर्विजयताम् । मद्विधानामल्पात्मनां योग्यतां परिशीलयद्भिर्भो खलु सत्यप्रमाणमणुमात्रमपि न्यूनीकृतं भूत् ॥

अनन्तराध्यायेषु प्रकीर्णाः सूचनाः प्रमाणत्वेन न कोऽप्यङ्गीकरोत्वित्याशास्यते । तथा च नाङ्गीकर्तव्यमिति मे प्रार्थना । अत्र वर्णितानि साधनानि दृष्टान्ततया परिगृह्य सर्वोऽपि स्वशक्ति-

बुद्धयनुरोधेन स्वेच्छया स्वीकर्तुमर्हति । एतावन्मात्रेणैव मदात्मकथार्थवत्सामग्रीकल्पत इति प्रत्येमि । तथा हि कथनीया रोप्यामासकरमिति न किञ्चिन्निगूह्यते न वा मन्दमुपवर्ण्यते । मम दोषापराधसर्वस्व पाठकाना परिचयविपयीक्रियते । सत्याग्रहस्य शास्त्रीयप्रयोगवर्णनमेव ममोद्देश्यम् । मदीयसौगुण्यख्यातिलोभस्तावल्लेशतोऽपि मे नास्ति । मद्योग्यतापरितोलनाया सत्यमिव निर्दाक्षिण्यवृत्तिर्भवितु यतिष्ये । अन्यैरप्येव वर्तितव्यमिति मदाशय । एवविधपरिमाणेनात्मान परिमाय निरूपयमाणेन मयापि श्रीसूरदासोक्तरीत्या वचनमित्थमुपन्यसनीय स्याद्यथा–

"क मसम कुटिल्खलाभिरो भवे-
त्तनुप्रद परिजहदुद्धतो जन " ॥ इति ॥

सम्यगह जाने यदीश्वरो मे जन्मदाता प्रतिश्वास च तच्चैतन्यमनुगतमस्तीति । तथाप्यस्मादेव दवीयसी मम स्थितिर्निरन्तर मे हृदय कृन्तनीव । तत्राद्दशस्थितेर्मम मनोविकारा एव निदानमित्यवगच्छामि । अद्यापि तान्दूरीकर्तु न पारये ॥

अलमिदानीमेतावतोपोद्घातेन । मच्चरित्रमग्रिमप्रकरणादारभ्यते ॥

साभ्रमत्याश्रम ।
२६।११।१९२५　　　　मो. क. गान्धी

## अनुवादकस्य विज्ञप्तिः

इह खलु माधुर्यगाम्भीर्यलालित्याद्यखिलातिशायि गरिष्ठगुणलोभादभिज्ञलोका सर्वेऽपि गीर्वाणवाणीं नितरामाद्रियन्ते । पुरा किल सेयमाविद्वत्पामर व्यवहारसाधनीभूयास्मिन् भारतमहीरङ्गे नरीनृत्यते स्म । विद्वज्जनकल्पद्रुमायमाणानामकबरशाहजहानप्रमुखमोगलसार्वभौमानामवस्थिति कालेऽपि सा परमोत्कर्षमपुष्यत् । परतु कालमहिम्ना परिहीयमानश्रद्धेषु वृत्तिकार्श्यमापन्नेषु स्वदेशसम्पद्रक्षणनिरभिमानेषु वैदेशिकवृत्तिवेषभाषाडम्बरपरिग्रहकुतूहलिषु जनेषु सेयममृतवाणी निरालम्बेव सीदन्ती न केवल विरलविरलप्रचारा समपद्यतापि तु लोकसामान्यस्याव्यवहार्यत्वान्मृतभाषेत्युपवर्ण्यमाना तन्महिम्न पौर्वापर्यविदां विद्याभिमानिनामतिमात्र विषादमावहति । तत्तादृशीयमखिलभाषाजननी संस्कृतवाणी सर्वोपायै समुज्जीवनीयेत्यत्र न कोऽपि विप्रतिपद्येत ॥

संस्कृतभाषाया शुद्धगद्यात्मका ग्रन्था किल विरला । तत्रापि दैनन्दिनव्यवहारोपयुक्तसुबोधवचनगुम्फिता प्रबन्धा सुतरा विरला । इतरभाषासु व्युत्पित्सूना गद्यमय्य कृतयो भूयस्य उपलभ्यन्ते । तत्तद्भाषापरिचयाय संस्कृतभाषायामिव काव्यनाटकाख्यानकव्याख्यानटीकादीनामध्ययनसापेक्षता प्रायशो नास्त्येव । भाषोज्जीवनाय गद्यप्रबन्धरचनाप्येक साधनम् । तादृशानेकविधप्रबन्धाना हि परिशीलनेन लोक क्रमेण संस्कृतभाषया व्यवहर्तुमपि पटु सम्पद्येत । किं च सुबोधगद्यकाव्यव्यासङ्गादधिगतभाषापरिचयस्य प्रौढकाव्यशास्त्रपाठाद्यभिरुचि स्वत शीघ्रमेव समुदेति । तस्मादादौ वचनकाव्यपरिशीलन विद्यार्थिनामावश्यक भवति ॥

अद्य खलु श्रीमद्भारतजननी गर्भशुक्तिमुक्तामणिरखिलजगद्विख्यातकीर्ति सुगृहीतनामधेयो महात्मा श्रीगान्धीमहाशय स्वयमनिच्छन्नपि लोकप्रार्थनया परवशीकृतात्मा सत्यशोधनाख्य स्वजीवनचरित स्वमातृभाषया निर्बबन्ध । तदेतत्कतिपयविदेशीयभाषासु भरतखण्डस्य सर्वास्वपि प्रधानभाषासु च परिवर्तित दरीदृश्यते । एवमस्मिन्ग्रन्थे सर्वलोकानामादरातिशयस्य हेतुरपि ग्रन्थकर्तुरीश्वरांशसम्भूतत्वमेवेति न कापि विचिकित्सा । तथा हि श्रीभगवद्गीताया "यद्यद्विभूतिमत्सत्व श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्व मम तेजोऽशसम्भवम् ।" इति भगवानाह । अत्रापि महात्मनि विभूतिमत्त्वश्रीमत्त्वोर्जितत्वादि गुणसम्पत्तिस्तत्कार्यत एव प्रत्यक्षीभवति । अतो देवांशसम्भूतस्य हि चरित देवभाषया जेगीयमानमखिललोकान्तरङ्ग सुतरामुत्तरङ्गयतीत्याकलय्य तद्व्याजेन गीर्वाणवाणीसमुज्जीवनप्रयत्नकणिकामपि बहुमन्यमान सत्यशोधनग्रन्थस्य गद्यात्मिका संस्कृतानुवादरचनामहमारम्भि । यद्ययमनुवादो मूलग्रन्थतात्पर्यमव्यभिचरन् यया कयापि विधया पाठकाना लेशतोऽप्युपयुक्त स्यात्तदानेन चरितार्थमात्मान मन्यतेऽय जन इति ॥

अपि च गांधीस्मारकनिधिनाम्न्या संस्थाया अध्यक्षपदमारूढ श्री आर. आर दिवाकर-महोदयो गांधेरात्मकथाया प्रथमभागमालोक्य संतुष्टोऽनुवादप्रगतिं प्रति बहुशो विचारयन्प्रोत्साहमदात् । ततोऽहमस्य सुतरां कृतज्ञोऽस्मि । इदानीं संपूर्णग्रंथानुवादं तस्य हस्ते प्रकटनाय समर्पयामि । स एप शीघ्रमेव प्रकाशं प्राप्य सफलं मे प्रयत्नं करिष्यतीति निरीक्ष्यते मया ॥

अभिनंदनीया इमे त्रय —

प्रथमो मे पुत्र आर एन. शास्त्री । अयं किल परित्यक्तापविद्ध संस्कृतानुवाद पत्रेभ्य समुद्धृत्य अनुवाद परिपूरयितु मां पुन पुन प्रेरयामास । इदानीं परिपूर्णं पश्यति ॥

द्वितीय प्रोफेसर जी एम काळे युवक । अयं किल मूलभाषान्तरं समीचेन स्वहस्ताक्षरेण व्यलिखत् ॥

तृतीया मम पुत्री प्रोफेसर कुमारी कमला एन् शास्त्री भाषान्तरीकरणवेलायामावश्यक विषयानन्विष्य शुद्धप्रतिलिपेस्तुलनेन अक्षरन्यासगोपादिकं समीकृत्य मया सह परिश्रम्य चरमव्यवस्थापने महत्साहाय्यं कृतवती ॥

पंडित होसकेरे नागप्प शास्त्री

# विषयानुक्रमणिका

## प्रथमो भागः

विषय॰

| अध्याय॰ | ग्रन्थपीठिका | पृष्ठसंख्या |
|---|---|---|
| १ | अन्वयविचार —जन्म | १ |
| २ | बाल्यम् | ३ |
| ३ | बाल्यविवाह | ४ |
| ४ | मम याजमान्यम् | ७ |
| ५ | उच्चविद्यालये | ९ |
| ६ | दु खकर प्रसङ्ग (१) | १३ |
| ७ | दु खकर प्रसङ्ग (२) | १५ |
| ८ | चौर्यम् । तस्य प्रायश्चित्तम् | १८ |
| ९ | असमञ्जनकस्य मृति —मम द्विगुणापमान | २० |
| १० | धर्मप्रभादर्शनम् | २२ |
| ११ | विदेशप्रस्थानसन्नाह | २६ |
| १२ | जातिबहिष्कार | ३० |
| १३ | इन्ग्लेण्टदेशप्राप्ति | ३२ |
| १४ | अह सर्वात्मना शाकाहारी सम्पन्न | ३५ |
| १५ | अहमाङ्ग्लेयनागरिको जात | ३८ |
| १६ | परिवर्तनम् | ४० |
| १७ | आहारविषयकशोधनानि | ४३ |
| १८ | लज्जाशीलता — मदाश्रय | ४६ |
| १९ | असत्याख्य विषम् | ४९ |
| २० | धर्माणा परिचय | ५२ |
| २१ | निर्बलाना बल राम | ५५ |
| २२ | नारायणहेमचन्द्र | ५७ |
| २३ | महावस्तुप्रदर्शनम् | ६० |
| २४ | सम्पादित 'ब्यारिस्टरपदम्' — तत किम् | ६२ |
| २५ | मदीयमितिकर्तव्यतामूढत्वम् | ६४ |

## द्वितीयो भागः

| | | |
|---|---|---|
| १ | श्रीमान् रायचन्दभाईमहाशय | ६९ |
| २ | संसारप्रवेश | ७१ |

३ मम प्राथमिको व्यवहार ७४
४ प्रथम आघात ७७
५ दक्षिणाफ्रिकाप्रस्थानसज्जीकरणम् ८०
६ नाताळदेशप्राप्ति ८२
७ केचिदनुभवा ८५
८ प्रिटोरियानगर प्रति गमनम् ८८
९ अतिशयितक्लेशपरम्परा ९२
१० प्रिटोरियानगरे प्रथमदिनम् ९६
११ ख्रैस्तमतेन सपर्क ९९
१२ भारतीयै सह परिचय १०२
१३ 'कुली' स्थितेरनुभव १०५
१४ व्यवहारस्यकृते सज्जीकरणम् १०७
१५ धार्मिकमथनम् ११०
१६ मनुष्यस्य प्रयत्नस्तावदेकस्थित दैवेच्छान्या ११३
१७ नाताळदेशे निवास ११५
१८ वर्णद्वेष ११९
१९ नाताल्भारतीयराष्ट्रमहासभा १२१
२० बालासुन्दरम १२४
२१ त्रिसुवर्णमुद्राशुल्कम् १२६
२२ तुलनात्मकदृष्ट्या धर्मज्ञानलाभ १२९
२३ गृहे याजमान्यम १३२
२४ स्वदेशयात्रा १३४
२५ हिन्दुस्थाने १३६
२६ राजनिष्ठा रोगिशुश्रूषा च १४०
२७ मोहमयीनगरे प्रचलितसभा १४२
२८ पूनाया मद्रासनगरे च १४५
२९ 'शीघ्रं निवर्तस्व' १४७

## तृतीयो भागः

१ झञ्झावातसूचना १५३
२ झञ्झावात १५५
३ परीक्षा १५८
४ झञ्झावातनिर्गमोत्तरवर्तिनी शान्ति १६१
५ बालशिक्षणम् १६४

६ सेवावृत्ति १६६
७ ब्रह्मचर्यम्—१ १६९
८ ब्रह्मचर्यम्—२ १७१
९ सरलजीवनम् १७४
१० 'बोअर'–युद्धम् १७६
११ नैर्मल्यसुधारणं क्षामनिवारणं च १७८
१२ हिन्दुस्थानं प्रति निवृत्ति १८०
१३ पुनश्च हिन्दुस्थाने १८३
१४ लेखकाः भृत्याश्च १८५
१५ महासभायाम् १८७
१६ लॉर्डकर्झनस्यास्थानम् १८९
१७ गोखलेमहाशयेन सहैकमास (१) १९१
१८ गोखलेमहाशयेन सहैकमास (२) १९३
१९ गोखलेमहाशयेन सहैकमास (३) १९५
२० काश्याम् १९७
२१ मोहमयीनगरे स्थितिग्रहणम् २०१
२२ धर्मसङ्कटम् २०३
२३ दक्षिणाफ्रिकादेशं प्रति पुनर्गमनम् २०६


## चतुर्थो भागः


१ कृतं सर्वं वृथा जातम् २११
२ एशियाखण्डादागता निरङ्कुशाधिकारिण २१३
३ अपमाननिगिरणम् २१५
४ कार्यविधानशीघ्रभाव २१६
५ आत्मविचारफलम् २१८
६ शास्त्रीययज्ञ २२०
७ मृत्तिकाजलचिकित्साप्रयोग २२२
८ प्रबोध २२३
९ अधिकारिभि कलह २२५
१० पवित्रस्मृति प्रायश्चित्तं च २२७
११ 'ऐरोप्यै' सह गाढ परिचय २२९
१२ 'युरोप' जनेन सम्पर्क २३१
१३ 'इण्डियन–ओपिनियन' २३३
१४ 'कुली' स्थानानि अथवा 'घेटो' २३५

| | |
|---|---|
| १५ असितप्लेगोपद्रव (१) | २३७ |
| १६ असितप्लेगोपद्रव (२) | २३८ |
| १७ धस्मर 'कुली' स्थानम् | २४१ |
| १८ एकपुस्तकस्येंद्रजालप्रभाव | २४२ |
| १९ 'फीनिक्स'—आश्रम | २४४ |
| २० प्रथमा रात्रि | २४६ |
| २१ पोलाकमहाशयो निमज्जन प्राप्नोति | २४७ |
| २२ देव क रक्षति | २४९ |
| २३ गृहकृत्यस्यैक दृश्यम् | २५२ |
| २४ 'झूलु' प्रकृतिक्षोभ | २५४ |
| २५ हृदयमन्थनम् | २५६ |
| २६ सत्याग्रहोदय | २५८ |
| २७ आहारनियमान् प्रक्रत्याधिकपरीक्षणानि | २५९ |
| २८ कस्तुरबाईमहाशयाया धैर्यम् | २६० |
| २९ आन्तर्वेश्मिक सत्याग्रह | २६३ |
| ३० आत्मनियन्त्रणामुद्दिश्य | २६५ |
| ३१ उपवास | २६६ |
| ३२ पाठशालाध्यापक | २६८ |
| ३३ अक्षरशिक्षणम् | २७० |
| ३४ आध्यात्मिकशिक्षणम् | २७१ |
| ३५ गोधूममध्यवर्ती यक्ष | २७३ |
| ३६ उपवास प्रायश्चित्तरूप | २७४ |
| ३७ गोखलेदर्शनार्थम् | २७६ |
| ३८ समरे मम भागित्वम् | २७७ |
| ३९ धार्मिकसमस्या | २७९ |
| ४० सत्याग्रहस्य सूक्ष्मचित्रम् | २८१ |
| ४१ गोखलेमहाशयस्यौदार्यम् | २८४ |
| ४२ पार्श्वशूलस्य चिकित्सा | २८६ |
| ४३ स्वदेश प्रतिगमनम् | २८८ |
| ४४ मम न्यायवादिवृत्ति प्रसंग किंचित्स्मरणम् | २८९ |
| ४५ विदग्धव्यवहार | २९१ |
| ४६ व्यवहारिण सहकारिणो जाता | २९३ |
| ४७ कथं व्यवहारी रक्षित | २९४ |

## पञ्चमो भागः


| | |
|---|---|
| १ मम प्रथमानुभव | २९९ |
| २ पुण्यपत्तने गोखलेमहाशयेन सहवर्तनम् | ३०० |
| ३ तन किं भर्त्सनम् | ३०२ |
| ४ शातिनिकेतनम् | ३०४ |
| ५ तृतीयश्रेणीप्रयाणिकाना सकष्टानि | ३०७ |
| ६ प्रेमोत्पादने प्रयत्न | ३०८ |
| ७ कुम्भमेल | ३१० |
| ८ लक्ष्मणसेतु | ३१३ |
| ९ आश्रमस्थापनम् | ३१५ |
| १० दुष्परीक्षोत्तरणम् | ३१७ |
| ११ कर्मकराणा निदेशयात्राप्रतिरोध | ३१९ |
| १२ नीलकलङ्क | ३२२ |
| १३ साधुशीलो विहारी | ३२४ |
| १४ अहिंसादेव्या समुखे | ३२७ |
| १५ व्यवहारो व्यपनीत | ३२९ |
| १६ सेवाकर्म | ३३२ |
| १७ मम सहचरा | ३३४ |
| १८ ग्रामान्त प्रवेश | ३३६ |
| १९ राज्याधिपतिर्यदा सज्जन | ३३८ |
| २० कर्मकरै सह सबन्ध | ३३९ |
| २१ आश्रमान्त सूक्ष्मनिरूपणम् | ३४१ |
| २२ उपवास | ३४३ |
| २३ खेडासत्याग्रह | ३४६ |
| २४ पलाण्डुचोर | ३४७ |
| २५ खेडासत्याग्रहस्यान्त | ३४९ |
| २६ ऐक्यार्थे प्रबलापेक्षा | ३५१ |
| २७ सैनिकाना प्रवेश | ३५३ |
| २८ मृत्युमुखे | ३५८ |
| २९ 'रोलेट'शासनमपि च मम धर्मसकटम् | ३६१ |
| ३० अद्भुतदृश्यम् | ३६४ |
| ३१ स्मरणीय सप्ताह (१) | ३६६ |
| ३२ स्मरणीय सप्ताह (२) | ३७० |

| | |
|---|---|
| ३३ हिमालयसदृशः प्रमादः | ३७३ |
| ३४ ' नवजीवनं' ' यंग इंडिया'च | ३७४ |
| ३५ पंजाबदेशे | ३७७ |
| ३६ ' खिलाफतं ' प्रति गोरक्षणम् | ३७९ |
| ३७ अमृतसरनगरस्य महासभा | ३८२ |
| ३८ महासभाप्रवेशः | ३८५ |
| ३९ ' खादी 'जन्म | ३८७ |
| ४० पर्यन्ते लब्धम् | ३८८ |
| ४१ शिक्षाप्रदं संभाषणम् | ३९२ |
| ४२ प्रवाहोद्गमः | ३९३ |
| ४३ नागपुरे | ३९५ |
| समाप्तिः | ३९७ |

## प्रथमोऽध्यायः

# अन्वयविचारः — जन्म

गान्धिवंशीया वणिग्वैश्यवर्णाः । तेऽमी पुरा स्तोकमापणान्प्रतिष्ठाप्य वाणिज्यं कुर्वन्ते स्मेति प्रतिभाति । किन्त्वस्मत्तातमारभ्य त्रिपौरुषपर्यन्तं काठियावाडदेशस्य कतिपयस्थानेषु प्रधानसचिवा बभूवुः । ओतागान्ध्यपराख्येनोत्तमचन्द्रगान्धिना सनागणिततत्वादिना भाव्यम् । तस्यास्य पोरबन्दरनगरस्थाने प्रधानपदमारूढस्य कश्चित्कूटनीतिप्रयोगात्तत्स्थानं परित्यज्य जूनागढनगरस्थानम् आश्रयं समन्वेषणीयोऽभूत् । तत्र तत्रत्यनवाबप्रभवे स सव्यहस्तेन सभाजनं चकार । तत्प्रेक्षकेण केनचित्पुरुषेण तादृशविनीतवर्तनस्य हेतुं पृष्टः स प्रत्याह— इतः पूर्वमेव मम दक्षिणो हस्तः पोरबन्दरनगरस्थानस्य वशवर्ती भवतीति ॥

मृतजानिरोतागान्धिर्द्वितीयां भार्यामुवाह । अस्य प्रथमभार्यायां चत्वारः पुत्राः द्वितीयायां च द्वौ बभूवुः । एते भिन्नोदरा इति बाल्ये नाहमवेदम् । न च तद्वृत्ततो वा प्रकाशितम् । षण्णामेषां करमचन्द्रगान्धिः कबागान्ध्यपराख्यः पञ्चमः । तुलसीदासगान्धिश्चरमः । द्वावेतौ भ्रातरौ पोरबन्दरनगरस्थाने क्रमशः प्रधानसचिवावभूताम् । कबागान्धिर्हि मे पिता । स च राजस्थानिकन्यायसभायाः सदस्योऽभूत् । सा सभा साम्प्रतं न विद्यते । पुरा खलु सा राज्ञश्च तद्वंश्यानां च विवादशमनस्थापनाय प्रतिष्ठापिता भूत्वा गौरवास्पदमासीत् । अपि च मे तातः कियन्तं कालं राजकोटनगरस्थाने कंचिद्वांकानेरनगरस्थाने च प्रधानसाचिव्यमकरोत् । अस्य निर्याणकाले राजकोटनगरस्थानाद्विश्रान्तिवेतनं लभ्यते स्म ॥

कबागान्धिरनुक्रमेण चतस्रो भार्या उदवहत् । द्वयोराद्ययोर्द्वे दुहितरौ चरमायां पुतलीबाईनाम्न्यामेका पुत्री त्रयः पुत्राश्च समजायन्त । एतेषामहमेवान्तिमः ॥

मम पिता कुटुम्बवत्सलः सत्यप्रियः शूरः उदारश्च । परन्तु कोपनः । मनाग्विषयासक्त इत्यपि वक्तव्यम् । स किल व्यतिक्रान्तचत्वारिंशद्वत्सरोऽपि चतुर्थीं भार्यामुपायंस्त । किन्तूत्कोचादिलोभपरवशो नाभूत् । यथा स्वकुटुम्बे तथा बहिरप्ययं निष्पक्षपातीति प्रथां सम्पादितवान् । अस्य राजनिष्ठा सर्वलोकविदिताभवत् । कदाचिदयं निजस्वामिनो राजकोटप्रभोष्ठाकुराह्वयस्य कृतापमानं ‘असिस्टेण्ट् पोलिटिकल् एजेण्ट्’ इति व्यपदिश्यमानं राजकीयप्रतिनिधिं प्रत्यवतस्थे । क्रुद्धेन तेन प्रतिनिधिना क्षमामभ्यर्थयस्वेति कबागान्धिः समादिष्टोऽपि न तथाकर्तुं प्रपद्यत । ततस्तेन कतिपयहोराकालपर्यन्तममानरक्ष्य स्थापितो ऽभवत् । परन्तु वज्रकठोरमनस्कतामस्यावलोक्य स राजकीयप्रतिनिधिर्विमुच्यतामयमित्यादिदेश ॥

मम पितुर्द्रव्यसङ्ग्रहलोभो न कदाप्यासीत् । तदस्माकं पैतृकं रिक्थमल्पमल्पमागतम् ॥

अनुभवमेकं मुक्त्वा तस्य शिक्षाक्रमः कोऽपि नासीत् । अध्ययनमपि भूयसा गुजराती-

पञ्चमश्रेणीपर्यन्तमेव तस्य प्रवृत्तम् । चरित्रभूगोलपरिज्ञानं तस्य न किञ्चित् । तथाप्यस्य व्यावहारिकज्ञानसम्पन्नत्वादतिसूक्ष्मप्रश्नानां निर्णये परं शतानां जनानां शासनेऽपि प्रगल्भोऽभवत् । तेन लब्धं धार्मिकशिक्षणमत्यल्पम् । तथाप्यसंख्यातैर्हिन्दुजनैर्देवस्थानगमनपुराणपुण्यकथाश्रवणादिभिर्यावती धार्मिकज्ञानसम्पत्तिरधिगन्तुं शक्या तावती तेनापि सम्पादिता । स्वस्य मरणात्कतिपयवत्सरेभ्यः पूर्वमस्मदीयकुटुम्बमित्रेण केनचिद्ब्राह्मणविदुषा बोधितो मे पिता गीतापारायणं कर्तुमारभत । अपि च प्रत्यहं पूजासमये कतिपयश्लोकानुच्चैः पठति स्म ॥

मम मातुर्विषये कदाप्यविस्मरणीयतया यन्मे मनसि निरूढस्थितं तत्खलु सा पतिव्रता स्त्रीति । सेयं धर्मभीरुः । प्रतिदिनमापूजापाठावसानं भोजनचिन्तामपि न करोति स्म । हवेल्याख्यवैष्णवदेवालयगमनं तस्याः प्रात्याहिककर्तव्येष्वेकतममासीत् । स्मारं स्मारमपि तस्याश्चातुर्मास्यव्रताचरणलोपं कदाचित्कोऽपि मम स्मृतिपथं नायाति । अत्यन्तकृच्छ्रव्रतान्यपि सा सर्वात्मना समाचरते स्म । आरब्धव्रतं व्याधिवशान्न कदापि पर्यत्यजत् । एकदा चान्द्रायणव्रतमाचरन्त्या रोगपीडितयाप्यपरित्यज्य व्रतं यथावत्समापितं मम स्मृतिमुपैति । द्वित्रदिनानि यावदुपवासो नाम तस्या ईषत्करः । चातुर्मास्ये प्रतिदिनमेकभुक्तं तयाभ्यस्तमासीत् । इयताप्यपरितृप्य चातुर्मास्ये क्वचिदेकाह्निकमुपवासं कुर्वती व्रतं समापयत् । अपरस्मिंश्चातुर्मास्ये सूर्यनारायणदर्शनं विना नाहारं स्वीकरिष्य इति व्रतमग्रहीत् । तदास्माभिर्बालकैर्बहिः स्थित्वा गगनेऽदृष्टिभिः सूर्यदर्शनं मात्रे निवेदयितुमवसरः प्रतीक्ष्यते स्म । वर्षाकालमध्ये सूर्यदर्शनमतीवविरलमिति सर्वेषामपि विदितमेव । बहुषु दिनेषु सहसा प्रत्यक्षीभवति सूर्ये यथा वयं 'अम्ब अम्ब सूर्यो दृश्यते' इति ससम्भ्रममवोचाम यथा च न यावदम्बा स्वयं द्रष्टुं बहिरुपधावति तावत्सूर्यस्तिरोहितोऽभूत् यथा चानेन तस्यास्तस्मिन्दिने भोजनाभावः प्राप्तस्तथा सर्वं स्मरामि । ईदृक् सम्भवेऽप्यस्मन्माता म्लानमुखी 'न कापि चिन्ता । ममाद्य भोजनं दैवाय न रोचते' इति वदन्ती स्वकार्यमनुष्ठातुं प्रतिनिवर्तते स्म ॥

सा व्यवहारकुशला । राजस्थानसम्बन्धिनामखिलवृत्तान्तानामप्यभिज्ञाभवत् । अस्या बुद्धिवैशद्यमवरोधजनस्य सुविदितमासीत् । अहमनेकशो बाल्ये वयसि जनन्या सह राजमन्दिरं गत्वा तत्र मन्माताठाकुरप्रभुजनन्योः सवृत्तं कथालापं श्रुतवानित्यद्यापि स्मरामि ॥

अनयोर्मातापित्रोर्गर्भादहं संवत् १८३५ भाद्रपदबहुलद्वादश्यां ( तथा च श्रीशालिवाहनशकस्य द्विनवत्युत्तरसप्तशताधिकैकसहस्रतमे शुक्लनाम्नि संवत्सरे भाद्रपदकृष्णद्वादशीतिथौ ) अधुना पोरबन्दरेतिप्रसिद्धे सुदामापुर्यां जन्माग्रहीषम् ॥

पोरबन्दरपुरे मया बाल्यमतिवाहितम् । कस्यांचित्पाठशालां प्रति मया गम्यते स्मेति स्मरामि । गणितकोष्ठकानां घटीकरणं मम क्लेशावहं संवृत्तम् । अपि च सहपाठिभिः सहास्मदुपाध्यायनिन्दाशीलोऽपि । इदं मुक्त्वा नान्यत् किञ्चिदपि स्मरामि । एतेन तदानीं मे बुद्ध्या मन्दया भवितव्यं स्मरणशक्त्या चाल्पया भाव्यमिति तर्कये ॥

द्वितीयोऽध्यायः

# बाल्यम्

यदा मे पिता राजस्थानिकन्यायसभासदस्यत्वमिच्छन् राजकोटं प्रति प्रस्थितस्तदा मया सप्तवर्षदेशीयेन भाव्यम्। तत्राहं प्राथमिकशालां प्रवेशितोऽभवम्। तत्रत्यानां पाठयितॄणामुपाध्यायानां नामानि सम्यगहं स्मरामि। यथा पोरबन्दरपुरे तथात्रापि मम पाठलेखनादिषु न कोऽपि विशेषो दृष्टः। न चाहमितरापेक्षया बुद्धिमत्तर इति गणनीयोऽभवम्। एतां शालामतिक्रम्य नगरान्तर्वर्तिन्यां पाठशालायां दिनकतिपयान्यध्यगीषि। तदनु द्वादशेवर्षे हाईस्कूलाख्यमुच्चविद्यालयमहं प्रविष्टः। अस्मिन्नल्पीयसि कालेऽस्मदुपाध्यायान् वा सहपाठिनो वा नाहमवञ्चयम् कदाप्यनृतमकथम्। अतीव लज्जालुतया परगोष्ठीं पर्यहार्षम्। मदीयपुस्तकान्येव मे सहायाः। घण्टावादनसमये पाठशालोपस्थानं शालाविरामे च गृहाभिमुखीभवनमेव हि मेऽभ्यासः। अन्यैः सह कथालापनिस्सहनं गृहं प्रति त्वरितगतिना गम्यते स्म मा कोऽपि दृष्ट्वा मां परिहसीदिति॥

उच्चविद्यालये मम प्रथमवर्षपरीक्षायां यद् वृत्तं सा घटनात्र कथनीया भवति। तदानीन्तनविद्याभ्यासपरीक्षको जाईल्सनामा समागतः। अस्मत्परीक्षणार्थं पञ्चशब्दानस्माभिरलेखयत्। तेष्वेकतमं 'केटल' ( kettle ) इति पदमासीत्। तस्य लेखनेऽहं स्खलितवानासम्। अस्मदुपाध्यायः स्वपादरक्षाग्रेण मत्पादमभिस्पृश्य स्खालित्यसूचनाय महान्तं यत्नमकरोत्। तथापि तमाशयं नाहमग्रहीषम्। मत्पार्श्वस्थितबालकस्य फलकं निरूप्य तल्लिखितानुसारेण स्खलितं मदीयं समीकर्तव्यमित्यस्मदुपाध्यायस्याशयोऽभवत्। तदेतन्मनसो मे नास्फुरत्। अन्योन्यलिखितानुकरणस्य निवारणमेवोपाध्यायानां कर्तव्यमिति मया हि गृहीतम्। गतेऽवसरे मन्ये सर्वेऽपि शब्दान्निर्दोषेण व्यलेखिषुः। अहमेक एव मूर्खः। ततः परमुपाध्यायो मम मूर्खतां दर्शयितुं प्रायतिष्ट। तेन तस्यैव वृथाश्रमो जातो न पुनर्मया लिखितानुकरणमशिक्षि॥

अथाप्येतेनोपाध्यायं प्रति मे गौरवं नाहीयत। ज्येष्ठगतानां हि दोषाणामदर्शनं तस्मिन् स्वभावसिद्धमासीत्। यद्यपि तदुपाध्यायस्येतरे दोषा मया क्रमेणोपलब्धास्तथापि तद्विषयभक्तिभावो मे नान्यथा पर्यवर्तत। ज्येष्ठानामाज्ञानुसरणमेवास्मत्कर्तव्यं न पुनस्तेषां चारित्रपरिशोधन-मित्ययमर्थो मम हृदयङ्गतोऽभूत्॥

एतस्मिन्नेव समये वृत्तं घटनाद्वयमन्यदपि मे मनसि रूढं भवति। शालापुस्तकानि मुक्त्वा पुस्तकान्तरपठनं मम नेष्टमासीत्। उपाध्यायाधिक्षेपवचनं वा मया तत्प्रतारणं वा न मे रोचते स्म। अतो मया दत्तान्दिनायपाठाः शिक्षणीया एवापठिताः। तथापि शिक्षणागतस्य मानसं सर्वदा पाठेष्वप्रमादीदिति वक्तुं न शक्यते। एवं मयि पाठ्यपुस्तकेऽपि

निरवधाने सति पुस्तकान्तर मया न हि पठ्यते स्मेति किमु वक्तव्यम् । किन्तु मम पित्रा क्रीतस्यापितस्य श्रवणपितृभक्त्याख्यनाटकग्रन्थस्योपरि कथमपि मे दृष्टिरपतत् । तमेन तत्परतयाहमपाठिषम् । तत्कालमेव ग्रामाद्ग्राम पर्यटन्त पुत्तलिकाप्रदर्शनोपजीविन केचिद-स्मद्ग्राममुपागमन् । तत्प्रदर्शितपुत्तलिकासु यात्रामुद्दिश्य स्कन्धावलम्बिनीयुग्मेन स्वमातापितरौ वहमानस्य श्रवणस्य प्रतिकृतिरेका व्यलोकि । एतत्पुस्तक पुत्तलिका चेति द्वय मिलित्वा श्रवणकथा मे मनस्यदाप्यप्रमार्जनीयामकरोत् । श्रवणस्य पितृभक्तिरादर्शरूपेण त्वया स्थापनी-येत्यात्मनात्मानमबोधयम् । श्रवणस्य मरणेन सन्तप्यमानयोस्तत्पित्रोर्विलापोऽद्यापि मे मनसि शोश्रूयत इव । मदर्थे पित्रा वितीर्णया रागमालिकया तमहमालापयम् । स रागो मे हृदय व्यलीनयदिव ॥

नाटकान्तरसम्बन्धिन्यपरा तत्सदृशी घटनैका सवृत्ता । एतत्कालमेव कयापि नाटक-मण्डल्या प्रयुक्त नाटकमवलोकयितु पितुरनुज्ञामभ्यगच्छम् । तन्नाटक हरिश्चन्द्रचरितात्मक-मासीत् । तदेतल्लोचनासेचनक मम मानसमकर्षत् । किन्त्वनुज्ञा कतिकृत्व प्राप्य गन्तु शक्येत । तथाप्येतन्निमित्त व्यसन नैव माममुञ्चत् । निस्सख्यवारमिद नाटक मया स्वय मनसा प्रयुक्त स्यात् । हरिश्चन्द्रेणेव सर्वैरपि कस्मात्सत्यवद्भिर्न भवितव्यम् । इत्येव प्रश्नो दिवानिश मे मनसि पुस्फोर्यते स्म । सत्यानुसरण सत्यरयार्थे हरिश्चन्द्रवन्निर्विकल्पेन मनसा क्लेशानामनुभव । इत्येव आदर्श एक एव मे मनस्याविरभूत् । हरिश्चन्द्रकथायामक्षरश सत्यत्वप्रतीतिर्मयासीत् । सर्वस्यास्य स्मरणमनेकशो मे नेत्राभ्यामश्रूणि निरसारयत् । कथाहरिश्चन्द्र कश्चिद्वस्तुतो न जीवन् स्थित इत्यधुना मम लौकिकज्ञानमाख्याति । किन्तु हरिश्चन्द्रश्रवणावुभावपि मम हृदये नित्यमनिहितौ स्त । अद्यापि तन्नाटकपाठेन पूर्ववन्मे हृदय विलीयत इत्यह जाने ॥

तृतीयोऽध्यायः

## बाल्यविवाहः

एतदध्यायलेखनसन्दर्भो मा सम्भवत्विति बहुतरमाशासमानस्याप्येतद्वृत्तान्त कथयिष्यतो मे विदितमेवेद यदेतत्सदृशास्तिक्तगुलिका इतोऽपि भूयस्यो मया निगरितव्या सन्तीति । यद्यह परमार्थेन सत्योपासकोऽस्मि तदा मे नान्या गति । मम त्रयोदशे वयसि सवृत्तविवाहवृत्तान्त-वर्णनरूप मनस्सन्तापकर कर्तव्यमिदानीं प्राप्तम् । मत्पोष्यवर्गस्थितानेतद्वयस्का बालकान्विलोक्य मद्विवाह स्मर्यते यदि तदाहमात्मन एव न केवल दयनीयो भविष्यामि परन्तु परिहृतबाल्यविवाहा

प्रचलद्वैवाहिककार्यविशेषैरेव विवाहो भावीत्यस्माभिरवगतम् । विवाह इत्येतेन धारणार्थे प्रशस्तवस्त्रलाभ । वाद्यतुमुलघोष । वधूवरप्रदर्शनोत्सव । महाभोजनसन्तर्पणम् । मया सह क्रीडितुमेककन्याप्राप्तिश्च । इत्येतावन्मुक्त्वा नान्यो विचारो मम मनस्यस्फुरत् । विषयसुखापेक्षा त्वन तत्रागता । मुक्त्वा कतिचिदवश्यवर्णनीयान्विषयानेतदधिकृत्य नान्यत्किमपि लिलेखिषामि । ते च विषया अग्रे निरूपयिष्यन्ते । तेऽप्येतद्वृत्तान्तलेखने यन्मम मुख्योद्देश्य तस्य भूयसा नोपकारका भवेयु ॥

साग्रज मां राजकोटात्पोरबन्दरपुरमनैषु । सन्ति केचिच्चरमदश्यात्पूर्वभाविनो हरिद्राचूर्णेन सर्वाङ्गलेपादिका विनोदावहा विषया । ते पुन सर्वे वर्णयितु न शक्यन्ते ॥

अस्मत्पिता प्रधानसचिव इति यद्यपि सत्य तथापि किमय न परोपजीवी । ठाकोरप्रभोर्विश्वासपात्रतया तस्य परतन्त्रता समधिकैवेति वक्तव्यम् । अतिप्रत्यासन्नेऽपि विवाहदिवसे ठाकोरप्रभुरस्मत्पितर नैवाऽमुञ्चत् । ततो मुक्तस्यास्य दिनद्वयात्पूर्वमेव यथा प्रयाण समाप्येत तथा मार्गयानानि पृथगस्थाप्यन्त । परन्तु किमनेन । अन्या ह्येवासीदीश्वरेच्छा । सुदामापुर राजकोटाद्दिशा युक्तैकशतपाषाणदूरे वर्तते । शकटेन पञ्चभिर्दिनैर्निर्वर्त्ये प्रयाणम् । तदेतत्प्रयाणमस्मत्पिता त्रिभिरेव दिनै समापयत् । किन्तु तृतीयदिवसे यान पर्यस्तपतितमभूत् । एतेन तस्य बहूनि क्षतान्यजायन्त । असौ सर्वाङ्गबद्धपट्टक सदनमागत । एतेन तस्य चास्माक चोत्साहो यद्यप्यर्धे न ह्रासमगच्छत् तथापि विवाहो निर्वर्तनीय एवासीत् । अशक्य खलु लग्नान्तरस्थापनम् । तस्मिन्काले पितृक्षतनिमित्त मे दु ख बाह्यविनोद सम्भ्रममध्ये सर्व विस्मृतमभूत् ॥

अह मातापित्रोरतीव भक्तिमानासम् । किन्तु मे भोगासक्तिरासीत्ततोऽपि नाल्पीयसी । मातापित्रो शुश्रूषणेन जनेन परित्यक्तनिजसुखसन्तोषेण भवितव्यमिति नाहमद्याप्यवेदम् । भोगासक्तस्य मे दण्डार्पणेन महती काचिद्घटना मम मानसमद्यापि कृन्ततीव । एतद्वृत्तान्तस्तु पुरस्तान्निरूपयिष्यते । श्रीनिष्कुलानन्दो गायति यथा—

भोगतृष्णामनिर्धूय भोग्यमात्र विमुञ्चत ।
त्यागोऽयं सर्वथा न स्याच्चिरस्थायीति निश्चय ॥ इति ॥

अयञ्च शोचनीयोऽयं वृत्तान्तो गीतिमिषेण स्वयं पठतो वा गीयमानमितरैः शृण्वतो वा मम हृदयकुहरं प्रविश्य तत्स्मरणेन मानसमसुखं करोति ॥

व्रणपीडितोऽपि मे पिता वेदनां तिरस्कृत्य विवाहं साद्यन्तं निरवाहयत् । विवाहे सर्वेष्वंगेषु तत्तद्विधिकर्माणि यत्र यत्र अनुष्ठितानि तानि यद्यपि मे मनश्चक्षुषः पुरस्तात् चित्रितानि इव सन्ति । किन्तु तन्मात्रविवाहेऽतो कदाचिदपि निरुद्ध्य मनस्य निर्धारितरूपाभीति न हि स्मरणं मया व्यचिन्ति । तदानीं सम्भवतोऽपि सर्वेऽपि सुसज्जिता लोकाःसदा

सुखदायकश्चेति प्रत्यभासन् । किं च ममाप्यामीत्परिणयनकुतूहलम् । अस्मत्पित्रानुष्ठितस्य सर्वस्यापि निर्दोषत्वेन मया गृहीतत्वात्सर्वमिदानीं स्पष्टमेव स्मर्यते । यथावाभ्यां विवाह-वेदिकायामुपविष्टं यथावाभ्यां सप्तपदी रचिता यथा नवोढाभ्यामावाभ्यां कुमाराग्यमतुर गोपूनभस्यविशेषोऽन्योन्ययोर्मुखं वियामि यथा चावाभ्यां सहावस्थानमारब्धं तथा सर्वमेतदिदानीमपि मे मनसि चित्रयितुं शक्नोमि । अहो सा प्रथमा रात्रिरत्यन्तमुग्धापत्ययोरायति परिज्ञानशून्ययोर्द्वयोरावयो सत्मा ससारसागरे निपातं नमनानि । प्रथमरात्रौ यथा वर्तितव्यमिति प्रजावत्या सम्यगुपदिष्टोऽभवम् । मम भार्या तु कयोपदिष्टेति न जाने । मया सा न तत् पृष्टा । न चाद्य मे तस्य जिज्ञासा । अद्यावन्योन्यमुखदर्शनेऽप्यधीरा बभूवेति पाठकैर्नैत्नगाय विज्ञायेत । लज्जा हि प्रबला स्थिता । कथमहं तया सम्भाषेय । किं वा सम्भाषितव्यम् । अस्मत्प्रजावत्या यदुपदिष्टं तेन नातिदूरमाकृष्टोऽभवम् । किन्त्वेवंविधप्रसङ्गेषु परोपदेशो नावश्यकः । प्राग्जन्मवासना प्राबल्यादैहिकशिक्षणसापेक्षता नास्त्यत्र । शनैः शनैरन्योन्यमन्तरो जातः । परस्परमालपितुं प्रावर्तावहि । उभावपि समानवयस्कावभव । तथापि शयनिकारहने न मया कृतो विलम्बः । वृत्तान्तोऽयमुत्तराध्याये वर्णयिष्यते ॥

चतुर्थोऽध्यायः

## मम याजमान्यम्

**मद्विवाहसमकाले** दाम्पत्यस्नेह कुटुम्बनिर्वाहक्रमो बाल्यविवाह इत्येतदादिविषयप्रतिपादका लघुप्रबन्धा प्रत्येकं पञ्चाणकेन वा काकिण्या (न हि सम्यक् स्मर्यते) व्यक्रीयन्त । तेषां यत्पुस्तकं मे हस्तगतं तदामूलान्तं मया पठ्यते स्म । यत्तावन्ममानभिमतं तस्य निरसनं यत्पुनरभिमतं तस्य परिग्रहणमित्येवा हि मे पद्धतिरासीत् । भार्या यावज्जीवं पत्या नातिचरितव्येत्यय तद्ग्रन्थोपदेशो मम मनस्यनपायितया निरूढोऽभवत् । किं चार्जवस्य मम नैसर्गिकत्वाद्भार्याद्रोहित्वसङ्कल्पस्यापि नावकाश आसीत् । तथापि तस्मिन्बाल्ये वयसि तादृशप्रवृत्तेर्वा कुत सम्भवः ॥

एतेन हि कश्चिदसमपरिणामो जातः । मया यथैकपत्नीव्रतत्वेन भवितव्यं तथा मत्पत्न्यापि मां प्रति ननु तथैव वर्तितव्यम् । एवं चिन्तयतो मे हृदयमीर्ष्या प्राविशत् । तया हि पतिपरायणया भवितव्यमित्याकारकम्यठे सा मया पतिपरायणा स्थापनीयेति ग्रहो मामाक्रमीत् । तथा तस्याः स्थापनाय तदन्ववेक्षिणा मया भाव्यमित्यचिन्तयम् । मद्भार्यायाः पातिव्रत्य प्रति

शङ्कितु लेशतोऽपि कारण नासीत् । परन्त्वसूया कारणानि नापेक्षते । तदीयगतागतमवश्यं मया ज्ञातव्यम् । तस्मान्मदनुज्ञा विना तया क्वापि न चलितव्यम् । ईदृग्वृत्तिरावयोर्मध्ये दु खकर कलहबीजमास्सीत् ॥

अनुज्ञा विना क्वापि न गन्तव्यमिति नियमस्तस्या कार्यते स्म । कस्तुरबाई त्वनीदृग्य सनसहिष्णुर्बालिका । सा हि मदनुज्ञा विनैव स्वेच्छया यथेष्टदेश यथेष्टकाल च सञ्चरितुमारब्धवती । यथा यथा ता निरोद्धु मया यत्न कृतस्तथा तथा,तदीया स्वैरप्रवृत्तिरधिकाधिका भवति स्म । एतेन मे क्रोधोऽवर्धत । अनेन हेतुना बालदम्पत्योरावयोरन्योन्यमनालापस्तु प्रात्याहिक क्रमोऽभवत् । कस्तुरबाय्या स्वातन्त्र्यप्रदर्शने न कोऽपि दोष इत्यधुना विस्पष्टमवगम्यते । देवतादर्शनार्थं वा सखीदर्शनार्थं वा जिगमिषोरात्मन प्रतिरोध निष्कलङ्कहृदया बाला कथ वा परिमृष्येत् । तन्नियमने यद्यस्ति ममाधिकारो मन्नियमनेऽपि तस्या स कुतो हि न स्यात । सर्वमेतदद्य मे सुविदितमेव । तदानीं तु ममप्रभुत्व प्रदर्शनीयमासीत् ॥

एतेन पाठका अस्मत्संसारे माधुर्यलेशाभाव नियमन क्लेश च मा खलु शङ्कन्ताम् । मम नैष्ठुर्यस्य हि मम प्रेमैव कारणम् । मम प्रेयसी लोकनिदर्शनभूता करणीयेति मामकोऽभिलाष । तया विशुद्धजीविनया भा यम् । मया शिक्ष्यमाण तयापि शिक्षणीयम् । मया पठ्यमान तयापि पठनीयम् । उभयोर्जीवितेनैकरूपेण भवितव्यम् । एषा हि मे महती प्रत्याशाभवत् ॥

न जाने कस्तुरबाई च मत्सदृशाभावनामपुष्यत्र वेति । सा ह्यशिक्षिताक्षरा । ऋजुस्वभावा स्वातन्त्र्यप्रिया समारब्धकार्यसाधनच्छन्दवती मितभाषिणी च ( इदमस्तु वा मा प्रतीति ) । निजमाद्य न तस्या सन्तोषजनकमासीत । मदीयपठनशीलत्वेन तस्या पिपठिषा न जनिता । तस्मादीदृशी प्रत्याशा सर्वापि मदेकनिष्ठैव । सैवा स्त्री मम प्रेमसर्वस्वस्य केन्द्रस्थानमभूत । तत्प्रेम्णा प्रति जनितव्यमित्येव मे लालसा । यद्यपि प्रेम्ण पारस्पर्याभावेऽपि द्वयोरेकतरस्मिन्नस्य जागरूकत्वात् सुखच्छायारहितस्यैवान्तिकदु खस्यानवकाश ॥

सा मे परमप्रेमपात्रमित्येव वक्तव्यम् । पाठशालायामपि तद्वृत्तान्त एव मे मनस्यस्फुरत् । निशागमप्रतीक्षस्य मम कदा पुनर्द्वयोर्मेलन भविष्यतीत्यजस्रविसर्पिणी चिन्ता । वियोगो दुस्सह प्रत्यभासीत् । तत्तत्कथालापप्रसङ्गेन ता रात्रौ चिरायाहमजागरयम् । एव गाढासक्तिमतो मे कर्तव्यपरायणतापि ना भविष्यद्यदि नूनमह व्याधिपीडित सन्नकाल मृत्युना कवलितोऽभविष्यम् । अथवा भुवो भारभूत सन् जीवित्वा निरवाहयिष्यम् । परन्तु तत्त दिवसकृत्यानि मनस्यवश्यकर्तव्यान्यासन् । असत्यभाषणस्य तु कथापि म न सम्भाव्यत स्म । एव सत्यानुवर्तिना मया वृजिनि सङ्कटानि समुत्तीर्णानि ॥

कस्तुरबाय्या नि ... । सा विद्या दिदापयिषयैव यदप्या ... बुनोऽस्यावकाशा ददात् । किंच सा निर्बन्धेन

पाठयितव्यामभवत् । किन्त्वेतदपि रात्रिवेलायामेव शक्यमासीत् । अस्मज्ज्येष्ठसमक्षं दिवा तस्या दर्शनेऽप्यलभ्ये सति का कथा तया सम्भाषणस्य । तत्काले काठियावाडदेशे विचित्रो निरर्थकोऽनागरिकश्च 'घोंघा'ख्यो योषावगुण्ठनसम्प्रदाय प्रचरति स्म । सोऽद्यापि भूयसा विद्यत एव । एवं च तदध्यापनाय सर्वत्र प्रतिबन्धकमासीत् । एभि कारणैस्तास्मद्भार्याया कस्तूरबाय्या पाठशिक्षणाय मत्कृता प्रयत्ना सर्वेऽपि निष्फला सञ्जाता इत्यभ्युपगन्तव्यम् । यावदह विषयनिद्रात प्रबोधमाप्तस्तावत्सार्वजनिककार्येषु प्रविष्टोऽभवम् । तस्मात्पर्याप्तोऽवकाशस्तदानीमपि नालभ्यत । शिक्षकद्वारा तदध्यापनप्रयत्नश्च सफलो नाभवत् । इदानीं कस्तुरबाई कथञ्चित्सामान्यपत्रादि लेखितु सुबोधगुजरातीभाषा वाचयितु च जानाति । यद्यह पुरा मोह दूषितो नाभविष्य तदा सा विदुषी समभविष्यदिति प्रत्येमि । अपि च तस्या पठनालस्यत्व सुजय्यमभविष्यत् । निष्कलङ्कप्रेम्णैव किंचित्साध्यमस्तीत्यह जाने ॥

मम विषयासक्तिमत्त्वेऽपि तद्दुष्परिणामस्यानेकं कारणमिति पूर्वमेव सूचित भवति । अथान्योवृत्तान्त कश्चिदुपवर्णनीय । विशुद्धसङ्कल्पान्महात्मभगवानेव रक्षतीत्येतद्बहुभिर्निदर्शनैर्मम दृढत भवति । हिन्दुजनेषु यत्र हानिकरी बाल्यविवाहपद्धति प्रचरति तत्र हानिह्रासकर सम्प्रदायोऽप्येको दृश्यते । बालदम्पत्योश्चिरसहवास तन्मातापितरौ परिहारयत । अर्धसमय नार्या स्वमातुर्मन्दिर एवातिवाहयति । अस्मद्विषयेऽपि तथैव जातम् । विवाहोत्तर पञ्चसु वर्षेषु (त्रयोदशादष्टादशपर्यन्त) आवयो सहावस्थानकाल साकल्येन वर्षत्रयादूर्ध्वं न भवेत् । यावदह वसतौ षट्को वा मासा व्यतीतास्तावन्मे भार्यां तत्पितृगृह नेतु जन आगच्छति स्म । ममेदमतिमात्रमप्रियमासीत् । तथाप्यनेन द्वावस्मा दुष्परिणामाद्रक्षितावभूव । अष्टादशे वयसि मयेङ्ग्लेण्डदेश प्रतिप्रस्थितत्वादावयोश्चिरभावी वियोग समजनि । इद च नौ श्रेयस्करमेव समवृत्तम् । विदेशप्रवासात्प्रत्यावृत्तस्यापि मे भार्यया सह स्थिति षण्मासतोऽधिका नासीत् । यन्मया राजकोटान्मोहमयीनगर मोहमयीतो राजकोटपुरञ्च भूयो भूयो गतागत कर्तव्यमापतितम् । तदनु दक्षिणाफ्रिकाखण्डयात्राप्रसङ्ग सम्प्राप्त । अत्रान्तरेऽह भूयसा विषयनिद्राया प्रबुद्धोऽभवम् ॥

पञ्चमोऽध्याय:

# उच्चविद्यालये

निरूपितपूर्वं हि यन्मदीयविवाहकाले मयोच्चविद्यालयेऽधीयते स्मेति । त्रयोऽपि भ्रातरो वयमेकस्यामेव पाठशालायामध्यैष्महि । मम ज्येष्ठभ्राता परमोर्ध्वश्रेणीमध्यास्त । सहोदरस्त्व

परोऽग्रजो मदग्रिमकक्ष्याया स्थित । विवाहादनयोरेकेकवर्षकालस्य वृथायापन फलितम् । मदग्रजस्य तु तत्परिणामो भूयोऽनिष्टप्रापकोऽभवत् । यदनेन विवाहोत्तर विद्याभ्यासोऽत्यन्तमेव परित्यक्त । ईदृग्दुष्परिणामभाज कियन्तो बालका सन्तीति परमात्मैकवेद्यमिदम् । विवाहोत्तर विद्याभ्यासो नाम हिन्दुजनससारमात्रगोचर ॥

मम तावदध्ययनक्रम प्रचलति स्म । उच्चविद्यालयेऽह न भृशतर यातिमगमम् । उपाध्यायप्रीतिमह सदा समपीपदम् । प्रतिवत्सर बालकाना चारित्र्यविद्याभ्युदयविषयकाणि योग्यता पत्राणि तन्मातापितॄणा सकाश प्रेष्यन्ते स्म । तत्र ममाध्ययनक्रमो वा शीलं वा न हि प्रशस्तमिति न कदापि ख्यापितोऽस्मि । द्वितीयश्रेणीपरीक्षायामुत्तीर्णेन बहुमानमप्यलभ्यत । पञ्चमवर्गे रूप्यकचतुष्टयवेतन षष्ठे दशरूप्यकाश्च प्राप्यन्ते स्म । अत्र मद्योग्यतापेक्षया नियतिबलमेव प्राप्तिकारणमिति वक्तव्यम् । यदेतद्वेतन काठियावाडदेशान्तर्वर्ति सोरठजनपदीयविद्यार्थिप्रवरेभ्य एव प्रदीयते स्म । प्रस्तुतश्रेण्या सम्भूय चत्वारिंशति पञ्चाशति वा स्थितेषु विद्यार्थिषु सोरठजनपदीया कियन्तो निवेरन् ॥

एतावत्तु मया स्मर्यते यदहमतीव बुद्धिशालीति न मे सम्भावनासीत् । वेतनस्य वा बहुमानस्य वा प्राप्तौ ममाश्चर्यं जायते स्म । परन्तु मदीयचारित्र्यमधिकृत्य सुतरामह जागरूकोऽभवम् । चारित्र्यविषये हि दोषलेशेऽपि भासमाने मम नेत्राभ्यामश्रूणि प्रावर्तन्त । मदनुष्ठितकार्येषु स्खालित्यदर्शिभि शिक्षकै कदाचित्क्रियमाणोऽधिक्षेप सर्वदा मे दुस्सहोऽभवत् । अहमेकदा प्रहारमवापमिति ज्ञप्तिरस्ति । प्रहारप्राप्त्या न तावन्मे दु खमभूत् । परमह दण्डनार्ह इति परिगणितोऽभूवमित्येव मे महतीं व्यथामजनयत् । अह भृशमरोदिषम् । इद हि मे प्रथमे वा द्वितीयस्मिन्वा वर्गे स्थितस्य सवृत्तम् । सप्तमश्रेणीमधिष्ठिते मयि मद्वृत्त एतादृश प्रसङ्गोऽन्यो विद्यते । तत्काल दोराबजी एदल्जी गिम्याख्या अस्मन्मुख्योपाध्याया आसन् । एते विद्यार्थिनामभिमता । यदेते नियमाञ्शिष्टशिक्षिण्येन प्रचालयन्ति स्म । स्वकार्याणि यथावदन्वतिष्ठन् । पाठान्सम्यगध्यापयन् । ऊर्ध्वश्रेणीगताना विद्यार्थिनामङ्गसाधन क्रिकेटाख्यकन्दुकखेलन चावश्यकर्तव्यतया व्यधिषत । ममैतद्वयमपि नेष्टमासीत् । यावदय नियमो व्यधीयत तावन्मयाङ्गसाधनाय वा क्रिकेटफुटबोलखेलनाय वा न गम्यते स्म । एव गमनवैमुख्यस्य मदीयलज्जाशीलत्वमप्येक कारणमासीत् । ईदृग्वर्तनस्यासाधुत्वमधुना मे स्पष्टमाभाति । तदानीं तु पठनव्यायामयोर्नास्ति सम्बन्ध इत्यसद्भावनामहमकल्पयम् । परन्तु यथा बुद्धिविकासस्य तथा शरीरपुष्टेरपि शिक्षणक्रमे प्रामुख्यस्थान प्रदेयमित्यहमिदानीं जाने ॥

व्यायामार्थमगमनेन न कापि मे हानि सवृत्ता । यच्चिरपठितपूर्वं हि मया यद्विशुद्धवायुप्रदेशेषु सञ्चरण प्रशस्तमिति । मम तत्प्रिय जातत्वात् सञ्चरणमहमभ्यस्तवान् । अद्यापि न परित्यक्तोऽयमभ्यास । एतेन मे शरीर सुदृढ समपद्यत ॥

अङ्गसाधनार्थं गन्तुमनिच्छाया कारणं तु पितृशुश्रूषाया मम प्रवृत्तेच्छैव। शालाविरामोत्तर-क्षणमेव त्वरया गृहं प्राप्य तत्सेवासमुद्यतोऽभवम्। अङ्गसाधनार्थमवश्यं गन्तव्यमिति यः कृतो नियमबन्धस्तेनास्य विघ्नः समपादि। यथा मे पितृशुश्रूषणं शक्यं भवेत्तथाहं व्यायामगमन निर्बन्धाद्विमोचनीय इति गिमिमहाशयमभ्यर्थितवान्। स तु न तथा प्रत्यपद्यत॥

एकदा स्थिरवासरे पाठशाला प्रातः प्रचलिता। मध्याह्ने चतुर्घण्टावादनसमये शाला प्रति व्यायामार्थं गन्तव्यमासीत्। मन्निकटे कालयन्त्रं न स्थितम्। आकाशस्य मेघच्छन्नतया वेला च नोपलक्षिता। यावदहं पाठशालां प्राप्तस्तावत्सर्वे गता एव। गिमिमहाशयः परेद्युरागता नागतच्छात्रपङ्क्तिं विलोक्य पूर्वदिने मदनागमनमज्ञासीत्। यथा वृत्तमहमस्मै न्यवेदयम्। स तु मामविश्वस्यैकाणकं वा द्व्याणकं वा (कियदिति विस्मृतमिदानीं) मामदण्डयत्॥

एतेन मया मृषोक्तमिति सिद्धम्। तस्मादहमतीव दुःखितोऽभवम्। मदुक्तमनृतं नेति कथं वोपपादनीयम्। तत्र न कोऽप्युपायोऽदृश्यत। तन्महता सन्तापेनाहमश्रूण्यवर्तयम्। सत्यवादैक-परायणेन निरन्तरमप्रमत्तेन भवितव्यमिति तदाहमवेदिषम्। विद्यार्थिदशायां ममायमेव प्रथमः प्रमादः। स एव चरमश्च। पर्यन्ते दण्डोऽयमक्षम्यतेति मनाक् स्मृतिरस्ति॥

शालाविरामोत्तरमेव शुश्रूषणार्थं मम पुत्रेण गृहेऽवस्थातव्यमिति मुख्योपाध्यायं प्रति मम तातः पत्रमलिखत्। ततः परमङ्गसाधनवर्जनाय मयानुज्ञा लब्धा। यद्यपि व्यायामार्थमगमनेन मम न कापि हानिः संवृत्ता तथापि कस्मिंश्चिदन्यस्मिन् विषये मया दर्शितायाः अश्रद्धायाः दुष्फलं मद्यायहमनुभवामि। न जाने कथमयं मे मनसि लग्नोऽभिप्रायो यत्पठितुं शिक्षमाणस्य प्रशस्तलेखन शिक्षणमनावश्यकमिति। यावदहमिंग्लैण्टदेशं प्राप्तस्तावदेवंविधैवासीन्मनीषा। तदनु तत्रापि दक्षिणाफ्रिकाखण्डे तत्र लब्धजन्मनां तत्रैव लब्धशिक्षणानां न्यायवादिनामितरयुवकजनानां च मुक्ताफलस्यूता इव सुन्दरतरा अक्षरपङ्क्तीर्विलोक्य जातव्रीडः सानुतापोऽभवम्। वक्रवक्राक्षराणि पुरुषस्यापकर्षशिक्षां यच्छन्तीति तदाहमबुध्यम्। ततोऽहमक्षरसौष्ठवसम्पादनाय प्रायतिषि। तावच्च सुकालो व्यतीत आसीत्। बाल्ये वयसि यदश्रद्धया विहितं तत्समीकरणं पश्चादशक्यमेव जातम्। सुस्पष्टलेखनं सच्छिक्षायाः प्रतिनियतमेवाङ्गमिति मन्निदर्शनेन सर्वे युवका युवतयश्च विदाङ्कुर्वन्तु। अक्षराभ्यासतः पूर्वं शिशवश्चित्रकलां शिक्षणीया इत्यहमिदानीमाशासे। पुष्पपक्षीप्रभृतीन् पदार्थानवे-त्यक्षीकृत्य यथा शिशवस्तान् स्वतोऽनुकुर्वन्ते तथा वर्णानपि निरूप्य शिक्षन्ताम्। अभ्यस्त चित्रलेखनैरक्षरलेखनमभ्यस्यताम्। तदा हि लेखनसौष्ठवं सिध्यति॥

विद्याभ्यासकालसम्बद्धौ द्वौ वृत्तान्तावद्याप्यनुपवर्णितौ स्तः। विवाहप्रसङ्गेन हि वर्षमेकं मे वृथा क्षपितमासीत्। एतद्दोषस्यापोहनार्थमेकस्मिन्नेव वत्सरे मया कक्षाद्वयमुत्तरीत-व्यमिति मदुपाध्याय इच्छति स्म। प्रायेणायमधिकारः श्रद्धयाभ्यस्यतामेव विद्यार्थिनां लभ्य आसीत्। तस्मादहं तृतीयवर्गे षण्मासमात्रं स्थित्वा वसन्तविश्रान्तेः पूर्वभाविपरीक्षायाः समनन्तरं चतुर्थश्रेणीं

मारोपित । अस्मिन् वर्गे भूयसो विषयानाङ्ग्लेयभाषयैव बोधयन्ति स्म । इद मे सुतरामरोच्य मासीत् । रेखागणितमपि चतुर्थश्रेण्यामेव प्रारभ्यत । पूर्वमेवैतन्मम दुरवबोधमासीत् । आङ्गल भाषया तु प्रतिपाद्यमन सुतरामेव जातम् । उपाध्यायास्तावद्वतीय सम्यगेवाध्यापयन् । तथापि तस्य दुरवबोधत्वाद्वर्षद्वयनिर्ग्राह्यस्य वर्षमात्रेण साधनप्रयत्नो मदीयशक्तिमतिक्रान्त इति मन्यमानो ह्यमेतद्वा तदाशा परित्यज्य तृतीयश्रेण्यामुपवेष्टुमैच्छम् । परन्तु तथा ह्यनुष्ठिते न केवलमह मवमानित स्यामपि तु मयि विश्वस्य मत्प्रशसावादिना शिक्षकाणामपि गौरवहानि सम्भवेदिति भयतो मानभङ्गमाशङ्क्य नाह तथान्वतिष्ठम् । प्रयत्नेन युक्लिडगणितशास्त्रस्य त्रयोदश प्रमेय प्रासवतो मे मनस्यतिसरलोऽय विषय इति सद्य स्फूर्तिरासीत् । यथायथमुपयुज्यमानबुद्धये वगम्ये वस्तुनि किंवा जटिलत्व विद्येत । तत प्रभृति रेखागणित मे न केवल सुलभमासीदपितु तत्राभिरुचिश्च मे समजनि ॥

किं च सस्कृत मे बहुक्लेशप्रदात् । रेखागणिते तावत्कण्ठ करणीय न किञ्चित् । सस्कृते पुन सर्वस्यापि कण्ठपाठ करणीय इत्यहमबोधिषम् । इद च चतुर्थश्रेण्या प्रारभ्यत । षष्ठकक्षा प्रविष्टस्य मम हृदयमवसन्नमिवाभवत् । सस्कृतोपाध्यायैरस्माक महापरिश्रमोऽदायि । मम वान्धवास्तावदिच्छन्तु वा नेच्छन्तु वा तदीयमन्तकरण तु तद्विषये सम्पूरणीयमित्य भूत्तेषा प्रयासेति । सस्कृतवर्गस्य फारसीयवर्गस्य च कापि स्पर्धाभवत् । फारस्युपाध्याया मौल्व्याख्यपण्डिता स्वच्छात्रान्न भृश दण्डयन्ति स्म । इति हि बालका परस्परमाल्पन् । यथा—'फारसा किल नितीव सुलभा भाषा । फारस्युपाध्याया अतीव सारल्य । अमी बालकाना दया दर्शयन्ति' । इति ॥ फारसीभाषाया सौलभ्यमाकर्ण्य सञ्जातचापल्योऽहमेकस्मिन्दिने फारसीवर्गे प्रविविक्षोपाविशम् । एतेन खिन्न सस्कृताध्यापको मामानार्येत्यभ्यधात् । यथा 'युष्मज्जनको वैष्णव इति कथ त्वया विस्मृतम् । स्वधर्मसम्बन्धिनी भाषा कथ न शिक्षितुकामोऽसि । मदीयशक्तिमतिक्रम्य वाञ्छा सस्कृतमध्यापनीया इतीच्छा मे जागर्ति । यथा यथा पाठ प्रौढिमान भजते तथा तथा तस्य स्वारस्य युष्मन्तुभवगोचरो जायत । न खल्वत्र त्वया मदोत्साहेन भाव्यम् । पुन सस्कृतवर्गमागत्य शिक्ष्यता पाठ ।' इति ॥

अह दयारसपरिप्लुतमेतद्वचनमाकर्ण्य नितरा लज्जितोऽभवम् । उपाध्यायस्य प्रीतिवचन मनादर्तुमाशा नाशक्नवम् । अद्य स्मृत्वा स्मरामि कृतज्ञतापुर सर य कृष्णशङ्करपण्ड्यामहा शयस्तदा ममोपाकरोत् । यावद्धि मया सस्कृत तदाशिक्षित तावताऽप्यनभिज्ञतायामस्म पवित्र ग्रन्थपाठानिरिव मे दुरापादभविष्यत् । इतोऽप्यतिशयेन यदल्प मया न शिक्षितमिदह मिदानीमनुताप्य । हिन्दुजनेषु हि बालकेन वा वाञ्छया वा सस्कृतमवश्यम यतनीयमिति पश्चात्त मनोऽस्मि ॥

साम्प्रतमेव मयाभिमेध्य यथा—भारतवर्षे प्रचारेषु सर्वेष्वपुच्चशिक्षणक्रमेषु मातृभाषया सह हिन्दीफारसीसस्कृतारब्यादिष्वन्यतमाना भाषाणामास्थेय दयम् । एवमे भाषाज्ञया न कस्यापि

भयङ्करी भवतु । अस्मदीयशिक्षणक्रमे सुव्यवस्थिते सति परकीयभाषयाऽऽङ्ग्ल्या सर्वार्थोपदर्शन-प्रयासे परिहृते च सति बालकानामिमाः सर्वा भाषा न केवलं सुशिक्षणीया भविष्यन्त्यपि तु सन्तोषदायकाश्च भवन्ति । यद्येकापि भाषा आङ्ग्लभाषया शिक्ष्यते तदा भाषान्तरपरिज्ञानं सुसम्पादं भविता । सम्यक्परीक्ष्यमाणे हिन्दीगुजरातीसंस्कृतं चेति त्रयमप्येकभाषारूपत्वेन परि-गणयितुं शक्यते । एवं फारसीअरबीभाषाद्वयमपि समानम् । संस्कृतफारसीभाषयोर्वर्गोऽन्योऽरबी-हीब्रूभाषयोर्वर्गोऽन्य इति यद्यपि सत्यं तथापि फारसीअरबीभाषयोः पूर्णविनिमयव्यापारस्यानन्त-प्रचारस्यैव कारणभूतत्वादुभयोरपि निकटसम्बन्धो विद्यते । उर्दूभाषा तु पृथग्भाषात्वेन मया न हि गण्यते । यतस्तद्व्याकरणं हिन्दीव्याकरणमेव । शब्दाश्च बहवः फारसीअरबीभाषाभ्याम् । यथा गुजरातीहिन्दीबङ्गालीमराठीभाषाणां सम्यगध्ययनाय संस्कृतज्ञानमावश्यकं तथोर्दूभाषाया सम्यगध्ययनाय फारसीअरबीभाषाशिक्षणमावश्यकम् ॥

षष्ठोऽध्यायः

## दुःखकरः प्रसङ्गः ( १ )

निरूपितपूर्वं हि यदुच्चविद्यालये मम सुहृदस्त्रय एव स्थिता इति । परमेतौ तु भिन्नकालीनौ द्वावास्ताम् । एकेन सम्बन्धश्चिरस्थायी नाभवत् । तन्मैत्री न खलु मया परित्यक्तापि तु अन्येन केनचित् कुलमस्यस्य मम सङ्गं स एव स्वयमत्यजत् । अथ द्वितीयेन स्नेहबन्धो मम जीवनमाने दुःखकरोऽध्याय इति मन्ये । सेयं मैत्री चिरस्थायिन्यासीत् । सुधारक-दृष्ट्या सम्यगेनमकरवम् ॥

पूर्वमयं महत्त्वस्य मित्रमासीत् । तावुभावेककक्ष्यायामधीयाते स्म । तस्य दोषाणामस्य विदितानामप्यहमभिज्ञ आसम् । तथाप्येनं मम विश्वसनीयं मित्रमित्यग्रहीषम् । मम माता मम ज्येष्ठाग्रजेन मम भार्यया चायमसत्सङ्ग इति प्रागेव प्रबोधितोऽभवम् । किमिति भार्यावचनमनुरोद्धुं व्यसिस्यासीत्तदानीं मे गर्वे । किन्तु जननीज्येष्ठसहोदरौ प्रयत्नस्यानुमतीरोऽभवम् । तथापि तावपि मया समाधापितावास्ताम् । यथा—

'जाने भवद्भ्यामारोपिता दोषास्तस्मिन्सन्तीति । किन्त्वनभिज्ञौ युवां तस्य गुणानाम् । स मां दुष्पथमारोढुं सर्वथा न शक्नुयात् । अथ सन्मार्गं तमानयितुमेव तेन कृतसख्योऽस्मि । परिवृत्तशीलोऽयं महान् सुपुरुषो भविष्यतीति मे विश्वासः । भवतोर्मा स्म मनागपि भीतिरस्तु । इति मे प्रार्थना । इति ॥

अनेन तयोः परितोषो जात इति वक्तुं न शक्यते। किन्तु मयि तौ विश्वस्य स्वेष्टानुसारेण प्रवर्तितुं मामन्वमन्येताम्॥

मम तादात्विकाभिप्रायस्यासाधुत्वं पश्चान्मदनुभवगोचरोऽभवत्। सुधारणकृत्येषु प्रवृत्तो जनो यः पुरुषः सन्मार्गे विलम्भयिष्यते तेन पुरुषेण सहातिमात्रस्निग्धवृत्तिर्भवितुं नार्हति। अकृत्रिमा तु मैत्री प्रकृत्यान्योन्यभेदसंस्था भवति। ईदृशी लोके ह्यतीव विरला। बालकेषु समानगुणेष्वेव सुसदृशी चिरस्थायिनी च मैत्री सम्भाव्यते। मित्रयोः सर्वदान्योन्यचारित्रविपरिणामात् सुधारणस्य स्नेहेऽवकाशो दुर्लभः। अतिस्नेहं न कोऽपि कुर्यादिति मन्मतम्। मनुष्यस्य सद्गुणसम्पादनापेक्षया दुर्मार्गानुवर्तनमतीव सुकरम्। भगवति स्नेहितुकामेनैकाकिना भाव्यम्। अथवा जगदेवमित्रेण भाव्यम्॥ उपरि मयोपन्यस्तं सङ्गतं वा न वा। परन्तु स्नेहप्रसङ्गेऽस्मिन्मया कृतः प्रयत्नो निष्फलोऽभूत्॥

एतत्सख्यबन्धसमये राजकोटे सुधारकव्यूहः प्रबलोऽभवत्। अयं सुहृदस्मदीयहिन्दूपाध्यायेषु भूयांसो जना मद्यमांससेवनं कुर्वन्तीति मामब्रवीत्। राजकोटे सर्वैः सुविदितानां बहूनां नामानि कथयित्वा तेऽपि तद्वर्गप्रविष्टा इति न्यवेदयत्। उच्चविद्यालयस्थबालकानामपि केचिदेवं वृत्ता एवेत्यकथयत्॥

एतेन सञ्जातविस्मयविषादेन मया तत्कारणं पृष्टः स एवं प्रत्यवादीत्। यथा —

‘मांससेवनं विना वयं निर्बलाः स्थिताः। मांसाहारित्वादेवाङ्ग्लाः अस्माञ्छासन्ति। कियद्दार्ढ्यं मे शरीरस्य कियती मे प्रधावनशक्तिश्चेति त्वं जानास्येव। अत्र मे मांसाशित्वमेव कारणम्। मांसाहारिणां विस्फोटो न जायते। शोथव्रणं नोत्पद्यते। कदाचिदुत्पन्नमपि झटिति रोहति। अस्मदीयशिक्षका अन्ये च बहवः प्रसिद्धाः पुरुषा इदं सेवन्ते। किमेते मूढास्तद्गुणविशेषज्ञानं विना तथा प्रसेवितुम्। तस्मात्त्वयाप्येतद्भक्षणीयम्। सकृद्भक्षणेनैव कियती पुष्टिस्तव शरीरमायातीति त्वमेव पश्यसि। इति॥’

एतत्सर्वमेकदा सम्यगुपविश्योपदिष्टं न। अयं विविधदृष्टान्तोपन्यासेन बहूनि दिनानि यावत् [illegible] ममोपदिष्टस्य सारांशः। मदग्रजेन पूर्वमेवैतन्मार्गप्रविष्टत्वात्सोऽपि तत्पक्षमपोषयत्। नूनमहं मदग्रजं मन्मित्रं चापेक्ष्य दुर्बलो व्यायामम्। तावुभौ मदपेक्षया सबलिनौ दार्ढ्यधैर्यसम्पन्नावास्ताम्। अस्य मित्रस्य पराक्रमं निरीक्ष्य मया मुग्धेन भूयते स्म। अयमतिदूरं च सत्वरं जवेन च धावितुं शक्तोऽभवत्। दूरप्लवनमुच्चप्लवनं चास्य सुनिष्णातम्। प्रहारसहनशक्तिरप्यस्य विलक्षणा। स्वपराक्रमं सावधानं मे प्रदर्शयति स्म। स्वस्मिन्नविद्यमानगुणं परत्र दृष्ट्वा साधारणस्य प्रायेण चमत्कृतो भवति। इत्यहं च तत्पराक्रमदर्शनेन चकितोऽभवम्। सम्यग्धावनं वा प्लवनं वा न मे

शक्यमभूत्। मत्सुहृदिव बलवान्भवितुमिच्छा मे तीव्रा समजनि। मयापि तद्वत्कुतो बलशालिना न भाव्यम्॥

अहमतीव भीरुरासम्। चोरपिशाचसर्पेभ्यो भयं मे सर्वदा मनसि स्थितम्। रात्रौ बहिर्गन्तुं कातरोऽभवम्। अन्धकारकथयापि मम शरीरं कम्पते स्म। दीपं विना शयितुमशक्यमेवाभवत्। एकतो भूतानामन्यतश्चोराणामपरतस्सर्पाणामागमनभयेन दीपाभावे स्वप्तुमशक्यमेवासीत्। पार्श्वसुप्ता प्रथमयौवनशालिनी मे भार्या कथं विदितमद्भया कुर्याम्। ज्ञातं मया सा मत्तोऽप्यधिकधैर्यवतीति। स्वं निरूप्य स्वस्मिन्नेव लज्जा समजायत। सा हि कदाप्यदृष्टसर्पपिशाचभया। अन्धकारेऽपि धैर्येण सर्वतो गच्छति स्म। मत्सखा सर्वानिमान्मे दोषान्सम्यगवेदीत्। स च मामाह—जीवन्तमहं सर्पं हस्ते गृह्णीयाम्। चोरेभ्यो मम नैषदपि भयमस्ति। भूतपिशाचा नाम के भवन्ति। इति॥ सर्वमेतदात्मनो मांसाहारनिमित्तकं फलमिति तस्याशयः। नर्मदनामगुर्जरकविना प्रणीतमेकं पद्यमस्मत्पाठशालाविद्यार्थिनां मुखेषु नित्यमविहितमासीत्। तस्यायमक्षरार्थो यथा—

लोकोत्तरजुगुप्सया विरोधेन च पश्यन्ति स्म। मम तावत्संस्कार एतादृश आसीत्। अपि च पित्रो रहमतीव भक्तिमानासम्। मांसं मया भक्षितमिति ज्ञानमात्र एव ताभ्यां प्राणान्तिकं सङ्कटमनुभूयेत इति मे विदितमासीत्। किं च सत्यादरेणाऽहमतीव जागरूकोऽभवम्। मांसाशनप्रवृत्त्या पितृवञ्चना धृता स्यादिति न मे तदा विदितमिति वक्तुं न शक्यते। परन्तु कृत्यमिदं सर्वथाऽनुष्ठेयमिति व्यवसायि सङ्कल्पः। न खलु मांसाशनमतीव रुच्यमित्याशयेन मया तथा विहितम्। मांसं रुच्यं पदार्थ इति न खलु मयाऽङ्गीकृतम्। परन्त्वेष हि मे प्रयासो यन्मया बलवता भाव्यम्। धैर्यवता भाव्यम्। अस्मद्देश्यैरप्येवं भवितव्यम्। एवं सम्पद्य तेराङ्ग्लेयान्पराजित्य हिंदुदेशः स्वतन्त्रदेशः करणीयः। इति॥ तत्काले स्वराज्य शब्दो मया न श्रुतः। एवंविधसुधारणोन्मादेन मम स्मृतिरेवाभ्रश्यत्॥

## सप्तमोऽध्यायः

# दुःखकरः प्रसङ्गः (२)

अथ निश्चितं दिनमुपागमत्। दुष्करं मदीयनाशाभिलषितनैर्यथावद्रूपवर्णनम्। एकतः सुधारणस्यकृते महानुत्साहो मज्जीवनयात्रायां तत्त्वादृशनवीनमार्गानुसरणकुतूहलं च। अन्यतश्चोरवत्सङ्गोऽप्यकृत्यमनुष्ठेयमिति व्रीडा। अनयोर्मध्ये इदानीं कतरस्याधान्यमभजतेति नाहं स्मरामि। आवां सरित्तीरे किंचिदेकान्तमन्विष्यन्तौ दूरं प्रगत्य विजनप्रदेशमेकमासादयाव। तत्रा-

जन्मप्रभृत्यनवलोकितं मांसं मम प्रत्यक्षमागमत्। तथापणपूपसदृशमासीत्। द्वयं च मे नारोचत। छागमांसं तु चर्मसदृशमासीत्। तद्भक्षणं सुतरामशक्यमभवत्। वमनोन्मुखस्सन् भक्षणाद्व्यरंसिषम्॥

तन्निशातियापनमतीव दुष्करं जातम्। निद्रा नागता। सुषुप्सा ऽपि दूरेऽभवत्। एकश्छागो मदीयजठरे प्रविश्य करुणक्रन्दनं चाक्रन्दयमानः स्थित इव। तेन भीतोऽहमनुतप्यमानः समुत्थाय तदुत्तरक्षणमेव ' किं न मे कर्तव्यं मांसाशनम्। न खल्वीदृशः कातरभावो युक्तः। इत्यात्मानमेवाबोधयम्॥

मम सुहृत्पुनरेतावता न धैर्यमगात्। स तु मांसेन विविधपाकनिष्पादने प्रवृत्तोऽभवत्। क्रमेण सरित्तीरगमनं वर्जयित्वा राज्यस्यातिथिमन्दिरे तत्रत्यं सूदं वशीकृत्य भोजनाय स्थलं समपादयत्। आसन्दीभोजनाग्रपीठप्रभृतिसाधनैः परिष्कृतस्य तस्याहारमन्दिरस्य वैभवप्रदर्शनेन मच्चित्ताकर्षणमेव तस्योद्देश्यमासीत्॥

तदुद्देश्यं च सफलं जातम्। अपूपे रुचिरुदयितुमारभत। छागविषयिणी करुणातिरोऽभवत्। मांसमात्रेऽप्यसम्भवत्स्वपि रुचिर्मांसप्रणीतेष्वाहार्यवस्तुषु वरीवृध्यते स्म। इदमेकवत्सरपर्यन्तमित्थमचालीत्। एषु दिवसेषु पञ्चषड्दिनान्येव मांसभक्ष्याण्यखादिषम्। यतो राज्यस्यातिथिमन्दिरं नित्यलभ्यं नाभवत्। अपि च भूरिव्ययप्राप्याणि भक्ष्याणि सर्वदा निष्पादयितुमशक्यमभूत्। एतत्सुधारणव्ययार्थं मन्निकटे द्रव्याभावात् सर्वोऽप्ययं व्ययः सत्सुहृदुपर्येव पतितः। तेन द्रव्यं कुतो लभ्यते स्मेति नाद्याप्यहं जानामि। मांसाहारिणं मां विधातुमस्य बद्धकक्ष्यत्वात् कथमप्यस्यहेतोरयं द्रव्यं सम्पादयति स्म। किन्तु तेनापि तावद्द्रव्यं कुतोऽवा लब्धव्यम्। तस्मादेते मांसभोजनमहोत्सवा बहुभिर्दिनैरेकैकवार प्रचलन्ति स्म॥

एतेषु गुप्ताभ्युदयदिवसेषु गृहे भोजनकथाऽपि मे नासीत्। अम्बा तु यथापूर्वं मां भोक्तुमाहूय भोजनमनिच्छन्तं कारणं पृच्छति स्म। तदाहमद्य मे क्षुधा नास्ति। अन्नं कुतोऽपि न जीर्णमिति प्रत्यवोचम्। अनेन प्रतिवचनेन न मे सन्तापो जायते स्मेति न। मृषाव्याज एव। तत्राऽपि मातुः समक्षं मृषाऽवादिषमिति मया ज्ञातम्। अपि चाहं मांसाहारीसंवृत्त इत्यवगतार्थौ यदि भवतो मत्पितरौ तदा तावतिमात्रं दूयेते इति च मे विदितम्। एतद् ज्ञानं मदीयमानसं निरन्तरमन्वतापयत्॥

तस्मादहमित्थमचिन्तयम्। यथा —

मांसाशनं तावदावश्यकमेव। तत्प्रचारेण हिन्दुस्थाने सर्वत्राप्येवंविधसुधारणस्य परिकल्पनमप्यावश्यकम्। परन्तु पितरौ वञ्चयित्वा तदग्रे यदनृतभाषणं तदेतन्मांसस्याशनादपि पापीयः। तस्मात्पित्रोर्जीवितान्तं मांसं न भक्षयिष्ये। तन्मरणोत्तरं स्वातन्त्र्यमापन्नः सर्वलोकप्रत्यक्षमेव तदशिष्यामि। तावच्च मांसाहारं परित्यजामि। इति॥

एवं कृते मे निश्चयं सत्ये निवेद्य मांसाहारमहमन्यन्तमेव परित्यक्तवान् । ततः परं न कदापि मया मांसमभक्षि । स्वपुत्रेषु द्वौ मांसाहारिणावास्तामिति न हि पितृभ्यामान्तमप्यज्ञायि ॥

पितृवञ्चनां परिजिहीर्षता निष्कलङ्कहृदयेन मया यद्यपि मांसाहारः परित्यक्तस्तथापि तत्सुहृत्स्नेहो न दूरीकृतः । तत्समार्गलम्भनोत्साहेन मदीये न मय्येव दुष्परिणामो जातः । किन्तु तत्स्मृतिरेव मे तदा नाभूत् ॥

इयमेव मैत्री मां व्यभिचारपथेऽप्याकष्टुमलम्भूष्णुरिवासीत् । परन्तु रेखामात्रावलम्बेनैव मया गर्ते निपातः पर्यहारि । एकदायं सखा मां गणिकामन्दिरमेकमनैषीत् । तत्र मां प्राहितसमयो चितसन्निविष्टेऽयमन्तः प्रावेशयत् । सर्वं सुमंविहितमवस्थितम् । भाटीपणोऽपि पूर्वमेव प्रादायि । अन्योन्यकथालापमात्रमवशिष्टमभूत् । कृतो मया पापजागरमसप्रवेशः । किन्तु परमेश्वरस्यापारकृपा मामभ्यरक्षत् । तस्मिन्पापकूपे मम जगत्सर्वमप्यन्धकारमयमिवाख्यस्यत । वक्तुमपि नष्टस्मृतिरासम् । लज्जया स्तब्धस्मस्तस्याः समीपे मञ्चोपर्युपविष्टोऽभवम् । किन्तु वचनमेकमप्यालपितुं नाशकम् । सा पुनरतीव क्रुद्धा मामाकृष्य निर्गमनद्वारं मे प्रादर्शयत् । पुंस्त्वलोपं प्राप्तमिवात्मानं मन्यमानो वसुधाविवरे तिरोधानमिच्छुरिवाभवम् । परं त्वेवं मामुद्धृतवतो जगदीश्वरस्यानुग्रहः सर्वदा मे स्मृतिपथे जागर्ति ॥

मम जीविते विचतुरा एतत्सदृशाः प्रसङ्गाः समभवन्निति ज्ञप्तिरस्ति । प्रायेणैतेषु मदुद्धारे भूयसा विधिप्राबल्यमेव हेतुरासीन्न पुनः स्वप्रयत्नः । नैतिकदृष्ट्या समीक्ष्य सर्वत्रापि मे धर्म्यपथाद्भ्रंश एव वक्तव्यः । विषयेच्छाप्रेरितत्वान्मम हि दुष्कर्मकारित्वं न्यायतः सिद्धमेव । परन्तु दुष्कर्मचिकीर्षुणापि पुरुषेण यदि तत्कर्म नानुष्ठीयेत तदा स पुरुषो लौकिकदृष्ट्या पापकारी न भवति । पूर्वोक्तो मदुद्धार एतावन्मात्रे ह्यर्थे पर्यवस्यति । केषाञ्चित्कर्मणामनुष्ठानपरिहारः मनुष्यस्य तत्सन्निधासिजनस्यापि शुभोदर्के परिणमति । स च प्राप्तविवेकस्तत्परिहारं भगवदनुग्रहं मन्यते । यथा ह्येकान्ततोऽनिच्छन्नपि कश्चित्पुरुषः क्वचित्पतनसरण्यां पतति तथा दुष्कर्मचिकीर्षुरपि क्वचिद्भाग्यवशाद्‌ पथाद्‌दूरतो भवतीत्येतल्लोकसिद्धम् । सर्वमप्येतत्कथमीदृक् सम्भवति यदा तत्र स्वातन्त्र्यं पुरुषस्य नियन्मात्रमस्य याथार्थ्यनापारवस्य चेत्येतेषां प्रश्नानां समञ्जसमुत्तरं प्रदातुं नाद्यापि पारितं न चाग्रेऽपि पारयिष्यते ॥

अथ प्रकृतमनुसराम । एतावतात्येन सुहृत्सङ्गस्य परमानर्थदायीनि ज्ञानं मे नैवागतम् । तस्मादवितर्कितानि कानिचित्तस्य दुष्कृत्यानि स्वयं प्रत्यक्षीकृत्य यावद्विवेकज्ञानमलम्भे तावद्‌-यस्यास्तित्वकणिकेव मया न्यालीयन्त । परन्तु वृत्तान्तानामनुक्रमशो विवर्णयिष्यमाणत्वादस्य विस्तरोऽग्रे निरूपयिष्यते ॥

वित्त्वेव कालिको वृत्तान्तः कश्चिदिह वर्णनीयो भवति । मन्येऽस्मिन्नावयोर्दम्पत्योर्मिथो वैमनस्यमासीत् । तत्र मदीयदुस्सङ्गोऽप्येकं कारणमिति न सन्देहः । उक्तपूर्वं हि मया यन्मम भार्यायां मत्सरप्रेमास्पदत्वेऽपि तस्यामहमनूयापरोऽभवमिति । तमेतमनूयाग्निं मत्सखा सुतरां प्राज्वलयति स्म ।

तस्य वचनेष्वहमेकान्ततः श्रद्धालुरासम्। तद्वाक्यश्रद्धितश्च भार्याया अतिमात्रं सन्तापमजनयम्। सेयं मे हिंसाप्रवृत्तिमदनुतापस्य परा काष्ठामनीत्य वर्तते। कश्मीदृशं केवलं हिन्दुस्त्रिय महन्ते। अत एव स्त्री नाम मूर्तिमती क्षमेत्यहं सर्वदा भावये। मिथ्याभियुक्तो ह्यनुजीवीजनः स्वोद्योगं परित्यजेत्। तथा च पुत्रः पितुर्गेहं परित्यजेत्। मित्रं च स्नेहं परित्यजेत्। भार्या पत्युर्द्रोहशङ्किनी तूष्णीमास्ते। पतिस्तु स्वभार्याद्रोहशङ्की यदि भार्याया गतिः प्रणष्टप्रायैव। क नु तया गन्तव्यम्। हिन्दुस्त्रीजनो न्यायसभामुपेत्य विवाहबन्धनादात्मानं न हि मोचयितुमर्हति। तस्याः सम्भवतोऽन्यायस्य भैषज्यमेव नास्ति। मया कृतमिदं भार्याहिंसनं न हि कदापि विस्मरेयम्। एनमात्मनोऽपराधं न हि क्षमेय॥

अहिंसातत्त्वज्ञानस्य समुदयानन्तरमेव ममायं विकल्पः समूलमनशत्। तदा हि मया ब्रह्मचर्यस्य महिमावगतः। तदा हि मे बुद्धिमारूढं यद्भार्या नाम पत्युर्दासी न भवति। सा हि तस्य सहचारिणी सहधर्मिणी तत्सुखदुःखयोः समभागिनी च। यथा पतिः स्वच्छन्दवर्तने स्वतन्त्रस्तथा भार्याप्येवमधिकारिणी। इति॥ यदा यदा तत्कालप्रवृत्तिं मदीयामहं स्मरामि तदा तदा मम मौर्ख्यं विषयान्धता क्रौर्यं च स्मृतिमुपेत्य स्वस्य स्वात्मन्येव कुत्सां जनयन्ति। अथ च तस्मिन्मित्रे कृतविश्वासस्य मम पश्चात्तापोऽभिजायते॥

अष्टमोऽध्यायः

## चौर्यं। तस्य प्रायश्चित्तम्

मांसाशनकालिकानां तत्पूर्वकालिकानां च मम केषाञ्चिद्दुरभ्यासानामुपवर्णनमवशिष्टं भवति। ते च मद्विवाहप्राक्कालिका वा विवाहोत्तरकालीनकतिपयदिनान्तर्भाविनो वा भवन्ति॥

मम च मम बन्धोरस्य च कदाचिद्धूमवर्तिसेवनापेक्षा जाता। अस्मन्निकटे पणस्तु नासीत्। तत्सेवनेन किमपि प्रयोजनमस्तीति नावामजानाव। न च वा तत्परिमलोऽस्मदीयं मनः समाकर्षति स्म। किन्तु मुखाद्धूमनोक्षे कोऽप्यानन्दविशेषोऽनुभूयत इत्यमन्यावहि। अस्मत्पितृव्यः पूर्वमेव तदभ्यासी। तत्प्रभृति विजने सेव्यमानं धूमपानमस्मदीयमानयोराश्रयोरपि तासिद्धिरिव समजनि। किन्त्वस्मदीयपणमुखनोदे पणाभावात्पितृव्येन मोचितानि धूमवर्तिशकलानि गुप्तमेवोच्चित्य सेवितुं प्रावर्तावहि॥

जिन्नेतानि शकलानि सर्वदा न लभ्यन्त स्म। न हि तस्य प्रकामं धूमोऽपि निरसरत्। नगरान्तर्भूतस्य कस्यचन देशानुकारिण्याभिः पणसार्ताविर्णाभिर्धूमवर्तीः क्रीत्वा सम्पादयितुमशक्नुहि। पर सदा धर्मं कुत्र निगूहितव्या। अस्मत्पाद्यं तु तमेवमनादरस्य नैव। एवं

चोर्यमाणद्रव्येण कथंचित्कतिपयदिवसान्निरवाहयाव । एतन्मध्ये कस्यचिद्वृक्षविशेषस्य रिक्तकनालानि धूमवर्तिपानोपयोग्यानि भवन्तीत्यश्रौष्व । ततस्तान्यानीय सेवितुमुपाक्रमावहि । किन्त्वेतदावयोर्न परितोषमजनयत् । अस्मत्पारतन्त्र्यमावां तुदति स्म । ज्येष्ठानुज्ञां विना न किञ्चिदनुष्ठातव्यमिति निर्बन्धो दुस्सहोऽभवत् । पर्यन्ते परमजुगुप्सया स्वात्महत्यां विधातुं निश्चयमकार्ष्व । किन्तु कथमिदं साधयितव्यम् । विषं कुतः सम्पादनीयम् । धत्तूरबीजं भक्षणं प्राणहरमिति पूर्वमावाभ्यां श्रुतमासीत् । वनं गत्वा तद्बीजमानैष्व । सायं प्रतीक्ष्य केदारेश्वरदेवालयं गत्वा देवाग्रस्थितदीपे घृतं दत्वा निष्पन्नदेवतादर्शनौ किंचिद्विविक्तस्थानमगाव । परं तु विषप्राशनाय न धैर्यमागतम् । सद्यः प्राणानामनपगमे का गतिः । आत्महत्यया वा तावत्को हि लाभः । पराधीनतापि कस्मान्न सोढव्या । अथापि त्रिचतुरबीजानि गिलितानि । ततोऽप्यधिकभक्षणाय न धैर्यमउत्सहि । उभावपि मरणपराङ्मुखावभूव । श्रीरामदेवालयं गत्वा देवदर्शनं प्राप्य शान्तचित्ताभ्यामात्महत्याप्रसङ्गो विस्मर्तव्य इति निरणायि ॥

आत्महत्यासङ्कल्पस्तावत्सुकरः । परं तत्साधनं दुष्करमित्यनुभवाद्विदितमभूत् । तदा प्रभृत्यात्महत्यासङ्कल्परोपणेन यः कोऽपि मां भीषयति चेत्तदहं नैवाद्रिये ॥

एवंविधप्रयत्नस्य फलितांशस्तु धूमवर्तिशकलसेवनाभ्यासस्य भृत्यकञ्चुकाद्द्रव्यमोषणप्रसङ्गस्य चात्यन्तिकः परित्यागः ॥

प्राप्तवयसो मम धूमपानेच्छा न कदापि जाता । अपि चाभ्यासोऽयमनागरकश्च मलीमसश्चानर्थप्रदश्चेति सदा प्रत्येमि । लोके सर्वत्राप्यस्मिन्नभ्यासे कुतो हि जनानां तथाविधासक्ति-रित्यद्यापि मया नावगतम् । धूमवर्तिसेविभिर्नीते सम्बाधाया धूमशकट्या प्रयाणं मे दुष्करम् । तद्धूमेन मम श्वासः प्रतिबद्धो भवति ॥

इतो दिनकतिपयात्परं यच्चौर्यमकारि तत्खलु पूर्वतनमप्यल्पयेन । काकिणीचौर्यकालेऽहं द्वादशत्रयोदशवर्षदेशीयोऽभवम् । ततोऽपि न्यूनवया वा । द्वितीयचौर्यकालेऽहं पञ्चदशाब्दवयस्कः । मांसाहारिणः पूर्वोक्तमदग्रजस्य हस्तगतसुवर्णकटकात् खण्डमेकमहमचोरयम् । अयमग्रजः कस्मैचिज्जनाय पञ्चविंशतिरूप्यकानधारयत् । सौवर्णं घनकटकं तदीयहस्त-गतमासीत् । ततः शकलमेकमुत्पाट्य स्वीकरणं नाम नाभूद्दुष्करो व्यापारः ॥

अथ कृतं तदुत्पाटनम् । ऋणं च निर्यातितम् । परं त्वेतत्कृत्याचरणं मम दुस्सहं जातम् । इतः परं नैव चौर्यं करिष्य इति निश्चयमकरवम् । अपि च पितुरग्रे स्वापराधमङ्गीकरिष्यामीति मतिमकरवम् । किन्तु तत्समक्षं वक्तुमसमर्थोऽभवम् । न तावन्मां ताडयिष्यतीति भयादपि तु तस्य दुःखप्रदो माभूवमिति । अस्मत्समये कमपि तेन ताडितं न हि स्मरामि । पर्यन्ते च यद्भवतु सर्वथा तं विदितार्थं करिष्यामीति निर्धारितवान् । अन्यथा तु स्वदोषस्यानङ्गीकारे नान्तःशुद्धिर्भवितेति मया व्यचिन्ति ॥

मदपराधवृत्तान्तमखिलमेकस्मिन् पत्रे विलिख्य तत्तस्मै प्रदाय क्षमाभ्यर्थनीयेयन्नार्य तथा च लिखितपत्रखण्डं तस्य हस्ते न्यधाम् । तत्र न केवलं स्वापराधाभ्युपगतिरप्यरतता पर स्वस्मिन्दण्डपातनमपि प्रार्थितमभूत् । अपि चास्य कृते भवता विषादो न कर्तव्य इत्यभ्यर्थ्य न पुनरेवमपरात्स्यामीति प्रतिज्ञाक्षरमप्यलेखि ॥

जनकाय पत्रिका ददानस्य मम शरीर कम्पते स्म । तत्कालमसौ भगन्दरव्याधिना सन्तप्यमान, शयनपतितोऽभवत् । तदानीं तु फलकमेकमभ्यशेत । पत्र समर्प्य तदग्रेऽहमुपाविशम् ॥

स च पत्रमवाचयत् । नयनाभ्यां मुक्ताफलसन्निभा अश्रुबिन्दवो नि सृत्य पत्रमार्द्रीकुर्वन्ति स्म । कञ्चित्काल पर्याकुलीभूय चक्षुषी न्यमीलयत् । तदनु पत्रमुत्पाट्य प्राक्षिपत् । अथोत्थाय पठितुमुपविष्ट क्षणात्पुन शयनमभजत । अहमप्यरुदम् । पितु सङ्कट तु प्रत्यक्षमालक्ष्यते स्म । यद्यह चित्रकृतोऽभविष्य तदा तत्कालीनदृश्यमचित्रयिष्यम् । तच्चित्रमद्यापि मे मनश्चक्षुष स्पष्टतर भासते ॥

तेऽमी मुक्ताबिन्दवो मम हृदयकालुष्यं निरसारयन् । तत्प्रेमबाणो मम पापानि निरभिनत् । स च प्रेमा स्वानुभवैकवेद्य । तथा हि

प्रेमबाणविपर्यीमवन्तर
स्तस्य तीक्ष्णगतिश्चिन्न चापर. ॥ इत्यादि ॥

अयमेव ममाहिंसावस्तुपाठ संवृत्त । तस्मिन्किलावसरे पितु प्रेमैकमन्तरा न किंचिदपर भासते स्म । अद्य हि सैष शुद्धाहिंसाप्रयोग इत्यवगच्छामि । सेयमहिंसा विश्वव्यापिनी कस्य वा शीलं न परिवर्तयेत् । अपरिमेय खलु तस्या प्रभाव ॥

ईदृक्शान्तिमयी महनीया क्षमा मम पितुर्निसर्गसिद्धा नाभवत् । मया हि चिन्तित यदसौ सललाटघात क्रोधेन मा शप्स्यतीति । परन्त्वयमगाधशान्तिरसपरिप्लुतोऽभवत् । इद हि विशुद्धान्त करणेन मया स्वापराधाङ्गीकरणस्य फलमिति तर्कयामि । इद हि मन्ये कृतापराधस्य शुद्धतम प्रायश्चित्त यत् क्षमितुरग्रे स्वापराधिता प्रकटमङ्गीकृत्य पुनस्तत्करणे प्रतिज्ञान नाम । जानेऽहमेतनि रया मम प्रवृत्त्या पिता नि शङ्क समजनीति । मद्विषयिणी च तत्प्रीतिरमेया पर्यवर्धतेति ॥

नवमोऽध्यायः

## अस्मज्जनकस्य मृतिः—मम द्विगुणापमानः

**इहोपवर्ण्यमानो** वृत्तान्तो मदीयषोडशाब्दवत्सरसम्बन्धी । विदितमेवेदं पाठकाना यदस्मत्पिता भगन्दरेणोपतप्यमान शयनपतित स्थितोऽभूदिति । अस्म माता चिरसेवक एको भृत्य स्वयमह

चेति त्रयस्तस्य शुश्रूषापरिकर । व्रण प्रक्षाल्य पटबन्धनमौषधप्रदान गृहे साधयितव्यानामौषधाना सज्जीकरणमित्येतानि कृत्यानि मया निर्वर्तनीयान्यासन । रात्रौ रात्रौ पितु पादौ सवाहयन् सुप्ते तस्मिन्वा तत्पूर्वमनुज्ञातो वा ततो निर्गत्य विश्रान्तिमभजे । इय शुश्रूषा ममातीव प्रियाभवत् । तत्र मया न कदाप्यश्रद्धा दर्शितेति प्रत्येमि । समापिताशेषकृत्य प्रतिदिनमपराह्ण-काल पितृशुश्रूषया पाठशालाकृत्यभ्यासङ्केश्चात्यवाहयम् । जनकेनाभ्यनुज्ञातो वा तस्मिन्प्रशान्त-वेदने या सायमह कञ्चित्कालं विहाराय निरगच्छम् ॥

अस्मिन्नेव समये मम भार्या गर्भिणी स्थिता । अद्य खलु विस्मृशत सैव मे द्विगुणाप मान इति प्रतिभाति । एवतो विद्यार्थिनापि सता तदवस्थासदृश ब्रह्मचर्यं मया नाचर्यत । अन्यतो विषयसुखाशया पठनलेखनादिप्रसङ्गस्तृणीकृत । विशेषतश्च श्रवणपितृभक्तिमेवादर्शी कृत्य व्यवजिहीर्षन्नपि पितृशुश्रूषायामह मन्दादर सवृत्त । प्रतिरात्रि मम हस्तयो पितृ पादसवाहनप्रसक्तयोरपि मम मानस वासगृह परित सरिसृप्यते स्म । तदप्यहो नरस्मिन्काले । यदा धर्मशास्त्र वैद्यशास्त्र लौकिकज्ञान च दम्पत्यो सङ्गम दोषत्वेन समुद्घोषयन्ति । अवसिते हि सेवाकर्मणि मदात्मा पर हृष्यति स्म । तत पितर नमस्कृत्य सद्य शय्यगृहमगच्छम् ॥

इत पितुरारोग्यस्थितिरनुदिन पर्यहीयत । आयुर्वेदभिषजो विविधैर्लेपसर्वैस्त्र प्रादु मुसल्मानवैद्या स्वलेपानखिलानलिपन् । स्थलीयचिकित्सका निजानौषधान्यपीप्यन् । आङ्ग्लेयभिषगेक स्वचातुर्यमुपायुङ्क्त । स चान्त्योपायत्वेन शस्त्रोपचारस्य विधेयतामाचष्ट । किंतु गृहवैद्य प्रत्यवस्थायास्मज्जनकेनास्मिन्वयसि शस्त्रोपचारग्रहण न युक्तमित्यवादीत् । कुशलस्य यशस्विनश्च तस्य वाक्यमेव परिग्राह्यमभूत् । शस्त्रोपचारकथा परित्यक्ता । एतदर्थक्रीतानि बहून्यौषधानि व्यर्थान्यभूवु । मोहमयीनगरे केनचित्सुप्रसिद्धेन भिषग्वरेण शस्त्रप्रयोगोऽस्य निर्वर्तनीय आसीत् । गृहवैद्य शस्त्रोपचार न चेत्यवेत्स्यत् तदा क्लेश विना व्रणमरोक्ष्यदित्यह मन्ये । दैव-सङ्कल्पस्त्वन्यथाभवत् । सन्निहिते हि मृत्यौ को वा सचिकित्सायामुत्सहते । अस्मात्पिता व्यर्थीभूत शस्त्रोपचारसम्बन्धीन्युपकरणान्यादाय मोहमयीनगरात्परावर्तत । ततो जीविताशामसौ पर्यत्याक्षीत् । कालानुक्रमेण देहशक्तौ ह्रसन्त्या मलमूत्रादिविसर्जन शयनगतेनैव क्रियतामिति वक्तव्यमापतितम् । किन्त्वेव कर्तुमान्तमप्यसौ नान्वमन्यत । वारवारमतिमात्रवेदनामनुभवन्नपि शय्या परित्यज्या पसरति स्म । बाह्यशुद्धिविषये वैष्णवनियमास्तावदेव कठिना भवन्ति ॥

ईदृक् शौचमतिमुग्ध्यमित्येनद्यपि सत्य तथापि स्नानमलमूत्रविसर्जनादिक सर्व शुचित्वपरिहारेण शय्यावर्तिनोऽपि यथा सुकर भवेत् तथा हि विधान पाश्चात्यवैद्यशास्त्र बोधयति । तदनुसारेण प्रवर्तन वैष्णवसम्प्रदायस्य सर्वथा न प्रतिकूलमित्यह मन्ये । नित्यस्मत्पिता तत्तादृशीं यातनामनुभवन्नपि शयनादुत्थाय शौचकृत्यान्यवतिष्ठन्त्यिति मे तदा विस्मयमजनयत् । तत्प्रह्व ममातीव प्रशसनीयमासीत् ॥

अथ सा भयङ्करी रात्रिरागता। अस्मत्पितृव्यस्तदा राजकोट एव स्थित। मत्पितुरस्वास्थ्यमधिकीभूतमाकर्ण्य स राजकोटे स्थितिमग्रहीदिति कचिदिदानीं स्मर्यते। एतौ सहोदरौ सौभ्रात्रसम्पन्नौ। पितृव्यस्तावदादिनान्तमस्मत्पितुर्निकटेऽवर्तत। रात्रिकाले सर्वानस्मान् शयनाय विसृज्य स्वय पितु पार्श्वमन्वशेत। इयमेव पितुर्मरणाय दैवेन नियमिता रात्रिरिति न केनापि स्वप्नेऽप्यबोधि। तस्य दशा तु कृच्छ्रतरैव स्थिता॥

निशाया प्राय सार्धदशैकादशहोरासमयेऽह पितु पादौ संवाहयन्नवस्थितोऽभवम्। अस्मत्पितृव्यस्तु स्वय संवाहयामीति मामवोचत्। एतेन प्रहृष्टोऽह मुक्तकार्य सद्य शय्यागार प्राविशम्। मम भार्या गाढसुप्ताभवत्। मयि स्थिते कुतस्तस्या निद्राप्रसङ्ग। तामह प्राबोधयम्। किन्तु पञ्चषनिमेषान्तरे भृत्यो द्वारमघट्टयत्। उद्भ्रान्तोऽहमुदतिष्ठम्। ननूत्थीयता तातो बलवदस्वस्थ इति स प्राह। तातो बलवदस्वस्थ इति पूर्वमेव मयावगतत्वात् भृत्येन पुनस्तथानिवेदनस्य भूतार्थो मम सुस्पष्टोऽभवत्। झटिति शयन परित्यज्य यथावृत्त कथयेति तमपृच्छम्। हन्त भो तात स्वर्गत इति सोऽवादीत्॥

तर्हि सर्वमिदानीमवसितम्। स्वहस्तनिष्पीडनमात्रमवशिष्टम्। भृशमनुतप्यमान पर्याकुलीभूय पितु कोष्ठागार प्रधावितोऽस्मि। यद्यह विषयान्धो नाभविष्य तदा मत्पितुरवसानकाले वियोगो मे नाभविष्यत्। तत्पादौ संवाहयतो ममाङ्कस्योपर्येव स प्राणानमोक्ष्यत्। अथ पुनस्तद्भाग्यमस्मत्पितृव्यमुपस्थितम्। यदय स्वाग्रजे तत्तादृशभक्तिमानासीत्तदय तद्भाग्यमलभत। प्रत्यासीदन्तमवसानकाल मे पिता लक्षणैरज्ञासीत्। स हि संज्ञया पत्र लेखनीं चानाय्योत्तरक्रियार्थं सज्जीक्रियतामिति विलिख्य स्वहस्तगत कङ्कणबन्ध स्वकण्ठगत सौवर्णतुलसीमणिहार चोत्पाट्य प्राक्षिपत्। तदुत्तरक्षणमेवायमिहलोकमत्याक्षीत्॥

एतस्मिन्नतीताध्याये मया प्रस्तुतस्य पश्चात्तापस्य कारण तु मदीयपरमावधानसापेक्षेऽपि विपत्काले विषयासक्तिर्मया न परित्यक्तेति। कलङ्कोऽय न केवलमद्यापि मे मनसो न प्रमार्जित परमद्याप्यहमेव मन्ये यदपरिमितपितृभक्तिविशिष्टस्यापि तत्कृते सर्वस्वदानसन्नद्धस्यापि मम एतद् मनस्तत्क्षणे विषयाकृष्टत्वात् परीक्ष्यमाणाया मदीयभक्तेरक्षम्यो दोष प्रत्यक्षीभवतीति। ततोऽहमकृतभार्याद्रोहोऽपि कामोपहत पतिरभूवम्। कामपाशादात्मनो विमोचनाय चिरकाल प्रवृत्त। कामजयात्पूर्वं दैवेन बहुधा परीक्षितोऽभवम्॥

मद्भार्यागर्भसम्भूत स तपस्वी शिशुर्न तावत् त्रिचतुरदिनान्यप्यश्वसीत्। तथा हि सति कि वाचिक निरीक्षणीयम्। कृतोद्वाहं सर्वेऽप्यनेन मदीयदृष्टान्तेन जागर्यन्तामित्याशासानो मदीयपितृशुश्रूषाकर्मनिन्यायसमदित प्रकरणाद्विरमामि॥

दशमोऽध्यायः

# धर्मप्रभादर्शनम्

आषट्सप्तवर्षवयः प्रभृति षोडशाब्दवय पर्यन्तमहं पाठशालायामध्यगीषि। तत्रोच्चावचविषयेषु बोध्यमानेष्वपि धर्मस्य तावच्छिक्षण न किल लेशोऽपि प्रतिपादितम्। शिक्षकेभ्य प्रयासमन्तरा यन्मया प्राप्तव्यमासीत् तदेव खलु मया न प्राप्तम्। तथाप्यहमभितो वर्तिलोकेभ्य किंचिर्त्किचिद्धर्मज्ञान समपीपदम्। अत्र धर्मपदस्य विशालोदारो ह्यर्थो वक्तव्य। धर्मो नामा मत्स्वरूपावबोध – आत्मज्ञानम्॥

मम वैष्णवाभिजनत्वाद्विष्णुदेवालय प्रत्यसकृन्मया गन्तव्यमापतितम्। किन्त्वत्र मम हृदय श्रद्धाशून्यमभवत्। तस्य देवालयस्य चाकचक्य वैभव च मे न रोचते स्म। तत्र ह्यनाचाराश्च प्रचरन्तीति मया श्रुतपूर्वमासीत्। अतस्तद्विषये ममौदासीन्यमजनि। अनेन कारणेन देवस्थानतो मया न किमपि प्रयोजनमलाभि॥

किन्तु तत शिक्षितुमशक्यभूतोऽर्थं कस्याश्चिदस्मत्कुटुम्बे चिरानुजीविन्या स्त्रिय सकाशादवगत। मयि तस्या प्रीतिरद्यापि स्मरणीया भवति। निरूपितपूर्वं हि मम भूतपिशाचि भीरुत्वम्। रम्भा (तत्खलु स्त्रियो नाम) तस्यौषध रामनामेति ममोपदिष्टवती। तदौषधापेक्षया रम्भायेन मे गरीयसी श्रद्धा निरूढा। तस्माद्भूतप्रेतादिभयस्य परिहारार्थं मया बाल्ये वयस्येव रामनामोच्चारणमारब्धम्। चिरायास्मिन्नप्रचलत्यपि यद्बाल्ये समुप्त बीज तन्नहि व्यर्थमभूत्। अद्य मे रामनामेत्यमोघायते या शक्तिस्तस्या खलु रम्भाबाइकृतो बीजावाप एव कारणम्॥

एतत्कालमेव रामायणे परमभक्तिमानस्मत्पितृव्यस्य कुमार एको मम च मद्द्वितीयाग्रजस्य च रामरक्षाशिक्षणार्थमानुकूल्य पर्यकल्पयत्। तामेता कण्ठेकृत्य प्रतिदिन प्रातरावां स्नानोत्तर स्तोत्रपारायणमनुर्वहि। पोरबन्दरपुरे यावदस्माभि स्थित तावदभ्यासोऽय प्रचलति स्म। राज कोटस्य वायुमण्डले सैष तिरोहितोऽभवत्। तत्र हि नाहमतिश्रद्धालुरभवम्। तच्छिक्षकस्य भक्ति-प्रेमास्पदत्वाद्रामरक्षाया शुद्धोच्चारणकौशलाभिमानाच्च सेय मया पठ्यते स्म॥

इद हि निरपायितया मम हृदये निरूढ यदस्मत्पितुरग्रे प्राचलद्रामायणपठन नाम। व्याध्युपक्रमात्कतिपयदिनान्यस्मत्पिता पोरबन्दरपुरे स्थितिमग्रहीत्। तत्र प्रत्यहमसौ रामायण शृणोति स्म। तत्पठिता श्रीरामपरमभक्तो बिलेश्वरस्थो लधामहाराजो नाम। आसीत्तद्विषयिणी काचन किंवदन्ती यदयमामन क्षताङ्गस्थलेषु श्रीबिलेश्वरमहादेवस्वामिन पूजानिर्माल्यपत्राणि प्रयुञ्जान श्रीरामनोच्चार्यमाणश्च किमप्यौषधमन्तरेणैव सकुष्ठव्याधेरुत्तीर्ण इति। सैषा यथार्था स्यान्न वा स्यात्। वय तु ता यथार्थामेव प्रत्यैम। एव च वस्तुतो रामायणपुराणमुपक्रम माणस्य तस्य शरीरे कुष्ठच्छायापि नादृश्यत। अय मधुरकण्ठ। द्विपदीश्चतुष्पदीश्च गायन्नर्था-पयति स्म। स्वय तद्रसे लीन श्रोतॄनप्यानन्दपरवशानकरोत्। तदानीं मया त्रयोदशवर्षदेशीयेन

भाव्यम् । तथापि तत्पुराणश्रवणादहं महान्तमानन्दमन्वभूवमिति जाने । इदानीं मे रामायणे या गाढभक्तिः सा तच्छ्रवणमूला । अद्य तुलसीदासप्रणीतं यद्रामायणं तत्खलु भक्तिसाहित्ये सर्वोत्तमं मन्ये ॥

तदनु कियद्भिरेव मासैर्वयं राजकोटमागताः । तत्र रामायणपुराणकथनमेवं न हि प्राचलत् । किन्तु प्रत्येकादशि भागवतं पठ्यते स्म । तस्य श्रवणाय सकृत्सकृदहमप्यगच्छम् । किन्तु तत्कथकस्यास्मास्वानन्दोत्पादनशक्तिर्नासीत् । अद्य खलु जाने भागवतं नाम मनुष्यस्य हृदये भक्तिरसोत्पादको ग्रन्थ इति । गुजरातीभाषामयमेतदत्युत्साहेन मया पर्यपाठि । मूलभागवतस्य कश्चिद्भागो मया गृहीतत्रैंसदाहिकोपवासव्रतसमये भारतभूषणपण्डितश्रीमदनमोहनमालवीयानां शुभमुखादश्रौषम् । अभूच्च मे मनसि यद्बाल्य एवैतादृशानां मुखाद्यदि भागवतमश्रोष्यत तदा बाल्यात्प्रभृत्येव मे तत्रासक्तिरुदैष्यदिति । बाल्ये वयसि रूढमूलः संस्कारो मानुषस्वभाव-मन्तरवगाह्य तिष्ठति । अतो हाय मे शाश्वतिकपश्चात्तापहेतुर्जातो यत्तस्मिन्नवसरे भूयसां सद्ग्रन्थपाठश्रवणभाग्यं न मामुपानमदिति ॥

किन्त्वह सर्वमतानां हिन्दुधर्मसम्प्रदायानां च सहनदृष्ट्यावेक्षणं राजकोटे शिक्षितवान् । अस्मत्पितरौ न केवलं विष्णुदेवस्थानमपि तु शिवदेवालयं रामदेवालयं च गच्छतः स्म । गच्छन्तावस्मानपि सहानयेताम् । अनेकशश्चास्मान् देवस्थानं प्रेषयन्ति स्म । जैनसन्यासिनोऽ-स्मत्पितुर्दर्शनाय सर्वदाभिगच्छन्ति । अपि चास्माकमजैनानां गृहे ते भिक्षां स्वीकुर्वन्ति स्म । पित्रा सह धर्मसम्बद्धान्व्यावहारिकसम्बद्धांश्च कथालापानकुर्वन् ॥

एवं मे पितुः पारसीमुसल्मानजातीया अपि मित्राण्यासन् । तेऽपि पित्रा स्वस्वधर्म-सम्बन्धिनीः कथाः कुर्वन्ति स्म । एतदालापान्मे पिता सर्वदाप्यादरेण कश्चित्तत्परतया चाशृणोत् । तदा मे पितरं शुश्रूषमाणस्य तत्तदालापानां श्रवणसम्भवः प्राप्तः । एवं मे कृतानेकविषयसङ्ग्रहस्य सर्वे धर्माः समदृष्ट्या ग्रहीतव्या इति तत्त्वं मनसि लग्नमभूत् ॥

क्रैस्तमतीयधर्मविचारस्तावदन्य एवासीत् । तत्र मे काचिदप्रीतिरजायत । तन्निमित्तं चैतत् । तदानीं तन्मतप्रचारका अस्मद्दूषणविद्यालयसमीपे कश्चित्सन्धिप्रदेशे स्थित्वा हिन्दू-जनांस्तदीयदेवतांश्चाधिक्षिपन्ति स्म । इदं मे दुस्सहमासीत् । सकृदेव तच्छ्रोतुमहं गत इति स्मरामि । एतदनिष्टानुभवानन्तरं पुनस्तस्य श्रवणाय नैव गन्तुमना अभूवम् । तत्काल एव प्रसिद्धं कथनं हिन्दुपुरुषः क्रैस्तमतं प्रविष्ट इत्यश्रौषम् । आसीच्च जनप्रवादो यदयं ज्ञानस्नानकाले परिवर्जितवेषो गोमांसमपि भक्षयञ्चैव भूत्वा तदनन्तरमेरोप्यदेशीयवसनशीर्षकधारी पर्यटितुमारभतेति । सर्वमेतन्निशम्य नितरामहमदूये । यस्य नाम धर्मस्य कृते गोमांसादानं मद्यपानं वेषान्तरपरिग्रहश्च कर्तव्यतामापद्यन्ते स कथं धर्म इत्याख्यामर्हतीति प्रश्नो मम मानसमबाधत । किं च प्रत्यधर्मन्तीभूतः स पुरुषः पूर्वेषां धर्मं च रीतींश्च नीतींश्च स्वदेशं च दूषयितुं प्रवृत्त इत्यशृणवम् । इमे सर्वे वृत्तान्ताः सम्भूय क्रैस्तमते मम द्वेषमजनयन् ॥

सर्वेष्वितरमतेषु मम समदर्शित्वमात्रेण न स्फुटं मन्तव्यमहमीश्वरे दृढश्रद्धावानभूवमिति । एतर्हि मत्पितुः पुस्तकसङ्ग्रहान्तर्गतो मनुस्मृत्यनुवादो मदीयहस्तमागतः । तत्रोपवर्णितं जगत्सृष्टिरित्यादिकमपठिषम् । न केवलं मे तत्र श्रद्धा न जातापि तु नास्तिकतापि समजनि ॥

अस्मदन्यपितृव्यकुमारस्य (अयमद्यापि जीवति) बुद्धिरतीव पटीयसीत्यासीन्मे प्रत्ययः । तस्मै मदीयसंशयं न्यवीविदम् । स तु मां प्राह—प्रौढं वयः प्राप्य भवता इमे तर्केण परिच्छेद्या भविष्यन्ति । बालकैरेवंविधाः प्रश्ना न प्रष्टव्या इति । एतदाकर्ण्य तूष्णीमभूवम् । परन्तु मे मनः समाधानं नाविन्दत । किं च मनुस्मृतौ खाद्याखाद्यप्रतिपादकाध्यायगता विषया प्रचलितपद्धतीनां विरुद्धा इव प्रत्यभासन्त । इमा शङ्का प्रत्यपि कृतप्रश्नेन पूर्ववदेवोत्तरं लब्धम् । ततोऽहमेवमात्मानं समादधे यद्भवतु दिवसेषु मम बुद्धिर्विकसिष्यति । ततो भूयः परिशील्य विषयानिमान्सम्यगवगमिष्य इति ॥

मनुस्मृतिपरिशीलनादहिंसातत्त्वं तावन्मया नावगतम् । उक्ता खलु मदीया मांसाहारविषयिणी कथा । मनुस्मृतिरेनां पर्यपोषयदिव । सर्पोत्कुणादीनां वधो न्याय्य इत्याशयो मे सञ्जातः । तद्वयसि मया धर्म्यमनुबुध्य मत्कुणादीनां हिंसनं व्यधायीति स्मरामि ॥

अथैक एव विषयो मन्मनसि रूढमूलोऽभवत् । धर्म एव जगतः प्रतिष्ठा सत्यमेव धर्मस्य तत्त्वमिति । सत्योपासनमेव मम मुख्योद्देश्यमभवत् । दिने दिने मदीयदर्शनगोचरं सत्यस्य महिमा वर्धिष्यते स्म । तत्त्वार्थस्य च सीमापि मद्दृष्टिपथे विस्तारमाप्नुवन्ती वरीवर्ति ॥

तथा च गुर्जरनीतिपद्यमेकं मम हृदये निविष्टमस्य मन्मनसि साम्राज्यमस्थापयत् । एतेन कृतापकारस्य प्रतीकारतया तदुपकारकरणमेव जीवनयात्रानिर्वाहसूत्रं परिणतम् । इह तत्त्वे मदीयासक्तिस्तथा दृढतामापन्ना यथाहं कार्यक्षेत्रे तद्बहुधा परीक्षितुमुपाक्रमे । तदेतदद्भुतं पद्यम् । यथा —

आशीर्वादकृते जलं परमया भक्त्या नमन् भक्षयन्  
सन्तापं जनयिष्यते च परया प्रीत्यामृतान्नं ददन् ।  
धार्मिक्यैकसहायिनेऽपि वितरन्कार्षापणानां चयं  
प्राणानां परिरक्षकस्य च कृते प्राणांस्त्यजन्नात्मनः ॥  
दत्तस्योपकारस्य च पुनर्भूयः पदं लम्भयन्  
निर्ब्रूय स्वपरप्रभेदमनिशं निष्पक्षपाती चरन् ।  
भूयिष्ठोपकृतेऽपि शान्तमनसा श्रेयः परं भावयन्  
प्राज्ञः सद्गुणो महान्विनयते जानीहि तं सत्तमं ॥

इति ॥

एकादशोऽध्यायः

# विदेशप्रस्थानसन्नाहः

क्रिस्तशकस्य सप्ताशीत्युत्तराष्टशताधिकैकसहस्रतमे वत्सरे प्रवेशपरीक्षायामहमुत्तीर्णोऽभवम् । तत्कालमपि परीक्षामहमदाबादमोहमयीनगरयोर्द्वयोः स्थलयोः प्रचलति स्म । प्रायेण तद्देश्यानामनाढ्यतया विद्यार्थिनः सन्निकृष्टवर्तिनीमल्पव्ययप्राप्यामहमदाबादनगरीमेव गच्छन्ति स्म । अस्मदीयगृहजनस्याप्यनतिपुष्टत्वादहमप्येवमन्वतिष्ठम् । राजकोटादहमदाबादनगरं प्रत्यसहायेन मया कृतं प्रयाणमिदं प्रथममासीत् ॥

उत्तीर्णतत्परीक्षेण मया महाविद्यालयं प्रविविक्षितव्यमित्यासीज्ज्येष्ठानामभिलाषः । मोहमयीनगर्यां भावनगरेऽपि महाविद्यालयावास्ताम् । व्ययाल्पत्वाद्भावनगरे श्यामलदासमहाविद्यालये प्रवेशमिच्छुस्तत्र गतोऽभवम् । किन्तु तत्राहं न निश्चिद्वेदम् । पाठाः सर्वेऽप्यतीव दुर्बोधतरा अलक्ष्यन्त । आस्तामध्यापकभाषणेषु ममोत्साहोदयकथा परं तदुक्तीनामर्थोऽपि मया नावगम्यते स्म । अत्र तेषां न कश्चिद्दोषः । तदानीं हि तन्महाविद्यालयाध्यापकाः प्रथमकोटिप्रविष्टा इति पर्यगण्यन्त । मम बुद्धेस्तावदप्रौढिमैव दुर्बोधत्वहेतुरासीत् । वृत्तायां वार्षिकप्रथमपरीक्षायां मह गृहं प्रतिन्यवर्तिषि ॥

व्यवहारकुशलो विद्वांश्च मावजी दवे इत्याख्यो ब्राह्मणोत्तमश्चिरादस्मत्कुटुम्बमित्रं मन्त्रणीयश्चासीत् । अस्मत्पितुर्मरणोत्तरमप्यसौ कुटुम्बेन पूर्वसम्बन्धं न पर्यत्यजत् । मम शालाविरामकाले कदाचिदयमस्मदीयगृहमुपागतोऽभूत् । मम मात्रा ज्येष्ठभ्रात्रा च यथालापप्रसङ्गं मम विद्याभ्यासङ्गमधीकृत्य तेन प्रश्नः कृतः । श्यामलदासमहाविद्यालये मामधीयानमाकर्ण्य स एवं प्राह । यथा —

अद्यतनकाले मित्र ! यथोचितविद्याभ्यासमन्तरा युष्मास्वेकोऽपि कबागान्धिनाध्यासितमधिकारपीठमारोढुं न पारयेत् । युष्मद्वंशस्यैव तत्पीठरक्षणेच्छुभिर्बालकोऽयमधीयानः सादरमवेक्षणीयः । अस्य बि. ए. परीक्षामुत्तरितुं चतुःपञ्चवर्षाण्यपेक्ष्यन्ते । तावच्च कृताभ्यासेनापि पञ्चाशतो वा षष्ट्या रूप्यकाणां लाभः स्यदुद्योगप्राप्त्या । न पुनः प्रधानसचिवपदं लप्स्यते । अथवा मदीयकुमारवद्वकीलपरीक्षार्थमभ्यसिसिषीरितोऽप्यधिकः कालोऽपेक्ष्यते । तदन्तरे प्रधानपदवीकाङ्क्षिणो वकीलपरीक्षामुत्तीर्णा बहवः सज्जस्यिता भवितारः । सर्वमेतदपेक्ष्य तस्य विदेशप्रस्थापनं वरं मन्ये । ब्यारिस्टर्पदमतीव सुसाधमिति केवलरामो (इदं मावजीदवेमहाशयपुत्रस्य नाम) ब्रवीति । त्रिभिरेव वत्सरैरान्तमनीय परावर्तितुं शक्यते । व्ययश्च चतुःपञ्चसहस्ररूप्यकेभ्योर्ध्वं न भविता । अभिनवागतं ब्यारिस्टरपुरुषं पश्यत । वियता वैभवेनासौ विजृम्भते । प्रार्थितोत्तरक्षणमेव स प्रधानपदवीं लब्धा । अतोऽहमेवं मन्ये । अस्मिन्नेव वर्षे मोहनदास इङ्ग्लेण्ड्देशं प्रेषयितव्य ।

तत्र केवलरामस्य बहूनि मित्राणि सन्ति । अयं तत्परिचयपत्रं लिखित्वास्मै प्रयच्छति । मोहनदासस्य तत्र सर्वं सुसूत्रमापद्यते । इति ॥

जोशीजीमहाभागो (मावजीदवेमहाशयोऽस्माभिरेवं सम्बोध्यते स्म) मदभिमुखीभूय 'इहैव स्थित्वाध्ययनापेक्षया विदेशगमनं तवाप्यभिमतं ननु' इति मामपृच्छत् । तद्वाक्यभङ्गौ निरूप्यमाणायां मत्प्रतिवचने तस्य संशयच्छायापि नासीदिति स्पष्टमुपलक्ष्यते स्म ॥

इतोऽप्यतिशयेन मन्मनस्तुष्टिकरीं कर्तव्यसूचनामुपदेष्टुं न शक्यमासीत् । महाविद्यालयस्य हि कठिनशिक्षणेनाहं पूर्वमेव निरुत्साहः सम्पन्नः । तस्मादविशङ्कया तत्सूचनामङ्गीकृत्याहमवोचम् । यथा मनागपि न विलम्ब्येत मे प्रस्थानं तथा कर्तुं हि प्रशस्यं भवति । परीक्षास्त्वरितमुत्तरितुं न शक्यन्ते । वैद्यपरीक्षामुद्दिश्य मत्प्रेषणमपि ननु स्पृहणीयम् । इति ॥

मदग्रजो मां प्रत्यवस्थायाचकथ तत्खलु पितुः सर्वथा नाभिमतमासीत् । वैष्णवैः शवच्छेदनप्रसङ्गः सर्वथा परिहार्य इति यत्तेन कथितं तत्किल त्वामुद्दिश्यैव । त्वया वकीलपदं प्राप्तव्यमित्येव तस्याशयोऽभूत् । इति ॥

जोशीजीमहाभागोऽवादीद्यथा —

गान्धिजी(अस्मत्पिता)महाशयस्य यथा वैद्यवृत्तिं प्रति विरुद्धोऽभिप्रायस्तथा न खलु ममापि । अस्मदीयशास्त्राणि नैतां निषेधन्ति । किन्तु वैद्यपरीक्षायामुत्तीर्णेनापि त्वया प्रधानपदं न लभ्यते । प्रधानपदवीं वा सति सम्भवे ततोऽप्युच्चतरस्थानं वा समारूढं भवन्तमिच्छामि । युष्मदीयमहाकुटुम्बसंरक्षणं तदा हि शक्यं भवेत् । अनुदिनं कालो विषम विषमः सम्पद्यते । तस्माद्विवेकिना ब्यारिस्टरपदमेव त्वया सम्पादनीयम् । नान्य खलु विद्यते तत्सदृशः पन्थाः । इति ॥ तदनु मातुरभिमुखीभूय 'अद्य मया गन्तव्यम् । मदुक्तं सम्यग्विमृश्यताम् । भूयोऽहमत्रागतस्तस्य विदेशप्रस्थानसन्नाहं प्रचलन्तं श्रोतुमिच्छामि । यदि मत्सकाशात्किमपि साहाय्यमपेक्ष्यते तदाहं सर्वथात्र बोधनीय' जोशीजीमहाभागो निरगात् ॥

ततो मया व्योम्नि प्रासादकल्पनं समारब्धम् । मदग्रजस्त्वेकचिन्तानिमग्नोऽभवत् । एतदावश्यकं द्रव्यं कथं सम्पादनीयम् । बाल्यवयसं मामसहायमेव तावद्दूरं प्रेषयितुमुचितं वा ॥

मदम्बा तु प्रतिपत्तिमूढाभवत् । मद्वियोगो हि तस्या नाभिमतः । सैवमाह — इदानीं युष्मत्पितृव्य एव कुटुम्बज्येष्ठः । तेनैव तावन्मन्त्रणीयम् । यद्यसावनुमन्येत तदैतद्विमर्शयिष्याम इति । एवमुक्त्वा मम सद्यस्तनं प्रस्थानं सा निरोद्धुमयतिष्ट ॥

मदग्रजस्य मनस्यन्यो विचारः कश्चिदस्फुरत् । तद्यथा—पोरबन्दरसंस्थानस्योपर्यस्मात्समधिकारविशेषः कश्चिदस्ति । लेलीमहाशयस्तत्रेदानीं शासिता भवति अस्मत्कुटुम्बविषये सदभिप्रायं च पुष्णाति । पितृव्ये तस्य कृपा विद्यते । विदेशे विद्याभ्यासङ्गाय संस्थानकोशात्किमपि सहाय्यमर्थितः स कुर्यात् । इति ॥

मयैन सर्वं समञ्जसमन्वष्यत । पोरबन्दरपुरं प्रति प्रस्थातुमहं सज्जोऽभवम् । तदात्वे धूमशकटीमार्गाभावाद्घोरथेन प्रयाणं पञ्चभिर्दिनैर्गन्तव्यमभूत् । उक्तपूर्वं हि मदीयनिसर्गभीरुत्वम् । किन्तु तात्कालिकी तीव्रतरा मे विदेशजिगमिषा तद्भीरुत्वमन्तरधत्त । धोराजिपर्यन्तं बलीवर्द-यानेनाहमगमम् । एकाहात्पूर्वमेव पोरबन्दरपुरं प्रेप्सुर्धोराजिपुरादुष्ट्रमारुह्य प्रायासिषम् । मम तदिदं प्रथममेव क्रमेलकारोहणम् ॥

अथ पोरबन्दरपुरं प्राप्य पितृव्यं साष्टाङ्गं प्रणम्य तं विदिताखिलवृत्तान्तमकार्षम् । स पुनरात्मना मनसि विचार्य प्रत्यवोचद्यथा—

‘विदेशं गते स्वधर्मरक्षणं शक्यं वा न वा न जाने । यथाश्रुतं तु विमृशतो मम तत्र शङ्कैव समुदेति । महामहान्यारिस्टर्पदारूढानां जीवनचरितविमर्शे क्रियमाणे तेषामेरोप्य-म्लेच्छानां च वैलक्षण्यमेव नोपलक्ष्यते । पानभोजनादिव्यतिकरेषु निश्शङ्का ह्यमीषां प्रवृत्तिः । धूमवर्तयस्तु सर्वदा तन्मुखसङ्गिन्यो भवन्ति । वेषधारणेष्वपि वेषानुकारिण्यपरा विडम्बना । एतादृशं वृत्तमस्मत्कुटुम्बयोग्यं न भवति । निश्चाहमत्रान्तरे महायात्रासमुद्यत इवास्मि । मदीयमायुर्हि समाप्तप्रायम् । स्वयं मृत्युसागरतटे समुपविष्टस्त्वां विदेशगमनाय—समुद्रतरणाय—कथमनुजानीयाम् । तथापि त्वदीयमार्गे नाहमन्तरा भवितुमिच्छामि । अत्र हि मातुरनुज्ञा प्रधाना । तयानुमतश्चेदनस्य प्रयाहि । नाहमन्तरा स्थास्यामीति तां ब्रूहि । सर्वथा मदाशिषं प्राप्तवानसि । इति ॥’

तदनु मयाप्यभाषि—

युष्मत्सकाशादितोऽप्यधिकमवाप्तुं नाहमाशासे । अथास्मदम्बाया अनुज्ञामधिगन्तुं यतिष्ये । किन्तु लेलीमहाशयस्य भवद्भिरेका प्रशस्तिपत्रिका दीयतामिति ॥

एवं पृष्टः स प्रत्यवादीत्—

मया कथं क्रियतामिदम् । लेलीमहाशयस्तावत्साधुर्जनः । अस्मत्कुटुम्बपरिचयं प्राप्याप्य पत्रमेव स्वयं लिख । तदा भवतस्ते दर्शनं दास्यति । कञ्चित्साहाय्यं च कुर्यात् । इति ॥

न जाने केन हेतुना मम पितृव्येन तस्य महाशयस्य प्रशस्तिपत्रिका न दत्तेति । विदेशगमनं धर्मविरुद्धो व्यापार इति साक्षादुपलम्भनं नोत्सहते इति कथयेरामीव ॥

लेलीमहाशयं प्रति पत्रिकामलिखम् । स च स्वार्थे द्रष्टव्योऽस्मीति सन्देशं प्राहिणोत् । [illegible] बी. ए. परीक्षामुत्तीर्य [illegible] । साम्प्रतं तु [illegible] न शक्यते [illegible] । [illegible] समुचित [illegible] पश्चात् कृत्य [illegible] । [illegible] । किन्तु [illegible] कृपा [illegible] ॥

भार्याया आभरणानि किमुपयुञ्जीयेति व्यचिन्तयम् । ज्येष्ठाग्रजे मम विस्रम्भो महानासीत् । अमेयं खलु तदौदार्यं मद्विषये । मय्यसौ स्वपुत्रनिर्विशेषं स्निह्यति स्म ॥

पोरबन्दरपुराद्राजकोटं प्रतिनिवृत्य यथावृत्तमखिलं तस्मै न्यवेदयम् । अथ सम्मन्त्रितो जोशीजीमहाशय. प्राह सति सम्भवे द्रव्यमृणीकृत्यापि विदेशमहं प्रस्थापनीय इति । अथ स्वभार्याभरणाना विक्रेतव्यतामग्रजाय समसूचयम् । ततो हि द्विसहस्ररूप्यकद्रव्यमुत्तिष्ठेत् । अग्रजस्तु यथाकथंचिद्द्रव्यं सर्वथा स्वय सम्पादयिष्यामीति प्रत्यजानीत ॥

किन्तु मातुर्नाद्यापि मन. समाहितमभूत् । सा किल प्रवृत्तसम्बद्धानाखिलवृत्तान्तान् सूक्ष्मतया जिज्ञासितुमारब्ध । तया हि कुतोऽप्यश्रावि यद्विदेशंगता युवका सर्वेऽपि दुर्वृत्ता भविष्यन्तीति । अन्यः कश्चिदाह तत्र गताः सर्वेऽपि मासाहारिण. सम्पत्स्यन्त इति । अपरेण च तस्या. कथितं यन्मद्यं विना तत्र दिवसमेकमपि स्थातुं न शक्यत इति । 'किमस्य त्रूषे' इति जननी मामपृच्छत् । अथाहमवोचम्—किमु नाह तव श्रद्धेयः । त्वामह न कदापि मृषा कथयिष्यामि । न हि तद्वस्तुनामेकमपि स्प्रक्ष्यामीत्यह ते प्रतिजाने । एतादृशभये तु सम्भवनीये तत्र भवान् जोशीमहाशय कि विदेशगमनमनुजानीयात् । इति ॥

सा पुनरभाणीत्—

सर्वथा मम त्वं विश्वसनीयोऽसि । किन्तु दूरदेशे कथ वा किं वा । यत्सत्यमह भ्रान्तेवाद्य स्थिता । न मे बुद्धि. प्रसरति । इद प्रस्तुय तत्रभवन्तं बेचरजीस्वामिनं प्रक्ष्यामीति ।

बेचरजीस्वामिन. पुरा मोढवनियाख्यवैश्यप्रभेदान्त.पातिनोऽपि पश्चाज्जैनसाधवः संवृत्ताः । तेऽमी जोशीजीमहाभागवदस्मत्कुटुम्बस्य मन्त्रणीया आसन् । ते किल मदीयपक्षमाऽव्याहमेनद्विषयत्रयमधिकृत्य घाउनेन प्रतिज्ञ कारयिष्यामि । अथास्य विदेशप्रस्थापनं क्रियताम् । इत्युक्तवा मांसं च मद्यं च स्त्रीसङ्गं च त्रयमपि दूरीकरिष्य इति मा प्रतिज्ञामकारयन् । अथैवंकृतप्रतिज्ञस्य मे गमनानुज्ञामम्बा प्रादात् ॥

उच्चविद्यालयस्था मम गौरवप्रदर्शनार्थं सन्तोषकृत्समेकं न्ययदधुः । राजकोटविद्यालकस्य विदेशगमनं नाम तदानीं खल्विषमपूर्वघटना । धन्यवादप्रदानाय द्वित्रवाक्यानि पूर्वमेव लिखित्वा तत्र गतोऽभवम् । किन्तु तत्र वचन मे कृच्छ्रान्निरसरत् । तद्वाचयतो मम यत् तदृचं शिरोघूर्णनं सर्वाङ्गवेपथुश्च तन्मयाद्यापि स्मर्यते ॥

अथ ज्येष्ठनामादिष. प्राप्य मोहमयीनगरमहं प्रस्थितः । राजकोटान्मोहमयीनगरं प्रति प्रयानं ममेदं प्रथममासीत् । अग्रजोऽपि सहागतः । किंतु बहुश. किल हस्तगतमपि कवलं मुख न प्रविशति । मोहमयीनगरे मा प्रयाणस्यानुभन्तराया. प्रतिपालयन्ति स्म ।

'नूनमहं जाने यादृशः श्रीमता मम पित्रा सह परिचयोऽभूदिति । अतस्तो मे पूज्यः । किन्तु विषयेऽस्मिन्नकिंचिदपि कर्तुमुत्सहे । विदेशगमननिश्चयमन्यथाकर्तुं न शक्नोमि । अस्मत्पितुर्मित्रस्य कुटुम्बस्य मन्त्रणीयो विद्वान्ब्राह्मणः कश्चिदस्ति । स तावद्विदेशयाने दोषं कोऽपि न हीत्याह । अस्मन्मात्रास्मदग्रजेन च द्वाभ्यामपि पूर्वमेवात्र सम्मतिरदायीति' ॥

"तर्हि कुलजनस्याज्ञां किं भवान्निराकरोति ।"

"नाहमत्र किमपि प्रतिवक्तुं पारये । मन्ये पुनरस्मिन्विषये भवद्भिरन्तरायस्थानं न युज्यत" इति ॥

एतद्वचनमाकर्ण्य कुलिको मे भृशमकुप्यत् । अपि च मामाक्रुशत् । अहं तावन्निष्कम्प एव स्थितः । अथायमित्थं निर्णयमाचष्ट—

"अद्यप्रभृति बालकोऽयं जातिबाहिरो मन्तव्यः । यस्तावदस्य साहाय्यं करिष्यति यो वा तद्विसर्जनाय नौस्थानं यास्यति स नूनं सपादरूप्यकं दण्डं दापयिष्यत इति ॥"

निर्णयादस्मादहं न चकितोऽभवम् । श्रेष्ठिनमामन्त्र्य ततो निरगच्छम् । अथाहमचिन्तयम्—सर्वमेनद्वृत्तमाकर्ण्य मदग्रजः किन्तु खलु ब्रूयात् । अस्मात्स्वाधीनश्चेत्का गतिरिति । स तु मदीयसङ्कल्पवशादचलितमनस्स्थैर्यं श्रेष्ठिनिर्णये सत्येव स्थितेऽपि विदेशयानं त्वस्याभिमतमिति पत्रमलेखीत् ॥

इयं घटना मे शीघ्रप्रयाणाय परमौत्सुक्यमजनयत् । कुलजनेन मदग्रजोऽस्मिन्विषये बलात्कृतश्चेद्यद्वा यः कोऽप्यन्तरायः समापतितश्चेत् का गतिः । इत्येवमात्मनः परिस्थितिमनुचिन्तयन् कतिपयदिनानि यावदक्षेप्स्यं तावत् पुनागदस्य कश्चिन्न्यायवादी व्यारिस्टरपद-प्रेप्सुराङ्गलनववमासस्य चतुर्थदिवसे विदेशं प्रस्थास्यत इति वार्तामश्रौषम् । मोहमयीनगरे मत्क्षेमचिन्तनाय मदग्रजेन नियुक्ता सुहृदो मया गत्वावलोकिताः । तेऽपि तादृशे सहप्रस्थायिनि जने लभ्ये सति न त्याज्योऽयमवसर इत्यभिप्रायन् । कालविलम्बस्य नासीदवकाशः । सद्यः प्रस्थानमनुज्ञातव्यमिति मदग्रजस्य तन्त्रीसन्देशमहं प्राहैषम् । तेनाप्यनुज्ञा दत्ता । मम श्यालं गत्वा पणमपृच्छम् । स तु श्रेष्ठिनिदेशमुल्लङ्घ्य वहित्रावर सम्पादयितुमहं न सक्तोऽस्मीत्यब्रवीत् । अस्मत्कुटुम्बमित्रमेकः गत्वा मत्प्रयाणस्येतरव्ययस्य च यावत्पर्याप्तं तावद्धनं मे दीयतामिदं च पश्चान्मदग्रजाद्गृह्यतामिति प्रार्थयम् । स चैतदङ्गीकृत्य मम धैर्यमाचष्ट । सोऽयमुपकारो मे चिरस्मरणीयोऽभवत् । तद्धनादहमुपयुज्य प्रयाणानुज्ञापकं पत्रमक्रैषम् । नौकया प्रयाणस्य यद्यदावश्यकं तत्तत्सज्जीकरणमवशिष्टमभूत् । विषयेऽस्मिन्ननुभवशाली सुहृदेकः स्थितः । स मे वसनाच्छादनादिकमखिलं सज्जीचकार । कतिचिद्वस्त्राणि ममाभिमतान्यासन् । अपराणि कानिचिन्न मह्यमरोचन्त । ततो भूयसोत्साहेन कण्ठबन्धिनं नसमुद्यतस्यापि ममात्र कुत्सा समजनि । हस्वकञ्चुकधारणं तु अश्लीलमिव मे लक्ष्यते स्म । किन्तु विदेशयात्रासमुत्साहेन मानसं समरीवाहमासीत् । अतः पूर्वोक्तन्यूनताप्रयुक्तोऽयमसन्तोषो नाम्नावधेयोऽभवत् । अभ्यवहार-

# जातिवहिष्कारः

मातुरनुज्ञामाशीर्वादं च प्राप्य त्रिचतुरमासदेशीयापत्यां भार्यां विहाय सपरीवाहेनेव समुत्साहेन प्रेर्यमाणो मोहमयीनगरं प्रस्थितोऽभवम् । तत्र प्राप्ते मयि केचन सुहृदो मदग्रजमकथन् आङ्ग्लवर्षसप्तमासयोर्हिन्दुसागरे तूफानाख्यो झञ्झावातः प्रवाति । मम तावदिदं प्रथमत्वात्समुद्रप्रयाणस्य सर्वथा निषेद्धव्यं मम प्रयाणमाङ्ग्लैकादशमासपर्यन्तमिति । किं च तरणिरेका तूफानवातप्रतिहता निमग्नाभवदिति केऽप्यवदन् । सर्वमेतदाकर्ण्य भीतोऽग्रजः क्वचिद्विपदं सम्भवं शङ्कमानः प्रस्थानं नान्वमन्यत । सम्प्युरेकस्य सहवर्तिनं मां निधाय मदीयव्ययार्थद्रव्यमेकस्य नः श्यालकस्य हस्ते निधायस्य मदीप्सितसाहाय्यकरणाय मित्राणि कतिचिद्बोधयित्वा मदग्रजः कार्यवशाद्राजकोटं प्रति पर्यवर्तत ॥

अधिमोहमयीनगरमासीदुष्करो मे कालातिवाहः । विदेशसम्बद्धा एव स्वप्नाः प्रादुर्भवन्ति स्म ॥

अत्रान्तरे विदेशयानमधिकृत्यास्मत्कुले समुत्थितोऽभूद्वात्याः । अद्यावधि न कोऽपि मोढवनियो विदेशं गतः । तस्मादहमनसाहसकारी नूनमहं दण्डनीयः । कौलिकैः सद्द्यमेलिताया सभाया तदग्रे मयोपस्थातव्यमित्यादिष्टोऽभवम् । तथा चाहं गतः । न जाने तावद्धैर्यं मया कुतः सहसा प्राप्तमिति । अत्यन्तमेव निर्भयः कृतनिश्चयश्च तेषां सम्मुखेऽहमवस्थितः । शेठाख्योऽस्मत्कुलप्रधानो नः केवलमस्मद्दूरसम्बन्धी किन्तु मत्पितरि सुस्निग्धश्चाभवत् । सैप मां प्राह—

'भवता चिकीर्षितं विदेशयानमस्मत्कुलजनैः समुचितं न मन्यते । समुद्रलङ्घनमस्मद्धर्मविरुद्धम् । किं च विदेशं गतस्य स्वधर्मरक्षा न शक्येति श्रुतमस्माभिः । तत्र हैरोप्यजनैः सहान्नपानादिकं सेवनीयं भविष्यति' । इति ॥

अहं प्रत्यवोचम्—

'विदेशयानमस्मद्धर्मस्य लेशतोऽपि न विरुद्धमित्यहं मन्ये । तत्र विद्याभ्यासो मया चिकीर्षितः । यद्विषयेषु भवन्तो मामतिशङ्कन्ते तद्विषयाणां दूरीकरणं मातुरग्रे मया प्रतिज्ञातम् । अतः कुतोऽपि भयं न विद्यते' इति ॥

अथ कुलश्रेष्ठी पुनरचकथत्—

'तत्र स्वधर्मरक्षणमशक्यमिति वयं ब्रूमः । युष्मत्पित्रा सह मम यादृशः परिचयोऽभूदिति भवान् जानाति । एवं स्थिते मदाज्ञानुवर्तनं तव कर्तव्यमिति' ॥

ततः परं मया प्रत्यवाचि—

'नूनमहं जाने यादृशः श्रीमतां मम पित्रा सह परिचयोऽभूदिति । भवन्तो मे पूज्याः । किन्तु विषयेऽस्मिन्नकिंचिदपि कर्तुमुत्सहे । विदेशगमननिश्चयमन्यथाकर्तुं न शक्नोमि । अस्मत्पितुर्मित्रमस्मत्कुटुम्बस्य मन्त्रणीयो विद्वान्ब्राह्मणः कश्चिदस्ति । स तावद्विदेशयाने दोषः कोऽपि न हीत्याह । अस्मन्मातास्मदग्रजेन च द्वाभ्यामपि पूर्वमेवात्र सम्मतिर्दत्तेति' ॥

"तर्हि कुलजनस्याज्ञां किं भवान्निराकरोति ।"

"नाहमत्र किमपि प्रतिवक्तुं पारये । मन्ये पुनरस्मिन्विषये भवद्भिरन्तरावस्थानं न युज्यत" इति ॥

एतद्वचनमाकर्ण्य कुलिको मे भृशमक्रुध्यत् । अपि च मामाक्रुशत् । अहं तावन्निष्कम्प एव स्थितः । अथायमित्थं निर्णयमाचष्ट—

"अद्यप्रभृति बालकोऽयं जातिबाहिरो मन्तव्यः । यस्तावदस्य साहाय्यं करिष्यति यो वा तद्विसर्जनाय नौकास्थानं यास्यति स नूनं सपादरूप्यकं दण्डं दापयिष्यत इति ॥"

निर्णयादस्मादहं न चकितोऽभवम् । श्रेष्ठिनमामन्त्र्य ततो निरगच्छम् । अथाहमचिन्तयम्—सर्वमेतदाकर्ण्य मदग्रजः किन्तु खलु ब्रूयात् । अस्मासु भीतश्चेत्का गतिरिति । स तु मदीयसद्भाग्यवशादचलितमनस्स्थैर्यः श्रेष्ठिनिर्णये त्वेवं स्थितेऽपि विदेशयानं त्वस्यानुमतमिति पत्रमलेखीत् ॥

इयं घटना मे शीघ्रप्रयाणाय परमौत्सुक्यमजनयत् । कुलजनेन मदग्रजोऽस्मिन्विषये बलात्कृतश्चेद्यद्वा यः कोप्यन्तरायः समापतिष्यत्तर्हि का गतिः । इत्येवमात्मनः परिस्थितिमनुचिन्तयन् कतिपयदिनानि यावदक्षेप्स्यं तावज्जुनागढस्थः कश्चिन्न्यायवादी ब्यारिस्टरपदप्रेप्सुराङ्ग्लनवममासस्य चतुर्थदिवसे विदेशं प्रस्थास्यत इति वार्तामश्रौषम् । मोहमयीनगरे मत्क्षेमचिन्तनाय मदग्रजेन नियुक्ताः सुहृदो मया गत्वावलोकिताः । तेऽपि तादृशे सहप्रस्थायिनि जने लभ्ये सति न त्याज्योऽयमवसर इत्यभिप्रायन् । कालविलम्बस्य नासीदवकाशः । सद्यः प्रस्थानमनुज्ञातव्यमिति मदग्रजस्य तन्त्रीसन्देशमहं प्राहैषम् । तेनाप्यनुज्ञा दत्ता । मम स्यालं गत्वा पणमयाचम् । स तु श्रेष्ठिनिदेशमुल्लङ्घ्य बहिष्कारं सम्पादयितुमहं न सन्नोऽस्मीत्यवोचत् । अस्मत्कुटुम्बमित्रमेकं गत्वा मत्प्रयाणस्येतरव्ययस्य च यावत्पर्याप्तं तावद्धनं मे दीयतामिदं च पश्चान्मदग्रजाद्गृह्यतामिति प्रार्थयम् । स चैतदङ्गीकृत्य मम धैर्यमाचष्ट । सोऽयमुपकारो मे चिरस्मरणीयोऽभवत् । तद्द्रव्यादंशमुपयुज्य प्रयाणानुज्ञापकं पत्रमक्रैषम् । नौकायां प्रयाणस्य यद्यदावश्यकं तत्तत्सज्जीकरणमवशिष्टमभूत् । विषयेऽस्मिन्ननुभवशाली सुहृदेकः स्थितः । स मे वसनाच्छादनादिकमखिलं सज्जीचकार । कतिचिद्वस्त्राणि ममाभिमतान्यासन् । अपराणि कानिचिन्न मह्यमरोचन्त । ततो भूयसोत्साहेन कण्ठग्रन्थिबन्धनसमुद्यतस्यापि ममात्र कुत्सा समजनि । ह्रस्वकवचधारणं तु व्रीडाकरमिव मे लक्ष्यते स्म । किन्तु विदेशयात्रासमुत्साहेन मानसं सपरीवाहमासीत् । अतः पूर्वोक्तन्यूनताप्रयुक्तोऽयमसन्तोषो नान्यववेयोऽभवत् । अभ्यवहार-

विशेषाश्च प्रेप्सिताधिका एव स्थिता । मत्सखा मदर्थे त्र्यम्बकराय मजमुदार (जुनागढन्यायवादी) महाशयस्य कोष्ठ एव स्थलमेकं सम्पाद्य मद्योगक्षेमचिन्तनं च कार्यमिति तस्यावबोधयत् । स किल प्रौढवया अनुभवशाली गृहस्थः प्रापश्चिकव्यवहाराभिज्ञश्च । अहं पुनर्लोकानुभवशून्योऽष्टादशवर्षदेशीयो बालः । स न्यायवादी सस्नेहं प्राह मा भूदस्य विषये कापि चिन्तेति ॥

अथान्ते क्रैस्तशकस्याष्टाशीत्युत्तराष्टशताधिकैकसहस्रतमे वत्सरे नवममासस्य चतुर्थदिवसे मोहमयीनगरादहं प्रायासिषम् ॥

त्रयोदशोऽध्यायः

# इङ्ग्लेण्ड्देशप्राप्तिः

नौकावर्तिनो मम सकृदपि वमनं नाजायत । किन्तु यथा यथा दिवसा व्यतीतास्तथाहं पर्युत्सुकोऽभवम् । नौकावस्तुभाण्डागाराधिकारिणा सहालपितुं लज्जालुरासम् । आङ्ग्लभाषाया सम्भाषणाभ्यासो मम नासीदेव । मजमुदारमहाशयमेकं विना द्वितीयवर्गीयपथिकाः सर्वेऽप्यैरोप्या अभवन् । तैः सह सत्रपितुं नाहमशक्नवम् । कदाचित्तैराभाष्यमाणोऽपि तदुक्तार्थं नावबुद्धवान् । कदाचिदवगतार्थोऽपि तत्प्रतिवचने न पटुरासम् । प्रागुच्चरणान्मनस्येव प्रतिवाक्यं रचयितव्यमासीत् । चमसच्छुरिके उपयुज्य भोक्तुं नाहमशासिषम् । किं वस्तु मांसोपेतं किं च नेति प्रष्टुमपि न धीरोऽभवम् । अतोऽहमन्यैः सह भोजनाय्रपीठोपरि भोक्तुमभिलषन् स्वकोष्ठागार एवाभुञ्जि । सहानीतभक्ष्यफलान्येव मुख्यो मदीय आहार आसीत् । मजुमदारमहाशयस्य तु नासील्लेशतोऽपि सङ्कोचः । स हि सर्वैरप्यमिलत । नौकाबहिश्शालाया स्वैरमेव पर्यभ्रमत् । अहं पुनरादिनान्तं स्वकोष्ठ एवोपाविशम् । जनसम्बाधशून्ये तु क्वचिद्धैर्यमवष्टभ्य नौकाङ्गणे कञ्चित्कालं स्थित्वा प्रतिन्यवर्ते । मजमुदारमहाशयस्तु मां 'सर्वगोष्ठीप्रविष्टेन त्वया भाव्यम् । असङ्कोचेन कथालापः करणीय' इति बोधयति स्म । न्यायवादिना प्रौढकण्ठेन भवितव्यमित्युक्त्वा न्यायवादित्वप्रसङ्गेषु स्वानुभवं विस्तरेणाचष्ट । स पुनश्चाब्रवीत्—आङ्ग्लभाषा तु स्वभाषा न भवतीति यद्यपि सत्यं तथापि तया व्यवहरता स्खलितसम्भवेऽप्यहीनधैर्येण सम्भाषणमभ्यसनीयमिति । किन्तु मम भीरुत्वमजय्यमासीत् ॥

मयि कश्चिदैरोप्यपथिकः साभिमानो मया सह कथालापं कर्तुमारभत । स वयसि मत्तोऽपि ज्यायान् । किं मया भुज्यते को ममोद्योगः क्व नु मया गन्तव्यमित्यादि मामप्राक्षीत् । अग्रपीठोपर्येव भुज्यतामिति मामबोधीत् । मांसं मया निश्चितं न खाद्यत इति श्रुत्वा विहसन् सानुकम्पमाह—

' एतावद्दूरन्तु ( वय तदा शोणसागरे स्थिता ) नास्ति चिन्ता । किन्तु विस्केजलसन्धौ भवन्मतमन्यथा भवितुमर्हति । इङ्ग्लेण्डदेशे पुन शीत तथा तीव्र वर्तते यथा मासाशन विना तत्र जीवितुमेव न पार्यते ' । इति ॥

' ननु मासाहारवर्जं तत्र जीवितु शक्यमिति मया श्रुत'मित्यहमवोचम् ।

स चाब्रवीत्–

तत्सर्वं मृषा । मासमभक्षयस्तत्र वास्तव्यो जन कोऽपि न दृश्यते । पश्यतु भवान् । अह यद्यपि मद्यपायी तथापि किं भवताप्येव कर्तव्यमिति ब्रूयाम् । किन्तु मासमवश्य भवता भक्षयितव्यमिति ममाभिप्राय । अन्यथा हि प्राणधारणमेव न शक्यमिति ।

ततोऽह प्रत्यवोचम्—

नूनमुपकृतोऽस्म्यनया भवदीयसूचनया । किन्तु मास नैव स्पृशामीति मातुरग्रे मया प्रतिज्ञा कृता । अतस्तद्विषयिणी भावनापि मे परिहेया भवति । यदि मासाशनम तरा तत्रावस्थातुमशक्य स्यात्तदा हिन्दुस्थान प्रति निवर्त्स्यामि न पुनर्विदेशे स्थितिग्रहणाय माम भक्षयिष्ये । इति ॥

अथ बिस्केजलसन्धि प्राविशाम । तत्र मासमद्ययोरपरिहार्यता मया न दृष्टा । मम मासाभोजित्वसमर्थकानि साक्षिपत्राणि मया सङ्ग्राह्य स्थापनीयानीत्यादिष्टपूर्वोऽहमेनमैरोप्य सुहृद तादृशपत्रमेक मे दातुमर्हसीत्यभ्यार्थये । स च प्रीत्या तल्लिखित्वा मह्यमदात् । तच्च मया कियन्तमपि काल जागरूकतया रक्षितम् । किन्तु मासाहारिणोऽपि निरायासेन तथाविधानि पत्राणि सम्पादयितु शक्नुवन्तीति पश्चादवगतस्य तद्गतो मोह सर्वस्तिरोऽभवत् । यदि मद्वाक्य मश्रद्धेय स्यात् तदा तादृशसाक्षिपत्रे किमिव हि प्रयोजनम् ॥

अथ वय साउथेम्प्टननगरोपकण्ठे समुद्रतीर प्राप्नुम । तद्दिन स्थिरवासर इति क्वचित्स्मर्यते । नौकायामह कृष्णकवचाप्रपदीनधारी स्थित । ततोऽवतरणोत्तर धारणाय मत्सुहृत्परिकल्पित श्वेतोर्णामय कवचमाप्रपदीन च मयोद्धृत्य बहि स्थापितमभूत् । तत्कल्पितो वेष शोभन इति मत्वा तद्वसनजात प्रतिमुच्य भूतले पादौ विन्यस्तवान् । तदा किल सप्टेम्बर मासस्यान्त । समन्तादवलोक्यमाने मत्सदृशवेषधारी नान्य कोऽपि दृष्ट । मदीयवस्तूनि ग्रिण्डलेकम्पनीमृत्यस्य कस्यचिद्धस्ते न्यक्षिपम् । अन्यैरप्येवमनुष्ठितत्वादहमपि तत्कृतानुकारी कीलकहस्तानपि तद्धस्तेऽर्पयम् ॥

मन्निकटे परिचयपत्राणि चत्वारि स्थितानि । 'डाक्टरप्राणजीवनमहेता–श्रीदल्पतराम-शुक्ल–राजकुमाररणजितसिंहजी–दादाभाईनवरोजी' इत्येतेभ्यस्तानि लिखितानि । डाक्टरमहेता महाशय प्रति साउथेम्प्टननगरादह तन्त्रीसन्देश प्राहैषम् । लण्डननगरे विक्टोरियाहोटेल इत्येतदाख्येऽतिथिमन्दिरे वसतिर्ग्रहीतेति नौकाया केनचित्सूचितमभूत् । तदनुसारेण मजमुदार-

महाशयद्वितीयस्तत्र गतोऽभवम् । तत्र धनगणुरुषैरमामानमेवमेव निरूपयत्रंगतप्राण इवा भवम् । परेद्युर्भानुवासरत्वादासोमवार मदीयवस्तूनि मा नोपगच्छन्तीति ज्ञात्वा प्राणं सामस्त्येन गतमिव ॥

सायं प्रायोऽष्टघण्टावादनसमये डाक्टरमहेतामहाशया मां द्रष्टुमागताः । ते मां सादरमभिनन्द्य शुक्लाम्बरवेष मदीयमालोक्याहसिषु । तथा च वर्तमाने यथालापप्रसङ्गे तदीयमहं कौशेयशीर्षकं गृहीत्वा तस्य स्निग्धतादर्शनकुतूहलेन तदुपरि भूयो भूयो हस्तेन परामृशम् । तेन तद्गत कौशेयमखिल समुद्धतमभूत् । एतद्दृष्ट्वा ते महाशयाः किञ्चिदिव क्रुद्धा मामुपेत्य चेष्टिता मा न्यवारयम् । किं तु कौशेयं यथापूर्वं न जातम् । एतेनाग्रे यथा मया प्रवर्तितव्यमिति प्रबोधित इवासम् । ऐरोप्यरीतिनीतीनामभ्यसन तावदिदं प्रथममेवेति वक्तव्यम् । डाक्टरमहेतामहाशया हसन्तो मामेवमबोधयन् —

अन्यदीयवस्तूनि न खलु स्प्रष्टव्यानि । यथास्माभिर्हिन्दुस्थाने तथात्र परिचयोत्तरक्षणमेव न खलु प्रश्ना प्रष्टव्याः । यथालापप्रसङ्गे न खलु प्रोच्चैर्भाषितव्यम् । यथा हिन्दुस्थाने वयमैरोप्य सहालपन्त 'सर' इति सम्बोधयामस्तथात्र तत्पदप्रयोगो नावश्यकः । अत्र हि तत्पदं केवलं भृत्यैरल्पाधिकारिभिश्च निजस्वामिसम्भाषणप्रसङ्गे प्रयुज्यते । इत्यादि । निवासातिथिमन्दिरे वसतिग्रहणेन बहुव्ययः सम्पद्यते । तद्वरं कस्यचित्कुटुम्बे सहावस्थानं भवेत । परन्तु विषयमेनमधिकृत्य सोमवासरे निर्णयिष्याम इति व्याहृत्य ते महेतामहाशया निरगुः ॥

मजुमदारमहाशयस्य मम चातिथिगृहं नाभिमतमभूत् । तत्र व्ययश्च भूयान् । माल्टाद्वीपादस्माभिः सहागतः सिन्धुदेशस्य पथिकः कश्चिदासीत् । स च लण्डननगरे नवागन्तुको नाभवत् । तेन हि प्रति श्रुतमावयोरर्थे भाटिकाकोष्ठमेकं सम्पादयिष्यामीति । तच्चावाभ्यां प्रतिपन्नम् । सोमवासरेऽस्मदीयसम्भारा प्राप्य यदतिथिमन्दिरस्य प्रदेयं द्रव्यं तद्द्वितीयं सिन्धीमित्रेण निश्चितपूर्वे कोष्ठमगाव । अतिथिगृहे प्रदेयं भोजनादिशुल्कं सुवर्णमुद्रात्रयं (पञ्चचत्वारिंशद्रुप्यकाः) मासीदिति मे ज्ञप्तिरस्ति । एतेन ममाश्चर्यमभूत् । तावद्व्ययीकृत्यापि क्षुधा मे न शान्ता । तत्र हि मे न किञ्चिदरोचत । एवं भोज्यमसमीचीनमित्यन्यदानाय्यते स्म । एतेन द्वयोरपि मूल्यं प्रदेयमापतितम् । वस्तुतस्तु मोहमयीनगरादानीतस्थापिता एव पदार्था अद्यावधि मयोपायुज्यन्त ॥

नूतनमन्दिरेऽपि मया न लब्धा मनःशान्तिः । स्वगृहस्मृतिः स्वदेशस्मृतिश्च सर्वदा समुद्भिपति स्म । दिवा मज्जनन्या प्रेममयीमूर्तिः सदा समक्षवर्तिनीवादृश्यत । रात्रौ बहुधा गृहजनस्मरणेन नयनाम्बुधाराभिरार्द्रीकृतकपोलस्य मम निद्रा दूरेऽभवत् । सर्वमेतद्दुःखमन्यसमक्षमकथनीयमासीत् । अथवा कथितेऽपि तस्मिन्किन्नु फलं स्यात् । अस्य मनःक्लेशस्य प्रशमनाय मार्गः कोऽपि न मेऽस्फुरत् । तत्रत्यो जनश्च तत्रत्यानां रीतिनीतयश्च तत्तेषां वसतयश्चेति सर्वमेतद्वि-चित्रमदृश्यत । आङ्ग्लेयसद्गृहस्थैः सव्यवहारविधायामहमत्यन्तमालापत्यमिवासम् । ततस्तद्विषये

मया निरन्तरं सावधानेन भवितव्यमासीत्। मत्कृता मासवर्जनप्रतिज्ञाप्यन्या बाधा। तत्र खाद्यान्यपि वस्तूनि शुष्काणि नीरसानि चाभवन्। विदेशे स्थितिरपि न मेऽभिनन्दनीयाभवत्। हिन्दुस्थानं प्रति परागमनं तु नैव सम्भाव्यते स्म सेयमुभयतस्पाशा रज्जुर्मामुपस्थिता। अथ मेऽन्तरात्मा व्याहरत्— 'इह त्वं कथंचिदागतोऽसि। त्रीणि वर्षाणि त्वया कथमपि सर्वथातिवाहयितव्यानीति'॥

## चतुर्दशोऽध्यायः

# अहं सर्वात्मना शाकाहारी सम्पन्नः

डा. मेहतामहाशयाः सोमवासरे विक्टोरियाहोटेलगृहं प्रति मां द्रष्टुमगच्छन्। तत्र त्यक्तस्थितिं मामवगत्य विज्ञातमदीयनूतनावासा अस्मत्कोष्ठमागताः। अत्यन्ताविवेकवशान्नावायाने मया कण्ड्वा सम्पादिताभवत्। नौकायां स्नानार्थं वस्त्रक्षालनार्थं च समुद्रजलमेवोपयोक्तव्यमासीत्। क्षारोदके मन्हरी (साबूनापराख्या) न विलीयते। मलहरीप्रयोगस्तावन्नागारकलक्षणमित्यालोच्य तथा मानं प्रमृजतो मम शरीरं न केवलं न निर्मलं जातं परं सर्वाङ्गक्लिष्टिरूपचकण्डूयामुदपादयत्। तस्यां डा० मेहतामहाशयेभ्यः प्रदर्शितायां 'एसेटिक एसिड' इत्येतदारव्यद्रावकलेपो दातव्य इत्यमी प्राहुः। तत्प्रयोगात्सञ्जातसन्तापेन मया यद्रुदितं तदद्यापि स्मर्यते। डा० मेहतामहाशया अस्मन्निवासकोष्ठं तद्व्यवस्थां च विलोक्य सशिरःकम्पमाचक्षत —

अत्र निवासेन प्रयोजनं किमपि न लभ्येत। विदेशागमनं खलु न तावद्विद्याभ्यासङ्गाय यावदाङ्ग्लेयजीवनस्य रीतिनीत्यनुभवसम्पादनायास्माभिरङ्गीक्रियते। तस्मात्केनापि कुटुम्बेन सह वसतिराश्रयणीया। तदहं मन्ये भवता किंचिदनुभवसम्पादनार्थं महाशयैः सह निवासः प्रशस्त इति। तत्सकाशमहं भवन्तं नेष्यामि। इति॥

अथ कृतज्ञतया तद्वाक्यमङ्गीकृत्य तदुक्तमित्रस्य मन्दिरमगच्छम्। स मां भूयसादरेण श्रद्धया चाभ्यनन्दत्। स्वभ्रातृत्वमपि वर्तयन्नाङ्ग्लेयरातिनीतिर्मामबोधयत्। आङ्ग्लभाषया सम्भाषणक्रमं च मामशिक्षयत्। किन्तु मदुचितभोजनोपकल्पनकथा कष्टतराभवत्। लवणोपस्करवर्जं पाचितं यच्छाकं तन्मह्यं न रोचते स्म। मम भोजनार्थे किं वा सज्जीकरणीयमिति तद्गृहिणी न व्यजानात्। प्रातराशाय गोधूमविशेषयवागूं पर्यकल्पयत। एतया यद्यपि जठरं किंचिदाप्यायत तथापि मध्याह्नभोजनेन सायन्तनभोजनेन वा क्षुधा मे नैव शाम्यति स्म। मां भोक्तुमिति मदीयसुहृदनुदिनं मामन्वशिषत्। अहं तु मातुरग्रे तदन्यथा प्रतिज्ञातमित्युक्त्वा तूष्णीमभूवम्। मध्याह्नभोजने पिष्टकं वन्यशाकं द्वावेतौ विशेषौ पर्यवेष्यत। सायमप्येतावेव। मम जठरं तु वृकजठरम्। तथापि पिष्टस्य द्वित्रान्ग्रासानगिनि मयाभक्ष्यन्त। अपिच मार्गितुं

लज्जालुरभवम् । तथा च मार्गेण न गौरवाय यद्गमचिन्तयम् । अपि च मध्याह्ने वा रात्रौ वा दुग्ध नालभ्यत। एतदवस्थं मामवलोक्य मम सुहृन्नितरामुद्विग्न सन्नेकदा मामवादीत्—

यदि भवान्मे साक्षात्सहोदरोऽभविष्यत्तदाहं भवन्तं स्वदेशं प्रति परावर्तयिष्यम् । इह स्थलीयपरिस्थितिमजानत्या निरक्षराया भवदम्बजनन्या पुरतः कृताया प्रतिज्ञाया निर्नाम गौरवम् । सा खलु नैव प्रतिज्ञा । न्यायतस्तस्या प्रतिज्ञात्वं न कोऽप्यभ्युपेयात् । एतादृश प्रतिज्ञायामभिनिवेशस्तु परा मुग्धता । मांसं तावद्भवता भुक्तपूर्वमिति तच्च भवतो रुच्यमासीदिति च भवानङ्गीकरोति । यत्र तद्भक्षणमनावश्यकमासीत्तत्र तद्भवानभक्षयत् । यत्र पुनरवश्यमेव तद्भोक्तव्यं तत्र तत्परिवर्ज्यते । अहो इयं कीदृशी न्यायरीतिः । इति । तथाप्यहमचलित-निश्चय एव स्थितः ॥

स दिवानिशमित्थं चर्चयन्निर्बन्धमकरोत् । नैव करिष्यामीत्येतदेकमेव मे सर्वदा प्रतिवचनमासीत् । यथा यथा तेन कृता चर्चा तथा तथा मे दार्ढ्यमधिकमभूत् । भगवन् पाहि मामिति प्रतिदिनमीश्वरं प्रार्थयम् । भगवान्मयि कृपामधत्त । ईश्वरो नाम किं वस्त्विति परमार्थतो मया ज्ञातमिति न । किन्तु रम्भया न्युप्तं भक्तिबीजं मामीदृक्कार्यमकारयत् ॥

एकदा सुहृदयं बेंथमनामकस्य पुस्तकमुपयोगवादाख्यं मदर्थे वाचयितुमुपाक्रमत । तदेतन्न मे बुद्धिमारोहत् । भाषाकाठिन्यहेतोस्तन्मे दुर्बोधमासीत् । सखा तद्व्याख्यातुं प्रवृत्तः । तदाहमवचनम्—

'भवद्भिरहं क्षन्तव्योऽस्मि । इमे गहनार्था मम बुद्धिशक्तिमतिक्रम्य वर्तन्ते । मांसाशनं तावदावश्यकमित्यङ्गीकरोमि । किन्तु कृता प्रतिज्ञा नोल्लङ्घयेयम् । एतदधिकृत्य चर्चयितुमप्यहमसमर्थः । विवादे भवतः प्रत्यवस्थातुं न प्रभवेयम् । मूर्खोऽयमिति वा बद्धच्छलोऽयमिति वा मां गृहीत्वा भवद्भिः स्वच्छन्दं परित्याज्योऽस्मि । जाने मय्यर्पितं व प्रेमसारम् । भवन्तो मे हितैषिण इति नूनमवगच्छामि । मदवस्थानिरूपणेन वो दुःखसम्भवादेव भवन्तो मामेवं पदे पदे बोधयन्तीत्यपि जाने । किन्त्वत्र मे नान्या गतिः । प्रतिज्ञा नाम प्रतिज्ञा । तामन्यथा कर्तुं न शक्नोमि । इति ॥'

मम सुहृद्विस्मितो भूत्वा मामभ्यपश्यत् । ततः पुस्तकं पिधाय बाढं नाहमित्थं चर्चयिष्यामीत्यवोचत् । अहं प्रमुदितोऽभवम् । ततः परमेतत्कथा न भूयस्तेन प्रस्तुता । किन्तु मद्विषयिणी तदीय चिन्ता नान्तमगमत् । तेन खलु धूमवर्तिरसेव्यत । अपि च मद्यमपीयत । तथाप्यनयोर्वस्तुनो रेकतरं मयाप्युपसेवनीयमिति न स मामबोधयत् । एतावदेव न । परं तु तद्वस्तु न सेवितव्य मित्येव मां बन्धयति स्म । एवं खलु स धावमाना चिन्ता । यदहं मांसाहारं परिवर्ज्य दुर्बलस्सन्निङ्ग्लण्डदेशे व्याकुलितो भविष्यामीति ॥

एवं मया यावद्विदेशानुभव इव सम्पादित । अस्य मित्रस्य गृहं रिचमण्डपुरे स्थितम् । ततश्च लण्डननगरं प्रति प्रतिसप्ताहं द्विवारमिव न गन्तुमशकि । तस्मात् डा० मेहेतामहाशय

श्रीदल्पतरामशुक्लमहाभागश्च येनापि कुटुम्बेन मया स्थातव्यमिति निरधारयताम्। श्रीशुक्लो वेस्टर्केसिंग्टनस्थले कस्यचिदाङ्ग्लभारतीयस्य गृहमन्विष्य तत्र मन्निवास पर्यकल्पयत्। तद्गृहस्य स्वामिनी विधवासीत्। मद्विहित मांसत्याग तस्यै न्यवेदयम्। यथाहं भवन्तमवेक्षिष्य इति साकथयत्। इहाप्यप्रशान्तक्षुधेन मया स्थातव्यमापतितम्। मधुरपिष्टाद्याहारार्थं पूर्वमेव स्वदेश प्रत्यलेखिषम्। किन्तु नाद्याप्येतदुपागमत्।भो यपदार्था सर्वेऽपि नीरसा अभूवन्। अनुदिनमपि सा जरठा कच्चित्पाक समीचीन इति मा पृच्छति स्म। किन्तु सा तपस्विनी कुर्यात्। यथापूर्वं लज्जयाहमपरित्यक्तो मह्यं स्थापितादधिक प्रतीप्सितु न धीरोऽभवम्। तस्या द्वे दुहितरानास्ताम्। ते मह्य भूय सोपरोध पिष्टपूपशकलान्यदत्ताम्। एकपिष्टापूपस्य समग्रस्यापि भक्षण विना जठर मे न पूर्यत इति कथमेते हन्त विद्याताम्॥

अथाहमन्तरे वलितपक्षति स्थितोऽभवम्। नियतक्रमेणाध्ययन नाद्यापि समारब्धि। यथ कथमपि समाचारपत्रिका वाचयितु प्रावर्तिषि। सैष श्रीशुक्लस्य प्रभाव। भारतदेशे न कदाप्यह वृत्तपत्रमवीवचम्। अत्र पुन प्रयह तत्पठनेन तदभिरुचिमुत्पादने मया धृत प्रयत्न सफलोऽभवत्। 'डेली न्युस-डेली टेलिग्राफ—पेलमेल गॅझेट' इत्येतदाख्यसमाचारपत्राणि मया प्रतिदिनमवलोक्यन्ते स्म। तद्वाचनाय होरामात्रकालोऽपि नापेक्षितोऽभूत्॥

एवमह लब्धावकाशस्सन् विहाराय प्रस्थित शाकाहारातिथिगृहमन्वेषमाण पर्यक्रमिषम्। लण्डनपत्तने कतिपयस्थलानि तादृशि विद्यन्त इति गृहस्वामिन्यकथयत्। प्रतिदिन दशद्वादशपाषाणदूर परिक्रम्य स्वल्पव्ययगम्यमतिथिमन्दिर प्रविश्य पिष्टापूपमुदरपूरमघसम्। एव परिक्राम्यतो ममैकस्मिन् दिने फेरिंग्टनवीथ्या शाकाहारविश्रान्तिगृहमेक दृष्टिपथमागात्। यथा शिशु स्वेप्सितवस्तुलाभान्नन्दति तथाह तदा प्रहृष्टोऽभवम्। प्रवेशात्पूर्वं द्वाराभ्यर्णे विक्रयार्थं काचवातायनान्त प्रदर्श्यमानानि कानिचित्पुस्तकान्यद्राक्षिषि। तत्र सॉल्ट इत्येतदाख्येन प्रणीत 'सात्विकाहारगुणो' नाम ग्रन्थो दृष्ट। एकशिलिङ्गद्रव्येण त क्रीत्वा गृह प्राविशम्। तद्दिने हि मया विदेशप्राप्त्यनन्तरमुदरपूर भुक्तम्। तस्मिन्दिने हि भगवा मामन्वग्रहीत्॥

सॉल्टप्रणीत पुस्तकमामूलान्तमपठिषम्। तन्मे मन स्वायत्तमकरोत्। एतद्ग्रन्थाव लोकनादारभ्य सर्वात्मनाह शाकाहारी सवृत्त इति वक्तव्यम्। मातुरग्रे प्रतिज्ञाकरणदिवसमेव सुदिवसमगणम्। तात्पर्यं तत्सत्यरक्षणार्थमेव—मात्रे दत्तवाक्यपरिपालनार्थमेव—मया त्यक्तम् भूमासम्। किन्तु शैशवे सर्वे मांसाहारिभिर्भवितव्यमित्यह न केवलमैच्छ पर स्वयमपि कदाचित्प्रकटमेव मांसाहारी भवितुमवसरप्रतीक्षोऽभवम्। इतरेभ्योऽपि मांसाहारस्य महिमानमुपदेष्टुकामोऽभवम्। तदेतद्दिनात्प्रभृत्यह सर्वात्मना शाकाहारी सम्पन्न। एतत्तत्त्वोपदेश एव मम पवित्र कर्तव्यमासीत्॥

पञ्चदशोऽध्यायः

# अहमाङ्ग्लेयनागरिको जातः

सात्त्विकाहारविषयिणी श्रद्धा मम दिने दिने समवर्धत। सॉल्टपुस्तकस्य पठनादाहारविषयकग्रन्थाना पिपठिषा तीव्रा समजनि। अन्यपुस्तकानि सर्वाण्यपि क्रीत्वाहमपाठिषम्। तेष्वेक 'हावर्ड विलियम्स' इत्येतदाख्येन विरचित आहारनीत्याख्य प्रबन्ध। स च मानुषाहारविषयको जीवनवृत्तात्मक इतिहास। पुरातनकालमारभ्याद्यावधि ये ज्ञानिनोऽवतारपुरुषाश्च पाइथागोरास क्रिस्तप्रभृतयस्ते सर्वेऽपि शाकाहारिणोऽभवन्निति प्रदर्शयितु तद्ग्रन्थकर्त्रा प्रयत्नोऽकारि। डा० 'ॲना किङ्ग्सफर्ड' इत्येतदाख्यमहिलया विरचित 'आहारविषयेऽत्युत्तमो मार्ग' इति शीर्षकोपेत पुस्तक च हृदयङ्गममासीत्। तथा डा० ॲलिसनकर्तृकैरारोग्यरक्षाविषयकैर्लेखनैश्च बहूपकृत मे। एतद्ग्रन्थकर्ता रोगिणामुचिताहारप्रदानेन तद्रोगपरिहारपद्धतेः पक्षपाती। स किल स्वय शाकाहारी भूत्वा रुग्णवर्ग च शाकाहारमात्रसेविन चकार। एतदादिग्रन्थपरिशीलनादाहारविषयकाणि शोधनानि मम जीवने प्रामुख्यस्थानमभजन्त। आदौ यद्यपि तानि मुख्यश आरोग्यदृष्ट्यैव विहितानि तथापि पश्चात्तत्र धार्मिकदृष्टिरेव सर्वप्रधानाभवत्॥

एतन्मध्ये तेन मित्रेण मद्विषयिणी चिन्ता न परित्यक्ता। मयि बद्धप्रेमतया स इत्थमचिन्तयत्—यदह मांसाहारवर्जनेन न केवल दुर्बलो जनिष्ये परमाङ्ग्लसमाजे सम्यग्व्यवहर्तुमक्षमो मुग्धाग्रणीर्भविष्यामीति। शाकाहारविषयकाणि पुस्तकानि मया पठ्यन्त इति यावदसावजानात् तावत्तत्पठनेनाह चित्तभ्रम प्राप्य शोधनैरेव यावज्जीवमात्मान व्यर्थीकृत्य स्वकर्तव्यानि विस्मृत्य परमुन्मत्तो भविष्यामीति भीतस्सन् मा सत्पथ प्रापयितुकाम प्रयत्नमन्तिममकरोत्। स एकदा मा नाटकावलोकनार्थमाह्वयत्। नाटकशाला प्रति गमनात्पूर्वमावाभ्यामुभाभ्यामपि 'हॉल्बर्न' भोजनगृहे सहभोक्तव्यमिति निरणायि। तद्भोजनगृह मे राजमन्दिरकल्पमलक्ष्यत। विक्टोरिया निधिगृहपरित्यागानन्तरमेतादृशगृहे प्रवेश इद प्रथम। तद्गृह गच्छतो मम बुद्धि परिभ्राम्यति स्म। अतस्तत्रत्यो मदनुभव प्रयोजनकार्यासीदिति वक्तु न शक्यते। अत्र हि लज्जावशादपि वा भोज्यपदार्थाननुद्दिश्य प्रश्नानह न पृच्छेयमिति निश्चित्य गृहमिद मा सुहृदानीतवान्। पर शतजनाना मध्ये प्रविश्य कंचिद्भोजनपीठाभ्यर्णे समुपाविशाव। पूर्वमस्मदग्रे स्थापितशरावेषु यूषविशेष स्थित। किमाकारोऽयमिति मे संशयो जात। किन्तु मित्रात्तज्जिज्ञासितु मया नोदसाहि। तस्मात्परिचर्यावर्तिन सेवकमाह्वयम्। सुहृदेतद् ज्ञात्वा क समाचार इति क्रोधेन मामपृच्छत्। अह सङ्कोचेन प्रत्यवोचम्—अय यूष किं मांससम्पृक्त इति जिज्ञासितु स मयाह्वायीति॥ तत स एव मामकथयत्—

"सुशिक्षितानां मध्ये स्थातु भवान्न योग्य। उचितरीत्या व्यवहर्तुमक्षमत्वादितो भवान्निर्गत्य यत्र कापि यस्मिन् भोजनगृहे कृताहारो मदागमनप्रतीक्षया बहिस्तिष्ठतु।" इति॥

एतेन मे महान् हर्ष. समजनि । मया निष्क्रम्यापरं भोजनगृहमन्विष्टम् । शाकाहारभोजनगृहमेकं सन्निकृष्टस्थितमासीत् । किन्तु तद्वृद्धकाटमभूत् । अहमितिकर्तव्यता मूढ स्थितः । उपोषिता मया सा रात्रिः । अथ नाटकमन्दिरमगच्छाव । मदीयवृत्तमविकृत्य मत्सुहृदा न किञ्चित्प्रास्तावि । न च मया वक्तव्यं किञ्चिदप्यासीत् । किन्तु खट्टू वक्तव्य मया । इदमेवावयो सद्वृत्तं मित्रयुद्धम् । एतेनास्मन्मैत्री न मनागप्यहीयत । ज्ञातं हि मया यदनेन मामुद्दिश्य कृताना प्रयत्नाना मन्मित्रं तदीयप्रेमैव कारणमिति । आचारविचारमविकृत्य तनो भिन्नाभिप्रायोऽप्यह तस्मिन् क्वचिदपि मन्दादरो न जात. । प्रत्युतासा भूयश्च मे समादरणीयोऽभवत् ॥

निश्चितं हि मया यन्मन्कृते सुहृन्निश्चिन्त स्थापनीयः । इत. परं ग्राम्यवृत्तिं परित्यज्य नागरिकीभवितु मया प्रयतितव्यम् । मदीयशाकाहारित्वनिमित्ता वैचित्री जनो निरसारणीय. । तदर्थमितरनागरिकलक्षणान्यपि मया समधिगन्तव्यानि । इत्थं च सभ्यगोष्ठीप्रवेशयोग्यता मया सम्पादनीयेति । एवं मनसिकृत्य मया स्वशक्तिमतिक्रान्तमाङ्ग्लेयनागरिकीभवनरूपं कार्यं मङ्गीकृतम् ॥

मयाच धार्यमाणानि यानि मोहमयीनगरे निर्मापितानि वसनानि तान्याङ्ग्लेयसमाजयोग्यानि न भवन्तीति 'आर्मि अँण्ड नेवि स्टोर्स' इत्येतदाख्यमहाविपणायामभिनवानि वस्त्राणि पर्यचीक्रयम् । एकोनविंशत्या शिलिङ्गनाण्यै( तदानीमेतदेवाधिकं मूल्यम् )गोपुराकारं शीर्षकमेकमक्रैषम् । इयताप्यतृप्तः सन् रसिकजनयात्राक्षेत्रभूतां 'बॉण्ड स्ट्रीट' इत्येतदाख्या विपणिं गत्वा दशभि सुवर्णमुद्राभि. ( १५० रूप्यकतुल्यमिदं ) सायन्तनकञ्चुकायाख्य( ईवनिङ्ग-सूट )मसेवयम् । उदारहृदयस्य मदग्रजस्य पत्रं विलिख्य कार्ल्यन्त्रसाङ्कितीं द्विपटिकसौवर्णशृङ्खलामानीनयम् । सिद्धस्थितग्रन्थिधारणं न शिष्टाचार इति मत्वा तस्य सम्यग्ग्रन्थनकला हस्तगतामकार्षम् । भारतदेशे केवलमायुष्कर्मावसरे दर्पणोपयोगस्य सुसमयप्राप्तिरभूत् । अत्र पुन. प्रतिदिनमेकस्य बृहद्दर्पणस्याभिमुखे स्थित्वा सम्यक्कण्ठग्रन्थिबन्धनाय कुन्तलमव्यसीमापरिष्करणाय च प्रतिकर्म दशनिमिषकालमप्यवाहयम् । कुन्तलाना परस्परग्रथनात् तत्समीकरणाय प्रतिदिनं प्रसाधनकूर्चेन योद्धव्यमापतितम् । शीर्षकप्रतिमोकावमोक्षणकाले हस्त स्वयमेव चिकुरमध्यपरिष्करणाय प्रसरति स्म । चतुर्णां जनाना मध्ये समुपविष्टेन तु क्षणस्यैकवार परिदर्श्यमान चिकुरसीमासमीकरण नाम नागरिकलक्षणमहो विमृश्य वक्तव्यम् ॥

समारम्भोऽप्ययमियतैव न समाप्तिमगमत् । समुज्ज्वलवेषधारणमात्रेणैव निखिलमाङ्ग्लनागरिक स्याम् । अतो नागरिकत्वसाधकाना कतिपयनाक्लक्षणानामभ्यसने दत्तदृष्टिरभवम् । नागरिकस्य हि नर्तनं फ्रेञ्चभाषायामधिकृत्वं चावश्यकमिति प्राहु । फ्रेञ्चनाम न केवलमाङ्ग्लदेशस्य पार्श्ववर्तिन फ्रान्सदेशस्य भाषापि तु समस्तयूरोपखण्डस्य राष्ट्रभाषा । निखिलयूरोपदेशस्यापि दिदृक्षा ममासीत् । नाट्यं मया शिक्षितव्यमिति निश्चित्य तदर्थवर्गमनुष्ठिते वर्गे त्यागपत्रेण एतत्खण्डत्रयावर्तदेयं सुवर्णमुद्रात्रय तत्र दत्तवान् । सप्ताहत्रयमध्ये मया पदवृत्त

कलाशिक्षणाय गतेन भाव्यम्। तान्मनुसृत्य चरणविन्यासे नाहं पटुरासम्। स्वरमञ्जूषा वादने स्म। किंतु मया न तत् सङ्गीतमबोधि। किं कुर्याम्। मूषकबाधापरिजिहीर्षया मार्जारस्य रक्षणमङ्गीकृतवत संन्यासिन कथा मदीयवृत्तमन्वहरत्। मार्जारस्य क्षीरसम्पादनाय गौरिका तद्गोरक्षणाय भृत्य एक इत्येवं क्रमेण यथा तस्य परिवारोऽपरीवृध्यत तथा मदीयमहाकाङ्क्षापरिवारश्च वृद्धिमगात्। पाश्चात्यसङ्गीते मम श्रोत्रेन्द्रियस्य सक्तताापादनाय तन्त्रीवादनमभ्यसितुकामोऽहं न केवलं सुवर्णमुद्रात्रयेण तन्त्रीवाद्यविशेषमेकमक्रैषमपि तु तत्कलाशिक्षणाय भूरिद्रव्यं व्ययीकृतवान्। वाक्पाटवशिक्षणाय तृतीयमेकं शिक्षकमन्विष्य तस्मायेकगिनीमुद्रा ( १६ रूप्यका ) सत्यङ्कारमदाम्। स च यथा प्रतिश्रुतं ' बेल्स स्टँडर्ड एलोक्युशनिस्ट ' इत्येतदाख्यपुस्तकं क्रीत्वा पिटमहाशयस्य भाषणमेकं मामभ्यासयितुं प्रवृत्तः॥

किन्तु बेल( घण्टा )महाभागो मम कर्णाभ्यर्णे घण्टामवादयत्। अहं च प्रबुद्धः॥

अथैवंविधा जिज्ञासा मदीयमनसमभवत्। यथा—

इङ्ग्लण्डदेशे मया कियान्कालो यापयितव्यः। आङ्ग्लभाषाया सम्यग्भाषणचातुरीमधिगम्य मया किन्तु खलु साधनीयम्। नाट्यकलाशिक्षया किमहं महापुरुषः स्याम्। तन्त्रीवाद्यमिदं ननु स्वदेश एव शिक्षितुं शक्यं भवति। अयमस्मि विद्यार्थी। मद्विद्यासम्बद्धपाठानधीत्य न्यायवादिशालाप्रवेशाय योग्यता किल सम्पादनीया। यदि मदीयसभ्यव्यवहारेण नागरिकत्वख्यातिमहं लभेय तत्खलु प्रशस्तमेव। नोचेदलमनया वाञ्छया। इति॥

वाक्पटुत्वाभ्यासकस्य मदीयशिक्षकस्य सर्वमेतन्निरूप्य पुनरितः परं मदागमनं क्षन्तव्यमिति पत्रमलेखिषम्। नाट्योपाध्यायस्याप्येवमेव लेखो व्यलेखि। तन्त्रीवाद्यं च तदुपाध्यायागृहं नीत्वा यथा लभ्यव्ययेण तद्विक्रीयतामित्यवोचम्। यदेषा मयि मित्रभावेन वर्तते स्म तदहमसदव्ययप्रसङ्गित्वज्ञानं यथा मे समुदितमिति तस्यै न्यवेदयम्। सा च सम्पूर्णपरिवर्तनं सिसाधयिषोर्मम मनो निश्चयमभ्यनन्दत्॥

प्रायेण मासत्रयपर्यन्तं नागरिकत्वसाधनो मादो माममग्रहीदिति मन्ये। उज्ज्वलवेषकुतुकित्वं तु बहूनि वर्षाण्यस्थात्। परं तु तदाप्रभृत्यहं विद्यार्थी जातः॥

## षोडशोऽध्यायः

# परिवर्तनम्

मम नाट्यादिशिक्षणप्रसङ्गान् स्वच्छन्दवर्ती स्थितोऽहमिति केनापि मा स्म विचिन्ति। तदानीमपि मदीयविवेकशालित्वं पाठकानां दृष्टिगोचरं गतमेव खलु। तदाद्यव्यामोहकालेऽपि नाहं सुतरां विवेचनशून्योऽभवम्। प्रतिकपर्दिकं मया गणना स्थाप्यते स्म। व्ययस्य

तावदियत्ता सर्वदा पूर्वमेव निश्चिताभूत् । महाकरयानगमनव्यय पत्रादिप्रेषणव्ययो वृत्तपत्रक्रयणव्यय इत्येतत्सर्वमपि लिखित्वा शयनात्पूर्वमायव्ययस्थितिं न्यरूपयम् । अभ्यासोऽयमद्यावधि प्रचलति । अत एव मयाङ्गीकृतेषु बहुषु सार्वजनिककार्येषु लक्षान्तरलक्ष्यकायव्ययनिर्वाहसम्भवेऽपि न केवलमह सर्वत्रापि मितव्ययमकार्षं न केवल मेकापि काकिणी कश्चिदपि मया न ऋणी कृतापि तु पण सिवानध्यायस्थाने यथावशिष्ट स्यात्तथा हि मया व्ययायि । अशेषैरपि युवकैरिदमेवादर्शीकृत्य हस्तागतस्य हस्तादपेतस्य च द्रव्यस्य प्रतिकार्षिणि गणना यदि स्थाप्यते तदा ममेव तेषामप्यवश्य लाभो भविता ॥

इत्थ यदहमात्मनो जीवनरीतिं प्रति सूक्ष्मदर्शी स्थितस्तन्मयावबुद्ध मितव्ययकरणमावश्यकमिति । ततो मदीयव्ययस्यार्धशो ह्रास कर्तव्य इति निरचैषि । व्ययपञ्जिकानिरूपणेन परिभ्रमणभाटक बहुद्रव्य ग्रसते स्मेत्यबोधिषम् । अपि च कुटुम्बेन सह निवासात् प्रतिसमाह पणो विसर्जयितव्योऽभवत् । कुटुम्बीयजनस्य तत्तदवसरेषु भोजनाय बहिर्नयन सम्प्रदायत्वेन पर्यगण्यत । तेन सहान्यत्र भोजनाय वाष्पयानविहाराय वा गन्तव्यमापतति स्म । एतदवसरेषु भाटिकामुद्दिश्य भूयान्व्यय करणीय आसीत् यदा पुन स्त्रीजन सहानीयत तदा तद्व्यय सर्वोऽपि पुरुषेणैव सोढव्य इत्यासीदाचार । भोजने बहिरन्यत्र निर्वर्तितेऽपि गृहभोजनव्ययस्तु नैवाह्रसीत् । एतद्व्ययजात च तद्देशसम्प्रदायमनुरुध्य निर्विवेकेन क्रियमाणमन्यव्यय च परिहर्तुं शक्यत इत्यहमचिन्तयम् ॥

कुटुम्बवास परित्यज्य पृथक्कोष्ठ एको मयान्विष्य ग्रहीतव्य इति निरचैषि । अपि च प्रसक्तकार्यानुगुण्येन कोष्ठमन्यमन्य ग्रहीष्यता मयानुभव सम्पादनीय इत्यचिन्तयम् । यथा मदीयकार्यस्थान पादचारिणा होरार्धकालेन प्राप्यमभूत् तथा सन्निकृष्टवर्तिन एव कोष्ठानन्विष्य स्वीकुर्वता यानभाटिकाव्ययो रक्षित । इत पूर्वं न केवल यानभाटिकार्थं पणो व्ययीकर्तव्य आसीदपि तु विहरणार्थमन्य समय परिकल्पनीयोऽभवत् । इदानीं तु स्वकार्यमुद्दिश्य परिक्रामता प्रतिदिनमष्टदशपाषाणदूरमवश्य सञ्चरणीयमापतितम् । यथा मया विदेशस्थितिमता प्राय सर्वोऽपि व्याधि पर्यहारि यथाह सुदृढकायश्च सम्पन्नस्तथा तत्र कारण विशेषादीर्घविहार एव ॥

एव कुटुम्बवास परित्यज्य कोष्ठद्वयमह भाटकया पर्यग्रहीषि । तत्रैक शयनाय द्वितीय उपवेशनाय । एषा स्थितिनिर्वाहमर्यादापरिवर्तनस्य द्वितीय सोपानमिति वक्तव्यम् । सद्यस्तृतीयमेवान चाहमारब्धुरासम् ॥

एभि परिवर्तनैर्मम व्ययोऽर्धमक्रमत् । किन्तु काल कथ नियन्तव्य । व्यारिस्टर्परीक्षार्थमध्येतव्य बहु नासीदिति मे निश्चितम् । तस्मात्पर्याप्त काल इति भावना निरन्तरमभूत् । आङ्ग्लभाषाया मदीयमपाटव सर्वदा मा व्याकुलीकरोति स्म । 'बि ए परीक्षाया तावदुत्तीर्णो भव पश्चात्पार्थयेथा' इति लेली (पश्चादय 'सर फ्रेडरिक लेली' जात) महाशयोक्ते वचनान्यपि

मम श्रोत्रमविध्यन्निव । ब्यारिस्टर्पदेन सह साहित्यपदव्यप्येका सम्पादनीयेत्यहमचिन्तयम् । ऑक्सफर्ड-केम्ब्रिजविश्वविद्यानिलययोर्यद्वयोऽभ्यासक्रमस्तत्र प्रविष्टस्य यात्राव्ययश्चेत्यादिविषयजिज्ञासया कांश्चित्सुहृदोऽहमप्राक्षम्। तत्र हि व्ययो भूयानवस्थितिकालश्च दीर्घ इत्यवेदिषम्। किन्तु नाहमेतावता सन्नस्थित । अथैकः सुहृन्मां प्राह— यदि नूनं कठिनपरीक्षोत्तरणतृप्तिकामो भवांस्तर्हि लण्डनमेट्रिक्युलेशनपरीक्षायामुत्तीर्णो भवितुं यत्नं करोतु। तदर्थं भवता भूयः श्रद्धया पठितव्यम्। भवतः सामान्यज्ञानं च वृद्धिमेष्यति। अधिकः व्ययोऽपि न सम्पद्यत इति। इयं सूचना ममाभिमताभवत्। किन्तु परीक्षाविषयान्निरूप्य चकितोऽभवम्। लॅटिनभाषाधुनिकभाषा चैवं एते अवश्यं शिक्षणीये। लॅटिनभाषा तावच्च शिक्षणीया। कश्चित्सुहृन्मामेवमाह—लॅटिन भाषा नाम न्यायवादिना बहूपयुक्ता। तद्भाषावेदिना धर्मशास्त्रग्रन्थावबोधः सुलभः। अपि च रोमनधर्मशास्त्रमधिकृत्य प्रश्नपत्रिकैका लॅटिनभाषामयी वर्तते। किं च लॅटिनभाषाज्ञानमाङ्ग्ल भाषायाः सम्यक्प्रयोगाय बहूपकरोति। इति॥ एतानि वचनानि मम मनसि लग्नान्यभूवन्। अतीव क्लिष्टतरापि लॅटिनभाषा सर्वथा मया शिक्षणीयेत्यहं निरचैषम्। फ्रेञ्चभाषाशिक्षणस्य पूर्वमेवारब्धत्वात्सैवाधुनिकभाषात्वेन स्वीकर्तव्येत्यवधार्य मेट्रिक्युलेशनपरीक्षार्थमध्यापनाय परिकल्पिते वर्गे प्रवेशमलप्सि। एषा हि षाण्मासिकी परीक्षा। पञ्चमासमात्रं त्ववशिष्टमभूत्। कार्यमिदं मदीय शक्तिमतिक्रान्तमिति वक्तव्यम्। तथाप्यहमाङ्ग्लनागरिकी बुभूषया प्रबलया प्रेरितस्सन्नतीव श्रद्धालुर्विद्यार्थी सम्पन्नः। प्रतिनिमिषगणनापुरस्सरं कालनियामकपट्टिकामलेखिषम्। किन्तु मदीयबुद्धिशक्तिर्वा ज्ञापकशक्तिर्वा तथा प्रौढा नाभूद्यथेयमवशिष्टकाले फ्रेञ्चलॅटिनभाषे इतर विषयांश्च ग्रहीतुं प्रभवेत्। अथ परीक्षार्थमुपाविशम्। लॅटिनभाषायामनुत्तीर्णोऽभवम्। अनेन विषण्णोऽपि नाहमधैर्यं गतः। लॅटिनभाषायामभिरुचिर्ममोदपद्यत। भूयोऽपि परीक्षामासाद्य फ्रेञ्च भाषायामधिकव्युत्पत्तिं सम्पादयेयमित्यचिन्तयम्। अपि च परीक्षार्थं विज्ञानवर्गान्नवीनविषयो ग्रहीतव्य इति निश्चयमकार्षम्। मया गृहीतपूर्वस्य रसायनशास्त्रस्य हृदयङ्गमविषयत्वेऽपि प्रयोगाणामभावान्मम तत्राभिरुचिर्न जाता। भारतदेशे मम विद्यार्थिदशायां सैष सर्वैरवश्यमध्येतव्यो विषय आसीत्। तमेनमहं लण्डनमेट्रिक्युलेशनपरीक्षार्थमभ्यधिकविषयत्वेन पर्यग्रहीषि। परमिदानीं भौतिकशास्त्रान्तर्गतं 'औष्ण्य-उष्णपरिमिति' इत्येतं विषयमग्रहीषम्। सरलोऽयं विषय इति प्रतीतिरासीत्। पश्चान्ममापि तथैवागृह्यत। भूयोऽपि परीक्षार्थं सज्जीभवितुमुद्यतस्तत्कालमेवात्म जीवनस्य रीतिमपि पूर्वतोऽपि भूयः सरलां विधातुं प्रयत्नमकरवम्। अस्मत्कुटुम्बस्य दीनावस्थानुरूपं मया न जीव्यत इत्यहमचिन्तयम्। उदारबुद्धिर्मे ज्येष्ठो भ्राता प्रार्थितमात्र एव यत् यत् यावदपि द्रव्यं मम प्रेषयति स्म तदेतन्मदीयहृदयमकृन्तत्। प्रतिमासमष्टावारभ्य पञ्चदशसुवर्णमुद्रापर्यन्तं व्ययं कुर्वद्भिर्विद्यार्थिभिरेतत्र दृश्यते स्मेति मया प्रत्यक्षीकृतम्। मदपेक्षया भूयः सरलतया जीविनो निर्दिष्टा जना मया समदृश्यन्त। कश्चन विद्यार्थी दीनजनाध्युषितप्रदेशे कोष्ठमेकं शिलिङ्गद्वयमितसाप्ताहिकभाट्या परिगृह्य 'कोकोआ' इत्येतत्पेयस्य स्तोकव्यय-

लभ्ये भोजनगृहे पेनिनाण्यद्वयेन पिष्टापूपं कोकोपेयं च नीत्वा प्रात्याह्निकं भोजनं निरवर्तयम्। मयाप्येवं वर्तितव्यमिति न परन्तु मया व्यचिन्ति। किन्तु विहाय कोष्ठद्वयमेक एव कोष्ठः पर्याप्तः। स्वभोज्यस्य पाकः स्वेनैव कर्तुं शक्यश्चेत्यहममंसि। एवं विधानेन प्रतिमासं चतुष्पञ्चसुवर्णमुद्रा मया रक्षिता। सरलजीवनप्रतिपादकानि कतिपयपुस्तकान्यपि मयाऽपठ्यन्त। कोष्ठद्वयं परित्यज्याष्टशिलिङ्गनाण्याधिकसाप्ताहिकभाट्या कोष्ठमेकं स्वीकृत्याङ्गारधानिकां नीत्वा प्रातस्तनपाकं स्वयं कर्तुमुपाक्रमे। एतत्कार्यानुष्ठानाय प्रायो विंशतिनिमिषाधिकः कालो नापेक्ष्यत। यवगोधूमपिष्टयवागूपाचनाय कोकोपेयनिष्पादनार्थं जलक्वथनाय च कियानितोऽप्यधिकः कालोऽपेक्ष्येत। मध्याह्नेऽतिथिगृहेऽभुञ्जि। सायं कोष्ठ एव पिष्टकं जग्ध्वा कोकोपेयमपिबम्। एवं सपादैकशिलिङ्गमितद्रव्येण दिनस्य भोजनव्ययः समाभवत्। एतत्कालमत्र मे बह्वध्येतव्यं स्थितम्। सरलजीवनेनावकाशः प्रचुरः मयालभ्यत। द्वितीयवारं परीक्षायामहमुत्तीर्णोऽभवम्॥

एतादृशीं सरलतामङ्गीकृतवतो मम जीवनं शुष्कं समभवदिति पाठका न भावयन्तु। अनेन परिवर्तनेन मदान्तरिकजीवनशक्तिर्बाह्यजीवनशक्तिश्चैकतामापद्येताम्। अपि चेदमवर्तनमस्मत्कौटुम्बिकपरिस्थित्या सदृशमासीत्। मम जीवनं भूयः सत्यमयमजनि। एतेन मदात्मा निर्मलमानन्दमन्वभूत्॥

सप्तदशोऽध्यायः

## आहारविषयकशोधनानि

यथा यथाहमात्मपरीक्षणमकरवं तथा तथा मदीयबाह्यान्तरिकवर्तनेषु परिवर्तनावश्यकताऽन्वभूयत।

यथा यथा मदीयजीवनगतिरायत्यर्थी च परवृत्तिमानताऽन्यथा तथा तथा मदाहारमथ तैः समकमेव तत्र शीघ्रतरमेव वा पर्यवर्तत। दृष्टं च मया यदाहारविषयप्रतिपादकेष्वाङ्ग्लपुस्तकेषु विषयोऽयमतिसूक्ष्मतया धार्मिकदृष्टिकल्पाहारवैद्यकशास्त्रीयदृष्ट्या परिशीलित इति। नैतिकदृष्ट्या विचार्यमाणे स्थिरमिदं मम तत्र पर्यवसितं यन्मनुष्याधिपत्यस्य पशुपक्षि-महावर्तितं तत्तेषां हननेन मनुष्यस्याहारसम्पादनमावश्यकं न भवति। किन्तु यथा मनुष्येषु परस्परसहायीभूय शक्तिराप्ता भवन्ति तथैव पशुपक्षिषु मनुष्यैरपि वर्तितव्यम्। मनुष्यैराहरणं न केवलं भोजनार्थं परन्तु जीवनयात्रानिर्वाहाय। इति॥ एतदभिप्रायानुरोधेन तेन केचित् केवलं मांसमेव न किन्त्वण्डं क्षीरं च त्याज्यं तथेत्यन्वमन्यन्त स्वयं तथैवावर्तिषत। अपरे च मनुष्यदन्तरचनां विलोकयन्तः परीक्षितवन्तो यथा—मनुष्येण स्वाहारः पचनपूर्वकं निपाच्य भोक्तव्य इति नास्ति नियमः।

तस्य शरीरं हि पक्वफलसेवनयोग्यं निर्मितम्। स्तनन्धयत्वदशायामसौ मातुः स्तन्यं पिबेत्। जातदन्तस्तु चर्वणीयमाहारं स्वीकर्तुमारभेत्। इति॥ वैद्यशास्त्रीयदृष्ट्या सोपस्करपदार्था न सेवनीया इत्यमीभिः सूचितम्। आर्थिकदृष्ट्या व्यावहारिकदृष्ट्या चेतरापेक्षया शाकाहारस्यैव व्ययोऽल्पीयानित्यमन्यन्त। सर्वेऽप्येते विषया मम हृदयेऽलगन्। त एते नानाविधाः शाकाहारिणोऽपि भोजनगृहेऽमिलन्त। विदेशे तत्रैतत्सम्बन्धिन्येका सभ्यमण्डल्यासीत्। तयैका स्वकीया साप्ताहिकपत्रिका प्रचार्यते स्म। अहं तत्पत्रिकाग्राहको भूत्वा तन्मण्डल्याः सदस्योऽभवम्। कियद्भिरेव दिवसैस्तत्कार्यनिर्वाहकसमितिं च प्रविष्टः। तत्र हि शाकाहारप्रतिष्ठास्तम्भरूपैः पुरुषैः सह परिचयो मे जातः। ततोऽहमाहारविषयकाणि शोधनानि स्वतः कर्तुं प्रावर्तिषि॥

गृहादानायितानां पिष्टपूपसोपस्करवस्तूनां भक्षणमत्याक्षम्। तद्विषयो मम मनःप्रवृत्तेरन्यथा परीणतत्वात् तत्सम्बन्धिभ्रमोऽपि मन्दतरं सवृत्तः। अत एव रिचमण्डनगरे निस्सारमिव परिदृश्यमानमप्युपस्करशून्यमपि शाकमिदानीं रुच्यमदृश्यत। एतादृशैरनेकप्रकारैरनुभवैर्रसनेन्द्रियस्थानं मनो न पुनर्जिह्वेति शिक्षितोऽभवम्॥

आर्थिकदृष्टिस्तु मदीया निरन्तरमजागरीत्। आसीत्तदानीमेको वर्गो यस्य पेयवस्तुषु कॉफीचहाप्रभृतयो हानिकराः कोकोपेयन्तु प्रशस्तमित्यासीदभिप्रायः। शारीरव्यापारार्थमेवाहारः सेवितव्य इति मया निस्सन्दिग्धमवगतत्वात् कॉफीचहापेये परित्यज्य कोकोपेयमुपयोक्तुमहं प्रवृत्तः॥

मयोपभुज्यमाणभोजनगृहेषु विभागद्वयमासीत्। एकत्र यद्वस्तु प्रेप्सितं तद्विचित्य पृथगग्राह्यमभूत्। एतदर्थमेकशिलिङ्गव्ययमारभ्य द्विशिलिङ्गपर्यन्तं व्ययः समपद्यत। एव विभागस्तूत्तमस्थितिभाजन उपतिष्ठति स्म। अपरस्मिन्विभागे पदार्थत्रयं पिष्टपूपमेकं च पेनिषट्केन व्यक्रीयत। यदाहमतीव मितव्ययमकरवं तदायमेव विभागो मयोपास्यीयत॥

उपरि निर्दिष्टं मुख्यशोधनं कुर्वता मयेतराण्यल्पाल्पशोधनान्यङ्गीकृतानि। तद्यथा — सदृदिष्टपदार्थपरित्यागः। सदृपिष्टकफलमात्रसेवनम्। सद्वनवनीतदुग्धाण्डमात्रेण जीवनमित्यादि। एतेषामन्तिमं यच्छोधनं तदुल्लेखयोग्यं भवति। तदेतत्पक्षद्वयादिनान्यपि न हि प्राचलत्। पिष्टशून्यपदार्थाशनवादी सुधारको न केवलमण्डमनुत्तमं पदार्थं इति ख्यापयति स्म किन्त्वत्र मासाभावमप्यसाधयत्। एषां किं स्वन्ति सिद्धोक्तिरभूदण्डसेवनं नाम जीवप्राणिहिंसामूलं न भवति। एतादृशसमर्थनाव्यामोहमापन्नोऽहं प्रतिज्ञातविरुद्धमेवाण्डमभक्षयम्। किन्त्वेतद्विस्मृतिप्रकारं क्षणमात्रस्थाय्यभूत्। प्रतिज्ञाक्षराणामभिनवार्थकल्पने मम नासीन्मनागप्यधिकारः। प्रतिज्ञाकरणावसरे यदेव मे मातुर्बुद्धिरिष्यते तदहमङ्गासिषम्। मासमिथ्यनया प्रतीतो यः पदार्थस्तस्मिन्नण्डमप्यन्तर्भवतीति मे विदितम्। प्रतिज्ञायाः पारमार्थिकं रहस्य प्रतिपन्नोऽहमण्डभक्षणमेतच्चोररूपं च सद्य पर्यत्यजम्॥

प्रस्तुतचर्चान्तःपातीः विषय एकः सूक्ष्मो विचार्यश्च विद्यते। विदेशे मांसशब्दस्यार्थत्रयं पर्यकल्प्यत। तत्रैको यथा—मांसं नाम पशुपक्षिमांसमात्रमिति। एवं व्याख्यातारस्त्वक्तैतन्मांसा अपि मत्स्यानभक्षयन्। किमुताण्डानि। द्वितीयार्थो यथा—मांसं नाम सजीवप्राणिसामान्यस्य पिशितमिति। अनया दृष्ट्या मत्स्यस्त्याज्यः। अण्डं तु ग्राह्यम्। तृतीयार्थो यथा मांसं नाम न केवलं समस्तप्राणिगतं पिशितमपि तु प्राण्युत्पन्नाः सर्वेऽपि पदार्था इति। अत एवाण्डदुग्धादयस्त्याज्या बभूवुः। पूर्वमर्थमङ्गीकृत्य न केवलमण्डं परन्तु मत्स्योऽपि मम भक्षणीय आसीत्। किन्तु मातुर्मनोगत एवार्थो ग्राह्य इत्यकारि मया निश्चयः। अतः प्रतिज्ञां परिपालयितुकामस्य नाण्डं परिग्राह्यमभूत्। तस्मादह तत्सेवनमत्यजम्। एतेन मम कष्टमापतितम्। यतोऽहमामूलान्तविचारः शाकाहारस्य भोजनगृहेष्वखिलेष्वपि बहवः पदार्था अण्डसम्पृक्ता एवेत्यबोधिषम्। तस्मादसम्यग्ज्ञातपदार्थस्वरूपस्य मम तत्तत्पदार्थानामण्डसम्पर्कजिज्ञासा सर्वदा प्रासज्यत। यतो विविधमोदकाञ्जलीप्रभृति भोज्यवस्तून्यण्डसंमिश्रितान्येवासन्। एकतोऽनेन मम क्लेशविशेषसम्भवेऽपि मदीयाहार सुलभतरोऽभवत्। अन्यतोऽनेन कतिपयस्वच्यपदार्थानां परित्यागसम्भावनया मयि किञ्चिदाकुलीभूतेऽपि क्षणात्तिरोहितमात्रा निश्चितनिर्व्यूढप्रतिज्ञतामूला काचिदान्तरिकीरचिरारोग्यकरी सूक्ष्मा चिरस्थायिनी च समुदपद्यत॥

किन्तु पारमार्थिकी परीक्षाद्यापि भाविनी स्थिता। सा च मम द्वितीयशपथसम्बन्धिनी। परन्तु श्रीरामशरणानामनिष्टमाचरितुं को वा समर्थः॥

प्रतिज्ञानामर्थव्यवस्थामधिकृत्य कतिपयोक्तीनामिहोपन्यासो नानंगत इति मन्ये। प्रतिज्ञाः खलु प्रपञ्चस्य सर्वभागेष्वपि भूयसां कलहानां बीजभूता भवन्ति। ता एता अतिविस्पष्टभाषया लिखिता भवन्तु तथापि लोकास्ताः स्वस्वानुकूले पथ्येव प्रवर्तयन्ते। ईदृशा जना आधनिकादादरिद्रमाक्षितिपाद्वा भुवि सर्वत्र समाजे दरीदृश्यन्ते। स्वार्थता हि सर्वानप्यन्धयति। उभयार्थान्वयिनीं मध्यसरणिमन्वीष्य व्याख्या प्रवर्तयन्तः स्वं स्वेनैव वञ्चयित्वा लोकस्य देवस्यापि मोहभस्म प्रचिक्षिप्सन्ति। यस्यार्थेऽस्माभिः प्रतिज्ञातं तेन निर्वचनया कृतस्यार्थस्यास्माभिरभ्युपगमो नामैक उत्तमो मार्गः। उभयार्थसम्भवस्थले दुर्बलपक्षीयव्याख्यानुसरणं नाम द्वितीय उत्तमो मार्गः। एतन्मार्गव्यतिक्रमो हि कपटधर्मस्य च हेतुः। तस्य व्यतिक्रमस्याप्यमयमेव मूलम्। सत्योपासकस्यैकस्यैव सुगमोऽयं पन्थाः। तादृशः पुरुषस्य न खलु विद्वद्भ्यामाशयः प्रष्टव्यो भवति। यद्ययं मार्गो मयाप्यवलम्ब्यते तदा मांसाहारविषये मम मातुर्मनोगतमेवार्थं पुरस्कृत्य मया हि प्रवर्तितव्यम्। न पुन स्वानुभवाद्वा स्वविद्याभिमानाद्वा स्वयं कल्पितमर्थमनुसृत्य॥

अविनिविदेशे मम शोधनान्यारोग्यदृष्ट्यार्थिकदृष्ट्या च व्यधीयन्त। दक्षिणाफ्रिकादेशं प्रति गमनपर्यन्तं तानि धार्मिकस्वरूपं नाभजन्त। तत्राहमनया दृष्ट्या कठिनानि शोधनान्यकल्पयम्। एतान्यग्रे सर्वाणि वक्ष्यन्ते। किन्त्वाङ्गलदेशे एवैषा बीजवपनानि वक्ष्यम्॥

नवीनधर्मस्वीकर्ता तद्धर्म एव गृहीतत्रमन पुरुषस्याश्रया समधिकोत्साहशाली भवति। शाकाहारो विदेशे नवीनधर्म आसीत्। मद्विषयोऽपि तादृश। यदह मासाहार एव श्रेयानिति बुद्धिपूर्वक गृहीत्वा विदेशमगमम्। शाकाहार एव नीतिमत इति ज्ञानपूर्वक पश्चादग्रहीषम्। अतोऽह नवीनधर्ममेव प्रविष्टो वक्तव्य। तदनुरूपमेव परमोत्साहसम्पन्नतया वेज्वॉटरइत्येतदाख्ये स्ववसतिप्रदेशमण्डले शाकाहारिमण्डल्येका स्थापनीयेति निश्चित्य तत्रैव कृतनिवास सरएडवीन-आर्नल्डमहाशयमुपाध्यक्षताङ्गीकाराय प्रार्थितवान्। सोऽप्यन्वमन्यत। शाकाहार्याख्यवृत्तपत्रस्य सम्पादको डाक्टरओल्डफील्डमहाशयश्चाध्यक्षोऽभवत्। अहमेव कार्यदर्श्यभूवम्। सा मण्डली कियन्त काल सम्यक्प्रचलिता पश्चाद्व्यरसीत्। यदह निजपद्धतिमनुसृत्य तद्वसतिमण्डल विहायान्यत्र गतोऽभवम्। किन्त्वनेनाल्पेनाचिरानुभवेनापि सस्थाप्रतिष्ठापनतच्चालनादिकर्मणि शिक्षणमलाभि॥

अष्टादशोऽध्यायः

## लज्जाशीलता–मदाश्रयः

अह शाकाहारमण्डल्या कार्यनिर्वाहकसमितौ सदस्यत्वाय वृतोऽभवम्। सर्वास्वपि सभासु सन्निहितोऽपि सर्वदा तत्र बद्धमुख इवातिष्ठम्। एकदा डाक्टरओल्डफील्डमहाशयो मामब्रवीत्–मया सह भवान्सम्यगेव भाषते। परन्तु सभाया किमिति मुख पिनद्ध भवति। वृत्ततो भवान्पुरुषभ्रमरमनुहरतीति॥ अहमेतत्परिहाससरहस्यमग्रहीषम्। भ्रमरो हि सर्वदा कर्मणि व्यापृता भवन्ति। भ्रमरास्तु खादनपाने विना नान्यत्कर्म कुर्वन्ति। समितियामितरेषु स्वस्वमता यभिव्यञ्जयत्सु मया तावन्मुख पिनद्धोपविष्टमित्येतद्विचित्रमेव। न खल्वह वक्तुकामो नाभूवम्। परन्तु भाषणभङ्गिर्मया न ज्ञाता। येषा सर्वेऽपि मदपेक्षयाभिज्ञतरा समलक्ष्य त। किं च कदाचिद्व तुक्रमेन मया न यावन्मन स्थिरीकृत तावदन्यविषयस्य चर्चा प्रारभ्यते स्म। इत्थ बहूनि दिनानि व्यतीयु॥

अत्रान्तरे महाप्रश्न एको विचारपदवीमवतीर्ण। तदाहमचिन्तयम्–दिनेऽस्मिन्वि-मुर्गीभूय तूष्णीमवस्थान न हि युज्यते। स्वाभिप्रायाणामप्रकाशन मम भीरुत्व द्योतयतीति। विषयोऽय चर्चास्पदमागतो यथा–'टेम्स आयर्न वर्क्स'–इत्येतदाख्यलोहशिल्पालयस्य स्वामी हिल्स महाशय अस्मान्मण्डल्यध्यक्ष आसीत्। स च प्युरिटनवर्गप्रविष्टो जन। अस्य द्रव्यसाहाय्येनैव मण्डली जीवति स्मेति वक्तु शक्यते। समितिया बहव सदस्या प्रायेण तदाश्रयिणोऽभूवन्। शाकाहारसम्बद्धग्रन्थानिमान् डा॰ ऍलिसनमहाशयोऽपि समितेरेक सदस्य। कृत्रिमोपायै

प्रजोत्पत्तिनिरोधाय प्रयत्नपरम्परा तत्काले प्रचलति स्म । डॉ. ऍलिन्सनमहाशयस्तत्पक्षमालम्ब्य तद्विधानं कर्मकराननबोधयत् । अमी कृत्रिमोपाया लोकनीतिविध्वंसका इति हिल्समहाशयस्य मतमासीत् । अत एव न केवलमाहारविषयकं सुधारणमेव शाकाहारमण्डल्युद्देश्यमपि तु नीतिसम्बद्धविचाराणां समीकरणमप्येकमित्ययमभिप्रेत्य डॉ. ऍलिन्सन सदृशानां नीतिमार्गविरुद्धाभिप्रायजुषां सदस्यत्वं नाङ्गीकर्तव्यमिति प्रत्यगातिष्ठत । डॉ. ऍलिन्सनमहाशयो मण्डल्या बहिष्कार्य इत्येका सूचना समुपस्थापिताभूत् । विवादेऽस्मिन्मम महत्कुतूहलमासीत् । डॉ. ऍलिन्सनमहाशयस्याभिप्राया हानिकराः समदृश्यन्त । किं च नैतिकदृष्ट्या हिल्समहाशयेन कृतं प्रत्यवस्थानं न्याय्यमित्यहमचिन्तयम् । अपि च हिल्समहाशये तदौदार्ये च मम भूयानादरोऽभवत् । तथापि केवलं प्यूरिटनवर्गीयाणां या नीतिस्तस्य प्रसारोऽपि मण्डल्युद्देश्येष्वेकतम इत्यनङ्गीकुर्वाणस्य शाकाहाराभिवृद्धये प्रतिष्ठापितमण्डल्या बहिष्कारविधानमन्याय्यमित्यहमचिन्तयम् । हिल्समहाशयस्याभिप्रायाः स्वमात्रसम्बद्धाः । मण्डल्युद्देश्यन्तु केवलं शाकाहारप्रचारो न पुनर्नीतिप्रचारः । अत एव हिल्समहाशयस्याभिप्रायाणां मण्डल्या सह न कोऽपि सम्बन्धो मयादृश्यत । नीतिं तावदतिक्रम्य यद्वा कश्चिदभिप्रैतु । स यदि शाकाहारी तर्ह्ययं सङ्घस्य सदस्यो भवितुमर्हत्येवेति मदभिप्राय आसीत् ॥

मत्समानमतावलम्बिनः परे केचन समितावभवन् । किन्तु मन्मनोगतमवश्यं मयैवाख्यातव्यमित्यहमचिन्तयम् । कथमेतत्प्रकाशनीयमित्येवन्महान् प्रश्नोऽभवत् । भाषणाय मे न धैर्यमासीत् । तस्माद्यावन्मे मनसि स्थितं तावल्लिखित्वा स्थापनीयमित्यहं निरचैषम् । तल्लेखनं कञ्चुककोशे निक्षिप्य सभामगच्छम् । किन्तु तद्वाचयितुमप्यधीरोऽभवम् । अध्यक्षस्तदन्यमुखेनावीवचत् । डॉ. ऍलिन्सनमहाशयस्य पक्षो जयं न प्राप । इत्थं मम प्रथमयुद्ध एव पराजितपक्षमहं प्रविष्टः । किन्तु मदीयपक्ष एव सत्यानुबन्धी पक्ष इति मे श्रद्धासीत् । एतेन परं सन्तुष्टोऽभवम् । पश्चादहं समितिं त्यक्तवानिति कचिद्धृतिरस्ति ॥

इयं मे लज्जाशीलता विदेशवासावसानं यावदनुस्थिताभूत् । स्वैरं कस्यचिदिच्छया कचिद्गतस्यापि चतुःपञ्चजनसन्निधौ मम मुखाद्वचनं नैव निस्सरति स्म ॥

एकदा मजमुदारमहाशयद्वितीयोऽहं वेण्टनरइत्येतद्ग्राम्यस्थलमगच्छम् । तत्र कस्यचिच्छाकाहारिणो गृहेऽवात्साव । तस्मिन्नेव जलपानचिकित्साप्रसिद्धे ग्रामे 'एथिक्स ऑफ डायट' नामाहारनीतिग्रन्थप्रणेता न्यवसत् । आवां गत्वा तमपश्याव । शाकाहारप्रचारायैका तस्मिन् ग्रामे सभा मेलयितव्याभवत् । आवाभ्यामुपन्यासस्तत्र कर्तव्य इति सोऽभ्यर्थयत् । इदमावाभ्यामङ्गीकृतम् । लिखित्वानीतस्याप्युपन्यासस्य सभायामुपन्यासो न दोषायेत्येतत्पूर्वमेव मया विचार्य निश्चितमासीत् । अद्धामिरं च पठन्तः समरिष्कारं संक्षिप्य लिखितानि स्वभाषणान्यनेके वाचयन्ति स्मेति । अवनम्लानेन मया सभायामुत्थाय सन्भाषणं नाम केवलमसम्भाव्यमिति मे विदितम् । अतोऽहं स्वभाषणं लिखित्वा सहैव नीतवान् । तद्वाचयितुमुत्थितस्य मुखाद्वाणी नैव निरसरत् । नयनमन्धीभूतमिव ।

हस्तपादं कम्पितुमारभत । लिखितानीत मदीयभाषणं फूल्स्कॅपपत्रस्यैकपुटपरिमितमपि नासीत् । मजमुदारमहाशयेनेदं मदर्थे पठितव्यमापतितम् । तस्य स्वकीयभाषणं तु मनोहरमासीत् । श्रोतारः सहस्ततालं निजानन्दमप्रकटयन् । अहं सुतरां लज्जितोऽभवम् । हन्त भाषण योग्यताहीनोऽहमिति भृशमदूये ॥

विदेशान्निर्गमनकाले कृतं यद्भाषणं स एव चतुष्पटजनसमक्षं भाषितुं मया कृतोऽन्तिम प्रयत्न । सोऽपि हास्यास्पदमेव पर्यणंसीत् ॥

विदेशपरित्यागात्पूर्वं मया शाकाहारिणो मत्सुहृदः पूर्वोक्त हॉबर्नभोजनगृहे भोक्तुमामन्त्रिता । अथत्र मया स्वयमचिन्ति यच्छाकाहारभोजनगृहेष्ववश्यं लभ्यत एव शाकाहारः । मांसाहारभोजनगृहेऽपि शाकाहारभोजनाय कुतो न सविधातव्यमिति । ततो भोजनगृहस्य व्यवस्थापकम बोधयम्—शुद्धशाकाहारभोजनं सज्जीकर्तव्यमिति । एतद् वृत्तान्तमाकर्ण्य शाकाहारिणः सुतरामभ्यनन्दिषुः । एतादृशभोजनानि सर्वत्रापि भोगार्थमेव परिकल्प्यन्ते । किंतु पाश्चिमात्येष्वियमेषा महती कला । एतादृशानि संतर्पणानि सङ्गीतादिपरिकरेण निमवोत्तरं निर्वर्त्य तस्मिन्नवसरे भाषणानि कुर्वन्ति । मया परिकल्पितापि नातिमहती सजग्धिरेतादृशाडम्बरेणानुपेता नाभूत् । अथ प्राप्तो भाषणावसरः । अहमुदतिष्ठम् । बहवालोच्य भाषणाय सज्ज एव गतोऽभवम् पञ्चषवाक्यानामेव वक्तव्येऽपि प्रथमवाक्यमपि मुखान्नोदगच्छत् । ॲडिसननामा सदस्य प्रजापक्षसभाया स्वस्य प्रथमभाषणावसरे 'इत्थमहं चिन्तये' 'इत्थमहं चिन्तये' 'इत्थमहं चिन्तये' इति त्रिवारमुच्चार्य बद्धवाक्प्रसरस्तूष्णीमस्थात् । आङ्ग्लभाषाया 'कन्सीव' इत्यत्रप्रयुक्तपदस्य 'चिन्तनं' 'गर्भधारणं' इत्यर्थद्वयमस्ति । तत्रत्य कश्चित्परिहासकः प्राह—एष महाशयस्त्रिवारं धृतगर्भोऽपि न किंचित्प्रासुतेति । एतत्कथामेव मूलीकृत्य विनोदपरं भाषणं कर्तव्यमिति निश्चित्य सन तथैवारम्भम् । अपरं वाणी नैव प्रासरत् । विनोदार्हं भाषणं चिकीर्षु स्वयमेवोपहास्यतामगाम् । ततश्च—"अयि भो भगवन्तः भवतां मत्कृतमामन्त्रणं स्वीकृत्य यदिहोपस्थितास्तेनाहमत्यन्तमनुगृहीतं मन्ये" इति इत्युक्त्वा यथास्थानमुपविष्टोऽभवम् ॥

दक्षिणाफ्रिकादेशागमनानन्तरमेव ममैषा लज्जाशीलता दूरीभूतेति वक्तव्यम् । न पुनरत्यन्तमेव मां परित्यज्य निर्गतेति वक्तुं शक्यते । सहसा भाषितुं नाहमशक्नवम् । नूतनसमाजमध्ये सङ्कोचोऽजायत । यथाशक्यं भाषणप्रसङ्गं सर्वदा पर्यहार्षम् । अद्यापि सुहृद्गोष्ठ्यां [illegible] मया वक्तव्यं [illegible] इति वा [illegible] इति वा वक्तुं न पारये ॥

[illegible] ॥ परन्तु न मे तत्र [illegible] [illegible] । [illegible] पूर्वं मे [illegible] । अद्य [illegible] । [illegible] । [illegible] भवति । [illegible] शक्नोमि । मदीयभाषण

गतं लेखनगतं वा यत्किमपि वाक्यमुद्दिश्य लेशतोऽपि मे लज्जा वानुतापो वा समजनीति न स्मरामि। अपि चानेन बहुधा अनर्था दूरीकृता वृथाकालहरणप्रसङ्गश्च परिहृतः। सत्योपासकस्य शिक्षणे मौनशिक्षाप्येको भाग इति स्वानुभवादहं वेद्मि। अतिशयोक्तिः सत्यस्य निगूहनं तदन्यथाकरणं वा तदेतत्कर्मणा बुद्धिपूर्वकमबुद्धिपूर्वकं वानुष्ठानमित्ययं मानुषस्वभावः। एतादृशक्लेशपरिजिहीर्षोर्मौनमावश्यकम्। मितभाषिणो जनस्य निर्विचारभाषणप्रसङ्गोऽतीव विरलः। स खलु प्रतिवाक्यमक्षरं तोलयित्वोपयस्यति। भाषणसमुत्सुका जना भूयांसो दरीदृश्यन्ते। 'मया किञ्चिद्वक्तव्यमस्ती'ति समायां समायामध्यक्षं प्रति पत्राणि प्रेषयन्ते। अध्यक्षाद्भाषणानुज्ञां प्राप्य भाषितुमुपक्रमन्ते। भाषं भाषं नियतकालमतिक्रम्य पुनरवकाशं प्रार्थयन्ते। पर्यन्ते विनानुज्ञामेव भाषणप्रसक्तास्तेऽधीयन्त। एतादृशैर्भाषणैर्न हि सम्भाव्यते कोऽपि लोकोपकारः। किन्तु तावान्कालो व्यर्थो जात इत्येतत्स्पष्टम्। अत एवोच्यते ममेयं लज्जाशीलता मां वर्मेव समरक्षीत्। सेयं मदात्मविकाससत्यावलम्बनं व्यतारीत्। सत्यस्योपासनायां मे साहाय्यमकार्षीचेति॥

## एकोनविंशोऽध्यायः

# असत्याख्यं विषम्

चत्वारिंशद्वत्सरेभ्यः पूर्वमाङ्ग्लनिदेशे भारतीयविद्यार्थिनां सङ्ख्यात्यन्ताल्पीयस्यासीत्। तेषां मध्ये कृतोद्वाहोऽपि विद्यार्थी स्वात्मानमनूढं स्थापयति स्म। तस्मिन्देशे पाठशालायां महाविद्यालये वाधीयानाः सर्वेऽपि बालका अविवाहिता एव भवन्ति। यदेते विवाहितस्य विद्यार्थिजीवनमशक्यं मन्यन्ते। पुरा किलास्मास्वपि विद्यार्थिनं ब्रह्म-चारिणमेवाहुः। अधत्वे तु बाल्यविवाहपद्धतिः सुप्रचरिता भवति। निदेशे पद्धतिरेषा न कस्यापि बोधविषयः। अतस्तत्रत्या हिन्दुस्थानीययुवका वृत्तं स्वविवाहमङ्गीकर्तुम-जन्त। विवाहवृत्तमपलपितुं कारणमन्यदप्येकमासीत्। तच्च यथा—एतद्रहस्ये प्रकाशिते सति स्वाश्रयिनिकुटुम्बान्तर्वर्तिनीभिर्युवतिभिः सह विहर्तुं क्रीडितुं च नावकाशो लप्स्येतेति। ईदृग्विनोदः प्रायेण निर्दोष एवाभवत्। पितरौ स्नेहमीदृशं प्रोत्साहयताम्। तत्र सहधर्मिण्या युवकेनैवान्विष्य वरणीयत्वाद्युवकयुवतीनां सहवासस्तस्मिन्देशे प्रायेणावश्यकः स्यात्। तन्न्याना-मयं स्वाभाविकः सम्बन्धः। तादृशः सम्बन्धः हिन्दुस्थानीययुवकाणां निदेशं गत्वा यद्यङ्गीकु-र्यात्तदा तत्परिणामः प्रायेण दुष्ट एव कल्प्येत। तदेतदसकृल्लोकानुभूतिसिद्धम्। एतन्मोहपाश-पतिता अस्मदीययुवकास्तत्रत्यैर्यद्यपि निर्दोषिभिर्नैवागृह्यन्त तथाप्यस्मदीयानां तादृशसम्बन्धस्य

हेयत्वात् हेयसम्बन्धपरिग्रहेण युवका असत्यमय जीवनपथ किलोपाश्रयन्त । असत्यमार्गतोऽयं ममोपर्यपतन्नासीत् । विवाहितोऽपि पुत्रवानप्यहमविकल्पेनैवात्मानमनूढमख्यापयम् । किन्त्वेव सत्य निगूह्य सुखमधिक मया न लब्धम् । मम लज्जाशीलता मितभाषित्व च मामरक्षताम् । रमणीयकथालापशून्येन मया सह का वा युवति सम्भाषितु वा विहर्तुं वानुमन्येत ॥

यथाह लज्जाशीलस्तथा भीरुकश्चासम् । मन्निवासाश्रयसदृक्षकुटुम्बेषु विहारार्थं गृहिणी-दुहित्रातिथीना सहनयन सम्प्रदाय आसीत् । मदीयवसतिगृहस्वामिन्या दुहिता मामेकस्मिन्दिने 'वेण्टनर'ग्राममभित स्थितान्रमणीयशिलोच्चयान्प्रत्यनैषीत् । सा युवतिर्मामिमन्दगतिमप्या ह्यश्यापि मार्गमविश्रान्तमालपन्ती महता जवेन प्राक्रामत् । तस्या प्रति वचनरूपेण मन्मुखात्क-दाचित् 'हू' इति कदाचित् 'उहूम्' इति वाथ बहूक्तौ 'अहो रामणीयकम्' इत्यर्थस्वरेण वाचो निरसरन् । सा शकुन्तीव वायुना सहोदसर्पत् । अह पुन कदा गृहमासादयेयमिति विस्मयमानो गत । इत्यमात्रा शैलमारुक्षाव । तस्मादवतरण कथम् । उच्चपार्ष्णिकपादुकाधारिण्यपि सा पञ्चविंशतिवर्षदेशीया पटीयसी युवति शरवेगेन स'झम्प'मवातरत् । अह पुनर्लज्जमानोऽ-धस्तादवतरीतु बहुप्रयासी स्थित । सा मे मन्दहासिनी धैर्यमुपदिशन्ती पुनरारह्य हस्तग्राह मामवतारयिष्यामीत्यवदत् । अहो मे भीरुकत्वम् । सकृत्सकृद्गाढमुच्छ्वसन्नत्यन्तप्रयासेन कथं-चिदवातरम् । सा तु प्रोच्चैर्हसन्ती 'शाबाश' इति मा श्लाघमाना मदीयलज्जा द्विगुणीचकार । तथा मा परिहसितु सा खल्वधिकारिण्यासीत् ॥

किन्तु सर्वत्रापि निष्कलङ्कैनैव मया स्वात्मरक्षण कथ वा शक्यम् । असत्यविषाद्रक्षितव्योऽ-हमित्यासीद्भगवदिच्छा । वेण्टनरस्थलमिव समुद्रतीरे ब्राइटननामकमुत्तमवायुगुणोपेत स्थलमेक विद्यते-अहमेकदा तत्र गत । इद च वेण्टनरस्थलगमनात्पूर्वम् । तत्र क्वचिद्भोजनगृहेऽनतिविभवशालिनी मेका वृद्धविधवामपश्यम् । स एव विदेशप्राप्त्यनन्तर मे प्रथमो वत्सर । तत्र प्राप्यभोज्यपदार्थानामेका पट्टिका फ्रेञ्चभाषामयी स्थिता । तदर्थमह नाबोधिषम् । तया वृद्धमहिलयाध्यासितस्य पीठस्याभिमुखमेवाहमुपाविशम् । सा मा नवागन्तुकमीषत्सम्भ्रान्त चावगत्य तत्क्षणमेव समाश्वा-सयन्ती मामपृच्छत्—'नवागत इव भवान् लक्ष्यते क्वचित्सम्भ्रान्त इव च । किमिदयावपि महाभागेन भोज्यमेकमपि नादिष्टम्'—इति । यदेय सद्गृहिणी मामेवमाभाषयत्तदाह पट्टिका वाचयितु प्रयतमान कै कै पदार्थैर्निष्पादितानि भोज्यानीति सेवकमनुयुञ्जानश्च स्थित । उपकृतोऽस्मि भवत्या मामेव विचारयन्त्येति प्रतिव्याहृत्य तस्यै मदीयकष्टमावेद-यन्नवदम्—'मम फ्रेञ्चभाषानभिज्ञत्वाद्भोज्येषु मासवर्जित भोज्य किं किमित्युपलब्धु मे नास्त्युपाय' इति ॥

सावादीत्—पट्टिकागतं भवते पूर्णमावेद्य यद्भवता खादनीय तत्कथयिष्यामीति । अह कृतज्ञतया तस्या साहाय्यमङ्गीकृतवान् । तदारभ्यावयोर्नूतनपरिचयाद्रूढा मैत्री क्रमेण सवृध्य विदेशाधिवसानपर्यन्त तनश्च विदेशपरित्यागाद्बहूनि दिनानि च स्थिता । सा वृद्धा लण्डन

पत्तने स्वकीयवसतिनामादिक निवेद्य प्रतिभानुवासर स्वगृहे भोजनाय मा न्यमन्त्रयत् । इतर-प्रसङ्गेषु च मा भोक्तुमामन्त्र्य मदीयलज्जाप्रवृत्तिव्यपोहनाय युवतिभि सह मे परिचयमुत्पाद्य ताभि कथालापप्रसङ्गिन मामकरोत् । आत्मसहवासिनीं युवतिमेकामितरापेक्षया समधिकमेव मया सह कथालापव्यवहाराय समयोजयत् । अनेकशस्तामेकान्ते द्वावेव विसृज्य स्वय निर्गच्छति स्म ॥

आदौ तदेतत्सर्वं मे कष्टतरमलक्ष्यत । सल्लापोपक्रम कथ मया कर्तव्य इति नाज्ञासिषम् । नर्मालापस्याप्यनभिज्ञोऽभवम् । किन्तु सा युवति सर्वमेतन्मा शिक्षयितु प्रवृत्ता । अहमपि शनै कुशलकुशल सम्पन्न । क्रमेण प्रतिभानुवासरागममुत्सुकतया प्रतीक्षितु प्रावर्तिषि । किञ्च तद्युवत्या सह सम्भाषणे मयाभिरुचिरुदेतुमारब्ध ॥

गृहृदया क्षिप्ता वागुरा दिने दिने विशङ्कटप्रसराभवत् । आवयोर्मिथ सम्मेलने तस्या पर कुतूहलमासीत् । आवामुद्दिश्य तया मनसि किमपि मन्त्र्यमाणया भवितव्यम् ॥

अह सङ्कटे लग्न । अथाहमचिन्तयम्—यद्यहमेतस्यै सद्गृहिण्यै कृतोद्वाहमात्मान प्रागेवावेदयिष्य तदा तत् पर शोभनमभविष्यत् । तदा हि सा द्वयोरावयोर्विवाहमुद्दिश्य नैव चिन्तामकरिष्यत् । भवतु । महति विलम्बेऽपि प्रमाद समीकरणीय । सत्यकथनेनाहमितोऽप्यतिशयितसङ्कटान्निस्तारमाप्नुयामिति । ततोऽह प्रायो वक्ष्यमाणाभिप्रायोपेतमिद तस्या पत्रमलेखिषम् । यथा —

" आवा ब्राइटनपत्तने यदामिलितौ तदारभ्य भवत्या मयि प्रेम न्यवेशि । यथा माता निजा पत्यमवेक्षते तथा भवत्याहमवेक्षित । मम दारसङ्ग्रहमनुचिन्तयन्त्या भवत्या युवतिभि सह परिचयो मे समुत्पादित । यावदीदृश सम्बन्धो न वरीवृत्येत तावन्मयैतदस्ति विज्ञापयितव्य यदह भवत्या प्रेमपात्रीभवितुमनर्ह इति । यदा युष्मदीयगृहमागन्तुमह प्रवृत्तस्तदैव मया भवत्यै निवेदयितव्यमासीद्यदह विवाहितोऽस्मीति । ज्ञात हि मया हिन्दुस्थानस्य युवका स्वदेशे परिणीता अपि तद्विषयमिहागता निगूहन्त इति । स एव क्रमो मयाप्यनुवर्तित । किन्त्वेतदकृत्यमनुष्ठित मित्यधुना वत स्पष्टमवगम्यते । मम हि बाल्य एव विवाह सवृत्त इति ममैक पुत्रोऽपि विद्यत इति च मया प्रागेव भवत्यै निवेदयितव्यमासीत् । एतत्सर्वमेतावद्दिन भवत्या सकाशादह निह्नुतवानिति पर विषीदामि । किन्तु भगवानिदानीं मम सत्योक्तिकथनाय धैर्यमदादिति प्रमुदितोऽस्मि । कच्चिन्मा क्षमिष्यते भवती । भवत्या परिचायिताभि सहोदरीभिर्मया न कदाप्यनुचिता स्निग्धवृत्तिराचरितेति यत्सत्यमह सशपथ ब्रवीमि । स्वमर्यादा हि मया पूर्वमेवाकलिता । किन्त्वह विवाहित इति यदनभिज्ञा भवती तदेषा तरुणिर्मया परिणायितव्येति भवत्या स्वाभाविकोऽय मभिलाष । एतादृशसम्बन्धपरिजिहीर्षया सत्य मयाद्य कथनीयम् ॥

एतत्पत्रमासाद्य यदि भवती मामातिथ्यपात्र न मन्यते तदाहमेतदन्यथा नैव ग्रहीष्ये । मयि किल भवत्या प्रेमवात्सल्यपरम्परयापितमस्मि चिरमृणी सवृत्त । तत् परमपि भवती मामपरित्यजन्ती स्वगृहे सन्निधातुमर्होऽयमिति यदि मन्यते तदाह न केवल सुखी स्यामपि तु तदनुरूपयोग्यता सम्पादयितुं यतिष्ये । अपि च मा प्रति भवत्या इदमभिनव प्रेमचिह्नमास्थास्यामीति ॥ "

पत्रमिदं क्षणमात्रेण मया व्यलेखीति वाचका न मन्यन्ताम्। तेन ह्यनेकश शोधं शोधं लिखितेन भाव्यम्। किन्त्वेतत्पत्र मन्निष्ठमहाभारमेकस्मात्तारोपयत्। परेद्युरेव प्रायस्तत्सकाशादुत्तरमागतम्। तथा तस्मिन्नेव लिखितमासीद्यथा —

“भवतो निर्व्याजस्पष्टलिखित पत्रमालोक्य द्वयोरप्यावयोर्न केवल परम सन्तोष पर हासोऽपि समजनि। भवताङ्गीकृत यदसत्याचरण तन्नून क्षम्यमर्हमेव। तथापि काले परमार्थनिवेदनेन श्रेय किल सवृत्तम्। भवानस्मद्गृह यथापूर्वमागन्तुमर्हति। वयमागामिनि भानुवासरे न केवल भवदागमनप्रतीक्षा स्यास्याम किन्तु भवदीयबाल्यविवाहकथाश्रवणसञ्जातहासा परमानन्दमनुबुभूषाम। आवयोर्मैत्री प्रसक्तघटनया न हि लेशतोऽपि परिहीणेति भवत किमु वक्तव्यम्” — इति॥

इत्यमह मद्व्रतमसत्यात्य विष निर्मूलमकार्षम्। तत पर मदीयविवाहादिकथाप्रसङ्गेषु निस्सङ्कोचेनैवाल्पमपि न मया शङ्क्यते स्म॥

विंशोऽध्यायः

## धर्माणां परिचयः

**मदीयविदेशगमनाद्द्वितीयवत्सरान्ते** ब्रह्मविद्यासमाजप्रनिष्ठयोर्द्वयो सहोदरयो परिचयो मे जात। तौ ह्यपरिणीतौ। श्रीमगवद्गीतामधिकृत्य मया तौ प्रस्तावमकुरुताम्। सरएड्विन-आर्नोल्डमहाशयेन विरचित भाषान्तर ताभ्यामपाठि। तौ सहैव मूलपठनाय मामाह्वयताम्। किन्तु मया सस्कृते वा गुजरातीभाषाया वा गीताग्रन्थस्यानधीतत्वादह लज्जितोऽभवम्। ततो मयैवमभ्यधायि — मया भगवद्गीता न कदाप्यपाठि। किन्तु भवद्भ्या तत्पठितु सज्जोऽस्मि स्विन। सुतरामनभिज्ञोऽह सस्कृतस्य। तथापि यत्रानुवादो मूलार्थं व्यभिचरेत् तत्तत्प्रदर्शन हि मया शक्यते यदुभितिं प्रत्येमि — इति। ताभ्या सह भगवद्गीताध्ययेतु प्रारर्तिषि। द्वितीयाध्यायस्य

ध्यायतो विषयान् पुस सङ्गस्तेषूपजायते।
सङ्गात्सजायते काम कामात् क्रोधोऽभिजायते॥
क्रोधाद्भवति समोह समोहात्स्मृतिविभ्रम।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति॥

इदं न श्लोकद्वय मम हृदयमाहत। अद्यापि खलु तं मदीययोश्रोत्रयोर्ध्वनयते। भगवद्गीता नाम पुस्तकमूल्यो मम इति तदारभ्य चिन्तितम्। अत्र मायया प्रमदो मे बुद्धिमागता। तयोरवश्यं

सर्वोत्तमोऽयं ग्रन्थ इत्यग्राह मन्ये । मम निराशस्थित्यवसरे ग्रन्थेनानेनामूल्यं साहाय्यमकारि । अस्याहमाङ्ग्लभाषानुवादान् प्रायेण सर्वानप्यपठिषम् । तेष्वोर्नाल्टमहाशयस्य भाषान्तरमनुत्तमं मे प्रतिभाति । तत्र मूलग्रन्थगताशयाना न हि लेशतोऽपि व्यतिक्रमो दृश्यते । अनुवादोऽप्ययमनुवादवन्न दृश्यते । सखिभ्यां सह पठितापि भगवद्गीता मया सम्यगधीतेति वक्तुं न पारये । ततः कतिपयवत्सरानन्तरमेव प्रत्यहमिव मया पठितुमारब्धा ॥

इमौ सहोदरावार्नोल्टमहाशयप्रणीतं बुद्धचरितं (लाइट ऑफ एशिया) पठितव्यमिति मामबोधयताम् । तदेतत्पुस्तकमहं भगवद्गीतापेक्षया समधिकोत्साहेनाप्यपठिषम् । अध्ययनाय गृहीतपुस्तकस्य तज्जिज्ञासा मे नैव जाता । आभ्यामेव सहोदराभ्यामेकदाहं 'ब्लॅवॅट्स्की लॉज' इत्येतदाख्यं मन्दिरं नीत्वा तत्र "मॅडम् ब्लॅवॅट्स्की–मिसिस् ॲनि बेसेण्ट "इत्येतयोर्महिलारत्नयोर्दर्शनं कारितम् । तत्कालमेव मिसिस्बेसेण्टमहाभागा ब्रह्मविद्यासमाजं प्रविष्टाभवत् । तया कृतं स्वमतत्यागमभिलक्ष्य वृत्तपत्रिकासु प्रचलन्तीं चर्चामहं महता कुतूहलेनापठिषम् । इमौ सहोदरौ मामिमां सस्थां प्रविशेत्यबोधयताम् । मया तु विनयेनोक्तम् — मम तावत्स्वधर्मज्ञानमेवाल्पम् । तदन्यसम्प्रदायाङ्गीकारो मम नेष्ट इति । अनयोर्भ्रात्रोः सूचनामङ्गीकृत्य मॅडम्ब्लॅवॅट्स्कीप्रणीतं ब्रह्मविद्यामर्माख्यग्रन्थो मया पठित इति काचिट्ठ्मिरस्ति । एतद् ग्रन्थपठनेन न केवलं हिंदुमतसम्बन्धिग्रन्थानां पिपठिषा मे जातापि तु हिन्दुधर्मो मूढभक्तिविजृम्भित इति क्रैस्तमतबोधकैरुत्पादितो दुरभिप्रायो दूरीकृतोऽभवत् ॥

एतत्कालमेव कंचन शाकाहारभोजनगृहे माञ्चेस्टरस्थलीयस्य कस्यचित्क्रैस्तसाधोर्दर्शनं मे जातम् । स च क्रैस्तधर्मानभिलक्ष्य मया सह कथालापमारब्धवान् । राजकोटे मदनुभवास्तस्मै न्यवेदयम् । स एतदाकर्ण्य नितरामदूयत । स एव मामकथयत्–अयमस्मि शाकाहारी । मद्यं मया न सेव्यते । नूनं बहवः क्रैस्तमतीया मांसं मद्यं च सेवन्ते । किन्तु तयोरेकतरमवश्यमेव स्वीकर्तव्यमिति नास्ति धर्मतो नियमः । अधीयतां भवता क्रैस्तवेदः । सेयं मे विज्ञापना' इति ॥ तद्वाक्यं मयाङ्गीकृतम् । स 'बायबल' पुस्तकमादाय मह्यमदात् । इदं च कश्चित्स्मर्यते यदसौ स्वतः पुस्तकानि व्यक्रीणीत तस्माच्च चित्रानुक्रमणिकादिविशिष्ठयोपेतमेकं पुस्तकमहमक्रैषमिति । तदेतदहं पठितुमुपाक्रमे । किन्तु तस्य पूर्वभागस्यान्तं पठनं ममाशक्यमासीत् । तत्र सृष्टिक्रमा (जेनेसिस)-ध्यायमधीत्य पुरस्तात्पठितुमुद्यतं मां निरपायिनी निद्रा समावृणोति स्म । तथापि पठनस्याभ्यासादृते साऽन्तनिरुत्साहेनाप्यपर्यालोचयन् येनापि बहु परिश्रम्य परे केचिदध्याया मयापाठिषत । 'नम्बर्स' इत्येतदाख्यमध्यायं पठतो ममातिमात्रं जिहासा समुत्पन्ना ॥

उत्तरभागस्त्वन्यविध समलक्ष्यत । तत्रापि 'दि सर्मन ऑन दि माउण्ट' इत्येष उपदेशो हृदयङ्गम आसीत् । तमेनं भगवद्गीतयोपमाय न्यरूपयम् । "एतदहं व कथयामि यत् हिंसाकारणमा प्रत्यवतिष्ठध्वम् । यदि वो दक्षिणकपोले कश्चित्प्रहारं दद्यात्तदा तस्यापरमपि कपोलं दर्शयत । यदि कश्चिद् कञ्चुकमाच्छिद्यापहरेत्तदा तस्य युष्मदीयमुत्तरीयं च प्रयच्छत " इत्येतत्पठित्वा

परं ग्राह्यम्। ‘आशीर्वादवृत्तं जनं परमया भक्त्या नमन् भद्रकृत्। सन्तापं जनयिष्णवे च परया प्रीत्यामृतान्नं ददाति’त्येषा शामळभट्टीया चतुष्पदी स्मृतिपथमगात्॥’ मदीया बाल्बुद्धिर्भगवद्गीता बुद्धचरितं क्रैस्तवचनानीत्येतेषां त्रयाणामप्येकतत्त्वप्रतिपादकत्वं ग्रहीतुमयतिष्ट। त्याग एव सर्वोत्तमो धर्म इत्येतन्मम मनः सुतरामप्रीणयत्॥

एतदादि पठितवतो ममेतरधर्माचार्यजीवनचरितानामध्ययने तीव्रेच्छा समजनि। कार्लाइल्महाशयस्य ‘हीरोस ॲण्ड हीरो वर्शिप’ (महापुरुषास्तत्पूजनं च) इत्येतदाख्यं पुस्तकं पठनीयमिति कश्चन सुहृन्मामकथयत्। तत्रावतारपुरुषसम्बद्धमशेषमपठिषम्। एतेन तेषां महत्त्वं शौर्यं तपश्चर्येत्येतदादिज्ञानं मे मनागुदपद्यत॥

तत्रैतावत्परिचयस्य तत्कालमितोऽप्यधिकज्ञानसम्पादनमशक्यमासीत्। परीक्षापुस्तक-व्यासङ्गिनः पुस्तकान्तरावलोकनाय नावकाशो लभ्यते स्म। किन्त्वितरे धर्मग्रन्थाः पठितव्याः प्रधानधर्माणां परिचयः सम्पादनीयश्चेतीच्छा मनसि निरूढाभवत्॥

एतन्मध्ये नास्तिकतापरिचयस्य कञ्चित्सम्पादनं कथं वा परिहरणीयम्। ब्रॅडलॉ-महाशयस्य नामधेयं तदीयनास्तिकता च भारतीयस्य सर्वस्यापि विज्ञातचरो विषयः। एतद्विचार-सम्बद्धमेकं पुस्तकमहमपठिषम्। तस्य नाम नाद्य स्मरामि। एतेन मे मनसि न कोऽपि जनितः परिणामः। यदहं तदानीं नास्तिक्यमरुभूमिमतिक्रम्य स्थितः। तदात्वे मिसिस्बॅसेण्टमहाभागा परं प्रामुख्यमभजत। तया हि नास्तिकमतं परित्यज्य परिगृहीतमास्तिक्यम्। अत एव नास्तिकवादे मदीयमौदासीन्यं पूर्वापेक्षया बलीयः संवृत्तम्। ‘कुतोऽहं ब्रह्मविद्याभिमानिनी जाता’ इत्येत-दाख्यस्तदीयः प्रबन्धः पूर्वमेव मयाध्यगायि॥

एतत्कालमेव ब्रॅडलॉमहाशयः पञ्चत्वं गतः। स च वोकिंगश्मशानभूगर्भे समाधीयत। अहं ■ तत्र तदानीं गतोऽभवम्। लण्डननगरवर्ती भारतीयो जनः सर्वोऽपि तत्रागत इत्यहं प्रत्येमि। कतिपये मतोपदेशकाश्च स्वादरप्रदर्शनार्थं तत्र सन्निहिता आसन्। परावर्तमाना वयमयो-ध्निरेलनं धूम्रशकटीप्रतीक्षाः स्थिताः। तत्समाजवर्ती नास्तिकनामधेयः एकः केनचिन्मतो-पदेशकेन विवदितुं प्रारभत॥

‘स्वामिन् ननु भवानीश्वरस्यास्तित्वं प्रतिपादयति ?’

‘तथा हि’ इत्येवं स साधुर्मृदूक्त्या प्रत्यवादीत्। ■ नास्तिकः स्वात्मविश्वासनिमित्त-मन्दस्मितशोभी तं पुनरपृच्छत् — ‘भुवः परिधिरष्टाविंशतिसहस्रयोजनानि। नन्विदं भवताङ्गीक्रियते’ इति॥

‘अवश्यमेव।’

‘तदा भवति भवदीयपरमेश्वरस्य किं परिमाणम्। स च कुत्र स्थित उच्यताम्।’

‘तत्त्वतो गृह्यताम्: स आवयोरुभयोरपि हृदये प्रतिवसति।’

स्वामिनीमदीयमित्रयोरश्लीलकथाविनोदः प्रावर्तत । न मे ज्ञातपूर्वं यदयं मे सखात्र प्रसङ्गे परं कुशल इति । अहमप्यस्मिन्विनोदे सञ्जाताभिरुचिस्ताभ्यां सङ्गतोऽभवम् । यावदहं छद्मक्रीडामपास्य सरसालापाद्विरम्य दुश्चेष्टाप्रवृत्त्युन्मुखः स्थितस्तावत्परमात्मा मदीयमित्रस्य हृदयं प्रविश्य ' इयं पैशाची बुद्धिः कुतस्तवागता । इतस्त्वं पलायस्व ' इति तन्मुखाद्वाणीमुदचारयत् ॥

अहं लज्जितोऽभवम् । प्रबोधश्च सञ्जातः । एवमुपरतोऽहं मनसा मित्रमवन्दे । मातुरग्रे कृता प्रतिज्ञा स्मृतिमागता । ततश्चाहं प्रधावितः कम्पमानो निजकोष्ठं प्राविशम् । हृदयं धडधडायते स्म । मदवस्था व्याधहस्ताद्रक्षितस्य हरिणशावकस्य दशामन्वहरत् ॥

परस्त्रीदर्शनेन विकारपरवशीभूतत्वं नाम ममेदं प्रथममिति स्मरामि । तस्यां रात्रौ मम निद्रा नागता । नानाविकल्पसमाक्रान्तमभून्मानसम् । गृहं परित्यज्य किन्तु खलु पलायेय । अहं क्व स्थितोऽस्मि । अनिगृह्यमाणमनसो मे का गतिः । इत्यादि चिन्तयन्नितः परं मया सुतरामप्रमत्तेन प्रवर्तितव्यमिति सङ्कल्पमकार्षम् । अपि च न केवलमिदं गृहमपि तु पोर्टस्मथपत्तनमेव परित्यक्तव्यमिति निरचैषम् । सम्मेलनं दिनद्वयातिगामि नाभवत् । परेद्युः सायमेव मया तन्नगरं विसृष्टं सुहृत्पुनर्दिनकतिपयास्तत्रैव स्थित इति च ज्ञप्तिरस्ति ॥

धर्मो नाम कीदृशः । देवो नाम कीदृशः । स देवः कथमस्मासु व्याप्रियत इत्येतत्तदानीं मे न विदितम् । देवो मामरक्षदिति केवलमस्पष्टतया तदावगतोऽस्मि । सर्वापद्भ्योऽप्यहमीश्वरेण रक्षितोऽस्मि । देवो मामरक्षदिति वाक्यस्य पूर्वापेक्षया गभीरतरोऽर्थो ममाद्य द्योतत इति यद्यपि सत्यं तथाप्यस्य समग्रोऽर्थो नाद्यापि मयावगत इति तर्कयामि । अनुभवातिशयादेव विषयेऽस्मिन्सम्पूर्णज्ञानसिद्धिः शक्या । किन्तु मम सर्वसङ्कटेष्वपि– आध्यात्मिकप्रसङ्गेषु वा न्यायवादिकर्तव्येषु वा संस्था-प्रचालनकृत्येषु वा राजकीयप्रसङ्गेषु वा– ईश्वरेण निस्तारितोऽस्मीति दृढमहं ब्रूयाम् । अत्यन्त-नैराश्यमापन्नः अशरणमवसन्नः कथमपि कुतोऽपि साहाय्यमुपस्थास्यतीति ममानुभवः । स्तुतिरुपासना प्रार्थनेत्येताः सर्वा अपि मौढ्यविजृम्भितानि न भवन्ति । ताः किलाशनपानासन-परिभ्रमणाद्यपेक्षया परमार्थभूताः क्रियाः । एतास्तन्मात्रमेव सत्यं शेषमखिलं मिथ्येति वचनमपि नातिशयोक्तिकोटिमवगाहेत ॥

सेयमुपासना प्रार्थना च केवलं वाचो वैभवं तयोर्मूलस्थानं न कण्ठः परं तु हृदयम् । ततोऽस्माभिर्हृदयनैर्मल्यापादिनी ' प्रेमैकरोषं निखिलान्यवर्जे ' यथा स्यात्तथा विमलीभूतस्य हृदयस्य सम्पादयित्री चित्तशुद्धिः साध्यते यदि–हृदयतन्त्रीगणः सुसङ्घटितः संरक्ष्यते यदि–तदा हृदयान्निःसरन्नादो गगनगामी भविष्यति । प्रार्थनाया जिह्वासापेक्षता नास्त्येव । सा स्वभावादिन्द्रियान्त-पातिनी न भवति । हृदयात्कल्मषं दुःशोधयित्र्योरुपासना हि रामबाणसन्निभमौषधम् । अत्र मे लेशतोऽपि न सन्देहः । किन्त्वनया सह सम्पूर्णनम्रतयापि भाव्यम् ॥

द्वाविंशोऽध्यायः

# नारायणहेमचन्द्रः

प्रायोऽस्मिन्नेव समये नारायणहेमचन्द्रो विदेशमागत । श्रुतपूर्वं मया यदयमेको ग्रन्थकर्तेति ।

'नेशनल इण्डियन् असोसियेशन' इत्येतदाख्यसङ्घसामाजिकाया मिस्मॅनिङ्गमहाशयाया मन्दिरे परस्परमावयो प्रथमदर्शन सवृत्तम् । अह जनगोष्ठीपराङ्मुखो लज्जाशील इति मिस्मॅनिङ्गमहाशयाया विदितम् । यतस्तद्गृह गतोऽहमितरैरसम्भाषितश्चैव स्वयमनाल्पन् सदा बद्धमुख सलुपाविशम् । सा मा नारायणहेमचन्द्र पर्यचीचयत् । सैव आङ्ग्लभाषाया अनभिज्ञ । तस्य वेषो विचित्र । अस्तव्यस्तमाप्रपदीनमेकम् । वलिनमलिन पारसीयनिमो धूसर कञ्चुक एक । कण्ठग्रन्थ्यभाव । गलपट्टिका शून्या । लम्बशिखोर्णतमूर्णामय शीर्षकमेकम् । ईदृग्वेष स लम्बकूर्च च पुष्यति स्म ॥

तस्याकृतिर्ह्रस्वा । उन्नतिरल्पा । वर्तुल मुखम् । तच्च सर्वत स्फोटकाङ्कितम् । तन्मध्य वर्तिनी नासानशिताग्रा । न च कुण्ठा । स सर्वदा हस्तेन कूर्चं परामृशति स्म । मनोहरवेषधारिणां मध्ये विचित्रविलक्षणवेषा व्यक्तिरीदृशी कथमशेषलोकलोचनगोचरा न भवेत् ॥

अथाहमवोचम् –

'भवदीयवृत्तान्तो मया बहुश श्रुत । युष्मदीयलेखनेषु कानिचिन्मया पठितानि । मदीयवसतिं प्रति भवदागमनानुग्रहेण पर मे सन्तोष स्यात्' इति ॥

नारायणहेमचन्द्रस्य ध्वनिरीषद्घर्घर । स मन्द स्मयमानो मामपृच्छत् 'बाढं कुत्र वो निवास' इति ।

'स्टोर स्ट्रीट' वीथ्याम् ।

'तेन आवा सन्निकृष्टवर्तिनौ स्व । आङ्ग्लभाषामह शिक्षितुकामोऽस्मि । अपि मा भवान् शिक्षयति ।'

'यावच्छक्यमह सन्तोषेन शिक्षयामि । यथाशक्ति प्रयतिष्ये । अपि वसतिं युष्मदीयामा गमिष्यामि ।'

'मा तावत् । मा तावत् । स्वय भवद्गृहमेष्यामि । भाषान्तरस्याभ्यासपुस्तक सहानेष्ये ।'

आवामन्योन्यदर्शनाय यथाक्रमविशानमकरवाव । शीघ्रमावयो सख्यमवर्धत ॥

नारायणहेमचन्द्रस्ताकरजिरो व्याकरणानभिज्ञस्य । तस्य 'घोटक' इत्येतच्छिन्न पदम् । 'धाव'इति सुवन्तम् । एवंविधा परिहास्यवृत्तान्ता मम स्मृतिपथे बहव सन्ति । किन्तु स्वस्यानभिज्ञता तस्य भयहेतुर्नासीत् । यत्किंचि मया विज्ञात व्याकरण तत्तस्मिन्न गलने स्म । व्याकरणज्ञानशून्यता लज्जाकरीत्यसौ नैवामन्यत ॥

सुतरामृजुस्वभावोऽयमविश्रान्तमेवमाऽऽशनि स्म । "भवानिव कदाप्यह पाठशाला न गतोऽस्मि । मनोगतार्पाना प्रकाशनाय व्याकरणमावेश्यता नाद्यापि दृष्ट । बाढम् । वदभाषा किं जानाति

भवान्। अहं जाने। बङ्गालदेशे कृतसञ्चारोऽस्मि। मया हि महर्षिदेवेन्द्रनाथठाकुरमहाशयस्य प्रबन्धा गुर्जरदेश्यानां सुबोधा कृता। इतोऽप्यनेकभाषाभवानाममूल्यग्रन्थानामनुवादं गुजराती भाषायां विरचयितुकामोऽस्मि। शब्दार्थमात्रप्रकाशनपुरस्सरं भाषान्तरं न मया क्रियत इति भवान् जानात्येव। अन्तःसारप्रकाशनेनैव कृतार्थमात्मानं मन्ये। विशेषप्राज्ञा एतादृशं कार्यमग्रे सम्यक्तरां निर्वहेरन्। किन्तु व्याकरणसाहाय्यं विना मया यात्रनिर्व्यूढं तावताहं सन्तुष्टोऽस्मि। अभिज्ञोऽहं बङ्गालीमराठीहिन्दीभाषाणाम्। इदानीमाङ्ग्लभाषां शिक्षितुं प्रवृत्तोऽस्मि। यद्धि मयापेक्षितं सा खलु शब्दसम्पत्तिः। इयतैव मदाकाङ्क्षा परिसमाप्तिं गतेति किं भवान्मन्यते। फ्रान्सदेशं गत्वा फ्रेञ्चभाषां शिक्षितुकामोऽस्मि। श्रुतं मया सा भाषा ह्यगाधसाहित्यमयीति। सति सम्भवे जर्मनीदेशं च गत्वा जर्मनभाषां शिक्षितास्मीति॥"

विविधभाषाशिक्षणे विदेशपरिभ्रमणे च तस्य निरवधिका महत्याकाङ्क्षा॥

'तर्हि भवानमेरिकाखण्डं न प्रयाता?'

'अथ किम्। नवीनप्रपञ्चमनवलोक्य हिंदुस्थानं प्रति परागमनं कथं वा सम्भाव्येत'

'भवतु। सर्वस्यास्य कृते कथं द्रव्यनिर्वाहः।'

'मम द्रव्येण किं कार्यम्। अहं भवानिव न खलु विलासी। अशनवसनार्थं कनिष्ठपक्षे यावदावश्यकमलं तावता। तदर्थं मदीयपुस्तकविक्रयाल्लभ्यं यत्किञ्चिन्मदीयसुहृद्भिर्वितीर्यमाणं च पर्याप्तं भवति। अहं सर्वदा तृतीयश्रेण्यामेव प्रयाणमङ्गीकरिष्यामि। अमेरिकाखण्डं प्रयास्यन्नौका वाहशालामाश्रित्य गन्तास्मि।'

नारायणहेमचन्द्रस्याजवमन्यत्र क्वापि जने नादृश्यत। तस्य निष्कापट्यमपि तादृशमेवासीत्। नूतनमयं स्वलेखनपाटवमधिकृत्य मनागगर्वयते स्म। तदेकं मुक्त्वा तस्मिन्गर्वस्य गन्धोऽपि नासीत्॥

प्रतिदिनमावामामिलावहि। आरम्भकल्पनास्वस्माककार्येष्वपि बहुधा समानवृत्ती आवामभूव। उभावपि शाकाहारिणौ। उभावप्यसकृत्सहैवाहारमभुञ्जवहि। इदं हि यदा स्वतः पाकं विधाय प्रतिसप्ताहं सप्तदशशिलिङ्गद्रव्यव्ययेन जीविकामहं निरवाहयं तस्मिन्नवसरे सम्वृत्तम्। क्वचिदवसरेषु तस्य कोष्टमहमगच्छम्। कदाचित्स एव मे कोष्टमागमत्। आङ्ग्लेयरीत्या पाको मया निष्पाद्यते स्म। स तु स्वदेशपाकं विना न व्यतृप्यत्। 'तुवरीदल'वर्जं तस्य तृप्तिरेवानिर्वाह्या भवत्। कदाचिदहं गार्जरप्रभृतिभिर्यूपं निरवर्तयम्। तदा स प्राह–अहो शोच्या तव रुचिरिति। स एकदा कुतश्चिन्मुद्गं सम्पाद्य निष्पन्नपाकं मत्पार्श्वमानीतवान्। तद्भुक्त्वा मम सन्तोषः समजनि। तदा प्रभृति विनिमयः प्रारभ्यत। मया निष्पादितं रुच्यमाहारं नीत्वा तस्मायदाम्। स्वेन निष्पादितं च आनीय मह्यमदात्॥

अस्मिन्नवसरे कार्डिनल्मॅनिंगमहाशयस्य ख्यातिर्विश्वजनीनाभवत्। जॉनर्स-यार्डिनल-मॅनिंगमहाभागो प्रयत्नविशेषैः समुद्रतीरस्थकर्मकराणामाग्रहः शीघ्रमुपशान्त

आसीत्। विदेशराज्यप्रधानमन्त्रिणा ड्झिरायेल्मिहाशयेन कृता कार्डिनलमैनिंगमहाभागस्यार्जव-गुणप्रशंसामहं नारायणहेमचन्द्राय न्यवेदयम्। तदाकर्ण्य स प्राह—तर्हि महामानमेनं द्रष्टुमिच्छामीति॥

'स तावन्महामनुष्य.। कथं वा त्वया द्रष्टव्य. स्यात्।'

'किं निमित्तम्। सर्वमहं जाने। मन्नाम्ना तव हस्तेन तस्य पत्रमेकं लेखयितव्यम्। तत्र च "अहमस्मि ग्रन्थकर्ता। लोकाभ्युदयाय भवद्भिरनुष्ठितकार्यनिमित्तगौरवं मुखत सूचयितुमहमाशंसे" इति निवेद्य। ममाङ्ग्लभाषाया अनभिज्ञत्वात् द्विभाषी त्वं सहनेतव्य आपनित इत्यपि लिख' इति॥

अथ तस्याहमुत्तरमित्या पत्रमेकमलेखिषम्। द्वित्रदिनाभ्यन्तर एवामुकस्मिन्काले युवाभ्यामहं द्रष्टव्य इति तत्सकाशात्पत्रमुपागमत्। उभावपि तद्दर्शनाय प्रातिष्ठावहि। अन्यदर्शनाय गमनप्रसङ्गे यो धारणीय कञ्चुकाद्याकल्प. स मया धृत.। नारायणहेमचन्द्रस्तु यथास्थितमूर्तिरेन। स एव कञ्चुक। तदेवाग्रपदीनं च। इदमुद्दिश्य तमेनमहं परिहसितुं प्रवृत्त किन्तु स एव मा हास्यास्पदं विधाय प्रावोचत्—यूयं नागरिका. सर्वेऽपि भीरुका.। न खलु महामान. पुरुषस्य वेषं विलोक्य तस्य योग्यता परिमिमते। तेषां हि दृष्टि पुरुषस्य हृदये निविष्टा भवति—इति॥

यावदावामुपविष्टौ तावदेक· कृशोन्नतो वृद्ध उपागम्यावयोर्हस्तलाघवमदात्। नारायणहेमचन्द्रस्तमेनं समबोधयत्—

'नाहं श्रीमता कालमपहर्तुमिच्छामि। श्रीमत्को वृत्तान्तो मया बहुधा श्रुत·। इदानीं लब्धसन्दर्शनोऽहमेतामभिज्ञापयितुकामोऽस्मि यद्बहुमहाणा कर्मकराणा पक्षमवलम्ब्य श्रीमद्भिरनुष्ठितात्सत्कार्यादस्माकमखिलानामानन्द· समजनीति। महामोपसर्पणं तत्सन्दर्शनं च मम हि सम्प्रदायः। अत एव श्रीमतामयं परिश्रमो मया दत्त' इति॥

तदेतत्तेन गुजरातीभाषयोपन्यस्तस्य भाषान्तरमिति न किल पृथग्वक्तव्यम्॥

कार्डिनलमहाशयः प्रत्याह—

'भवदागमनेनाहं सन्तुष्टोऽस्मि। भवता लण्डननगरे स्थितिरनुकूला स्यादन्यजनाना च परिचयं भवन्तः सम्पादयन्तीत्यहमाशासे' इति॥

एवमुक्त्वा समुत्थितः सन्नावां व्यसर्जयत्॥

एकदा नारायणहेमचन्द्रः केवलमेकं वास परिधायाभ्यन्तरकञ्चुकमात्रधारी मदीयावासस्थानमुपागमत्। गृहस्वामिनी द्वारमुद्घाट्य चकिता झटिति मत्पार्श्वमुपगम्य (एवा हि मया। नारायणहेमचन्द्रस्यापरिचितासीत्) मामकथयत्कश्चिदुन्मत्तो भवन्त द्रष्टुमागत इति। ततोऽहं द्वारदेशं गत्वा नारायणहेमचन्द्रस्य दर्शनादिस्मितोऽभवम्। तस्य वेषमालोक्य प्रतिनिवृत्तिमूढ आसम्। तस्य मुखोपरि सामान्यतः सदा परिदृश्यमानं मन्दस्मितमेकं विना नान्यत्किञ्चिदलक्ष्यत॥

'वीथ्या बालकास्त्वा परिवेष्ट्य धर्षित्वोपाद्रवन्'।

'ते पुनर्मामत्यधावन्त। किन्त्वनादृतास्ते मया तूष्णीमासन्।'

कतिपयमासान् लण्डननगरे स्थित्वा नारायणहेमचन्द्रस्तत. पेरिसनगरीमगात्। तत्र फ्रेञ्चभाषां शिक्षितुं फ्रेञ्चपुस्तकाना भाषान्तराणि कर्तुं चोपाक्रमत। तत्कृतानुवादपरिशोधन-पर्याप्ता फ्रेञ्चभाषाया मया व्युत्पत्तिः पूर्वमेव सम्पादिताभूत्। अतस्तं पठितुमसौ मत्सकाशात्। न चैव ग्रन्थस्यानुवाद. पर तत्साराशमात्रमासीत्॥

अथामेरिकाखण्ड प्रतिगमनाय कृतं स्वनिश्चय च स पर्यपूरयत्। अधस्तनगर्यां प्रयाणानुज्ञापकपत्रमविगन्तुं तस्य महान् श्रमो जात। अन्तरीयमेवमान्तरकञ्चुकमेकं च धृत्वा संयुक्तसंस्थाने बहि सञ्चरमाणस्य तस्योपर्यधिकारिण सभ्येतरवेषपरिग्रहापराधनिमित्तं व्यवहार-मचालयन्। पर्यन्तेऽसौ पर्यमुच्यतेति स्मरामि॥

त्रयोविंशोऽध्यायः

# महावस्तुप्रदर्शनम्

नवत्युत्तराष्टादशशत (१८९०) तमे क्रिस्तीयाब्दे पेरिसनगरे महावस्तुप्रदर्शनमचलत्। अस्य सज्जीकरणाय कृतानामगाधसंविधानाना वृत्तान्तो मयापठ्यत। पेरिसनगरं द्रष्टव्य-मितीच्छा प्रबला ममासीत्। तदेतस्मिन्नवसरे तत्र गमनं स्पृहणीयमित्यचिन्तयम्। प्राय. षट्छत हस्तोन्नतं कालायसमयमेफिल्नामक गोपुर तत्र प्रदर्शने जनस्तोमाकर्षक मुख्य वस्त्वासीत्। नूनमासन्नितराण्यपि बहूनि लोकमनोहराणि वस्तूनि। किन्तु सर्वापेक्षया गोपुरमेव प्रधानम्। यतस्तावत्कालपर्यन्तमेतावदुच्छ्रायशालिभवनस्य निरपायिनी घटना न शक्येति लोको हि मन्यते स्म॥

पेरिसनगरे शाकाहारस्य भोजनशालैका मया श्रुतपूर्वा। तत्रैकस्मिन्कोष्ठे वसतिं गृहीत्वा सप्तदिनान्यवसम्। अल्पाल्पव्ययेनैव मया सर्वं निर्वाहितम्। पेरिसनगर प्रति प्रयाण तत्रत्यदर्शनीयवस्तूनामवलोकनमित्यादि सर्वं तथैव मितव्ययेन निरवर्तयम्। एतदवलोकनसौकर्याय तन्नगरस्य चित्रपटमेकं वस्तुप्रदर्शनस्य विवरणपत्रमेकं च हस्ते कृत्य बहुश पादचारेणैव पय-क्रामिषम्। महावीथीनामितरद्रष्टव्यमुख्यस्थलाना च मार्गदर्शकास्तत्र बहवोऽभिवन्त। वस्तु-प्रदर्शनस्य महापरिमाण तत्रयवस्तूना वैविध्यमित्येतन्मुक्त्वा नान्यत्किंचनेदानीं मम स्मृतिपथे वर्तते। एफिल्गोपुरं मया द्विर्वा त्रिर्वा समारोहि। अत एव तद्गता स्मृति. स्पष्टतरा विलसति।

तस्य प्रथमान्तःस्थाने विश्रान्तिगृहमेकमासीत् । अत्युन्नतप्रदेशे मया कृतोऽभ्यवहार इति विकत्थनादात्मपरितोषमीप्सुस्तत्राहं सततशिलिङ्गमितद्रव्यमाहारार्थे व्यपक्षिपम् ॥

पेरिसनगरस्य प्राचीनाः क्रैस्तदेवालया अद्यापि मे स्मृतिमवगाहन्ते । तेषां वैभवं निरपायिनी शान्तिश्च कदाप्यविस्मरणीये स्तः । नोत्रदमनामैतदाख्यस्य देवालयस्याकृतं शिल्पचातुर्यं तदन्तरलङ्करणाय सूक्ष्मकचितानि चित्रकर्माणि च चिरस्मरणीयानि भवन्ति । एतादृशस्वर्गीयदेवालयनिर्माणे लक्षान्तरद्रव्यं व्ययीकृतवतां हृदयेष्ववश्यमेव दैवभक्त्या जाग्रत्या भवितव्यमिति तत्राहमचिन्तयम् ॥

पेरिसनगरस्य चाकचक्यदम्भाडम्बरानभिज्ञत्वानेकशो मया वृत्तान्ताः पठिताः । तत्र वीथ्यां वीथ्यामेतन्निदर्शनं विस्पष्टमाऽऽसीत् । किन्तु देवालयास्तैरसंस्पृष्टा इति व्यक्तमवगम्यते स्म । देवालयं प्रविशन्नेव जनो बहिर्विजृम्भमाणं सम्भ्रमं कोलाहलं च सद्यो व्यस्मरत् । तत्र पवित्रकन्याविग्रहस्य पुरस्तान्नमन्तं जनमवलोक्य सद्यः परिवृत्तशीलः स्वयं भक्त्या गौरवेण च वर्तते स्म । एवं नमस्कृतिः प्रार्थना च केवलं मूढभक्तेर्विजृम्भितं सर्वथा न भवतीति तद्दर्शी मे मनसि समुदितो भावः क्रमेण स्थिरः स्थिरः समजनि । पवित्रकन्याविग्रहस्य पुरस्तादवनतशिरसो ये भक्तिशीला न खलु ते केवलममृतशिलामपूजयन् । किन्तु तेषामात्मा नैजभक्तिभरेण परिस्फुतोऽभवत् । ते खलु शिलामूर्तिपरमेश्वरमर्चयन्त न पुनः शिलाविग्रहमात्रम् । एवंविधपूजनेन भगवतो महिमानमेते सुतरामुत्कर्षं प्रापयन्न मनागप्यपकर्षम्—इत्यादि भावनापरम्परा मन्मनस्याविरभूदिति स्मरामि ॥

एफिल्गोपुरमधिकृत्य कियन्ति चिद्वचनान्युपन्यसितुमिच्छामि । तत्साम्प्रतं कथमुपयुज्यत इति न जाने । तदात्वे तु भूयोभिर्बहुधा श्लाघ्यमानमितरैश्च सुतरां तिरस्क्रियमाणमहमशृणवम् । तस्य तिरस्कर्तॄणामग्रेसरः 'टॉल्स्टॉय' महाशयः । स चैवमाह—एफिल्गोपुरं मनुष्यस्य मूर्खताया बृहल्लाञ्छनं न पुनस्तदीयं विवेकचिह्नमिति । किं चायमित्थं किल वादमकरोत्—

"मादकद्रव्येषु तमाखुपत्रमप्यन्तर्भावात्रहम् । यदनेन दासीकृतः पुरुषो मयपायिनोऽप्यधैर्यं जनयन् दुर्व्यापारानतुष्ठ्यते । मद्यं हि मनुष्यमुन्मत्तं करोति । तमाखुपत्रं तु तस्य बुद्धिं व्यामोह्य तं व्योमप्रासादरचनायां प्रेरयति । एफिल्गोपुरमेवंविधप्रेरणानुसारिणा मनुष्येण निर्मितानां वस्तूनामेकतमम्"—इति ॥

गोपुरेऽस्मिन् कलाकौशलं न किंचिद्दृश्यते । वस्तुप्रदर्शनस्य रामणीयकत्वेन कथमपि वृद्धिमगादिति वक्तुं न शक्यते । इदमसाधारणपरिमाणं च यस्मिन्ते जनाः सद्यस्तच्छिखरारोहणकुतूहलेन समायान्ति स्म । इदं वस्तुप्रदर्शनस्यैकं क्रीडनकमासीत् । अस्मासु यावद्बाल्यभावस्तावदि क्रीडनकान्यस्माकर्षन्ति । चाकचक्यभाञ्जि वस्तूनि यदस्मानाकर्षेयुस्तर्हि सर्वे वयं बालिशा एव मन्तव्या इति हि समर्थयितुमिदं गोपुरं समीचीनो दृष्टान्त इव स्थितम् । एतावदेवास्य सार्थक्यमिति वैकल्यम् ॥

एतादृशपानभोजनादिकं न्यायवादित्वयोग्यतासम्पादनाय कथं वा विद्यार्थिना-मुपकारकमभूदिति मया नाज्ञायत । न चाद्यापि ज्ञायते । पुरा कस्मिंश्चित्काले स्थितेषु स्वल्प-सङ्ख्याकेषु विद्यार्थिषु भोजनावसरे विद्यामन्दिराध्यापकैः सह कथालापप्रसङ्गावकाशो लभ्यते स्म । उपन्यासास्तदा प्रचेलुः । तदेतत्तेषां न केवलं प्रपञ्चज्ञानोपकारकं संस्कारविशे-षोत्पादकं चासीदपि तु तेषां वाक्पाटवं च विकासमगच्छत् । आस्मत्स्थितिकाले तु सर्वमेतद-सम्भाव्यमासीत् । विद्यामन्दिराध्यापकाः स्वगौरवसदृशं दूरादुपाविशन् । आचारोऽस्मिन् क्लेशार्थवत्ता सर्वापि तिरोदधे । किन्तु प्राचीनताप्रेमिणेङ्ग्लैण्डदेशेनायमाचारोऽद्याप्यरक्ष्यत ॥

पाठक्रमः सुलभ आसीत् । ब्यारिस्टरजन भोजनब्यारिस्टर् इति परिहासेन व्यपदिशन्ते स्म । आसां परीक्षाणां फल्गुता सर्वोऽप्यवेदीत् । मम व्यासङ्गसमये परीक्षाद्वयं चलति स्म । एका रोमनलॉविषयिणी (प्राचीनरोमनप्रजाधर्मशास्त्रम्) । द्वितीया कॉमन्लॉविषयिणी (आङ्ग्ल-देशस्यासङ्गृहीतधर्मशास्त्रम्) । द्वयोरेतयोः पृथग्भागत्वात् परीक्षार्थं द्विवारमुपवेष्टुं शक्यमासीत् । परीक्षार्थं पठ्यत्वेन निश्चितमपि पुस्तकजातं न केनाप्यध्यायि । रोमनशास्त्रमधिकृत्य लघुटीका-सङ्ग्रहा अलभ्यन्त । एतां सप्ताहद्वयमात्रं चेङ्ग्लैण्डदेशस्य धर्मशास्त्रलघुसङ्ग्रहांस्तु द्विमास-मात्रं चाधीत्य परीक्षायामुत्तीर्णानहं दृष्टवानस्मि । न केवलं परीक्षाप्रश्नाः सुलभाः परं परीक्षका अप्यौदार्यमदर्शयन् । रोमनलॉभागे शतस्य पञ्चनवतिमारभ्य नवनवतिर्जनाश्चरमपरीक्षायां च शतस्य पञ्चसप्ततिर्वा ततः किंचिदधिका वा विद्यार्थिनः समुत्तीर्णा बभूवुः । तस्मात्परीक्षाया पराजयभीतिरप्यल्पासीत् । किं चैषा परीक्षा वत्सराभ्यन्तरे न केवलं सकृदेव परंतु चतुर्वारं प्राचलत् । ईदृक्सुलभायाः परीक्षाया दुस्तरत्वं कस्यापि न सम्भाव्यते स्म ॥

किन्त्वहं स्वयमेव तां दुस्तरामकल्पयन् । परीक्षार्थं निर्दिष्टानि पठ्यपुस्तकान्यशेषाण्य-प्यध्येतुकामोऽभवम् । तेषामनध्ययनं प्रतारणेति मया व्यचिन्ति । एतदर्थमधिकद्रव्यं व्ययीकृत्य पुस्तकान्यक्रेषि । रोमनलॉशास्त्रं लॅटिनभाषायामेव शिक्षितव्यमिति निरचैषि । लण्डनमैट्रिक्यु-लेषनपरीक्षार्थं या मया शिक्षिता लॅटिनभाषा सात्र मे बहूपयोगिनी जाता । परिश्रमोऽसौ न लेशतोऽपि व्यर्थोऽभवत् । दक्षिणाफ्रिकादेशे रोमन्डचलॉक्रम एव प्रचलति । तत्स्थदेशतन्त्र-बोधनाय प्राक्पठितं (प्रसिद्धरोमनधर्मशास्त्रप्रणेतुः) जस्टिनियनमहाशयस्य पुस्तकं मम बहूपकारकं संवृत्तम् ॥

इङ्ग्लैण्डदेशस्य धर्मशास्त्रनियमानां सम्यक्पठनाय नवमासपर्यन्तं मया सम्यक् प्रयतितव्यमभूत् । यतो ब्रूमाख्येन प्रणीतं कॉमन्लॉविषयप्रतिपादकं पुस्तकं यद्यपि रसवत् तथापि तस्य बृहत्तरत्वान्महान् कालो व्यपेक्ष्यत । स्नेलाख्येन प्रणीतं 'इक्विटि' विषयप्रतिपादकं पुस्तकं यद्यपि मनोरञ्जकं तथापि दुरवबोधमासीत् । व्हाइट–ट्युडराख्येनाल्पयोर्मुख्यव्यवहारा-भिधानं पुस्तकं (अस्मिन् कतिपये व्यवहाराः परीक्षार्थं पठ्या कल्पिताः) कुतूहलजनकं विज्ञानजनकं चासीत् ॥

# सम्पादितं ब्यारिस्टर्‌पदम्—ततः किम्

**मम** विदेशगमनोद्देश्यं ब्यारिस्टर्‌पदावाप्तिः। तदेतदभिकृत्य मया नाद्यापि किमपि प्रस्तुतम्। तदिदानीं तत्सम्बद्धानां कियतांचिद्वचनानामिहोपन्यासायावसरः प्राप्तः॥

ब्यारिस्टर्‌पदावाप्तये नियमद्वयं प्राक्पूरयितव्यमासीत् वत्सरकालमण्डलपूर्तिः परीक्षोत्तरणं चेति। तत्र वत्सरश्चतुर्मण्डलात्मकः। ईदृंशि द्वादशमण्डलानि ( तथा च त्रीणि वर्षाणि ) मयातिवाहयितव्यान्यासन्। मण्डलातिवाहनं नाम भोजनार्थं गमनम्। प्रतिमण्डलं चतुर्विंशति भोजनानि दीयन्ते स्म। तेषु षट्स्वपि वास्माभिरवश्यमुपस्थातव्यमासीत्। भोजनार्थं गमनमित्येतस्य तत्र यत्किंचिदवश्यमेव भोक्तव्यमिति नार्थः किन्तु नियतकालं तत्र संनिधाय भोजनसमाप्तिपर्यन्तमवस्थातव्यमिति। प्रायेण सर्वोऽपि तदानीं जग्धिपर्याप्तिप्रसक्तोऽभवत्। भोजनं प्रशस्तमासीत्। पानाय च मद्यमुत्तमं दीयते स्म। एतयोः कृते व्ययः सार्धद्वयात्सार्धत्रयं शिलिङ्गनाण्यानाम्। मूल्यमिदमल्पमिति तत्र गण्यते स्म। यतोऽन्यत्र भोजनालये मद्यस्यैकस्यैव तावानर्थो व्ययीकर्तव्य आसीत्। भोजनस्यथा पानस्यपस्याधिक्यं नाम हिन्दुदेशेऽस्माकं — अनागरिकत्वे सति—अत्यन्तमाश्चर्यमेव। विदेशागमनोत्तरमादौ तदेतद्विलोक्य नितरामहमद्भुये। कथं वा जनो मद्यस्य कृते द्रव्यमेतावत् क्षपयितुमुत्साही भवतीति विस्मितोऽभवम्। पश्चादस्य भूतार्थो मयावगतः। अनेकशः एवंविधेषु भोजनेषु न मया किंचिदभुज्यत। यतस्तत्र मद्युपयोज्यं पिष्टापूपः पयआद्युपल्दः 'थोरसमल्दो' येन्येनास्माकं लभ्यते स्म। आदौ मह्यमेतन्नारोचत। किन्तु पश्चात्संस्तानश्चैर्मम पदार्थानितरानन्यतेभ्योऽहारयितुं धैर्यमागतम्॥

विद्यार्थिभोजनापेक्षया धेन्चरसंज्ञकानां विद्यामन्दिराध्यापकानामाहारः प्रशस्ततरोऽभवत्। मया सह कश्चन पारसीविद्यार्थी स्थितः। सोऽपि शाकाहारी। उभौ मिलित्वा विद्यामन्दिराध्यापकानामाहारस्मार्थम्. शाकाहारिणामुपयोगाय सम्भारः प्रदातव्या इति प्रार्थयावहि। सेयं प्रार्थना सफला जाता। उभाभ्यामध्यापकानां भोजनापर्याप्ताभ्यां पयःशाकफलादिपर्याप्तम्॥

मद्यं नास्माकमावश्यकमासीत्। चतुर्णां चतुर्णां विद्यार्थिनां द्वे द्वे मद्यस्य कूपचुम्बी दीयेते स्म। अस्मिन् कृते सर्वाः प्रवेशयितुमैते सदा प्रयतन्त। तत्रान्यत प्रविष्टे मद्यपरिमाणे मयि [illegible] [illegible] [illegible]। प्रतिमण्डलमेकस्मा रात्री महामहत्तमं निर्दर्शनं। तत्र न केवलं [illegible] [illegible] [illegible] [illegible]। अत एव [illegible] [illegible] [illegible] [illegible] [illegible]। तस्मिन् दिने हि [illegible] [illegible] [illegible]॥

'विलियम्स–एडवर्ड'इत्येतदाख्ययो स्थिरस्वविषयप्रतिपादकौ ग्रन्थौ 'गुडीव'इत्याख्यस्य चरस्वविषयको ग्रन्थश्च पठितुमतीव रमणीया आसन्। विलियम्सप्रणीतो ग्रन्थस्तु कादम्बरीव रोचते स्म। एतदधीयानस्य मे न हि लेशतोऽपि जिहासा समजनि। हिन्दुस्थान प्रत्यागतेन मया परमकुतूहलेन समवीतं यत्पुस्तकं स खलु 'मेइन'इत्येतदाख्येन प्रणीतो हिन्दुधर्मशास्त्रविषयको ग्रन्थ एक एवेति स्मरामि। किन्तु हिन्दुस्थानस्य शासननियमानधिकृत्य लेखितुं नायमवसरः॥

अहं परीक्षयोरुत्तीर्णोऽभवम्। एकनवत्युत्तराष्टशताधिकैकसहस्रतमे क्रैस्तशकाब्दे षष्ठमासस्य दशमदिवसे ब्यारिस्टरपदमवापम्। एकादशे दिवसेऽहमिङ्ग्लेण्डदेशस्य हाइकोर्टाख्यप्रधानन्यायस्थाने न्यायवादिश्रेण्यां प्रवेशितोऽभवम्। द्वादशे दिवसे हिन्दुस्थानं प्रति विदेशतः प्रास्थिषि॥

एवमधीतविद्यस्यापि मम निस्सहायता च भीतिश्च दुरन्ताभवत्। आत्मनो न्यायवादिकार्यचालनक्षमत्वे मम विस्रम्भ एव नासीत्॥

तामेतां मम निस्सहायतां वर्णयितुं पृथगध्याय एवावश्यकः॥

पञ्चविंशोऽध्यायः

## मदीयमितिकर्तव्यतामूढत्वम्

**ब्यारिस्टर्** इति नामख्यातिरनतिक्लेशेन तावत्सम्पादिता। न्यायवादिकार्यनिर्वाहस्तु क्लिष्टतरोऽलक्ष्यत॥

अधीतधर्मशास्त्रेणापि मया व्यवहारचालनमद्यापि न शिक्षितम्। व्यवहारसूत्राणि यद्यप्युत्साहशालिना समधीतानि तथाप्येषां कार्येषु विनियोगो मया नाभ्यज्ञायि। निजस्वं तथा ह्युपयोक्तव्यं यथा परस्वस्य हानिर्न सम्भवेदित्येतत्तादृशमेकं सूत्रम्। किन्तु व्यवहारे मदीयकार्यिकस्य यथानेन प्रयोजनं स्यात् तथा तदुपयोजनरीतिर्मयाद्यापि न विदिता। एतत्सिद्धान्तसम्बन्धिनो मुख्यव्यवहारा यद्यपि मया पठितास्तथापि तच्छिक्षाज्ञानमुत्तरत्रकार्येषु विनियुञ्जीयेति मम धैर्यं नोदपद्यत॥

अपि च हिन्दुस्थानसम्बन्धिना धर्मशास्त्रनियमानामहमद्याप्यनभिज्ञोऽभवम्। हिन्दुमहम्मदीयधर्मशास्त्रयोस्तत्त्वं नाद्याप्यधिगतमासीत्। व्यवहारपत्रिकालेखनक्रमोऽपि न ज्ञातः। तदेतस्माद्धेतोरहं प्रति प्रतिपत्तिमूढोऽभवम्॥ श्रुतपूर्वं हि मया यत् सरफिरोजशामहेतामहाशयो न्यायसभायां सिंहवद्गर्जति स्मेति। ईदृशी शक्तिः कथमनेन विदेशे सम्पादितेति मम मानसमचित्रीयत। तत्सदृशं न्यायवादप्रागल्भ्यमस्मिञ्जन्मनि मया नैव सम्पाद्यत इत्यह-

मन्वेदिषम् । इदं तावदास्ताम् । परन्तु बलवान्सन्देहो मामबाधत यन्न्यायवादिवृत्तिमवलम्ब्य स्वजीविकामप्यहं सम्पादयेयं न वेति ॥

व्यारिस्टर्परीक्षार्थमधीयानस्यैव मे मानसमीदृशैः संशयसङ्कटैर्विह्वलीभवति स्म । कथमिदमाप्तेषु केषुचिन्न्यवेदयम् । तेष्वेकः प्राह दादाभाईनवरोजिमहाशयस्यात्र बुद्धिवादोऽन्वेष्टव्य इति । उक्तपूर्वं हि मया यदिङ्गलैण्डं प्राप्तस्य मम निकटे दादाभाईनवरोजिनं प्रति लिखितमेकं परिचयपत्रमासीदिति । तदेतन्मम बहोः कालादनन्तरमुपयुक्तमभूत् । परन्तु दर्शननिमित्तमेतादृशमहापुरुषाणामुपरोधकरणे नाहमधिकारीत्यहमचिन्तयम् । ततोऽहं यदा कदाचित्तदीयोपन्यास-श्रवणाय गत्वा क्वचिन्मन्दिरकोणे स्थित्वा तन्मूर्तिमानन्दपूरं विलोक्य तद्वृत्तिलावण्यपूरं निशाम्य तृप्तः सन्प्रतिन्यवर्तिषि । तेन विद्यार्थिभिः सह गोष्ठीकरणार्थं संस्थापिता काचिन्मण्डल्य-वर्तत । तन्मण्डल्याः समामेलनावसरेषु गत्वा तेन विद्यार्थिषु प्रदर्श्यमानमादरं विद्यार्थिना तस्मिन् गौरवातिशयं च प्रत्यक्षीकृत्य प्रमुदितोऽभवम् । अथान्ते धैर्यमवलम्ब्य परिचयपत्रं प्रदर्श्य तत्स-मीपमगच्छम् । भवता यथेष्टकालमागत्य मदभिप्रायो गृह्यतामिति स मामब्रवीत् । परन्त्ववकाशोऽयं मया न कदाप्युपायुज्यत । अत्यन्तमपरिहार्यप्रसङ्गेष्वेव मया तस्य कालःक्षेपणीयस्तदन्यथाकरणेऽहं दोषभाग्भवेयमित्यहमचिन्तयम् । तस्मात्सुहृदा बोधितोऽपि तद्वाक्यानुरोधेन मदीयसङ्कटानि तस्मिन्नवसरे महापुरुषस्याग्रे निवेदयितुमधीरोऽभवम् । अयमेव सुहृत् ( अन्यो वा न जाने ) फ्रेडरिक्पिंकटमहाशयो वरं मया द्रष्टव्य इत्यसूचयत् । यद्यप्यसौ प्राचीनताप्रेमिपक्षीय-स्तथाप्ययं भारतीयविद्यार्थिषु निष्कलङ्कां निःस्वार्थां प्रीतिमबध्नात् । बहवो विद्यार्थिनस्तस्य बुद्धि-वादमन्विच्छन्ति स्म । अहमपि तद्दर्शनावसरं प्रार्थयन्पत्रमेकमलिखम् । स च प्रतिपत्रकालं निर्दिष्ट-वान् । तद्दर्शनावसरस्तावत्कदाप्यविस्मरणीयो भवति । स मित्रं मां निज सुहृदमिवापश्यत् । आत्मनो हसन्मुखेन मम नैराश्यमद्रावयत् । अथ तेनोक्तम्—

"सर्वेणापि फिरोजशाहमेहतामहाशयतुल्येन भवितव्यमिति किं भवान्मन्यते । तादृशो वाग्मीनसहजश्च जनो दुर्लभः । साधारणन्यायवादित्वे तथादृशीनाधिकारकुशलता नावश्यक इत्येतन्निश्चितमवेहि । प्रामाणिकत्वकार्यदर्शित्वसम्पन्नः पुरुषो न्यायवादी भूत्वा स्वजीविकां सम्पादयितुमर्हं भवति । न हि सर्वेऽपि व्यवहारा जटिला भवन्ति । भवतु । ब्रूहि तावत्कानि कानि सामान्यविषयकाणि पुस्तकानि त्वयाधीतानीति ॥"

मया पठितानि कियन्त्येव पुस्तकानि तस्मै न्यवेदयम् । स तदाकर्ण्य किंचिदिव मन्दाश मनस्क्यत । तत्तु क्षणमात्रमेव । तावच्च तस्य मुखे हास्यरेखाः प्रादुरभूवन् ॥

अथ सोऽब्रवीत्—

"जाने तव क्लेशम् । परवशानीनं तदन्यत्र । किंच लोकानुभवशून्योऽसि । त्वमितिहासविषयं न किं पठसि । हिन्दुस्थानस्य चरित्रमपि त्वया न पठितम् । न्यायवादिना मनुष्यस्वभावाभिज्ञेन भवितव्यम् । पुरुषस्याकृतिदर्शनात् तत्स्वभावावगमनकलाभिज्ञेन भवितव्यम् ।

सर्वेणापि भारतीयेन हि हिन्दुस्थानेतिहासज्ञेन भाव्यम् । अस्य च न्यायवादित्वस्य च साक्षात्सम्बन्धाभावेऽपि तद् ज्ञानं तवावश्यकम् । के मॅल्सनमहाशयाभ्यां प्रणीतं सप्तपञ्चाशदधिकाष्टशतोत्तरैकसहस्रतमे ख्रैस्ताब्दे संवृत्तस्य प्रजाविप्लवस्य चरितमपि न हि त्वयापाठि । तत्पुस्तकमवश्यं सम्पाद्य पठितुमर्हसि । किं च लोकतत्त्वभावपरिज्ञानार्थमन्यदपि पुस्तकद्वयमवलोक्येति ॥ एतत्पुस्तकद्वयं नाम लॅवेटर-शेमलपेनिकइत्येतदाख्यमहाशयाभ्यां विरचितौ मुखसामुद्रिकौ ग्रन्थौ ॥

एतन्महनीयमित्रोपदेशनिर्भरं चिरस्मरणीयमभवत् । तत्सन्निधौ यद्यपि मे भीतिर्दूरीभूता तथापि तमापृच्छ्य निर्गतोऽहं पुनः पर्याकुलितोऽभवम् । आकृत्या मनुष्यस्य योग्यता कथमवगन्तव्येति प्रश्नं मनस्यालोडयंस्तत्पुस्तकद्वयं प्रयत्नेन तदर्थं गृहमगच्छम् । परेद्युर्लॅवेटरमहाशयस्य पुस्तकमन्वैषि । शेमलपेनिकप्रणीतपुस्तकमापणेषु नालभ्यत । लॅवेटरविरचितो ग्रन्थः स्नेलप्रणीतपुस्तकादपि क्लिष्टतरोऽलक्ष्यत । तत्र मे पिपठिषापि न जाता । शेक्सपियरमहाकवेराकृतिविशेषानुसन्धानमकार्षम् । तथापि लण्डननगरस्य घण्टापथेषु सञ्चरमाणानां शेक्सपियरव्यक्तीनामभिज्ञाने कुशला शक्तिर्मया नाध्यगम्यत ॥

लॅवेटरस्य पुस्तकं मदीयज्ञानं किमपि नावर्धत । पिंकटस्य बोधनाभ्यः सम्पादितं प्रयोजनमत्यल्पम् । किन्तु मय्यभिमानविशेषान्निर्व्याजविलसन्मन्दहासस्तदीयो मम मनसि निरूढोऽभवत् । न्यायवादी भूत्वा जीविकां निर्वाहयितुकामेन फिरोजशामहेतामहाशयस्य प्रतिभा मेधा योग्यता च नापेक्ष्यते । प्रामाणिकत्वकार्यक्षमत्वविशिष्टो जनो निर्वोढुं पारयतीति य उपायस्तो बुद्धिवादस्तत्राहं श्रद्धितोऽभवम् । किं च ममैतद्गुणद्वयोपेतत्वान्मम हृदये किंचिद्धैर्यमजायत ॥

विदेशे के-मॅल्सनप्रणीतं पुस्तकमध्येतुं नापारि । किन्तु प्राप्तेऽवसरे तत्पठितव्यमिति निश्चितत्वाद्दक्षिणाफ्रिकादेशे तदपठिषम् ॥

एवं नैराश्येन सह किंचिदास्थामपि प्राप्य 'आसाम' इत्याख्यनौकायानेन मोहमयीनगरोपकण्ठमासादयम् । नौकायानस्थाने जलधिरुत्तालकल्लोलमयोऽभवत् । तदहं द्रोण्या तीरमभ्यगमम् ॥

इति श्रीगान्धिमहात्मनः
सत्यशोधनाख्यायामात्मकथायां
प्रथमो भागः
समाप्तः

# श्रीमान् रायचन्दभाईमहाशयः

मोहमयीनगरे प्रचण्डवातः समुत्थित इति पूर्वाध्याये मया न्यरूपि । आङ्ग्लवर्षसप्तम-मासयोर्हिन्दुसागरे नायमपूर्वः सम्भवः । एडननगराद्यात्रामार्गे जलधिरल्लोलकल्लोलमय आसीत् । प्रायेण पथिकाः सर्वेऽपि रुग्णशयिता अभूवन् । अहमेक एव निरातङ्कस्तरङ्गाघातविलोकनचातुरेण नौकाबहिर्वेदिकायां समुच्छलितशीकरप्रहारानन्दमनुभवन्नवास्थिषि । प्रातराहारसमये मया सहैको वा द्वौ वा वर्तेते स्म । ऊरूपरि यवागूरपक्षिप्ता महतावधानेन शरावमूरूपरि विन्यस्य वयमभुञ्ज्महि ॥

बाह्योऽयं प्रचण्डवातो मदीयहृदयान्तर्वर्तिनश्चण्डमारुतस्य सूचकोऽभवत् । किन्तु यथा बाह्येन तथैवान्तरिकेणापि मदीया शान्तिरविप्लुतैव स्थिता । कुलजनादुपद्रवस्तु प्रत्यक्ष एव (प्रथमभागस्य द्वादशाध्यायोऽवलोक्यताम् ) । व्यवसायादिकृत्य निर्वाहचिन्ता पूर्वमेव निरूपिता । किञ्च केषाञ्चित् सुधारणानामारम्भक्रमः पर्यालोचनीय आसीत् । न केवलमेतावन्मात्रमेव परन्तु ममाद्याप्यविदिता क्लेशपरम्परा मां प्रतीक्षते स्म ॥

नौकानिवेशस्थानमुपप्राप्तस्य मम स्वागतानुयोगाय मदग्रजः पूर्वमेवागत्य तत्र स्थितः । तेन किल डाक्टरमहेतामहाशयतदग्रजयोः परिचयः पूर्वमेव सम्पादितोऽभूत् । डा० महेतामहाशयेन सोपरोधं सहावस्थानं प्रार्थितस्सन्नग्रजद्वितीयस्तद्वसतिमेवागच्छम् । एवमावयोर्विदेशे सम्प्रवृत्तः परिचयः स्वदेशेऽस्मिन्वृद्धिमासाद्य कुटुम्बयोरुभयोरपि शाश्वतमैत्रीरूपेण परिणतोऽभवत् ॥

मम मातुर्दर्शनेऽहं कातर इवाभूवम् । सा मां प्रत्युद्गम्याश्लिष्टुं न जीवन्तीस्थितेति न मे विदितमासीत् । तमेनं दुःखोदन्तमिदानीं मे न्यवेदयन् । यथाचारं सूतकस्नानमकारि । मम जननी मदीयविदेशस्थितिकाल एव पञ्चत्वं गताभूत् । तन्निमित्तशोकाभिघातो मां विदेशवर्तिनं मा स्प्राक्षीदिति मदग्रजेन तद्वृत्तान्तः पूर्वं मे न निवेदितः । पश्चादद्यावेदितेऽपि तस्मिन्न मन्दीभूतः स दुःखाभिघातः । परन्त्वेतदास्तां तद्वृत्तानुबन्धकथनम् । पितृमरणनिमित्त दुःखापेक्षया गरीयानभून्ममाद्य हृदयोद्वेगः । भूयस्यो मनसि कल्पिता आशा विघटिता बभूवुः । किन्तु वृत्तमेतदाकर्ण्य रोदनक्रन्दनादिकं नाहमकार्षम् । अहं शोकेनाश्रुप्रविरोधेऽपि शक्तोऽभवम् । यथा मातुर्मरणासम्भवे तथैवात प्रभृत्यपि जीवनकृत्यानि निर्वर्तयितुमुपाक्रमं इत्येतन्मया स्मर्यते ॥

डा० महेतामहाशयद्वारा मया केषाचिन्मित्राणा परिचय सम्पादित । तेषामेकस्तदग्रजो रेवाशङ्करजगजीवनमहाभाग । आवयोर्यावज्जीवस्थायिनी मैत्री समजायत । किन्त्वत्र विवक्षितो यो निरूपयितुमिष्ट स किल 'कविरायचन्द' अपराख्यस्य श्रीरायचन्द्रमहाशयस्य परिचय । स च डा०महेतामहाशयस्य कस्यचिदग्रजस्य जामाता । स च रेवाशङ्करजगजीवननाम्ना प्रचलद्रत्नाभरणवाणिज्यायामशाहरोऽभवत् । तदानीं तस्य वय पञ्चविंशतिवर्षाधिक नासीत् । तथापि प्रथमदर्शन एव विद्वानय महोन्नतप्रकृतिरित्यसशयमवेदिषम् । शतावधानि-ख्यातिरपि तस्यासीत् । तस्य शतावधानकौशल मया द्रष्टव्यमिति डा०महेतामहाशयो मामनोदयत् । यावती मम शौद्ज्ञानसम्पत्तिस्तावतीं तत्कर्णे प्रकाश्य तदेतद्वाङ्मयमुच्चार्यतामित्यवोचम् । कविरायचद भाईमहाशयो येन क्रमेण शब्दा उपन्यस्तास्तेनैव क्रमेण तान्पुनरुदाहरत् । सेवा तदीयशक्तिर्मम विस्मयकारिण्यपि न मा मुग्धमकरोत् । यत्तु मा मुग्धमकरोत्तद्वृत्त पश्चान्मदनुभवगोचरोऽभवत् । तच्च विशाल तदीयशास्त्रज्ञान विशुद्ध तदीयचारित्र तीव्रा च तदीयात्मसन्दर्शनेच्छा । तस्य जीवित केवलमात्मसाक्षात्कारार्थमेवेति पश्चादहमज्ञासिषम् । तत्र भक्तो मुक्तानन्दस्योक्तिरिय सर्वदा तन्मुखवर्तिनी तदीयहृदयभित्तौ चित्रिता चाभवत् । सा यथा—

दिनकृत्येषु सर्वेषु हरिर्मे प्रकटो यदा ।
मदीयजन्मसाफल्य भजेय निश्चित तदा ॥

भक्तमुक्तानन्दसत्ताघटनासूत्रसन्तति ।
भक्तिमज्जनमन्दारो भगवान्हरिरेव हि ॥ इति

रायचदभाईमहाशय परोलक्षरूप्यकाणा वाणिज्यमकरोत् । किं च रत्नपरीक्षायामय निपुणोऽभूत् । तस्य बुद्धिशक्तिमतीतो वाणिज्यसम्बन्धी जटिल प्रश्न एव नासीत् । किन्त्वेतदादिक न हि तस्य जीवनस्य मुख्योद्देश्यम् । ईश्वरसाक्षात्कार एव तदीप्सित पुरुषार्थ । तदीयनिवचाऽऽलेखन-पीठस्योपरीतरवस्तुभि सह यत् किमपि धार्मिकपुस्तक च दिनचर्यापुस्तक च सर्वदाऽदृश्यत । निरते व्यापारप्रसङ्गे धर्मग्रन्थ वा स्वकीयदिनचर्यापुस्तक वा स हस्ते करोति स्म । तस्य लेखनेषु प्रकटिताशस्य भूयान् भागस्तदीयदिनचर्यापुस्तका समग्राहि । लक्षाधिकरूप्यकव्यापारविरामोत्तरक्षणमेव य पुरुष स्वात्मज्ञानरहस्यविचारान् लिलेखिषितुमुत्सहेत तत्तादृशपुरुषस्य वणिङ्मात्रता कथ नाम घटताम् । स नूनं सत्योपासक एव । एवमस्य विविधव्यापारमध्य एवेश्वरोपासनया लीनचित्तत्व मया न केवल मेकद्विवारमेव पर अनेकश प्रत्यक्षीकृतम् । न कदाप्येन क्वचिदपि प्रमादवन्तमपश्यम् । मया तस्य वाणिज्यवृत्ते वैभवविभो वा कोऽपि लाभ मम्भाव्यते स्म । तथाप्यह तत्सङ्गेन गाढमैत्रीसुखमन्वभूवम् । तदानीमह निरुद्योगो व्यवहारी स्थित । तथापि तत्सन्निधिनैव मया सर्वदा धर्ममाहात्म्य सम्भाषिणी कथा स करोति स्म । यद्यप्यहमन्धकारेऽद्यापि क्लिश्यमानस्थितो यद्यपि धर्मजिज्ञासाया मे न तावद्दृढ पुनरपि तथापि रायचदभाईमहाशयेन कृता धर्मोपन्यासा मदीय मन समाकर्षन् । तत पर धर्माचार्यानन्वप्रमुखान्बहूनह व्यलोकयम् । अयमनालम्बिना गुरवोऽपि यत्नतो

मया दृष्टाः । किन्तु न कोऽपि तेषां रायचन्दभाईमहाशयवत् मम हृदयमस्पर्शत् । अस्य वचनानि अव्याहतगत्या हृदयमवगाहन्ते स्म । यथास्य नीतिश्रद्धा तथास्य कुशाग्रधियतापि मामादरं च ममनादयत् । तस्मादहं यत्किमप्याध्यात्मिकसङ्कटं प्राप्य तमेव शरणमगच्छम् ॥

यद्यपि रायचन्दभाईमहाशयः परं मे मान्योऽभवत्तथापि मदीयहृदयकमले न हि तं गुरुपीठमारोपयम् । तत् स्थानमद्याप्यनधिष्ठितं भवति । अद्याप्यहं गुर्वन्वेषयमाणः स्थितोऽस्मि ॥

आत्मसाक्षात्कारसिद्ध्यै गुरुपदगुरूपदेशयोर्हिन्दुधर्मेण यन्महत्त्वं प्रतिष्ठितं तत्र मे श्रद्धा विद्यते । गुरुं विना तत्त्वज्ञानं न लभ्यत इत्यस्मिन्वचने सत्यांशो महान्विद्यत इत्यहं मन्ये । ऐहिकज्ञानमुपार्जितुकामस्य पूर्णयोग्यताविहीनोऽपि शिक्षकः सह्यो भवति । आध्यात्मिकशिक्षणं तु नैव सम्भाव्यते । अधिगततत्त्व एव गुरुपदमर्हति । अत एव तत्पूर्णतासिद्धये नैरन्तर्येण प्रयत्न आवश्यकः । शिष्यो हि स्वयोग्यतानुरूपमेव गुरुं लभते । सम्पूर्णताप्राप्तिकृते सर्वोऽपि जनः प्रयत्नमनन्तं कर्तुमधिकारी भवति । तत्प्रयत्नस्य प्रतिफलं स्वप्रयत्न एव । शेषमपि च भगवदायत्तम् ॥

यद्यपि रायचन्दभाईमहाशयो मदीयहृदयमण्डपे गुरुत्वेन न प्रतिष्ठितस्तथाप्ययं मे यथा मार्गदर्शकः सहायकश्चाभूदित्येतदग्रे निरूपयिष्यते । एतत्कालिकास्त्रयः पुरुषा मदीयजीवनपथमेकान्ततः परिवर्त्य मदन्तरात्मानं परवशीचक्रुः — यथा रायचन्द्रभाईमहाशयः स्वजीवनसंसर्गात् टॉल्स्टॉयमहाशयः स्वकीयात् 'दि किङ्डम ऑफ् हेवन इज विदिन् यू' (स्वाराज्यं तव हृदये विद्यते) इत्येतन्नाम्नो ग्रन्थात् रस्किन्महाशयश्च 'अण्टु दिस् लास्ट' (सर्वोदय) इत्येतन्नाम्नो ग्रन्थात् । इमे वृत्तान्ता यथास्थं वर्णयिष्यन्ते ॥

## द्वितीयोऽध्यायः

# संसारप्रवेशः

धृतस्नान राजकोटमनयत् । ततस्तत्र बन्धूना समाराधनमकारयत् । तदेतत्सर्वं न मेऽभिमतमासीत् । परन्तु मदग्रजो मय्यपरिमेयवात्सल्ययुक्तोऽभवत् । तस्मिन्नह तत्प्रीत्यनुरूपभक्तिमानासम् । तस्मादह तदिच्छामेव तदाज्ञा मन्यमानो यन्त्रवत्तदीयच्छन्दानुवर्ती प्रावर्तिषि । इत्थ मे स्वजातिस्वीकारविचार पर्यवसानमगमत् ॥

बहिष्कारदायकपक्ष प्रनेतु न कदापि मया प्रयत्नोऽकारि । तत्पक्षस्य प्रमुखान्प्रति मम मनसि क्रोधोऽपि नाजायत । तेषा मध्ये मम द्वेषारोऽपि केचिदविद्यन्त । अह तेषा मनागपि सन्तापमजनयन् पर जागरूक स्थित । जातिबहिष्कारसम्बन्धिषु कुलनियमेष्वहमत्यन्तमवहितोऽभवम् । एतन्नियमानुरोधेन मदीयबन्धुजनस्य — श्वशुरस्य वा श्वश्रूजनस्य वा ज्येष्ठस्वसुर्वा श्यालकस्य वा — गृहेषु मम प्रवेशो न्यषिध्यत । तन्मया तदीयगृहे पानीयमपि न पीयते स्म । यद्यप्येते बहिष्कारनियममुल्लङ्घ्य परोक्षे पानीय मे प्रदातु सन्नद्धास्तथापि सर्वलोकप्रत्यक्षे यदकार्यत्वेनागृह्यत तस्य पुन प्रच्छन्नमनुष्ठान न मेऽभिमतमासीत् ॥

इत्थमप्रमादिन्या मम प्रवृत्त्या कुलजना क्लेशासम्भव प्रत्यबोधि । न केवलमेतावदेव परन्त्वद्याप्येकपक्षीया यद्यपि नियमेन मा बहिष्कृत मन्यन्ते तथाप्यमीभिर्मां प्रत्यौदार्यमादरश्च सर्वदा प्रादर्शि । तै किल मत्सकाशात्प्रतिफलमनपेक्षमाणैर्मदीयकार्येष्वसकृत्साहाय्यमकारि । इद मदीयतितिक्षाया मनोज्ञ फलमिति मन्ये ॥

अह सर्वथा जातौ स्वीकार्य एवेति यद्यह प्रयत्नकलापमचालयिष्य यदि चास्य कृते स्वकुल बहुधा भेदयितुमयतिष्ये तदास्मत्कुलजनो मयैव प्रवर्तित सन्निश्चितमेव प्रतीकारमकरिष्यत् । एतेन विदेशात्परावृत्तस्य मम स्वास्थ्यदर्शनकथा तावदास्ता परन्तु प्रयत्नकलापावर्ते संलग्नस्य बहुश कपटवृत्त्या व्यवहर्तव्यमापतिष्यत् ॥

भार्यां प्रति मदीया मन प्रवृत्तिर्नाद्यापि सुव्यवस्थितामवत् । कृतप्रवासेनाप्यसूया तद्विषयिणी मया नाद्यापि पर्यत्याजि । अल्पाल्पविषयेष्वपि तत्सम्बन्धेषु सशयालुत्व मम नाद्यापि न्यवर्तत । तस्मान्मदीयमनस्युपन्ना प्रत्याशा न सिद्धिमीयु । भार्या विद्यावती करणीया तत्पाठलेखनाभ्यासे तस्या सहायेन मया भवितव्यमित्यह समकल्पयम् । किंतु मदीयविषयासक्तिरंशादिदमशक्यमभूत् । मदीयदोषै सा कष्टभाजनी कृता । एकदाहमेना मातृगृह प्राहैषम् । पुनस्तत्स्वीकरणात्पूर्वं महान्तमस्या सन्तापमजनयम् । एवा मम मूर्खतेति पश्चादहमज्ञासिषम् ॥

बालकाना शिक्षाक्रम सुव्यवस्थापनीय इत्यहमचिन्तयम् । मम ज्येष्ठाग्रजस्य पुत्रा आसन् । मम विदेशप्रस्थानकाले गृहे स्थितो य शिशु स मे कुमार साम्प्रत चतुर्वर्षदेशीयोऽभवत् । निश्चितपूर्वं हि मया यदेते बालका व्यायामाभ्यसनेन दृढकाया कर्तव्या सदैव मदर्थ्याभ्युदय प्रापणीयाश्चेति । तदेतदनुमोदित मम ज्येष्ठाग्रजेनापि । प्रायेणाहमस्मिन्विषये सिद्धमनोरथोऽभवम् । बालकाना गोष्ठी मह्यतीव प्रियाभूत् । अद्यापि तै सह परिहासक्रीडाभ्यासो मम रूढिमागत । बालकानाम् सन्निकर्षो भवितास्मीति तदाप्रभृति मया व्यचिन्ति ॥

आहारविषये सुधारणस्यावश्यकर्तव्यता मया स्पष्टमवगताभूत्। 'टी–कॉफी'ति द्वयमस्मा-स्माकमन्दिरं प्रागेव प्रविष्टमासीत्। यावदहं विदेशात्प्रतिनिवृत्तस्तावदस्मार्कीनमन्दिरेऽपि विदेशीयवातावरणस्य प्रायिकस्थितिमिच्छन्मदीयाग्रजः पुरा कादाचित्कोपयोगीनि चैनभाजनानि साम्प्रतं नित्योपयुक्तान्यकल्पयत्। यानि मत्कृतानि सुधारणानि तानि तद्वायुमण्डलस्य परिवर्तनं समग्रतामापादयन्। यत्रगोधूमावयागूर्निष्पादनीया। 'टी–काफी'त्येतद्द्वयस्य स्थाने 'कोको'पेय-मेकमुपयोक्तव्यमित्यहमबोधयम्। एतेन 'टी–कॉफी कोको'पेयानां त्रयाणामपि पानमस्माभिरारभ्यत। ऐरोप्यपादरक्षाविशेषा मन्दिरे दृश्यन्ते स्म। अहमप्यैरोप्यवेषधारणेन मन्दिरस्यैरोप्यसंविधान पर्यपूरयम्॥

इत्थं व्ययः क्रमादवर्धत। दिने दिने नवनवानि वस्तूनि गृहे सम्भृतान्यभूवन्। गृहस्य पशुशालाया गजस्तावदवशिष्ट। कथं पुनराहारस्तदर्थे सम्पादनीयः। राजकोटे न्यायवादिकृत्यसमा-रम्भं सहसाकरिष्यं यदि सर्वथा हास्यास्पदमभविष्यम्। तत्रत्यन्यायवादिसदृशानुभवज्ञानशून्योऽपि ततोऽपि दशगुणं पारितोषिकं लिप्सुरभविष्यम्। तथा हि स्थिते मयि को वा मूर्खो व्यवहार प्रदित्सया मत्पार्श्वमुपागच्छेत्। कदाचिदुपागतेऽपि तस्मिन्कथं वा मदीयेनाज्ञानेन सह प्रतारणा-मौद्धत्यं च संयोज्य जगतो मदीयमृणित्वं परं वर्धयेयम्॥

अथ मित्राण्यवोचन्—यत्किंयन्तमपिकालं मोहमयीनगरे स्थित्वातत्रत्यप्रधानन्यायसभा-यामनुभवं सम्पाद्य सुशिक्षितहिन्दुधर्मशास्त्रेण मया व्यवहारोपार्जने वरं प्रयत्नः कर्तव्य इति। एतदनुरोधेनाहं मोहमयीनगरमागतः॥

तत्र वसतिं गृहीत्वा सूदमेकं पाककर्मणि न्ययोजयम्। मदीयकार्ये मम यावत्पटुत्वं तदीय-कार्ये तस्य तावदेवासीत्। स च ब्राह्मणः। तमेनमभृतकं मन्यमानोऽहं गृहजनमिवापश्यम्। स किल यद्यपि निजशरीरस्योपरि जलमपातयत्तथाप्यङ्गानि नैव प्रमार्जयते स्म। किञ्चायं मलिनवासाः कचरयज्ञोपवीतश्च। शास्त्रगन्धस्य तु सुतरामजिघ्र। तथापि तदपेक्षया प्रशस्यतरः सूदः क वा लभ्यः॥

तमेनमहमपृच्छम्—भो रविशङ्कर (तदेवास्य नाम) भवान्पाकक्रियायामविचक्षण इत्येतदास्ताम्। तथापि सन्ध्यावन्दनादेन भवता भाव्यं किलेति॥

स च प्रत्यवादीत्—मदीयसन्ध्यावन्दनं स्वामिन् किमु जिज्ञास्यते। श्रूयतां तर्हि। लाङ्गलमेव मदीयं सन्ध्यावन्दनम्। कुदाल एव मदीयमौपासनम्। मम तावद्वायमर्थमेनाश्रम्। उदरम्भरणं च भवदीयकृपायत्तम्। असन्तोषे तु कृषिरवस्थितैवेति॥

तस्मान्मे रविशङ्करस्य शिक्षकत्वं वोढव्यमापतितम्। तदर्थमवकाशोऽपि महानासीत्। अर्धपाको मयैव निष्पाद्यते स्म। विदेशेऽनुष्ठितचरणि शाकाहारसम्बद्धानि शोधनान्यह-मत्रैमारब्भवान्। अहारवानीमेकां क्रीत्वा रविशङ्करद्वितीयः पौगेगमत्रमताश्रम्। तेन सह भोजनाय मे न कोऽप्यासीदन्तरायः। क्रमशः क्रमशः प्रतिबन्धकानि तस्यापि तिरोदधन्। तस्मादावा

सुसमाचारमभूत् । एतावता नु प्रतिज्ञापत्रमलब्धि । पर्याकुलता मनसि [illegible] नैव त्यज्य पाठ च निर्गतः नैव स्वात्मविश्वासनि [illegible] ॥

किन्तु मोहमयीनगरं चतुष्पञ्चमासेभ्यः ऊर्ध्वं न [illegible] स्थातुमशक्नवम् । यतो व्ययागमे निरुद्धेऽपि व्ययस्तावदवर्धतैव ॥

एष हि मे कुटुम्बनिर्वाहोपक्रमः । व्यावहारिकं मत्तो [illegible] । बाह्याडम्बरो महान् । आन्तरिकं ज्ञानमत्यल्पम् । मदीयकार्यभारः मम दुर्वहोऽभवत् ॥

तृतीयोऽध्यायः

## मम प्राथमिको व्यवहारः

सोऽहमयीनगरमधिवसन्नहमेकतो धर्मशास्त्रमध्येतुं प्रावर्तिषि । अन्यतश्चाहारविषयकशोधनानि कर्तुमुपाक्रमे । एतेषु मदीयसुहृद्वीरचन्द्रगान्धिश्च मया सहामिलत् । अत्रान्तरे मदग्रजोऽपि मदर्थे व्यवहारसम्पादनाय यथाशक्ति प्रयतते स्म ॥

हिन्दुस्थानस्य शासननियमानामध्ययनमतीव निर्वेदकरमासीत् । 'सिविल प्रोसिजर कोड' इत्येतदाख्यं व्यवहारचालनक्रमप्रतिपादकं शासनं तु न मे बुद्धिमारोहत् । किन्तु 'एविडेन्स ऐक्ट' इत्येतदाख्यं साक्ष्यसम्बद्धशासनं न तादृशमासीत् । वीरचन्द्रगान्धिः 'सोलिसिटर'परीक्षार्थमधीते स्म । स च ब्यारिस्टर्न्यायवादिसम्बन्धिनीः कथा बह्वीरकथयत् । तेनोक्तम्——

'फिरोजशामहाशयो व्यवहारशास्त्रीयनियमानामगाधज्ञानसम्पत्त्यैव न्यायवादिप्रवरो भवति । 'एविडेन्स ऐक्ट' शासनस्य वाङ्मयसर्वस्वं तस्य जिह्वाग्रे तिष्ठति । द्वात्रिंशं निबन्धनमुपजीव्य प्रवृत्तमखिलमपि व्यवहारजातं स जानाति । बदरुद्दीनमहाशयः प्राड्विवाकान्निजवादकौशल्येन मुग्धस्तम्भान्करोतीति ॥

एतादृशप्रसिद्धपुरुषाणां कथाः शृण्वतो मम त्रस्नुता भृशमवर्धत ।

अथासौ स्वमतमेवमाचष्ट——

ब्यारिस्टरवृत्तिमुपाश्रितो जनः पञ्चषवत्सरान् यावत्तूष्णीं न्यायसभायामुपवेशमुपवेशमुद्विजत इत्येतन्न बहु । अत एवाहं सोलिसिटरपदवीलिप्सया प्रवृत्तोऽस्मि । वर्षत्रयाभ्यन्तरे स्वकुटुम्बकं निर्वाहयितुं यदि भवान् शक्नुयात् तदा भवानेव कृती वक्तव्य इति ॥

मासे मासे व्ययो वृद्धिमगात् । 'ब्यारिस्टर्' इति नाम बहिः प्रख्याप्यान्तरथापि तत्कार्यशिक्षाप्रसङ्गिता मदीयमनसो नाभिमतमासीत् । तदेव पर्याकुलीभूतस्य ममाध्ययनं न सम्यक्

मूरीकृतवान् । तमुद्रापणव्ययस्तेनैव वोढव्य इति निरणायि । प्रार्थनपत्र लिखित्वा मदीय मित्रवर्गस्य पुरस्तादवाचयम् । सुसङ्गतमस्तीति ते प्राहु । प्रार्थनापत्रस्यानपट्टेन ममास्मीति ततो धैर्यमजनि । तावन्मात्र योग्यताविशिष्टत्व मम वास्तवमेवासीत् । द्रव्यादानमन्तरेण प्रार्थनापत्राण्युल्लिख्य यदि प्रवासमेव कार्याणि मामुपानस्यन् । किन्तेन विनाप्यन कथ मुदरम्भरण सिध्येत् । अतोऽहमुपाध्यायवृत्ति कुतो नाश्रयणीयेत्यचिन्तयम् । सुशिक्षिता मया ह्याङ्ग्लभाषा । यत्र क्वापि पाठशालाया मेट्रिक्युलेशनवर्गस्थितानां चाङ्ग्लनामाङ्ग्लभाषाशिक्षण-मङ्गीकर्तु मम मनो हृष्यति स्म । एतदुद्योगाल्लभ्यनेन प्रायो जठरमाप्यायेत ॥

क्वचित्सुप्रसिद्धोच्चविद्यालयाधिकारिभिर्वृत्तपत्रेष्वेका प्रकटना प्रकाशिताभूद्यथा — 'आङ्ग्लभाषाशिक्षक एकोऽस्माभिरपेक्ष्यते । दिनस्यैकहोरामात्रमध्यापनम् । वेतन पञ्चसप्ततीरूप्यका इति । तामेतामालोक्य तदुद्योगाभीप्सया प्रार्थनापत्र व्यसर्जयम् । शालामुख्याध्यापको द्रष्टव्य इत्युत्तरमागतम् । महतोत्साहेन तत्र गतोऽभवम् । किन्तु बि ए. परीक्षायामह नोत्तीर्ण इति यावन्मुख्योपाध्यायोऽजानात् तावदेतमुद्योग भवते न दातु शक्यत इति मा सानुकम्पमवोचत् ॥

" अह लण्डनमेट्रिक्युलेशपरीक्षायामुत्तीर्ण । लॅटिनभाषा मम द्वितीया भाषासीत् । "

" नूनमेव स्यात् । परन्तु बि ए परीक्षायामुत्तीर्ण एकोऽस्माभिरपेक्ष्यते । "

लिखित पदमलभ्यमासीत् । नैराश्येन विक्लवोऽभवम् । मदग्रजोऽपि पर चिन्तयाक्राम्यत् । इत पर मोहमयीनगरवासेन कालातिवाहन निरर्थकमतो राजकोट गत्वा तत्रैव मया स्थिति र्ग्रहीतव्येत्युभावपि निरचैष्व । ममाग्रजोऽपि लघुन्यायवादासीत् । अत प्रार्थनापत्रलेखनादिकार्यं किञ्चित् किञ्चिन्मह्यमपि प्रदातु शक्यमभूत् । किञ्च मोहमयीमन्दिर परित्यज्य राजकोटे स्थिति ग्रहणेन महान्व्ययो रक्षित स्यात् । इत्थमनुसन्धाय षण्मासवासादनन्तर मोहमयीनगरनिवासो मया पर्यत्याजि ॥

मोहमयीनगरस्थितोऽहमनुदिन प्रधानन्यायस्थानमगच्छम् । किन्तु किमपि तत्र मया शिक्षितमिति वक्तु न शक्नुयाम् । न हि तावच्छिक्षितुमभिज्ञोऽभवम् । अनेकशो व्यवहारगतिमबुध्य मानस्य मम निद्रा समायाति स्म । निद्रालुभिरन्यैमित्रै सह ममाप्यवस्थानाल्लज्जा वापमानो वा न हि भृश मयान्वभावि । एव गच्छत्सु दिवसेषु न्यायसभायामुपविश्य निद्रया घूर्णनमप्येको विलास इत्यज्ञासिषम् । अस्मात्कारणात्कृतपूर्वो मदीयव्रीडालवोऽपि शनैस्तिरोहितोऽभवत् ॥

अधुनापि मोहमयीनगर्यामहमिव निरुद्योगा ब्यारिस्टिर्युवका सन्ति चेत्तेषामेक जीविकानिर्वाहसम्बद्ध लघुमनुभवमह सूचयितुमिच्छामि । मदीयवसतौ 'गीरगाम'स्थले विद्यमानायामपि पुष्परथेन वा नैवुकयानेन वा मया गमनमतीव विरलमासीत् । गृहात्प्रधानन्यायस्थान प्रति पादचारेणैव गन्तव्यमिति नियमो मयावलम्बित । एव परिक्रमाय त्रिपादहोरामित कालोऽपश्यत । तत प्रत्यागमन च पादचारेणैव निरवर्त्यत । आतपो मध्याह्ने प्रचण्डोऽभवत् । किन्तु तत्सहन मयाभ्यस्तम् । एवविधाचरणेन न केवल बहुशो द्रव्यमरक्षि परन्तु मदीयमित्रेष्वने-

केवलसङ्कटोपगपीडितेष्वपि नाहमेकस्याप्येवमुपतापकारणमभूवम् । अर्थार्जनोपक्रमादनन्तरमपि पादचारेणेव मदीयकार्यालय प्रति गमनागमनाभ्यासो मया न परित्यक्त. । एतेनापि मे बहूपकृत भवति ॥

चतुर्थोऽध्यायः

# प्रथम आघातः

मोहमयीनगरे नरादय प्राप्य राजकोटमहमागत । तत्र स्वकीय कार्यालय पर्यकल्पयम् । कार्यं च नान्यल्पमुपानमत् । प्रार्थनापत्राभिलेखनेन प्रतिमास त्रिशतीरूप्यकाणामुत्तिष्ठति स्म । एव मे कार्यलाभो न तावन्मदीयकार्यकौशलनिमित्त परन्तु मदीयहितैषिणा प्रयत्नविशेषमूल एवासीत् । मदग्रजेन सह भागमादाय कर्मकुर्वता न्यायवादिनामितोऽप्यधिका व्यवहारा नियमेन मिलन्ति स्म । अग्रज स्वहस्तमागताना प्रार्थनापत्राणा यानि मुख्यानि—यानि वा मुख्य त्वेन तेन सम्भावितानि—तानि सर्वाण्यपि महान्यारिस्टर्जनसकाश प्रेषयत् । यान्यस्य दीन-व्यवहारिणामर्थे लेखितव्यानि तानि मदीयाशत्वेनोपानमन् ॥

व्यवहारसम्पादकमयस्थाना नैव किंचिदपि प्रदास्य इति मोहमयीनगरे यो नियमो मयैवान्ततोऽनुष्ठित सोऽत्र मया नानुवर्तित इत्यभ्युपेतव्यम् । उभयत्रापि स्थलीया परिस्थिति केवल भिन्नत इति मा प्राहु । तद्यथा—मोहमयीनगरे गुमसम्पादकस्य यथा द्रव्य प्रदीयते तथात्रापि सर्वैरपि व्यारिस्टर्जनैर्निरपवादमेव प्रतिशतमियत्ता नियमेन स्वलब्धपारितोषिकद्रव्याद्व्यवहारसम्पादकाना न्यायवादिना भाग प्रदीयत इति । अस्य मदग्रजोक्तसमाधानस्य प्रत्युत्तर दातु नाहमशकम् । स पुन प्राह—अहमन्य न्यायवादिद्वितीय कार्यं चालयिष्यामीति त्वया ज्ञातमेव । द्वयोरपनमत्सु व्यवहारेषु ये तत्र प्रदातु शक्यास्तानह तुभ्यमेव प्रदिशामि । यदि त्व मदीयसहभागिनो जनस्य द्रव्याश न प्रयच्छेस्तदाह पर क्लेश-भाजनीकरिष्ये । किं च मदुभयनोरावयोर्यद्द्रव्य प्रदायेत तदर्धमवश्य मामेवोपगमिष्यति । एतेन मदीयसहभागिन्यायवादिन को नाधिको लाभ । स चेद्व्यवहारानेतान यस्मै व्यारिस्टर्जनाय प्रयच्छेत्तदा स्वीयभाग न किं स लभत इति ॥ ईदृशेन वादेनाहममुह्यम् । व्यारिस्टर्कार्यं प्रसक्तेन द्रव्याशप्रदाननियम सन्दर्भेष्वीदृशेषु परिहातव्य एवेति मयाप्यनुमोदितम् । इत्यमह मे मन समादधे । अथ वा स्पष्टोक्तिभिर्विवक्षायामित्यमह मे नेत्रयो स्वयमेव धूलीप्रक्षेपमकुर्वीति वक्तव्यम् । परन्त्वेतद्व्यवहारजातादन्यत्र मया कदाचिदपि द्रव्याशप्रदान नाम न मे स्मृति पथे विद्यते ॥

इत्थमहं पर्याप्तं धनमुपार्जयम्। किं त्वस्मिन्नवसरे मदीयः प्रथम आघातो मदनुभवगोचरमागतः। आङ्ग्लेयाधिकारिणां प्रवृत्तिर्यादृशीति ममाद्यावधि श्रोत्रपथमागमत्। किन्तु चक्षुषा तत्प्रत्यक्षीकरणसन्दर्भो नैतावत्पर्यन्तमुपस्थितोऽभूत्॥

पोरबन्दरसंस्थानस्य पूर्वतन 'राणा'प्रभोः राजपीठारोहणात्पूर्वं मदग्रजस्तस्य मन्त्री-कर्तव्योपदेशकश्चासीत्। एवं तत्साचिव्यं कुर्वाणस्तं राणाप्रभुमसदुपदेशान्ग्राहयामासेति मदग्रजस्योपरि प्रवादोऽस्मिन्समये समुत्थापितोऽभूत्। स च प्रवादः 'पोलिटिकल एजेण्ट' इत्येतदाख्यराजकीयप्रतिनिधिं यावत्प्रसृत्य मदग्रजे तस्य दुरभिप्रायमुदपादयत्। समायं विदेशे परिचितपूर्वः प्रायेण तत्र मित्रत्वमपि वर्तते स्म। एतत्परिचयलाभेन सम्भाष्य स्वाग्रजस्य दुरभिप्रायो मया दूरीकर्तव्य इति मदग्रजेन व्यचिन्ति। ममेदं मनागप्यभिमतं नासीत्। विदेशे सञ्जातसङ्क्षिप्तपरिचयादत्र प्रयोजनावाप्तये न खलु प्रयतितव्यमित्यहमचिन्तयम्। मदग्रजः परमार्थेन दोषी यदि स्यात्तदानया प्रशस्तिवाचा किमिव हि प्रयोजनम्। अथायमनपराधी तदा नियमानुरोधेन प्रार्थनापत्रमुपस्थापयितव्यम्। स्वयं निर्दोषित्वश्रद्धया निर्भयेन सता भवितव्यता प्रतीक्षणीया। एतत्सर्वं ममाग्रजस्य न किल समञ्जसमलक्ष्यत। स मामित्थमवादीत्—

"अनभिज्ञस्त्वं काठियावाडविषयस्य। प्रापञ्चिकज्ञानमद्यापि त्वया सम्पादनीयम्। विना प्रशस्तिघोषणेन न किञ्चिदिह सिध्यति। त्वत्परिचितस्याधिकारिणोऽग्रे मामुद्दिश्य द्वित्रप्रशंसावचनोपन्यासाय साम्प्रतमवसरः प्राप्तः। तथापि त्वं मदनुजोऽपि भूत्वा सुसमयेऽस्मिन्यदि विकल्पसे तर्हि नूनं नैष तव धर्मः" इति॥

अग्रजस्य वाक्यं निराकर्तुमहं नाशकम्। ततोऽहं मदिच्छाविरोधेनापि 'पोलिटिकल-एजेण्ट'दर्शनाय प्रस्थितः। ममैतत्सम्यग्विदितमासीद्यदस्योपसर्पणे नासीन्ममाधिकारस्तथा तदुपसर्पणं मदीयगौरवहानिप्रदं चेति। तथापि तद्दर्शनावसरं प्रार्थयम्। निर्दिष्टवेलायामनु द्रष्टुमगच्छम्। पूर्वपरिचयं मया स ज्ञापितः। किन्तु विदेशकाठियावाडदेशयोरस्ति व्यत्यास इति सद्योऽभिव्यक्तमासीत्। अधिकारपीठमध्यासीनव्यक्तेरवकाशप्राप्ताधिकारिणश्च वैलक्षण्यमस्तीत्यवागम्यत। पूर्वपरिचयस्मृतिमसावसूचयत्। किन्त्वनेन स्मरणेन तस्य दर्पोऽवर्धत। स किल निरूप्यमाणः 'तत्परिचयादद्य प्रयोजनं लिप्सुर्ननु त्वमागतः' इति मामभिदधान इवालक्ष्यत। अयमेवार्थस्तदीयमुखमुद्रायामपि चित्रित इवादृश्यत। तथाप्यहं स्वकथामाख्यातुमुपाक्रमे। असहिष्णुः सोऽधिकारी मामवोचत्—

'भवदग्रजो दोषकारी। अलमद्य तत्कथा श्रुत्वा। अवकाशो मे न विद्यते। भवदग्रजः किमपि वक्तुकामश्चेदुचितरीत्या प्रार्थनापत्रमर्पयतु' इति॥

एतदुत्तरमेव पर्याप्तमासीत्। प्रायशस्तदेतन्न्याय्यमेवाभवत्। किन्तु स्वार्थो दृष्टिशून्यो भवति। स्वकथाप्रसङ्गान्नाहं व्यरंसिषम्। सोऽधिकारी समुत्थाय त्वयाद्य निर्गन्तव्यमिति मामगर्दयत्॥

ननु शून्यनामान्त मदीयवचनमित्यहमवोचम्। एतेन तस्य क्रोध समुत्कटोऽभवत्। भृत्य स आहूय 'अय बहिर्नीयता'मित्यादिशत्। अथाप्यनिश्चितोऽह तत्रैव स्थितोऽभवम्। तावच्च भृत्य समुपेत्य मम भुजोपरि हस्तमाक्षिप्य कोष्ठाद्बहिर्मां निरकाल्यत्॥

अधिकारी च निर्गत। भृत्योऽपि निर्गत। दुःखेन च रोषेण च कथ्यमानहृदयोऽह प्रतिन्यवर्तिषि। तत्कालमेव पत्रमेक लिखित्वा व्यसर्जयम्। तस्य तात्पर्यं यथा—

"भवतो मामपमान्य भृत्यहस्तेन मदीयशरीराक्रमणमकुर्वत। यदि भवद्भिर्मम क्षमा नाभ्यर्थ्यते तर्हि व्यवहारेण युष्मानभियोक्ष्य इति।"

अचिरादेव तदधिरोह प्रत्युत्तरमानैषीत्। यस्यायमक्षरार्थ—

"असभ्यरीत्या भवन्तो मयि व्यवाहरन्। गम्यतामियुक्ता अपि न भवन्तो निरगच्छन्। तस्मान्निर्गमनद्वार वो दर्शयेति भृत्य प्रति वक्त यमापतितम्। अथ गम्यतामिति भृत्येन बोधिता अपि भवन्तो न चलिता तस्मात्तेन युष्मा द्वाराद्बहिष्कर्तुं यावद्बलमावश्यक तावन्मात्रमुपयोक्तव्य मासीत्। स्वच्छन्देन व्यवहर्तुं भवन्त स्वतन्त्रा" इति॥

एतत्प्रतिवचन कञ्चुककोशे निधाय म्लानमुख सन्गृहमागमम्। अखिलमपि वृत्त मदग्रजाय न्यवेदयम्। स नितरा व्यषीदत्। किन्तु मामसौ कथ वा समाधत्ताम्। स्वमित्र-न्यायवादिभ्योऽपि कथमेतामाचष्ट। यदमुष्याधिकारिण उपरि व्यवहारेणाभियोगक्रम नाहमशा-सिषम्। एतत्कालमेव कमपि व्यवहारमुद्दिश्य सरफिरोजशामहेतामहाशयो राजकोटमागच्छत्। परन्तु मत्सदृशेन ब्यारिस्टर्जनेन कथमसौ द्रष्टव्य। अतोऽह तदाहायकन्यायवादिद्वारा प्रकृतसम्बद्धानि लेखपत्रादीनि तस्मै प्रेष्य बुद्धिवाद प्रार्थयम्। अथैव मे तेन सन्दिष्टम्।

'एवमिद बहुभिर्न्यायवादिभिर्ब्यारिस्टर्जनैश्चानुभूतचरमिति बोध्यता गान्धि। सोऽय निर्देशात प्रत्यग्रमागत। अपर च प्रत्यग्रप्रकृति। अथाप्यनभिज्ञोऽयमाङ्ग्लाधि-कारिणा स्वभावस्य। यद्यय कमपि द्रव्यकरणमुपार्ज्य सुखी बुभूषति तदा तत्पत्रमुत्पाट्य स्वापमानस्तेन निस्मर्तव्य। व्यवहाराभियोगेन परमनर्थापत्तिरेव न पुन कोऽपि लाभो भविता। जीवनानुभवस्तेनैतोऽध्यधिक सम्पादनीय इति कथ्यतामसाविति'॥

यद्यप्येषा बुद्धिवादगुलिका तदानीं विषवत्तिक्तमवेदनामजनयत्तथापि तन्निगिरणमन्तरा मम गत्यन्तराभावादपमानस्तावन्मया सोढ एव। परमिदमुपकारक मे सवृत्तम्। यदह-मात्मानमात्मनैवाबोधयम्—

"इत पर न कदाप्यहमात्मानमीदृग्दशा नेष्ये। नेत पर स्नेह निमित्तीकृत्य प्रयोजन मधिगन्तु यतिष्ये" इति। नियमोऽयमद्यावधि मया नोल्लङ्घित। एतदाघातवशान्मदीयजीवन-पद्धतिरन्यथा पर्यणसीत्॥

पञ्चमोऽध्यायः

# दक्षिणाफ्रिकाप्रस्थानसज्जीकरणम्

मया तदाधिकार्युपसर्पणं सर्वथा दोष एव। परन्तु तदीयाग्रहक्रोधगर्वानपेक्ष्य मदीयोऽपराध स्त्वाब्दल्पल्प आसीत्। न खल्वयं बहिर्निष्कासनमार्हीत्। पञ्चनिमिषाधिकं कालस्तदीयो मया न क्षपितः। तथापि मद्वचनोपन्यास एव तस्य दुस्सहोऽभवत्। गम्यतामिति सभ्यरीत्या वक्तव्यमुचितमासीत्। किंतु तस्याधिकारदर्पोऽत्यारूढ स्थितः। क्षमायास्तस्मिन्नामापि न श्रूयते स्मेति पश्चादवगतोऽस्मि। स्वपार्श्वमुपागतानां यदवहेलनं तन्निज तस्य साधारणो विषयः। अणुमात्रविपर्ययेणाप्यसौ रोषेण ज्वलति स्म॥

प्रायेण मम कार्याणां भूयिष्ठोऽशस्तदीयन्यायसभायामेव परीक्षणीयोऽभवत्। न्यायत स्तस्याधिकारिणः समाधानकरणं ममाशक्यमासीत्। तस्य प्रसादनाय नीचैः प्रह्वताश्रयणं न मेऽभिमतमासीत्। किं बहुना। व्यवहारेण त्वामभियोक्ष्य इति प्रथममेव भीषयित्वा पश्चात्तूष्णी मासिका न मे समञ्जसा प्रत्यभासीत्॥

अत्रान्तरे तत्रत्यराजकीयप्रपञ्चस्य कार्यगतिविशेषाणामनुभवो मया बहुशः समपादि। काठियावाडदेशस्य प्रायेणाल्पाल्पराज्यभूयिष्ठतया स्वभावादेव तत्र राजनीतिकुशलैर्भूयोभिर्भ वितव्यम्। संस्थानानां मध्ये परस्परं कूटनीतिप्रचारः सेवकजनानामप्यधिकारप्रेप्सयान्योन्य द्रोहचिन्तनमित्येतत्तदानीं सुप्रचरितमासीत्। राजानश्च मधुरवाचां कर्णेजपानां वचनमाकर्ण्य पराधीनप्रवृत्तयोऽभवन्। मुख्याधिकारिणः सेवकजनोऽपि लोकैः परितोषयितव्य आसीत्। तदी यनियुक्तानां प्रधानं शिरस्तदारापराख्य आगल्भ्यत स्वामिनमप्यशेत। यतः स एव निज स्वामिनश्चक्षुः। स एव तस्य श्रोत्रम्। स एव तस्य मुखम्। तस्येच्छैव सर्वनियामिका। तस्य द्रव्यादाय स्वामिनो द्रव्यायतेरप्यतिरिक्ततरः। नन्वत्र क्वचिदतिशयोक्तिः स्यात्। परन्तु तस्य वेत नाप्यधिकं आसीत्तदीयव्यय इत्यत्र न कोऽपि सन्देहः॥

वातावरणमिदं विषमयमन्वभवत्। एतदीयमस्पर्शं कथं वा परिहरेयमित्येव मे सार्वदिकी चिन्ताभवत्॥

एतनाद् परं स्वमनस्तापम्। इदं ममाग्रजोऽप्यक्षयत्। यत्र काप्युद्योगलाभे तद्द्वीकरणेन मयादितः प्रपञ्चाद्विमुक्तिः स्यादित्युभावचिन्तयाव। विनयप्रदानं विना प्रधानसाचिव्यं वा न्यायाधीशपदं वा कथं लभ्यते। मुख्याधिकारिणा सह कलहप्रसङ्गान्मम व्यवहारेषु हानि रुदपद्यत॥

तदानीं पोरबन्दरसंस्थानमाङ्ग्लसाम्राज्येन नियमितस्याधिकारिणः शासने स्थितम्। तत्रत्यराणाप्रभोरधिकारवृद्धये मया प्रयत्नः करणीय आपतितः। मेराख्येभ्यस्तत्रत्यकृषीवलेभ्योऽप्यधिकं करो गृह्यते स्म। अस्मिन्विषयेऽपि मया (अॅडमिनिस्ट्रेटर इत्येतदाख्य) शास्तिकर्ता द्रष्टव्योऽभवत्। सोऽधिकारी देशीयोऽप्याङ्ग्लाधिकारिणः दर्पतोऽतिशयान इवालक्ष्यत। स च स्वकार्ये विचक्षणः परन्तु तदीयकार्यकौशलात् कृषिकाणां न कोऽपि लाभः समजनि। राणाप्रभोरधिकारस्य कश्चिद्वृद्धिप्रापणे मम प्रयत्नः सफलोऽभवत्। किंतु कर्षकसार्थस्य भारो न लघूकृतः। तदीयकष्टविचारो यथावदधिकारिणा न पर्यशोधीति मन्ये॥

एवं च प्रसक्तविषये श्रमानुरूपं फलं मया न लब्धम्। मदीयपक्षार्थिना च न्यायलाभो नासिष्यत्। तदर्थं न्यायसम्पादनाय यत्किमपि साधनं मयि नासीत्। बहुकृत्य 'पोलिटिकलएजेण्ट'-इत्येतदाख्यराजकार्यप्रतिनिधेर्वा 'गवर्नर' इत्येतदाख्यराजप्रतिनिधेर्वा सन्निधाने प्रार्थनापत्रं समर्पणीयमासीत्। एवं कृतेऽपि 'वयमत्र प्रस्तावे न हि प्रवेक्ष्यामः' इति तेनाधिकारिणा विलिख्य प्रार्थनापत्रं निरकासयिष्यत। एवंविधार्थनिर्णयं कमपि शासननियमं प्रमाणीकृत्य यदि क्रियते तदा स साधुरेव स्यात्। परन्त्वत्र तस्याधिकारिणः स्वेच्छैव नियामिकाऽभवत्। ततो विनष्टक्षान्तिरहं सवृत्तः॥

अत्रान्तरे पोरबन्दरवर्ती वणिक्सार्थ एको मदग्रजस्य पत्रमेवं व्यलिखत्—

"वयं दक्षिणाफ्रिकादेशे वाणिज्यकर्तारः। अस्मदीयो व्यापारः परमूर्जितो भवति। तत्रास्माकमेको महाव्यवहारः प्रवर्तते। चत्वारिंशत्सहस्रसुवर्णमुद्रासाध्यकोऽयं व्यवहारस्तत्रत्यन्यायसभायां प्रवेशितोऽस्माभिः। स च बहुभिर्दिनैः प्रचलति। परमघटका न्यायवादिनो ब्यारिस्टर-जनाश्च तदर्थेऽस्माभिः स्थापिता भवन्ति। भवदीयमनुजं यदि भवन्तः प्रेषयेयुस्तदा नस्तेन बहूपकृतं स्यात्। सोऽप्यानुकूल्यमाप्स्यति। स खल्वस्मदपेक्षया व्यवहारसम्बद्धान्विषयानस्मदीयन्यायवादिभ्यः स्पष्टतरं व्याख्यायात्। किं चास्य नवीनदेशदर्शनं च सेत्स्यति नूतनपरिचयश्च सम्पत्स्यत इति॥

अस्य कृते मदग्रजो मया सार्धममन्त्रयत। प्रस्तुतोऽर्थो न हि मया स्पष्टमबोधि। व्यवहारमधिकृत्य न्यायवादिषु विषयनिरूपणमात्रं मया कर्तव्यमुताहो न्यायसभायामपि ममोपस्थातव्यमित्यहं नाज्ञासिषम्। तथापि गमनोत्साहो मामग्रहीत्॥

'दादा'-अब्दुल्ला-वाणिज्यशालाव्यवस्थापकानामेकतमः शेठ-अब्दुल्-करीम-झवेरीमहाशयः मदग्रजेन मां पर्यचाययत्। स च श्रेष्ठी महाशय न्यवेदयद्यथा—

"भवद्भिस्तावदतिश्रमो न बोढव्यो भवति। सन्ति नः सुहृदो महान्त ऐरोप्यजनाः। तैः सहापि परिचयो वः सम्पत्स्यते। अस्मद्विपणिकार्येऽपि साहाय्यं कर्तुं भवतामवकाशो भविष्यति। अस्मदीयपत्रव्यवहाराणां भूयिष्ठो भाग आङ्ग्लभाषामयो वर्तते। तत्सम्बद्धकार्येऽस्माकं भवद्भिरपि

कर्तुं शक्यते। युष्मन्निवासायास्मदीयहर्म्यान्तर एव वसतिः परिकल्प्यते। तस्माद्वसतिनिमित्तव्यय-भारो युष्मदुपरि न पतिष्यतीति॥

अथाहमपृच्छम्—

'कियन्ति दिनानि मया च सेवा कर्तव्या। कियद्वेतनं मे प्रदीयत इति।'

"समयस्तावदेकवत्सरं नातिवर्तेत। युष्मदीयगतागतस्य प्रथमश्रेणीभाटिका प्रदीयते। किञ्च भोजनोपहारव्ययेन सह पञ्चोत्तरशतं सुवर्णमुद्राश्च प्रदीयन्ते"।

तदेतदुद्दिश्य मदीयगमनं न खलु न्यायवादिकार्यार्थमिति वक्तुं शक्येत। तद्धि केवलं तदीयनिपुणभृत्यत्वस्वीकारार्थमेवेति स्पष्टम्। परं तु यथा कथा वा हिन्दुस्थानाद्बहिर्गन्तुमिच्छा मां नुदति स्म। गमनाच्च केवलं नवीनदेशदर्शनं नवनवानुभवश्च सिध्येतां परन्तु मदग्रजस्य कुटुम्बव्ययार्थे पञ्चोत्तरशतं सुवर्णमुद्राः प्रेषयितुं शक्यं भविष्यति। तस्मात्किञ्चिदप्यविनुस्तदुक्तवेतनेन तदीयकार्यमनुष्ठातुं प्रतिपद्य दक्षिणाफ्रिकादेशं प्रति प्रस्थातुं सज्जोऽभवम्॥

षष्ठोऽध्यायः

## नातालदेशप्राप्तिः

इङ्ग्लेण्डदेशं प्रस्थितेन मया यदनुभूतञ्च वियोगदुःखं तन्मे दक्षिणाफ्रिकादेशं गमिष्यतो मम नोदपद्यत। तदानीं मे जननी न हि जीवन्ती स्थिता। न केवलमहं लौकिकज्ञानसम्पन्नोऽपि तु प्राप्तदेशान्तरप्रयाणानुभवश्चासम्। राजकोटान्मोहमयीनगरं प्रति गतागतं नाम सामान्यो विषय आसीत्॥

इदानीं मे भाविभार्यया वियोगः केवलं मम व्यथाहेतुरासीत्। विदेशात्प्रत्यागतस्य मम द्वितीयः पुत्रोऽजनिष्ट। यद्यप्यावयोर्दाम्पत्यप्रीतिरत्यन्तमेव निर्विकारा नाभवत् तथापि यथाक्रमेण सा नैर्मल्यातिशयमाप्नुवन्ती स्थिता। विदेशात्परागमनोत्तरमावयोः सहावस्थितिः कालोऽत्यल्पः। शिक्षणं तावद्यथा वा भवतु परमहं स्वयमेव भार्यायाः शिक्षकोऽभवम्। किञ्चास्याः कतिपयसुधारणानां सिद्धये स्वयं साहाय्यमकुर्वासम्। यावदेतानि परिवर्तनानि सुनिष्पन्नानि स्युस्तावदप्यावयोः सहावस्थितिरावश्यकीयावामचिन्तयाव। परन्त्वाफ्रिकादेशाभिमुखं मम प्रसरिसृप्यमाणमनस्कतया वियोगो न दुःसहोऽभवत्। एकवत्सरान्ते पुनरावामन्योन्यमेव मिलिष्यावहे इति भार्यां सान्त्वयित्वा राजकोटान्मोहमयीनगरं प्रायासिषम्॥

अथ तन्नगरमासेदुषा मया तत्रत्यदादा-अब्दुल्ला-कम्पनी-प्रतिनिधिद्वारा प्रयाणानुज्ञापत्रमानाययितव्यमासीत्। प्रतिनिधिस्तु नौकायां स्थलाभावं मे न्यवेदयत्। यद्यहं प्रयाण-

मत्यश्च तदा वद्धहस्तेन मया मोहमयीनगरे तूष्णीमुपवेष्टव्यमापतिष्यत्। अथ प्रतिनिधि प्राह— प्रथमश्रेण्या युष्मदर्थे स्थलं सम्पादयितुमहं सर्वात्मना यत्नमकरवम्। तथापि प्रयाणपत्रं नाळभ्यत। यदि नौकानाह्याशालामध्यासितुं भवतोऽनुमन्यन्ते तर्हि शोभनमेव सम्पन्नम्। भोजनाय 'सलून' शालायामेव स्थलं कल्पयितुं शक्यत इति। तदानीं हि मया प्रथमश्रेण्यामेव प्रयाणं क्रियते स्म। स्वयं व्यारिस्टरजनो भूत्वा नौकानाह्याशालायां कथं वा पथिकत्वमङ्गीकुर्वीय। तस्मादहं नान्वमंसि। तस्य प्रतिनिधेर्वाक्यं यथार्थं वा मृषा वेति सशयोऽप्यजनि। न हीद मे श्रद्धेयमासीद्यत्प्रथमश्रेण्यामपि स्थलमन्यस्य पथिकस्येति। अथास्यानुमतिं प्राप्य स्थलान्वेषणाय स्वयमहं प्रास्थिषि। नौकामारुह्य तन्मुख्याधिकारिणमद्राक्षम्। स च प्रफुल्लमानार्जवेन मामवदत् यथा — "अयं यात्रैतावाञ्जनसम्बाधो न विद्येत। मोझाम्बिकादेशस्य राजप्रतिनिधिरनयैव तरण्या प्रयास्यतीति निरवकाशा हि नौः सवृत्ता" – इति॥

यथाकथं चिदास्पदं मम किं न देयं स्यादित्यहमपृच्छम्। अधिकारी तु मामाशिरःपादाङ्गुष्ठं निभाल्य स्मयमानः प्राह—

अस्त्येक एवोपायो विद्यते। मदीयकोष्ठेऽन्यस्यैकस्यास्पदमस्ति। तच्च प्रायेण पथिकस्य न भवति। तथापि भवद्भ्यस्तत्प्रदास्यामीति॥

अहं प्रमुदितोऽभवम्। अनुगृहीतोऽस्मि श्रीमद्भिरित्येनमभिनन्द्य प्रतिनिधये यथावस्तु तन्निवेद्य प्रयाणपत्रमानीनयम्। निनवत्युत्तराष्टशताधिकैकसहस्रतमस्य ख्रैस्तशकाब्दस्य चतुर्थे मासे निजभाग्यपरीक्षणाय दक्षिणाफ्रिकादेशं प्रति महीयसोत्साहेन प्रायासिषम्॥

अस्माभिः प्रथमं लामुनामकं नौकाबन्धनस्थानमासादितम्। तत्प्राप्तुमुपत्रयोदशदिवसा व्यपेक्ष्यन्त। अत्रान्तरे नौकामुख्याधिकारी मम परमः सखा सवृत्तः। तस्य चतुरङ्गक्रीडा स्पृहणीयाभवत्। क्रिन्त्वस्यास्तेनाऽपि प्रत्यग्रशिक्षितत्वेऽपि ततोऽप्यनभिज्ञतरेण मया सह तस्य क्रीडितव्यमापतितम्। अत स मां खेलितुमाह्वयत्। यद्यपीयं क्रीडा मया नाभ्यस्तपूर्वा तथाप्यत्र बुद्धिकौशलप्रदर्शनावकाशास्पदमस्तीति क्रीडितॄणां मुखादाकर्णितम्। तां मुख्याधिकारी मां शिक्षयितुमन्वमस्त। अहं चास्य सच्छिष्योऽभवम्। अपरिमेया हि मे क्षान्तिशीलता। बारंबारं मह्यमेव पराजयमदापयम्। अत एव मां शिक्षयितुमस्योत्साहः परमर्धत। एतत्खेलने ममाप्यभिरुचिः समजनि। किंतु सैषाभिरुचिस्तरण्यामेवान्तमगमत्। क्रीडाकुशलता च मदीया राजराज्ञीप्रभृतयक्षाणां चालनक्रमज्ञानमात्रे विश्रान्ताभवत्॥

लामुनाम्नि बन्धनस्थाने नौका त्रिचतुरहोरापर्यन्तमस्थात्। ग्रामावलोकनार्थमुत्तीर्णोऽहमभवम्। मुख्याधिकारी प्रागेवावतीर्य स्थितः। स च मां प्राबोधयत्—स्थानेऽस्मिन्धिरावस्थानं नाति श्रद्धेयम्। अतो झटिति परावर्तनीयमिति॥

अत्यल्पोऽयमासीद्ग्रामः। तत्रत्यपत्रप्रेषणाधिकरणमन्दिरमगमम्। तत्र यदृच्छया भारतीयमाणवकैः परमहर्ष्यम्। तेन साकं मयाऽऽलापमकरवम्। तत्रामिकादेश्यानपि जनानपश्यम्।

तदीयरीतिनीतिपरिज्ञानाय प्रयत्नमकार्षम् । तत्र मे पर कौतूहलमासीत् । सर्वस्यास्यकृते कियानपि कालो गत ॥

मम परिचिता केचन नौकावाहशालाश्रयिण पथिका पूर्वमवतीर्णा स्वत पाक निष्पाद्य कृताहाराः शनैस्तरणिमुपगन्तु सन्नीभवन्ति स्म । अहमेतानवलोक्य तैरेव साकं द्रोणी-मारुह्य प्रास्थिषि । नौकाबन्धनस्थाने जलधिरत्यारूढोऽभवत् । अस्मद्द्रोण्या भारस्तद्द्रोणीयोग्यता मतिक्रम्य स्थित । द्रोणीरज्जा नौकाधिश्रयिणीं बन्धयितुं प्रवाहरभसादशक्यमभूत् । यावद्द्रोणी निश्रेणिकामुपासर्पत्तावत्प्रवाहस्ता दूरमपाकर्षत् । अथ वृत्त प्रस्थानसूचक प्रथमशिञ्जितं च । अहमुद्भ्रान्तोऽभवम् । उपरिष्टान्मुख्याधिकारी परिस्थितिमस्मदीया प्रेक्षते स्म । स च पञ्चनिमिष कालमात्रं नौकाविधारणमाज्ञापयत् । निकट एवान्या द्रोणी स्थिता । तामेना मदर्थे सुहृदेको दशरूप्यकैर्भाटयित्वा स्वीकृतवान् । मामस्या दुर्वहभारवाहिन्या द्रोण्या अवातारयन् । तानत्रोपरिष्टान्नौकाधिरोहिणी समुत्क्षिप्यापनीताभवत् । तस्मादह रज्ज्वालम्बनेनोपर्यारूढोऽभवम् । तत्क्षणमेव नौका प्रचलिता । इतरे पान्था. पश्चादवास्थिषत । प्राङ्मुख्याधिकारिणा कृतस्य ' प्रबोधनस्य रहस्यमिदानीं मया विदितमासीत् ॥

लामुग्रामान्मो'म्बासा' ततो 'झाझीबार'स्थल च क्रमेणासादयाम । इह चिराय — अष्टा दशदिवसपर्यन्त — स्थातव्यमभूत् । इतश्चान्येन नौकायानेन प्रायासिषम् ॥

मुख्याधिकारिणोऽहमतिशयितप्रेमपात्रमासम् । परन्त्वेतदसाधुरूपमालम्बत । स किल मामा-ङ्ग्लमित्रमेकं च स्वेन सह विहरणाय समाह्वयत् । त्रयो वय मुख्याधिकारिणो द्रोणीमारुह्य तीरमासादयाम । तदेतद्विहाररहस्यस्याहमत्यन्तमनभिज्ञोऽभवम् । अह तावदीदृग्विषयस्फूर्तिशून्य इति कथं वा मुख्याधिकारी जानीयात् । कश्चन माध्यस्थकारोऽस्मान्नीग्रोस्त्रीमन्दिरमेकमनैषीत् । तत्र च प्रति स्वमेकमेक कोष्ठ प्रावेशयत् । अह लज्जया विषादेन च तूष्णीमस्थाम् । हन्त सा वराकी तरुणि कीदृशं मा मन्यतेति भगवानेव जानाति । मुख्याधिकारिणा पुनराहूतमात्र एव यथा यथान्तर्गत तथैव बहिर्निरगच्छम् । स हि तदा मदीयसाविकत्वमजानात् । अहमादौ भृशमव-मानितमात्मानममंसि । इदं च स्मारं स्मारमह जुगुप्सामगम् । एतेन मदीयचारित्रस्याव मानभयत्वभावना प्रभूष्णुतराभवत् । एना सहोदरीं दृष्ट्वा मम मनसि विकारलेशस्याप्यनु-दयाद्भगवन्तमहमस्तौषम् । आमनो मनोदौर्बल्यमनुचिन्तयत· स्वस्मिन्नेव कुत्सा समजनि । आहूयमान कोष्ठान्तर्न हि प्रविशामीति वक्तुमधीरोऽहमासमिति स्वयमात्मनोऽनुकम्पनीयोऽभवम् ॥

मम जीविते तृतीयवारमित्थमहं दैवेन परीक्षित । एव मृषाऽञ्जया यद्भिर्निष्कलङ्कै रपि पुरुषाजनैर्न्यपमाद्वृत्तैर्भवितव्यम् । मम तावदुन्मार्गगमनान्निवृत्तिर्न खलु पुरुषप्रयत्नात् । यद्येष्टाम्यन्तरं नाह गमिष्यामीति यदि निश्चिनमेवाहमवक्ष्यं नून तदा दुर्मार्गपतनात् स्वप्रयत्नेनै-वात्मानमहमरक्षमिति कथनीय स्यात् । करुणामयो भगवानेव मा पापादस्मरक्षदिति वक्तव्यम् ।

न केवलमेतद्वृत्तादीश्वरे मम श्रद्धा दृढतमापन्नापितु मृषाह्रिय· परित्याग बहुशोऽहम शिक्षिषि ॥

अस्मिन्नौकानिवेशस्थले सप्ताहपर्यन्तमवस्थातव्यत्वाद् ग्रामस्यान्तरेक मन्दिर भाटकेना-ग्रहीषम् । नगरे तत्परिसरप्रदेशे च सम्यक् परिक्रम्यावेक्षिषि । झाञ्झीबारनगरवर्तिना समृद्ध-सस्यादीना रामणीयकमभ्यूहितु सन्दर्शमन्तरा पत्तनानामेव जनाना शक्य स्यात् । तत्रत्यद्रुमाणा महत् परिमाण बृहन्ति फलानि चावलोकयतो ममाश्चर्यमजायत ॥

तत प्रस्थाय 'मोझाम्बिक'स्थल प्राप्य 'मे' मासान्ते नाताल्देशमासादयाम ॥

सप्तमोऽध्यायः

# केचिदनुभवाः

'डरबन' इति नाताल्देशे समुद्रतीरोपनिविष्टमेक नगरम् । इदं जना 'पोर्ट नाताल' इत्यपि कथयन्ति । मा नेतुमब्दुल्लाशेठमहाशयो नौकानिवेशस्थानमागमत् । नौकाया बन्धन-मण्डप प्रापितायामह स्वस्वमित्राणा निनीषया नौकामारुह्योपसर्पतो जनानवलोकयन्निहत्य भारतीयै सह लोका गौरवेण न व्यवहरन्तीत्यज्ञासिषम् । न किञ्च मयेद न प्रत्यक्षीकृत यदब्दुल्ला-शेठमहाशयस्य परिचितास्तत्सन्निधावात्मन प्रकृष्ट मन्यतामिवाविष्कुर्वन्त स्थिता इति । इद मे मानसमव्यथयत् । शेठमहाशयस्य तु स्वात्मान प्रत्यन्येषामेवविधा प्रवृत्तिरभ्यस्तचरी । मत्प्रेक्षका कुतूहलविशेष प्रदर्शयन्ति स्म । मदीयवेषकलापो हीतरभारतीयाना वेषेण सदृशो नासीत् । तदानीमह विदेशीयहस्वकञ्चुक वङ्गीयकटाहनिभमुष्णीष चाधारयम् ॥

अब्दुल्लाशेठमहाशयो मा स्वकीयविपणिमन्दिर नीत्वा स्वकोष्ठपार्श्वस्थिते मदर्थ सज्जीकृते कोष्ठागारे वसतिमग्राहयत् । आवामन्योन्यभावानभिज्ञा बभूव । स्वानुजेन मम हस्ते प्रेषितानि लेख्यपत्राणि वाचयित्वा स भूयो विस्मितोऽभवत् । ममेह प्रेषण नाम गृहे पूजार्थमवस्थापनायैकगजस्य प्रेषणमित्यालक्ष्यत । मदीयो वेषो मदीया जीवनरीतिश्चेरोप्यजनस्येव बहुव्ययकरौ तस्य प्रत्यभाताम् । मद्योग्यो नियोग कोऽपि सद्य प्रदेयो न स्थित । तदीयव्यवहार'ट्रान्स्वाल'देशे प्रचलति स्म । तत्र सद्य एव मत्प्रेषण न सङ्गतमासीत् । मम योग्यता प्रामाणिकत्वा च कीदृशीति ननु प्रागवग तव्यम् । मदीयचर्या पर्यवेक्षणाय राजधान्या प्रिटोरियानगरे मदर्थमावासपरिकल्पन निरार्यमासीत् । तन्नगरमेव हि प्रत्यर्थिना निवास । यद्यमी कदाचिन्मामनुप्रविश्य वशीकुर्युस्तदा किं करणीयम् । प्रसक्तव्यवहार-भारो न चेन्मयि निवेद्येत तदा कुत्र वा यत्र कर्मण्यह नियोक्तव्य । लेख्यकमस्ताविताराणि

कार्याणि मदपेक्षया सम्यक्तरामनुष्ठातुमक्षमन्त । प्रमादकरणे तेषु दण्डनिपात शक्य आसीत् । मया तु कृते प्रमादे किं नु खलु कर्तव्यम् । एवं गते वस्तुनि व्यवहारसम्बद्धकार्येष्वनियुक्ते मयि मदवस्थापनं निरर्थकमेव स्यात् ॥

अक्षरज्ञानहीनोऽप्ययं दुल्लारोठमहाशयः सुतरामनुभवज्ञानसम्पन्नोऽभवत् । कुशाग्रबुद्धिरसौ स्वशक्तिं स्वयमवेदीत् । आङ्ग्लभाषाज्ञानमपि सव्यवहाराय यावदावश्यकं तावदनेनाभ्यास-वशात्सम्पादितमासीत् । तावतानुगृहीतं स नर्थनिक्षेपस्थानेषु 'बेंक' इत्यादिषु नियुक्तैस्तत्कार्य-निर्वाहकैः सह द्रव्यादानप्रदानादि व्यवहारानरोप्यवणिग्भिः सह क्रयविक्रयादि व्यापारान् न्यायवादिभिः सह व्यवहारविषयप्रस्तावांश्चेत्येतदादीनि समस्तान्यपि कार्याण्यसौ निरवर्तयत् । भारतीयास्तं महता गौरवेण पश्यन्ति स्म । तस्यापणो भारतीयजनस्यापणेषु महत्तम । अथवा महत्तमानां तदीयापणानामयमेकतम । एवंविधानुकूल्यसम्पत्तियुक्तस्यापि तस्य शेठमहाशयस्य दोष एको वक्तव्य । स हि परं संशयालुप्रकृतिरासीत् ॥

स किल 'इस्लाम'मताभिमानी । तन्मत धर्मस्य व्यतिक्रमानुद्दिश्य कथालापप्रसङ्गस्तस्य बहु प्रिय । अरबीभाषानभिज्ञोऽप्ययं 'कुरान'वेदशास्त्रे प्रायेणेस्लाममतधर्मसम्बद्धनिखिल साहित्येऽपि सुश्लाघ्यपरिश्रमोऽभूत् । दृष्टान्तास्तु तदीयजिह्वाग्रे नर्तनमकुर्वन् । तत्सङ्गादहमिस्लाम मतीयव्यावहारिकज्ञानं बहुधा सम्पादितवान् । सञ्जातसम्यक्परिचययोरावयोरत्यायता धर्म जिज्ञासा प्रचरन्ति स्म ॥

दरबननगरप्राप्त्यनन्तरं द्वितीये तृतीये वा दिवसे स मां तत्रत्यन्यायसभामनैषीत् । तत्र मां कतिपयजनैः परिचाय्य स्वकीयन्यायवादिनः पार्श्वे समुपावेशयत् । न्यायाधिपतिर्मामेवाभिलक्षयन् पगीयमानमुष्णीषं इत्याज्ञापयन् । तयाऽर्तमहमनिच्छन्न्यायसभां विहाय निरगच्छम् ॥

अत्रापि कलहप्रसङ्गो मदीयभाले लिखित । केचिद्भारतीयाः किमित्युष्णीषापनयन मिषमादिश्यन्त इत्यत्रदुल्लारोठमहाशयो मे व्यवेदयत् । परिहित'मुस्लीम'वेषाणां 'मुस्लीम-शिरोवेष्टन'धारणमनिषिद्धम् । परं तु भारतीयैरन्यैर्न्यायसभां प्रविशद्भिरेव शिरोवेष्टनमपनेतव्यमे-वाभवत् ॥

एतत्सूक्ष्ममेदस्य तत्त्वावबोधनात्पूर्वं केचिद्वृत्तान्ता सविस्तरमुपवर्णयितव्या भवन्ति । तत्रत्यभारतीया पृथक्पृथक्पक्षानाश्रित्य स्थिता इति द्वित्रैरेव दिवसैरहमज्ञासिषम् । 'मुसल्मान'-वणिजां पक्षस्तावदेक । तेऽपि किल 'अरब' व्यपदिशन्त । द्वितीयस्तु तत्सेवकवर्गाणां पक्ष । पारसीकवर्गाणां च पक्षस्तृतीय । हिन्दुरेव्यसैरसमेताखींयैः सह मिलितव्यमासीत् । अन्यधर्मोपानुमवनो भवा प्रसरन्ति स्म । पारसीकवर्गा स्वयमात्मानं 'पर्शियन'जातीयानाख्या-पयन् । इमे त्रयः पक्षा बहुधा सुदृढचित्ता मैत्र्यमाहरन् । अस्मात्पक्षत्रयादपि महीयानेव पक्ष आसीत् । स च द्राविडाध्रोत्तरहिन्दुस्थानीयकर्मकराणां समवाय । तेषां कर्मकराणामेके

प्रतिज्ञाबद्धा अन्ये प्रतिज्ञाबन्धमुक्ता । प्रतिज्ञाबद्धा नाम पञ्चवत्सरपर्यन्तं भृतिकर्मकर्तुं 'ॲग्रीमेण्ट' इत्यपराख्यां प्रतिज्ञामङ्गीकृत्य नाताल्देशमुपगताः कर्मकराः । 'ॲग्रीमेण्ट' इत्याङ्गल-शब्दस्यापभ्रंशो 'गिरमीट' इति । अत एवैषां कर्मकराणां 'गिरमीटिया' इत्याख्या प्रसिद्धाऽभवत् । एतैः सह पूर्वोक्तनैपक्षिका कार्यवशादेव केवलं व्यवहरन्ति स्म । न पुनरेषां विषये ममपि सम्बन्ध-मघटयन् । आङ्ग्लेयजना कर्मकरानेतान् 'कुली' इति व्यपादिशन् । किञ्चैषामितरभारतीयापेक्षया समसिस्मन्यास्त्वादखिलानपि भारतीयान्निर्दिशेयमेव 'कूली' इति 'सामी' इति सम बोधयन् । बहूनां द्राविडनाम्नामन्ते 'सामी' इति पदनिवेशस्य कारणमेतदेव । इदं सामीपदं स्वामीति संस्कृतशब्दस्य रूपान्तरम् । स्वामिशब्दस्यार्थस्तु स्वत्वोपेत पुरुष इति । 'सामि' इति सम्बोध्यमानश्चतुर यदोऽपि भारतीयस्तेन क्रुद्धश्चेदेवं प्रतिब्रूते स्म । यथा – भवतो मां सामीति सम्बोधयति । तस्य शब्दस्यार्थो यजमान इत्येतच्च भवद्भिर्विस्मृतम् । न खल्वहं वो यजमान इति । एतदाकर्ण्य केचिदेरोप्या वैलक्ष्यमाप्नुवन् । केचिदन्ये क्रोधपरवशा नितरामशपन् । अपरे तु सति सम्भवे तमताडयंश्च । सामीपदं हि तेषां मते यन्ततिरस्कारद्योतकमासीत् । यजमान इति तस्यार्थकल्पने सम्बोधयिता सुतरामवमानितः स्यात्खलु ॥

एभिः कारणैरहं 'कूलीब्यारिस्टर्' इति ख्यातिमागतः । वणिजः सर्वेऽपि 'कूलीवणिज' इत्याहूयन्ते स्म । एवं कुलीपदं मूलार्थलोपं प्राप्य तत्रत्यानामखिलभारतीयानां साधारण्येनैव सम्बोधनार्थकमकल्प्यत । मुसल्मानजातीयो वणिगेवं केनापि सम्बोधितश्चेदसौ क्रुद्धः सन्नाह-मस्मि 'कुली' परन्तु'अरबीय' इति मां वाणिजोऽहमिति वात्मानं स्थापयति स्म । आङ्ग्लजनस्तथा-सम्बोधयिता विनयसम्पन्नश्चेत् क्षमामभ्यार्थयत । एवमुष्णीषधारणवृत्तान्तः परं महत्त्वमापत् । अपनीते शिरोवेष्टने मानभङ्गः सोढव्य एवापतेत् । तस्मादहमचिन्तयम् — देशीयमुष्णीषं बहिष्कृत्याङ्ग्लशीर्षकस्य स्वीकारेण न केवलं मानहानिप्रसङ्गो न सम्भवेदपि तु तन्मूल-कलहो निगदश्च परिहार्यौ भविष्यत इति ॥

किन्त्वेतदब्दुल्लाशेठमहाशयो नानुमोदत । स निर्गत्यमब्रवीत् — एवंविधा भवदीय-प्रवृत्तिरनर्थहेतुरेव स्यात् । देशीयशिरोवेष्टनस्यैव धारणे बद्धाभिनिवेशानां गतिः कथं भविष्यति । भवता देशीयोष्णीषम् एव शोभते । यद्याङ्ग्लशीर्षकं भवन्तो धारयेयुस्तदा प्रेक्षका सर्वेऽपि युष्मानाङ्ग्लेयविश्रान्तिगृहनियुक्त 'व्वेटर' इति प्रसिद्धं परिचारकं मन्येरन्निति ॥

*अस्याः सूचनायां लौकिकज्ञानं स्वदेशाभिमानः क्वचित्सङ्कुचितदृष्टिप्रसङ्गश्च द्योतते स्म ।* तदन्तर्लौकिकज्ञानं तु सुदर्शमेव । देशीयोष्णीषम् एव धारणीयं इत्याग्रहोक्तिर्देशाभिमानमन्तरा न किञ्चित् सम्भाव्येत । परिचारकानिरीक्ष्य तिरस्कारवचनेन तस्य विशालहृदयाभावो व्यक्त आसीत् । भारतीयगिरमीटियेषु हिन्दुमुसल्मानक्रैस्तभेदेन विभागत्रयमवर्तत । क्रैस्तमतावलम्बिनां गिरमीटि-यानामपत्यानि चरमविभागप्रविष्टानि बभूवुः । त्रिनवत्युत्तराष्टशताधिकसहस्रतमे क्रैस्तशकाब्देऽपि तेषां सङ्ख्या सुबहुलैव स्थिता । एते सर्वेऽप्याङ्ग्लरीतिमेवानुसृत्य वस्त्रादिनेपथ्यमधारयन् ।

एषा भूयासो जना अतिथिमन्दिरेषु सेवावृत्तिमाश्रित्य काष्ठेन जीवन्ति स्म । एतानेव मनसि धृत्वा बदुल्लाशेठमहाशय आङ्ग्लशीर्षकधारण प्रवृत्य व्याख्यामुदटङ्कयत् । अतिथिगृहे सेवावृत्यवष्टम्भन न गौरवायेत्यगण्यत । अद्यापि बहूना मनस्ययमेवाभिप्रायो निरूढो भवति ॥

अबदुल्लाशेठमहाशयस्य बुद्धिवादो मम सर्वथानुमोदनीयोऽभवत् । मदीयशिरोवेष्टनमधिकृत्य न्यायसभाया यसवृत्त तदखिल वृत्तपत्रिकासु प्राकाश्य नीत्वा स्वस्य निरपराधितामह समर्थितवान् । तासु किलाय प्रश्नो बहुलर चर्चितोऽभवत् । वृत्तपत्रिका मामनिष्टागन्तुकोऽयमिति व्याख्यपयन् । इत्थमहं दक्षिणाफ्रिकादेशेऽवतीर्ण स्वल्पेनैव कालेन प्रख्यातिमागत । केचिन्मदीयपक्षमवालम्बन्त । अपरे केचिन्मा धूर्त इति बलवदनिन्दन् ॥

मदीयशिरोवेष्टन दक्षिणाफ्रिकादेशे यावदह स्थितस्तावन्मन्निकट एव प्रायेण स्थितमभूत् कदा वा किं निमित्त वा तस्य धारण तद्देशे परित्यक्तमित्येतदग्रे स्पष्टीभविष्यति ॥

## अष्टमोऽध्यायः

# प्रिटोरियानगरं प्रति गमनम्

डरबननगरवर्तिभि क्रैस्तमतावलम्बिभिर्भारतीयै सह शीघ्रमेव मे परिचयोऽजायत । तत्र न्याय सभाद्विभाषिण पॉलमहाशया 'रोमनकॅथलिक'सम्प्रदायानुवर्तिन आसन् । तत्परिचय 'प्रोटेस्टण्टमिशन'शालाशिक्षकाणा सुभान–गॉडफ्रेमहाशयाना परिचय च समपादयम् । एषा पुत्रो जेम्स–गॉडफ्रेमहाशयो व्यतीतवत्सरे हिन्दुस्थानमागत्य दक्षिणाफ्रिकादेशे भारतीयप्रतिनिधीनामेकतमोऽभूत् । एव तत्कालमेव पारसी रुस्तमजी-आदमजीमियॉखान इत्याख्ययो पुरुषयोरपि परिचयो जात । एतानि मित्राणि कार्यवेला विना नान्यदा क्वापि परस्परममिलन्त । तेषामन्योन्यसमागम क्रमेण यथा समवर्ततेत्यग्रे निरूपयिष्यते ॥

इत्यमुपचीयमानपरिचये मयि दादाअबदुल्लाकम्पनीसङ्घस्य न्यायवादिन सकाशादेक पत्रमागतम् । तत्र क्षेत्र निरूपितमासीद्व्यवहाराय युष्माभि सज्जीभवितव्यम् । अबदुल्लाशेठमहाशयेन वा तदीयप्रतिनिधिना वा प्रिटोरियानगरमागन्तव्यमिति ॥

अबदुल्लाशेठमहाशयस्तत्पत्र वाचयितु मे प्रदाय किं प्रिटोरियानगर भवन्तो गच्छन्तीति मामपृच्छत् । अथाहमवोचम्—व्यवहारविषय तावद्भवत्सकाशादवबुध्य प्रतिब्रूयाम् । न खल्विदानीं जाने यन्मया तत्र गतन कर्तव्यमिति । ततोऽसौ व्यवहारविस्तरो वर्ण्यतामिति निजलेखकमाज्ञापयत् ॥

व्यवहारविषयमवबोद्धु प्रवृत्तस्य ममैतद्विदितमासीद्यन्मया 'श्रीगणेशाय नम' इत्युपक्रम्य शिक्षापि प्रारम्भणीयेति । यदाह झाञ्जीबारनगरे स्थितवान्म्यहम् तदैकस्मिन्दिने

तत्रत्यन्यायसभायां प्रचलन्तं कार्यकलापमवेक्षितुमगच्छम्। तत्र कश्चनपारसीन्यायवादी साक्षिणमेकमायव्ययगणनालेख्यमादाय प्रतिप्रश्नान् पृच्छति स्म। तदेतन्न किञ्चिदप्यहं ग्रहीतुमशक्नवम्। न खलु मया पाठशालायां वा विदेशावस्थितिकाले वायव्ययगणनाप्रसङ्गो मया शिक्षितः॥

दक्षिणाफ्रिकादेशे मया कर्तव्यतया यन्निर्दिष्टं व्यवहारकृत्यं तदखिलमप्यायव्ययगणनासम्बद्धमेवासीत्। तादृशगणनाभिज्ञा एव तद्व्यवहारतत्त्वमवगन्तुं बोधयितुं चाक्षमन्त। आयोऽयं व्ययोऽयमिति यथा यथा लेखको मे न्यवेदयत्तथा तथा मदीया बुद्धिरमोमुह्यत। 'पि नोट' इत्येतदर्थस्याहमनभिज्ञ आसम्। सैव शब्दः शब्दकोशे न हि मया दृष्टः। मदीयामज्ञतां लेखकाय न्यवेदयम्। 'पि नोट' इत्येतत् 'प्रॉमिसरीनोट' इत्यस्य संक्षिप्तरूपम्। तस्यार्थश्च वाग्दानपत्रमिति तन्मुखादज्ञासिषम्। आयव्ययगणनानिरूपकं पुस्तकमेकं क्रीत्वापठिषम्। ततश्चात्मनि मनागिव श्रद्धा समजनि। व्यवहारवस्तुनः स्वरूपमग्रहीषम्। अब्दुल्लाशेठमहाशयो यद्यपि गणनालेख्यस्वरूपानभिज्ञस्तथाप्यायव्ययसम्बद्धानतिजटिलानप्यर्थान् स्वस्य व्यावहारिकज्ञानसम्पत्त्या झटिति विशदीकर्तुमशक्नोदिति मया प्रत्यक्षीकृतम्। अथाहमेनमवोचम्—प्रिटोरियानगरं गन्तुमहं सज्जोऽस्मीति। तत्र भवद्भिः क्व स्थीयत इति शेठमहाशयो मामपृच्छत्। यत्र मया स्थातव्यमिति श्रीमद्भिरादिष्टं तत्रैवेत्यहमवोचम्। अथासौ पुनराह स्म—बाढम्। अस्मदीयन्यायवादिने पत्रमेकं लेखितास्मि। स च भवतां तत्र निवासं कल्पयिष्यति। प्रिटोरियास्थमदीयमेमण्मित्राणामपि लेखिष्यामि। परन्तु तत्सहवासो भवतामनुचित इति मे प्रतिभाति। प्रतिपक्षीया प्रिटोरियानगरे प्रबला भवति। अस्मदीयान्यैकान्तिकलेख्यपत्राणि यदि कदाचित्तेषां यस्य कस्यापि हस्ते निपतेयुस्तदास्मद्व्यवहारस्य महाननर्थः सम्भवेत्। तस्माद्वरं भवद्भिस्तैः साकमतिपरिचयः परिहर्तव्य इति॥

ततोऽहमवोचम्—

युष्मदीयन्यायवादिना यत्र मे वसतिः परिकल्प्येत तत्राहं निवत्स्यामि। अथवा स्वयमेव स्वयमन्विष्य वसतिं ग्रहीष्ये। भवन्तोऽत्र निश्चिन्ता भवन्तु। द्वयोरावयोर्यद्रहस्योऽर्थस्तं खलु न कस्यापि प्राणिनः प्रकाशयिष्ये। किन्तु प्रतिपक्षीयाणां परिचयमहं सम्पादयितुमिच्छामीत्येतत्सत्यमेव। तैः सह मैत्रीमपि कर्तुमिच्छामि। सति सम्भवे न्यायस्थानाद्बहिरेव व्यवहारं व्यवस्थापयितुं यतिष्ये। ननु तैयबशेठमहाशयो भवतां बन्धुरेवेति॥

प्रत्यर्थी दिवङ्गतः शेठतैयबहाजीखानमहम्मदमहाशयः श्रीमदब्दुल्लाशेठमहाभागस्य समीपसम्बन्ध्यासीत्॥

सन्धानरचनोपन्यासं मन्मुखादाकर्ण्य शेठमहाशयः किञ्चित्त्रस्त इवालक्ष्यत। किन्तु डरबननगरमागतस्य मम षट्सप्तदिनानां व्यतीतत्वादन्योन्यस्वभावपरिज्ञानमावयोः क्रमेण जायते स्म। नाहमिदानीमश्रद्धास्पद आसम्॥

अथ शेठ महाशयेनोक्तम्—

हा आ .आ। सन्धानापेक्षया प्रशस्यतर उपाय कोऽपि नास्ति। किन्त्वावयो समीपवन्ध्यव्यवशादन्योन्यचित्तपरिज्ञान सम्यगस्ति। तैयबशेठोऽयं न खलु सन्धान झटित्यङ्गीकुर्यात्। अपि चास्मासु मनाक् प्रमत्तेषु सर्वप्रकारैरस्मदनुमतिं सम्पाद्य पर्यन्तेऽस्मानेव गर्ते निपातयेत्। अतो भवद्भि सर्वकार्येष्वपि द्विरालोच्य प्रवर्तितव्यमिति॥

ततोऽहं प्रत्यवोचम्—

अल विचिन्त्य। व्यवहारमधिकृत्य तैयबशेठमहाशयेन वा येनाप्यन्येन वा विशेष भाषणप्रसङ्गस्तावत् कोऽपि नास्ति। एतावन्मात्रमहं तस्य सूचयितुमिच्छामि यदन्योन्यमेव स्वय सन्निमाकलय्य न्यायवादिना घस्मरमुखेषु द्रव्याहुतिक्षेपो वर व परिहर्तव्य इति॥

आगमात्सप्तमे वाष्टमे वा दिवसे डरबननगरादहं निर्गतोऽभवम्। मदर्थं प्रथमश्रेणीप्रयाणपत्रमेकं क्रीतस्थापितमासीत्। शयनीयापेक्षाया तदर्थमन्यदनुज्ञापत्रपत्र शिलिङ्गपञ्चकेन क्रेतव्यमासीत्। अब्दुल्लाशेठमहाशयस्तादृशपत्रसम्पादनाय मा बलवदुपारुधत्। परन्तु स्वामिनिवेशाच्च दम्भादनिरव्यय कर्तुमनिच्छया च मया नेदमङ्गीकृतम्। अथ शेठमहाशयो मामेव प्राबोधयत्—

'इह तावन्निरूप्यताम्। नेद हिन्दुस्थानम्। देशस्यास्य रीतिरन्यादृशी। भगवदनुग्रहात्सम्पन्नसर्वसमृद्धिना न खलु कार्पण्यमाश्रयणीयम्। यद्यदावश्यक तत्तदवश्यमेव ग्रहीतव्यमिति॥

अहमस्य मदीयकृतज्ञतामाविष्कृत्य 'अल चिन्तया' इत्यवोचम्॥

धूमशकटी नातलदेशस्य राजधानीं मॅरित्सबर्गनगर रात्रौ नवघण्टानादनवेलाया-मासदत्। अत्र हि पथिकेभ्य शयनीयानि दीयन्ते स्म। धूमशकटाधिकरणनियुक्त कश्चन पुरुषो मामुपेत्य 'अपि शयनीयमपेक्ष्यते' इत्यपृच्छत्। 'मा तावत्। अस्ति मन्निकटे' इत्यहमचकथम्। सोऽपि निर्गत। अत्रान्तरे पान्थ कश्चिदुपेत्य मय्येव बद्धदृष्टिमैक्षत। "विवर्णोऽय जन" इति च मामवगत्यायमपरितुष्टोऽभवत्। अथ स बहिर्गत्वा द्वित्रानधिकारिण आनयत्। तेषा नैकोऽपि मामाभाषयत्। अन्य कश्चिदधिकारी मत्पार्श्वमुपेत्य 'बहिरेहि। चरमशकट प्रतिगच्छ' इत्यवोचत्। मन्निकटे प्रथमश्रेणीप्रयाणपत्रमस्तीत्यहमवोचम्। अथ सोऽवादीत्—'तत्तावदस्तु नाम। त्वया तु पृष्ठस्थशकटे गन्तव्यम्' इति। 'डरबननगरे शकटमेतदारूढ मा न कोऽपि न्यषेधत्। अहमस्मिन्नेव शकटे प्रयातुमिच्छामि' इत्यहमचकथम्। अथ स प्रतिवादी मा प्राह—'न शक्यम्। इतस्त्वया शकटादवतरितव्यम्। नो चेद्राजभटमाहूय त्वामवतारयिष्ये' इति। ततोऽहमवदम्—सोऽयमाहूयतां तर्हि। स्वयमेवाहं नैवावतरिष्यामीति। अथ राजभट आगत। स मां हस्तेनादाय गृहीत्वा बहिराकृष्य निरकासयत्। मदीयवस्तून्यपि बहि प्राक्षेपयत्। नाहमन्य शकटान्तर गमिष्यामीत्यवोचम्। प्रचलिता धूमशकटी। अहं पथिकमण्डप

गत्वा तत्रोपाविशम् । मदीया हस्तपेटी मन्निकट एव स्थिता । इतराणि तु मदीयवस्तूनि नाहमस्पृशम् । धूमशकटाधिकरणनियुक्तास्तानि स्वायत्तीचक्रुः ॥

तदानीं शैशिर कालः । दक्षिणाफ्रिकाखण्डस्योन्नतप्रदेशेषु शिशिरर्तौ शीतमतिमात्रमुल्बणं भवति । उन्नतप्रदेशवर्तिनि मॅरित्सबर्गनगरे शीतं दुस्सहमासीत् । मम दीर्घकञ्चुकं सम्भारान्तरमध्यगतोऽभूत् । तं मार्गितुमभीरोऽभवम् । मा कश्चिन्मे भूयोऽप्यपमानं कार्षीदिति । तदहं शीतेन कम्पमान उपाविशम् । तस्मिन् कोष्ठे दीपो न स्थितः । अर्धरात्रे पान्थः कश्चिदागमत् तस्मिन्मया साकमालपितुकामेऽपि मदीयमनसः परिस्थितिस्तदनुकूला नाभवत् ॥

अहं मदीयामितिकर्तव्यतां प्रत्यालोचयितुं प्रावर्तिषि । स्वाधिकारसमर्थनाय किमिह निवसेयं किमुत हिन्दुस्थानं प्रति निवर्तेयाहोस्विदपमानमुत्कटमपि सोढ्वा प्रिटोरियानगरं प्रति निवृत्य समाप्तव्यवहारकृत्यः स्वदेशं परावर्तेय । व्यवहारकृत्यं परित्यज्य पलायनं नाम भीरुलक्षणं स्यात् । मया प्राप्तः क्लेशः सर्वोऽपि बाह्यव्रण इव स्थितः । वस्तुतस्तु स एवान्तः प्रच्छन्नस्य वर्णद्वेषव्याधेर्बाह्यलक्षणमासीत् । वर्णद्वेषनिरसनाय मया यावच्छक्ति प्रयसितव्यम् । तत्प्रयत्नवशात्कदाचित्क्लेशसम्भवेऽपि स क्लेशः सोढव्यः । एतादृग्व्याधिनिवारणाय यावदावश्यकं तावन्मात्रमन्यायनिवृत्तये मया प्रयसितव्यम् । अत एवानन्तरगामिन्या धूमशकट्या मया प्रस्थातव्यम् इत्यहं निश्चयमकार्षम् ॥

परेद्युः प्रातरेवोक्तकार्यनिर्वाहकाय मुख्याधिकारिणे सविस्तरं तन्त्रीवृत्तान्तं प्राहैषम् । अब्दुल्लाशेठमहाशयं च तन्त्रीद्वारा विदितोदन्तमकार्षम् । स च तत्क्षणमेव गत्वा मुख्याधिकारिणमपश्यत् । स तु धूमशकट्यधिकरणसेवकानां पक्षमेव पर्यपोषयत् । किन्तु यथाहं मदीयगन्तव्यस्थलमनुपद्रुतं प्राप्नुयां तथा भवितानव्यामिव्ययोऽश्वनिकेतनस्वामी समादिष्टो भवनीयस्तावदकथयत् । अब्दुल्लाशेठमहाशयो मम यथावत्पर्यवेक्षणाय मॅरित्सबर्गनगरस्थभारतीयवणिग्जनानितरस्थलवर्तिनः सर्वांश्च तन्त्रीद्वारा समबोधयत् । मॅरित्सबर्गनगरस्था वणिजः शकटीस्थानमागत्य मामपश्यन् । तेऽमी स्वीयकष्टान्यखिलान्युपवर्ण्य मम यदनुवृत्तं तदेतन्नाश्चर्यमिति ब्रुवाणा मां सान्त्वयितुमयतन्त । किं च प्रथमद्वितीयश्रेण्योः प्रयातृभिर्भारतीयजनैर्योन-निह्नरेभ्यो गौराङ्गपथिकेभ्यश्चावश्यमेवोपद्रवः प्रतीक्षणीय इति न्यवेदयन् । इत्थमेतदनिष्टकथाश्रवणप्रसङ्गेनैवाहं समाविष्टोऽगाम् । अथ सायन्तनधूमशकटी समागता । तस्यां मदर्थं स्थलमेकं निश्चितमासीत् । डरबननगरात्प्रयास्यता यद्यपि न चिन्तितं शय्यासम्पादकं पत्रं तथाप्यधुना मया तदेतदक्रायि । धूमशकटी मां 'चार्ल्सटाउन' नगरमनीनयत् ॥

# अतिशयितक्लेशपरम्परा

धूमशकटी चार्ल्सटाउननगरं प्रातरासादयत्। तन्नगराज्जोहानिसबर्गपुरीमुपस्थायिनी धूमशकटी तदानीं न चलति स्म। सामान्येनाश्वरथेन प्रयाणं निर्वर्त्यमासीत्। आश्वरथप्रयाणानुज्ञापकं पत्रमेकं मन्निकटे स्थितम्। मॅरित्सबर्गनगर्यामेकाहविलम्बसम्भवेऽपि तदेतदप्रचर्यं नाभवत्। किं चाब्दुल्लाशेठमहाशयेन चार्ल्सटाउननगरस्थोऽश्वाधिकारी विलम्बनिमित्तं तन्त्रीद्वारा पूर्वमेव निवेदित आसीत्॥

किन्तु सोऽधिकारी मदुच्चाटनाय व्याजमेकमन्विष्यति स्म। अपरिचितोऽहं कश्चिदागन्तुक इति मामवगत्य भवदीयप्रयाणानुज्ञापकपत्रमिदानीं निषिद्धप्रचारं भवतीति मामवादीत्। तस्याहं समञ्जसमुत्तरमदाम्। तदीयमनोगतं कारणं न खलु शकटे स्थलाभावः। मदीयप्रयाणानुज्ञापकपत्रस्याप्रचर्यताख्यापनं तस्याभिप्रायस्ततोऽन्य एव। पथिकैः सर्वैरपि शकटाभ्यन्तर एवोपवेष्टव्यमासीत्। परन्तु मामयमधिकारी 'कुली'जनमपरिचितं च मन्यमानो गौराङ्गैरध्वनीनैः सह मदुपवेशनं कथमपि निवारयितुकामोऽभवत्।

'अग्रेसर' इत्ययमधिकारी व्यपदिश्यते स्म। प्रयाणकार्यदर्शित्वमेवास्य कृत्यमासीत्। रथवाहकस्य पार्श्वयोः पथिकद्वयस्योपवेशस्थलमासीत्। एकत्रायमधिकारी पूर्वमुपविशति स्म। तस्मिन्दिने तु शकटाभ्यन्तरे स्वयमुपविश्य निजं वाह्यपीठं मह्यमदात्। इदमन्यतमयाव्यमपमानकरं चेत्यहमज्ञासिषम्। तथापि वरं सोढव्योऽयमपमान इत्यात्मानमबोधयम्। बलादन्तःप्रवेशो न हि सम्भाव्यते स्म। कलहप्रसङ्गे तु रथो मां परित्यज्य प्रचलित एव स्यात्। एतेन परमेकं दिनं व्यर्थमतिवाहयितव्यमापतेत्। परं तु किं वा सम्भवीति भगवदेकवेद्यं भवेत्। इत्थमनुसन्धाय जाज्वल्यमानहृदयोऽपि विवेकशाली पुरुष इव शकटवाहकस्य पार्श्वे तूष्णीमुपविष्टोऽभवम्॥

त्रिवादनवेलामश्वरथः 'पारडीकोप'स्थलमुपासदत्। तदानीमयमग्रेसरो मयाध्यासितं स्थलमारोढुमभ्यलष्यत्। स किल धूमवर्तिसेवनाय सञ्जातकामोऽभवत्। प्रायेण निर्मलवायुसेवनाभिलाषुकेणापि तेन भवितव्यम्। तदसौ शाकटिकादेकं मलीमसं स्थूलशाटकमादाय पादविन्यासफलकस्योपरि तमास्तीर्य मामब्रवीत्—'सामी' (दास इत्यर्थे प्रयुज्यमानः शब्दः) त्वमस्योपर्युपविष्टो भव। रथवाहकस्य पार्श्वेऽहमुपवेष्टुमिच्छामीति। सैवावमानना न मे मर्षणीयाभवत्। अथ भयेन कम्पमानोऽहमवोचम्—त्वमेव मामत्र समुपावेशय। न्यायतः शकटाभ्यन्तरे मम स्थलप्रदेशमासीत्। तथाप्यवमानोऽयं मया सोढः। त्वमिदानीं बहिरुपविश्य धूमवर्तिसेवनकामस्त्वदीयपादमूले मामुपवेशयितुमिच्छसि किल। नाहमिदं सर्वथा मृष्येयम्। यदि त्वं मन्यसे तदाहमभ्यन्तर एवोपवेक्ष्यामीति॥

असमाप्तवचस्यैव मय्यसौ निकटमुपेत्य वज्रचपेटप्रहारं मे दत्वा हस्तग्राहं मामवरस्तान्निष्कासयितुं प्रायतिष्ट। मदीयपीठाभ्यर्णवर्तिनीरारक्षकटग्रीं शकटाङ्गं सुदृढमहमग्रहीषम्। करास्थिभङ्गेऽपि मुष्टिबन्धं नैव शिथिलयिष्यामीति मनस्यकरवम्। इतरे पथिका दृश्यमिदं प्रेक्षन्ते स्म। स तु मामाक्रोशमाक्रोशं कर्णं कर्णं च प्राहरत्। तथाप्यहं तूष्णीमेवास्थाम्। स तावद्बलवानासीत्। अहं पुनर्निर्बलो जनः। अथ जातानुकम्पाः केचित्पथिकास्तमवोचयन्—हन्त भो मुच्यतामयम्। न हि किञ्चिदपराद्धमनेन। स निजं यथार्थमाह। यद्यय तत्रोपवेष्टुं नानुमन्येत तदास्मत्पार्श्वेऽयमुपविशतु इति। तदेतन्नैव सम्भवतीति स उच्चैराक्रोशत्। तथाप्यसौ मनाक् लज्जितः मुखभङ्ग इवाऽभवत्। ततस्ताडनाद्विरम्य मम हस्तममुञ्चत्। अथ भूयोऽपि मां शकटचालकपार्श्वे समुपविष्टं "होटेण्टोट" इति व्यपदिश्यमानं दासमेकं स्वपादनिक्षेपस्थान उपवेष्टुमादिश्य तदीयस्थले स्वयमुपाविशत्॥

पथिका अन्तर्ग्यविशन्। सीत्कारशिञ्जनमश्रावि। रथश्च सनिर्घोषं प्राचलत्। मम हृदयं धड्धडिति प्रस्पन्दते स्म। अपि नाम गन्तव्यस्थलमहं जीवन्नवाप्नुयामिति चिन्ताकुलोऽभवम्। स पुरुषः पदे पदे कोपमयीं दृष्टिं मयि विकिरन् तर्जनीं प्रदर्श्य जागृहि जागृहि 'स्टॅंडरटन' नगरमनेतुं पुरस्तव किं करिष्यामीति ततो व्यतीमन्विष्यतीति वदन्मामतर्जयत्। अहन्तु जोषमासीनः पाहि मां परमात्मन्निति भगवन्तं प्रार्थनामकरवम्॥

प्रदोषानन्तरं स्टॅंडरटननगरं वयमासादयाम। तत्र कांश्चिद्भारतीयानां मुखान्यवलोक्य दीर्घं निश्वासममुञ्चम्। ततोऽवतीर्णं मामुपेत्य ते सुहृदः प्राहुः—वयमीसारोठमहाशयानामापणं वो नेतुमिहागताः स्म। तथा हि तन्त्रीसन्देशोऽस्माभिरवडुम्बाठमहाशयेभ्यः प्राप्त इति। अहं प्रहाससहृदयम्। वयमीसा-हाजी-सुमारशेठमहाशयस्यापणमगच्छाम। तत्र शेठमहाशयस्तदीयसेवकाश्च मां पर्यवारियुः। मयानुभूतमखिलं तेभ्यो न्यवेदयम्। तदाकर्ण्य ते सुतरां खिन्ना स्वैरप्यनुभूतचराणि सदृशानि सदृष्टान्तं मामन्वाश्वयन्॥

तत्रयप्रयागशकटीमहत्स्वाधिकारिणं विदिताखिलवृत्तं विधातुमिच्छन् तत्सर्वं सविस्तरमुपन्यस्य तदीयकिङ्करेण कृतं तर्जनताडनादिकं परेद्युः प्रातः प्रयास्यन्त्यां शकट्यामन्तरेवान्यैः पथिकैः सहोपवेशयितुं प्रतिज्ञातव्यमिति पत्रमलेखिषम्। स चाधिकारी प्रत्यवोचत्—स्टॅंडरटननगरादेका महाशकटी प्रवर्तते। शाकटिकादिपरिकरस्तत्रोऽप्यन्यः। भवाँश्च स्थापितो दुर्वृत्तः किङ्करः श्वो न दृश्यतेऽपि। पान्थैरन्यैः सह भवतामुपवेशनाय यथावश्यं विधानं कृतं मन्तीति। एतदवगत्य मम चिन्ता लघ्वी समभवत्। मदवस्कन्दी स आत्मने व्यवहारेणाभियोक्तव्य इति नाभून्ममाभिप्रायः। तदयं कलहाध्यायस्तावन्नैव समाप्तिमगमत्॥

ईसाशेठमहाभागस्य भृत्यः प्रातर्मां शकटीपार्श्वमनैषीत्। स्थलं मया प्रशस्तमवाप्तम्। सुरक्षितस्तद्रात्रौ 'जोहानिसबर्ग' नगरमासदम्॥

स्टैंडरटननामैकोऽल्पग्राम । जोहानिसवर्गइत्येतदेक महानगरम् । अबदुल्लाशेठ-महाशयेन जोहानिसवर्गनगर प्रत्यपि पूर्वमेव तन्त्रीसन्देश प्रेषित आसीत् । अपि च तत्रत्याना महमद-कासम कमरुद्दीन–महाशयानामापणस्य नामधेयं तदीयावासस्थानादिनिरूपक वाह्यनाम च प्रादायि । तदीय कश्चन पुरुषो मा नेतु शकटस्थानमागत्य स्थित । परन्तु नाहमेनमपश्यम् । सोऽपि मा नाभ्यजानात् । ततोऽह कमप्यतिथिमन्दिर गन्तु निरचैषि । ज्ञातपूर्वाणि हि मया चतुःपञ्चविश्रान्तिगृहाणा नामधेयानि । अथ शकटमेक भाटयित्वा ग्रेड-नेशनल-होटेल-इत्याख्यमतिथिमन्दिर प्रति रथ वाहयितु शाकटिकमाजिज्ञपम् । तत्रासाद्य तद्व्यवस्थापकं दृष्ट्वा वस्तु देहीत्यपृच्छम् । स च मा क्षण वीक्ष्य " किं करोमि । अत्रत्या कोष्ठाः सर्वेऽप्याक्रान्ता " –इति सविनयमावेद्य मा व्यसर्जयत् । ततोऽह महमद-कासम–कमरुद्दीनमहाशयानामापण प्रति रथ वाहयेति शाकटिकमवोचम् । तत्राबदुल्गनीशेठमहाशयो मदागमनप्रतीक्ष एव स्थित । स च मा स्वागतेनाभ्यनन्दत् । अतिथिमन्दिरे स्थलाभाववार्तां मदीयकथामाकर्ण्य स भृश विहस्य प्राह–अहो अतिथिमन्दिरे प्रवेशलाभ कथ वा भवद्भिर्निरीक्षित इति ॥

कुतो ह्ययमसम्भाव्य इत्यहमपृच्छम् । दिनचतुष्टयमात्रमिह भवद्भि स्थीयते यदि तदा सर्वं स्पष्टीभविष्यति । देशेऽस्मिन्नस्मद्विधानामेव केवल निवास शक्य । वय हि द्रव्यार्जनप्रवृत्ता । तदर्थमपमानमपि तूष्णीं सहिष्यामहे–इति ॥ ततश्चासौ दक्षिणाफ्रिकादेशे भारतीयैरनुभूयमानाना क्लेशपरम्पराणामितिहासमवर्णयत् । अस्य महाशयस्य सम्यक्परिचयोऽस्मानग्रे क्रमेण सम्पत्स्यते ॥

स पुनर्मामकथयत्—

देशोऽय युष्मादृशाना न योग्य । पश्यन्तु भवन्त । श्व किल भवद्भि प्रिटोरियानगरं गन्तव्यम् । तदा तृतीयश्रेण्यामेव प्रयाणमङ्गीकर्तव्यमापतिष्यति । 'नाताल'देशापेक्षया 'ट्रान्सवाल'देशस्य परिस्थितिरतिमात्र शोचनीया । अत्र हि भारतीयाना प्रथमद्वितीयश्रेण्योः प्रयाणानुज्ञापत्राणि नैव दीयन्ते इति ॥

"अस्य कृते प्रयत्नो युष्माभिः प्रकाम नैव कृतः स्यादिति मन्ये ।"

"ननु कृत एवास्माभि पत्रव्यवहारः । परन्तु प्रायशोऽस्मदीया प्रथमद्वितीयश्रेण्योः प्रयाण नैव चिकीर्षन्ति ।"

अथाहमयोमार्गनियमाद्द्वितीयश्रेण्यपत्रमानाय्य मननाडोकयम् । तत्र निस्तारमार्गो मया लक्षित । 'ट्रान्सवाल'देशस्य प्राचीनशासनान्येव न खलु सूक्ष्मदृष्ट्या न्यरच्यन्त । अयोमार्गनियमानां तु का कथा ॥

ईदृशमेतत्प्रयोजनम्–प्रथमश्रेण्यामेव प्रयातव्यमिति मन्निश्चय । यद्येतदशक्यं स्यात्तदा प्रिटोरियानगरमश्वरथेन प्रयातास्मि । एव किल सप्तविंशतिक्रोशान्तर एव मद्गन्तव्यम्–इति ॥

एतेन कालविलम्बो द्रव्यनाशश्च यथा सम्भविष्यत इति शेठमहाशयो मे प्रादर्शयत्। तथापि मया चिकीर्षितं प्रथमश्रेण्या प्रयाणं तस्याप्यभिमतमेवासीत्। तस्माद्योऽध्वनिकेतनस्वामिनं प्रति पत्रमेकं विलिख्य प्राहैषम्। तत्र हि मया ग्यदूपि अयमस्मि ब्यारिस्टर्‌जन। सर्वदापि प्रथम श्रेण्यामेव प्रयाता। प्रिटोरियानगरं त्वरितमेव मया प्राप्तव्यम्। अतो भवत्सकाशाल्लिखितमुत्तरं प्रतीक्षितुमवकाशाभावात् स्वयमेव श्रीमता निकेतनमुपेत्य प्रत्युत्तरं ग्रहीष्ये। प्रथमश्रेणी प्रयाणानुज्ञापकं पत्रं प्राप्स्यत इति प्रत्यमि—इति॥

प्रतिवचनस्य समक्षप्राप्तिनिरूपणं तु प्रयोजनगर्भितमिति नेदं पृथग्वक्तव्यम्। तथा हि। निकेतनस्वामिना प्रत्युत्तरे लेखितव्ये प्रथमश्रेणीपत्रं सर्वथा नैव दास्यत इत्येव लेखितव्यं स्यात्। अपि चायं 'कुलीब्यारिस्टर' इति व्यपदिश्यमानं मां प्रति किमपि विलक्षणाभिप्रायगा भवति। तदहं निरवयेनाङ्ग्लवेषेण भूषितः सन्नुपस्थाय समाभाषयिष्ये। ततश्च प्रथमश्रेणीप्रयाणपत्रं मे प्रदातुमसौ बहुशोऽनुमन्येत। इत्यमालोच्य हुस्वकवचकण्ठप्रत्याधारल्पालङ्कृतस्सन् योऽध्वनिवेशनमगच्छम्। तस्याग्रे सुवर्णमुद्रामेकां निधाय प्रथमश्रेणीप्रयाणपत्रमेकं दीयतामित्यपृच्छम्॥

'किं भवद्भिरेवाद्य लेखो मे प्रेषितः।'

"अथ किम्। स एवायमस्मि। ईप्सितपत्रदाने भवद्भिर्बहूपकृतं स्यात्। अद्यैव हि प्रिटोरियानगरमहं प्राप्तुकामोऽस्मि।"

स च स्मयमानः सानुकम्पमाह—

नाहं ट्रान्सवाल्देशस्थः किंतु 'हॉलैण्ड'देशाभिजनोऽस्मि। जाने भवतां मनोगतम्। अस्ति मे सहानुभूतिर्युष्मद्विषये। ईप्सितं प्रयाणपत्रं भवद्भ्यो दातव्यमित्येव ममाप्यस्ति काङ्क्षा। परन्तु प्रदानस्य सामयिकत्वमिष्यते। स च समयो यथा—मार्गे धूमशकटीनायको भवन्तं कदाचिदवतार्य तृतीयश्रेण्यां यद्युपवेशयत् तदा नाहं तत्र वाच्यो भविष्यामि। तथा चायोऽस्य हस्योपरि व्यवहारो भवद्भिर्नोपनीय इति। शिवास्सन्तु वः पन्थान इत्यहमाशासे—इति॥ इत्यमभिधाय स मे प्रयाणानुज्ञापत्रमदात्। अहं च धन्यवादमुक्त्वा यथोक्तमाचरिष्यामीति प्रत्यजानि॥

अब्दुल्-गनी-शेठमहाशयः प्रस्थानोद्यतं मामाप्रष्टुमध्वनिकेतनमागमत्। एतद्वृत्तमाकर्ण्य प्रहृष्टश्च विस्मितश्चाभवत्। अथायमेवं मां प्राबोधयत्—प्रिटोरियानगरं यदि भवान् प्राप्स्यति तदा खल्वहं निश्चिन्तो भवेयम्। शङ्के धूमशकटीनायकः प्रथमश्रेण्यां भवन्तं स्वस्थमुपवेष्टुं न मुञ्चतीति। कदाचिदनेन मुक्तानपि पथिका न हि मोक्ष्यन्तीति॥

अहं प्रथमश्रेण्यामुपाविशम्। चलिता च धूमशकटी। 'जर्मिस्टन'पुरे शकटीनायकः प्रयाणानुज्ञापकं पत्रमीक्षितुमागतः। दृष्टमात्रे मयि क्रुद्धस्सन्नङ्गुलिसंज्ञया स मामादिशत्—तृतीय

श्रेणीं प्रति निर्याहीति। तदाह मन्निकटस्थित प्रथमश्रेणीपत्र तस्मा अदर्शयम्। स तु प्राह–अस्तु नाम। तृतीयश्रेणीमितश्चल–इति॥

अस्या शकट्यामेकएव आङ्ग्लपथिकः स्थित। स च शकटीनायकमचकथत्–सद्गृहस्थमेन कुतो भवान्बाधते। तदीयहस्तगत प्रथमश्रेणीप्रयाणपत्र न किं भवतो दृष्टिगोचर। इहोपविष्टादस्मान्न मे कापि बाधा–इति॥ स एवमुक्त्वा मामभिवीक्ष्य जोषमास्यतामित्यवादीत्॥

यदि 'कुली'जनेन सहोपवेष्टुमुत्सुको भवान् तदा का हि मे क्षतिरिति प्रजल्पन् धूमशकटीनायको निरगात्॥

रात्रावष्टघण्टावादनसमये धूमशकटी प्रिटोरियानगर प्रापत्॥

## दशमोऽध्यायः

# प्रिटोरियानगरे प्रथमदिनम्

प्रिटोरियानगरस्यायोऽध्वनिकेतन प्रति दादा अब्दुल्लामहाशयाना न्यायवादिन सकाशान्मम प्रत्युद्गमनाय केनापि जनेनभवितव्यमित्यहमचिन्तयम्। भारतीयास्तु नैवागता इति मे विदितमेव। मया हि पूर्वमेव प्रतिज्ञात यत्कस्यापि भारतीयस्य गृहे नाह वसतिं ग्रहीष्य इति। न्यायवादिना तु न कोऽपि जन प्रेषित। तद्दिनस्य भानुवारत्वात् प्रयासबाहुल्य विना॰त्र जनप्रेषण न शक्यमासीदिति मया पश्चादवगतम्। इतिकर्तव्यतामूढ सन् क्व नु गन्तव्यमिति चिन्तयन्नतिष्ठम्। क्वचिद्विश्रान्तिगृहेऽपि दुर्लभ स्यान्मम प्रवेश इति मया पर्यशङ्कि॥

प्रिटोरियानगरस्यायोऽध्वनिकेतन त्रिनवत्युत्तराष्टशताधिकसहस्रतमे क्रैस्तशकाब्दे यादृशमासीत्तादृशात्पर वैलक्षण्यमापन्न चतुर्दशोत्तरनवशताधिकसहस्रतमेऽब्देऽदृश्यत। दीपा मन्दप्रकाशा प्रज्वलन्ति स्म। अत्यल्पा पथिकसङ्ख्या। यावत्सर्वे पान्था निर्गतास्तावदह तूष्णीमासम्। इत्यमचिन्तय च यथा–प्रयाणपत्रसङ्ग्राहकेऽधिकारिणि लब्धावकाशे सति मदीयप्रयाणपत्र तस्मै प्रदाय विश्रमितु भोजनशालिका वासस्थलमन्यद्वा किंमिह लभ्यत इति त पृच्छामि। यद्यसौ कापि वसतिं दर्शयेत्तदा तत्र गमिष्यामि। नो चेद्रात्रिमिहैवाध्वनिकेतने गमयिष्यामीति। परन्त्वपमानभया-देवं प्रष्टुमपि ममोत्साहो नासीत्॥

अध्वनिकेतनात्पथिका सर्वेऽपि निर्गता। अहमपि प्रयाणपत्रसङ्ग्राहकाय मदीयपत्रं दत्त्वा त प्रष्टुमारब्धवान्। स च मदीयप्रश्नानामुत्तराणि सविनयमदात्। किन्त्वस्मादधिक साहाय्य न मे भविष्यतीत्यहमजानि। तन्निकट एवामेरिकादेशीयो 'निग्रो'जन कश्चिदतिष्ठत्। सैव मया सह कथालाप कर्तुमारभत॥

स एव मामकथयत्—

मन्ये भवतोऽत्र सुहृद्विहीना नवागन्तुका इति। मया सह भवद्भिरागम्यते यदि तदा व स्तोकमेकां भोजनशालां नेष्यामि। तस्या व्यवस्थापको ह्यमेरिकादेशीय। स च सम्यक्परिचितो मे। शालायां भवत प्रवेशयेदिति प्रत्येमीति ॥

ईदृशसाहाय्यलाभे त्वहं सादरचकित एवासम्। तथाप्यस्मै मदीयकृतज्ञतां प्रख्याप्य तत्कृतां सूचनामहमङ्गीकृतवान्। स मां जॉन्स्टनमहाशयस्य 'फॅमिलीहोटल' इत्याख्य विश्रान्तिगृह मनैषीत्। वसतिकोष्ठक एव भोक्ष्य इति समयं ग्राहयित्वा स जॉन्स्टनमहाशयो मामेकाकमेव रात्रिं तत्रावासयितुं प्रत्यपद्यत ॥

किं चायमाह—गौराङ्गोऽयं कृष्णाङ्गोऽयमिति मे भेदकल्पना मनागपि नास्ति। किन्तु ममातिथय सर्वेऽप्यैरोप्या। अमी किल सहोपवेशितान् भवतोऽवलोक्य परं कुप्येयु। अथवा स्थलमिदं परित्यज्यान्यत्र गच्छेयु —इति ॥

अथाहमवोचम्—

रात्रिमेकामिहैव वस्तु भवद्भिरदायि। इयतापि बहूपकृतोऽस्मि। स्थलीयपरिस्थिते शनै शनैर्मयावगम्यमानत्वाद्भवदीयकष्टमप्यहं जाने। मदीयकोष्ठ एव भोजने परिवेष्यमाणेऽपि नाहमेतदन्यथा ग्रहीष्ये। श्व प्रातरन्यत्र क्वापि सन्निवातुं शक्नुयामित्यास्था वर्तते—इति ॥

एक कोष्ठो मह्यमदायि। आहारप्रतीक्षस्तत्राहमुपाविशम्। एकान्तस्थित नानालोचनापरश्च सम्पन्न। अतिथिगृहे भूयांसोऽतिथयो नाविवत। तस्मात्सेवक शीघ्रमेवाहारमानेष्यतीति निरीक्षमाणोऽहमवस्थित। अत्रान्तरे जॉन्स्टनमहाशय स्वयमेवागमत्। अकथयच्च यत्—कोष्ठेऽस्मिन् भवद्भिर्भोक्तव्यमित्युक्तवतो मे लज्जा समजनि। ततोऽहमितराभ्यागतेभ्यो वृत्तमेतन्निवेद्य तानपृच्छम् किं युष्माभिरन्यथा मन्यते यद्यसावपि भोजनगृह एव भोक्तुमासीनेति। तेऽप्यवदन्—तदेतद्वय नैव निषेधाम। यावत्पर्यन्तमिहस्थातुमसावभिलष्येत् तावदिन यथेष्टमास्तामिति। तस्माद्भवन्तो भोजनशालामेवागन्तुमर्हन्ति। अपि चात्र स्थीयतां यथेष्टकालमिति। भूयोऽपि तस्मै मम कृतज्ञतामावेद्य भोजनगृहे भोक्तुमगच्छम् ॥

परेद्यु प्रातरहं न्यायवादिनो मन्दिरं गत। तस्य नाम 'ए डब्ल्यु वेकर' इति। अय सर्वात्मना मामुपाचरत्। अब्दुल्लादोदमहाशयान्मया तन्न्यायवादिन सौजन्य पूर्वमेव श्रुतमासीत्। अतस्तत्कृतोपचारेण नाहं विस्मयमापम्। स मामादरेण मत्ताभिन्नं च कुशलमपृच्छत्। मदस्य वृत्तान्तमखिलं तस्मै न्यवेदयम्। स च मामब्रवीत्—ब्यारिस्टरवृत्तिमनुसृत्य भवद्भिरिह कर्तव्य किमपि नास्ति। अस्य व्यवहारस्य कृते न्यायवादिकार्येऽस्माभिर्नियुक्ता सन्ति। चिरन्तनोऽयं व्यवहार परं जटिलश्च। अतो जिज्ञास्यविषयनिवेदनमात्रे यत्नेन भवतो नियुञ्ज्महे। युष्मदागमनेन कार्यिकै सह पत्रव्यवहारचालनाय भूय सौकर्यसिद्धिनी ■

सवृत्तम् । इत पर तत्सकाशाद्वोढव्यमखिलमपि युष्मदर्थे सद्ग्रहीष्यामहे । युष्मदर्थे नाद्यापि मया वसतिर्विचिता । वर भवदागमनोत्तर तदन्वेषणमिति मया चिन्तितम् ॥

वर्णद्वेष प्रातिभूमि गत । अतो युष्मादृशानामिह स्थानान्वेषण न सुकरम् । अह तावदेका दीनामबला जानामि । सा हि कस्यचिद्पूपकारस्य भार्या । स्वगृहे युष्मानावासयितु सानुमन्येत । तेन हि तदीया द्रव्यायति वृद्धिमुपैष्यति । आगम्यताम् । तद्गृह गमिष्याम इत्येवमुक्त्वा तत्र मामनैषीत् । तत्र मद्विषये कश्चिदाद्यमेकान्तालापमकरोत् । प्रतिसप्ताह म सकाशात्पञ्चविंशत 'शिलिंग'मित द्रव्य स्वीकृत्य भोजनवसती मे प्रदातु सा प्रत्यपद्यत ॥

वेकरमहाशयो न केवल व्यवहारोपजीवी अपि तु श्रद्धालुर्लौकिकधर्मोपदेष्टा च । अद्याप्यय जीवति । स किल परित्यक्तव्यापारादिवृत्तिरिदानीं क्रैस्तधर्मोपदेशमात्रे प्रवृत्तो भवति । अपि च धनाढ्य सुखी च वर्तते । अद्याप्यय मया सह पत्रव्यवहार करोति । तस्य लेखेषु प्रस्तूयमानो विषय सर्वदा एक एव । स खलु क्रैस्तधर्म एव परमोत्तमो धर्म इति नैकविधप्रमाणैरुपपादयन् क्रिस्तस्य भगवदेकमात्रपुत्रत्वे मनुष्योद्धारकत्वे च स्थैर्यो यावन्न विश्वमिति तावदस्य शाश्वती शान्तिर्दुरापेति प्रतिपादयति ॥

प्रथमदर्शन एव वेकरमहाशयो धर्मविषये मदीयमत यादृशमित्यपृच्छत् । अहमेनमित्थ मवोचम् । जन्मनाह हिन्दुमतावलम्बी । तथापि तद्धर्मज्ञानमपि मम विशेषतो नास्त्येव । इतर धर्माणा परिज्ञान तु ततोऽप्यल्पीय । न खलु लेशतोऽप्यह जाने कीदृशी मे धार्मिकी परिस्थिति कीदृशी मे श्रद्धा किं वा मया श्रद्धातव्यम् । स्वधर्म तावत् सम्यगवबोद्धुमिच्छामि यथासम्भवमितर धर्मानपि जिज्ञासिष्य इति ॥

वेकरमहाशय सर्वमेतदाकर्ण्य प्रमुदितान्तरो मामकथयत् । दक्षिणाफ्रिकादेशवर्तिन्या 'साउथ आफ्रिका-जनरल मिशन' इत्याख्याया सुवार्ताप्रचारकसभाया कार्यदर्शिनामहमेकतम । अस्त्येक स्वतो द्रव्यव्ययेन निर्मापित क्रैस्तदेवालय । तत्र हि मया नियमेन तत्तदवसरेषु धर्ममधिकृत्य व्याख्यानानि उपन्यस्यन्ते । नाह वर्णभेदमङ्गीकरोमि । सन्ति मे सहोद्यमिन केचन सुहृद । वय प्रतिमध्याह्न एकघण्टावादनवेला मिथ सभूय स्वात्मशान्तिप्रकाशोपलब्धये कञ्चित्काल भगवत्प्रार्थना कुर्महे । तत्र भवदागमनमहमभिनन्देयम् । तेषा च परिचय व सपादयिष्यामि । युष्मत्सङ्गेन ते च मतोक्ष्यन्ति । तत्र भवतोऽपि प्रीता भविष्यतीत्यस्ति मे विश्वास । किं च धर्मप्रतिपादकान् कतिचनग्रन्थानध्येतु भवद्भ्य प्रदास्यामि । तेषा सर्वोत्तमो बाइबलनामक पवित्रो ग्रन्थ इत्यत्र खलु पृथगवक्तव्यम् । स एव भवद्भि सर्वथा पठितव्य इति साग्रहमह भवीमीति ॥

वेकरमहाशयस्यानुग्रह स्वीकृत्य प्रार्थनार्थं प्रतिदिनमह यथाशक्ति नियमेन तन्मण्डल्या सह मिलिष्यामीति प्रत्यज्ञासिषम् ॥

वेकरमहाशयोऽवादीत्—अयेव तर्ह्यहमेकघण्टावादनवेलायामिह भवतामागमन प्रतीक्षमाण स्थास्यामि । सहैव प्रार्थनामन्दिर गमिष्याव इति । अथावामयोग्यमभि च यथायथ निरगाव ॥

दीर्घविमर्शाय न लब्धो मयात्रकाशः। ब्यारिस्टर्महाशयस्य समीपमहं गत्वा मया देयमर्थं तस्मै वितीर्य नूतनावासमुपेत्य भोजनं निरवर्तयम्। गृहस्वामिनी परं सज्जना ह्यासीत्। तथा मन्दिरे शाकाहारपाको निष्पाद्य स्थापितोऽभूत्। अचिरेणैवाहमस्मिन् कुटुम्बे सुघटितप्रेमवृत्तिरासम्॥

दादा अब्दुल्लामहाशयेन कस्यचिन्मित्रस्य लेखमेकं विलिख्य मम हस्ते दत्तमासीत्। भुक्तोत्तरं तन्मित्रमहं द्रष्टुमगच्छम्। दक्षिणाफ्रिकावर्तिनां भारतीयानां क्लेशवृत्तान्तं सविशेषं तन्मुखादवगतं। स च मां स्वेन सह निवस्तुं निरबन्धात्। परन्त्वहं तस्य मदीयव्रतवृत्तान्तमाख्याय पृथक् निवासः पूर्वमेव मया परिकल्पित इति तस्मै न्यवेदयम्। स च निःशासितविषयो मां द्रष्टुं सर्वथा सङ्कोचो न कर्तव्य इति साग्रहमवादीत्॥

तावच्च प्रदोषवेला समुपस्थिता। अहं च कृताहारः स्वकोष्ठं प्रविश्योपविष्टः सन् विचारसागरे निमग्नोऽभवम्। मम सद्योऽनुष्ठेयकार्यं किमपि नासीत्। तदेतदब्दुल्लामहाशयाय न्यवेदयम्। बेकरमहाशयेन सह सम्बन्धः किमर्थं। तस्य धर्मबन्धुभिः मम को वा लाभः। क्रैस्तधर्माध्ययनं यथावदुपलब्धुं कियत्पर्यन्तं शक्यते वा। हिन्दुधर्मसाहित्यं कुतो वा प्रापणीयम्। तज्ज्ञानादृते क्रैस्तधर्मस्वरूपं यथावत्कथमवगन्तव्यमित्यादि प्रश्नपरंपरा मम मनसि प्रादुरभूत्। तस्य निष्कर्षस्त्वावदेक एव समाप्यते [illegible]। तद्यथा — एतद्विरुद्धं मयाध्येतव्यमपि निष्पक्षपातेन ध्येतव्यम्। ततः परमेश्वरप्रेरणानुरूपं बेकरमहाशयादिजनसमुदाये मया प्रवर्तितव्यम्। यावन्मया स्वधर्मः सम्यक्तया न विज्ञातः तावदन्यधर्मस्वीकारो नाम मनसापि न चिन्तनीय इति ध्यायं ध्यायमहं निद्रावशं गतः॥

एकादशोऽध्यायः

## क्रैस्तमतेन संपर्कः

परेद्युरहमेकघण्टावादनसमये बेकरमहाशयस्य प्रार्थनासभामगमम्। तत्र 'मिस हेरिस—मिस गेब मि. कोट्स' इत्येतेषां जनानां परिचयो मे जातः। जानुभ्यां स्पृष्टभूतलाः सर्वेऽपि प्रार्थनोद्यता उपाविशन्। अहमपि तानन्वसरम्। निजनिजाभीष्टसिद्धये भगवन्तं प्रार्थयन्तः "एतद्दिनं शान्तिमयं प्रयातु। देवोऽस्मदन्तःकरणानां द्वाराण्यपावृणोतु" इत्येवं तेषां प्रायिकं प्रार्थनाक्रमोऽभूत्॥

अथान्ते तु मम क्षेमप्रार्थमन्याप्येका प्रार्थना मयोन्निताभवत्। सा च यथा — अस्माभिः सह मिलितस्य सहोदरस्य 'सन्मार्गं दर्शय। अस्मभ्यं प्रदत्तां शान्तिमस्मै च प्रदेहि। अस्मदुद्धारक क्रिस्तदेव एनमप्युद्धरेति वयं प्रार्थयामह इति॥

एतासु सभासु भगवद्कीर्तनादिक न प्रचलति स्म । प्रतिदिन यत्किमपि सन्निवेश प्रार्थ्य प्राप्ताया माध्याह्निकोपहारवेलाया तदुपसेवनार्थं यथायथमस्माभिर्गम्यते स्म । प्रार्थना च प्रायेण पञ्चनिमिषाधिक काल नापैक्षत ॥

'मिस हेरिस–मिस गेत्र' इत्येतेऽनूढे प्रौढमहिले । कोट्समहाशय 'क्वेकर' सघपक्षीय । उभेऽपि ते स्त्रियाविकृतवृत्तनिवासे आस्ताम् । ते इमे प्रतिभानुवासर चतुर्घण्टावादनसमय 'टी'पानाय मा प्रार्थयताम् ॥

प्रतिभानुवासरमह कोट्समहाशयेन मिलित सन् सप्ताहान्तःपातिनीं मदीयदैनदिन धर्मचर्यामस्मै न्यवेदयम् । य च ये च मया पठिता ग्रथा यादृश परिणाममेते मन्मनस्यजनयन् इत्यादि विषयाश्चर्चयन्तौ कथालापमकुर्वहि । ते भगिन्यौ स्वानन्दानुभवानाचक्षाणे स्वलब्धा शान्तिमधिकृत्योपन्यास्यताम् ॥

कोट्समहाशय सरलहृदयो दृढमनस्कश्च युवक । उभावप्यावा बहिर्विहारायागच्छाव । स च स्वकीयक्रैस्तमित्राणा समीप मा नयति स्म ॥

यथा यथावयोर्मैत्री गाढगाढा समपद्यत तथा तथासौ पठ्यग्रन्थविशेषानन्विष्य मह्य प्रेषयति स्म । एते पुस्तके पेटिका मे समपूर्यत । मदुपर्यसौ पुस्तकाना भारमारोपयदिति वचनमप्युपपद्येत । पुस्तकान्यह श्रद्धया पठिष्यामीति मया तस्य पुरत प्रतिज्ञातम् । यथा यथा ग्रथा अपठ्यन्त तथा तथा तद्विषयिणी चर्चा प्रवर्तते स्म ॥

त्रिनवत्युत्तराष्टशताधिकसहस्रतमेऽब्दे बहूनीदृशाग्रन्थानहमपठिषम् । तेषा सर्वेषामपि नामानि न स्मर्यन्ते । किन्तेषा मध्ये 'सिटि-टेम्पल' इत्याख्य क्रैस्तदेवालयमधिकृत्य डा. पारकरमहाशयेन प्रणीतव्याख्यानमेक पियर्सनमहाशयेन विरचित 'अनेकस्वत सिद्धप्रमाणानि' इत्याख्य पुस्तकमेक बटलरमहाशयकृत 'साम्य' (एनेलॅजी) नामक प्रबन्ध एक इत्येव पुस्तकत्रयमासीत् । तत्र कियानप्यशो मया न विज्ञात । तस्य केचिदशा मम प्रतिकूला आसन् । कतिपयभागा मदीयमनस समजसा अभूवन् । मदभिप्रायानप्रच्छादयन्नेवाह कोट्समहाशयाय न्यवेदयम् । 'अनेकस्वत सिद्धप्रमाणानि' इत्याख्ये ग्रथे क्रैस्तवेदोक्तधर्माणा समर्थनाय प्रयत्नो यथाशक्ति प्रमाणान्युपन्यस्तानि । अनेन ग्रथेन मम चित्ते न कोऽपि जनित परिणाम । पारकरमहाशयेन प्रणीतस्य व्याख्यानस्य नीतिपोषकत्वेऽपि प्रचलितक्रैस्तमने श्रद्धाशून्यस्य जनस्य तेन न कोऽपि लाभ स्यात् । बटलरविरचित 'एनेलॅजी' नामको ग्रथस्तु परमगभीर कठिनश्च मे प्रत्यभात् । तस्य सम्यक् ग्रहणाय चतुःपञ्चवार पठितव्य मासीत् । मय ग्रथोऽय नास्तिकमास्तिकीकर्तुंकामेन व्यरचीति । ईश्वरास्तित्वसमर्थनाय तत्र कृतेन प्रमाणोपन्यासेन न मे कार्यमासीत् । तदानीं हि नास्तिकसीमामतीयाह स्थित । किन्तु क्रिस्त एव देवावतार तच्छरणागतिरेव देहसानिध्यप्रापिणीति प्रतिपादयितुमिच्छता यानि समर्थनवचनानि तस्मिन्नन्यस्तानि तानि मदीयबुद्धौ नैवारमत ॥

एतादृशवादश्रवणाय नाहं सज्जस्थित । वादोऽयं मम हृदयं सर्वथा नान्वरञ्जयत् । तदहं नम्रतापुरःसरमेव प्रत्यवोचम्—

"यद्येवं सर्वैः क्रैस्तजनैरनुगृहीतो धर्मः तर्हि अयं मे मा तावदस्तु । पापस्य परिणामान्नाहमात्मानं मोचयितुमिच्छामि । या किल मामकी पापवृत्तिः या वा पापकर्मणां निमित्तभूता मनोवृत्तिः तामेवाहं परिजिहीर्षुरस्मि । लक्ष्यमेतद् यावन्मया साध्यते तावन्मदीया शान्तिरेव मे तृप्तिकरी भविष्यति"—इति ॥

स च मामब्रवीत्—

'भवदीयः प्रयत्नो निष्फल एवेति निश्चितमहं ब्रवीमि । मत्कृतोऽयमुपन्यासः स भूयो भवद्भिर्विमर्शनीय इति ॥

स किल स्वेनोपयत्तः स्वस्य चारित्रेणैव न्यदर्शयत् । बुद्धिपूर्वमधर्ममनुष्ठाय ततो निश्चिततया पुरुषः स्वस्थचित्तो भवेदिति किल्थनेन प्रादर्शि ॥

किल्थनेन मित्रेण सह मदीयपरिचयात् पूर्वमेव ममैतद्विदितमासीत् । यत् सर्वेऽपि क्रैस्तमतीयाः पापनिवृत्तिविषये न हि श्रद्धामीदृशीं बिभ्रति स्मेति । कोट्समहाशयः स्वयमीश्वरे भव्यभक्तिविशिष्टो वर्तते । तस्य हृदयं निर्मलमासीत् । स किल आत्मशुद्धीकरणं शक्यमिति श्रद्धामवत्त । तयोर्युवयोरपि तादृशप्रत्यय एवासीत् । मदीयहस्तमुपागतेषु पुस्तकेषु कानिचिद्भक्तिपरिप्लुतान्यासन् । प्लीमथब्रधरसघपक्षीयस्योपदेशादहमप्ययथाभवमिति मन्वानो यद्यपि कोट्समहाशयः सुतरामुद्भ्रान्तोऽभवत् तथापि प्लीमथब्रदरमहाशयस्यानुचिताभिप्रायो मयि क्रैस्तधर्मस्य विषयेऽनादरं नोपादयेदित्युक्त्वा तस्य समाश्वासनं शक्यमासीत् ॥

मम सन्देहास्तावत् बाइबलविषये एव च तस्य गृहीतरूढार्थ आसन् ॥

## द्वादशोऽध्यायः

# भारतीयैः सह परिचयः

क्रैस्तमतीयैः सह मदीयपरिचयमधिकृत्य विशेषोल्लेखनात्पूर्वमितरेऽनुभवा मदीया वर्णनीया भवन्ति । नाताल्स्थत्तनदादाअब्दुल्लामहाशयो यादृशं स्थापनमध्यास्त प्रिटोरियानगरे शेठतैयब-हाजी-खानमहम्मदमहाशयः तादृशं स्थानमध्यतिष्ठत् । अथ तमन्तरेण न किमपि सार्वजनिकं कार्यं तत्र प्रचलति स्म । प्रथममेवास्य परिचयं सम्पाद्य प्रिटोरियावर्तिभिः सर्वैरपि

भारतीयैः सह मे परिचिकीर्षामस्मै न्यवेदयम्। तत्रत्यानां भारतीयजनानां परिस्थितिं जिज्ञासुरहं तस्य साहाय्यमपेक्षिषि। सोऽपि सन्तोषेण प्रत्यपद्यत॥

तत्रत्यान्भारतीयानखिलानपि नवम्य ट्रान्सवालदेशे यादृशी तदीया परिस्थितिरासीत् तेभ्योऽहमवर्णयम्। इदमेव मयाङ्गीकृतमादिमं कार्यम्। इयं सभा शेठ्हाजी–मुहम्मद्हाजी जुसब महाशयानां मन्दिरे समभवत्। एतं शेठ्महाशयं प्रति परिचयपत्रमेकं मया नीतमासीत्। तत्र बहुशः 'मेमण'व्यापारिणः समागताः। हिन्दुजनाश्च केचिदासन्॥

मम जीवमाने मया चतुर्णां जनानामग्रे उपन्यासकरणं तावदिदं प्रथममेवेति वक्तुं शक्यम्। अहं भाषणाय सज्जीकृत्य गतः। व्यापारे सत्येन वर्तनं भाषणस्यास्य विषयः। अनेकशः श्रुतं मया यद् व्यापारे वणिजः सत्येन वर्तितुं न शक्नुवन्तीति। ते खलु वादं कुर्वन्ति यथा— व्यापारो नाम व्यवहारविषयः। सत्यं धार्मिको विषयः। व्यवहारोऽन्यः। धर्मोऽन्यः। व्यवहारे शुद्धसत्यं न कदापि चलति। यावत्साध्यं सत्यं वक्तुं शक्यमिति॥

मम भाषणेऽहमेतानभिप्रायान् अवलम्ब्य तेषां कर्तव्यं विशेषणीयमिति तान् प्रत्यादिश्य तद् द्विगुणमस्तीति प्राकटयम्। यस्मात्ते परदेशमागताः तस्मात्तेषां प्रतिनिधित्वेन समधिकं भूत्। यत एषां स्वल्पसंख्याकजनानां वर्तनं लक्ष्यीकृत्य हिन्दुस्थानस्य कोटिशो जनानां योग्यता तत्रत्यैः परिमीयत इत्यवेदयम्॥

समन्तादितरैराङ्ग्लैस्तुलनीकृत्य परीक्ष्यमाणेऽस्मज्जीवनधर्मे मालिन्यस्याधिक्यमवकाश आसीदिति प्रत्यभात्। विषयमेनमहं तेषामवधानमानयम्। तेषु वर्तमानं हिन्दु-मुसलमान-पारसी ईसायी अथवा गुजराती-पञ्जाबी-मद्रासी-सिन्धी कच्छी-सुरती इति नैकविधं तारतम्यं विस्मर्तव्यमिति साग्रहमवोचम्॥

तत्रैकः सङ्घो निर्मातव्यः। तस्य द्वारा भारतीयानां क्लेशविचारं तत्रत्याधिकारिभ्यो निवेदनीय इत्यसूचयम्। अपि च मम विरामकालेषु तत्सङ्घस्य कार्यं करिष्यामीत्यवोचम्॥

मदुक्तं तत्रत्यानां मनसि निविष्टमिति मे प्रत्यभात्॥

मम भाषणे समाप्ते सति चर्चा प्रारभत। कतिपयास्तत्रत्याः परिस्थितिमुद्दिश्य विषयान् मह्यं निवेदयितुं सम्मतिं चक्रुः। अहमेतेन प्रोत्साहित इव। दृष्टं मया यत् सभासदस्तु केवलं स्वल्पजनानामाङ्ग्लभाषा विदितेति। तस्मिन् देशे आङ्ग्लभाषाज्ञानेनाधिकलाभ्यं भविष्यतीति मत्वा श्रमविरामा भवेयुः ते तां शिक्षणीयेत्यसूचयम्। वयसि प्राप्तेऽपि भाषाशिक्षणं साध्यमित्युक्त्वा तथाभूतशिक्षणानां दृष्टान्तानदाम्। तान् शिक्षयितुमेकवर्गमारभमाणानामहमेव पाठयेयम्। अथवा शिक्षितुमिच्छतां शिक्षणं सुकरमित्यवेदयम्। वर्गनिर्माणं न कृतम्। परन्तु त्रिभिर्जनैर्निवेदितं यदहमेव तद्गृहं गत्वा यदि पाठयेयं तदा शिक्षेरन्निति। तेषु द्वौ 'मुसल्मानौ'। एको नापितः। अन्यः 'मुनशी' (लेखनजीवी)। तृतीयः आपणजीवी हिन्दुजनः। एषां सर्वे-

पामनुकूलो समभवम् । पाठनशक्तिर्ममासीदिति मम नासीदल्पोऽप्यविश्वासः । मम शिष्याणाम-रोचकत्वेऽपि नाहमरोचये। कदाचिदहं तत्पार्श्वं गतः । तदा ते स्वकार्यप्रसक्ता बभूवुः । इदं द्रष्टुमेव मदीयाऽऽमनं भवति स्म । तथापि नाहं क्षमामतिक्रान्तः । तत्र न कोऽपि आङ्ग्लभाषां शिक्षितुमिच्छालुरासीत् । प्रायोऽष्टमासाभ्यन्तरं आङ्ग्लभाषया कथालापं कर्तुं योग्यतामापुरिति वक्तुं शक्यम् । द्वौ गणितकुशलौ सामान्यतः पत्रव्यवहारं कर्तुं लेखितुं च पर्याप्तामाङ्ग्लभाषामज्ञासिष्टाम् । स्वकीयग्राहकैः सह पर्याप्तामाङ्ग्लभाषां शिक्षितुं नापितस्याभिलाषः आसीत् । परत्वेवमेतच्छिक्षया शिष्याणां द्वौ संपादनशक्तिं लेभाते ॥

अहं सभाजनितफलेन तृप्तोऽभवम् । यावदहं स्मरामीयं सभा प्रतिमासं प्रतिसप्ताहं वा मिलेदिति निश्चितमासीत् । इयं सभा प्रायः क्रममाश्रित्य मिलति स्म । एवं मिलितायामस्याभिर-स्मदभिप्रायाः स्वतन्त्रे परस्परं निवेद्यन्ते स्म । इतः संजातं फलं यथा प्रिटोरियानगरे ममापरिचितः कोऽपि भारतीयो नासीत् । प्रत्येकस्य परिस्थितिमभिज्ञस्य ममाविदितो विषयो नासीत् । एतेन मम तत्रत्येन 'ब्रिटिश एजंट मि. जेकोब्स डि वेट'महाशयस्य परिचयं कर्तुमिच्छा समजनि । अहं गत्वा तमपश्यम् । तस्य भारतीयानां विषये सहानुभूतिरासीत् । परंतु तेन यत्किमप्यधिकं कर्तुमशक्यमासीत् । तथाप्यहं यावच्छक्यं साहाय्यं करिष्यामीति समेते यथेच्छया तं द्रष्टुमनुज्ञा मे दत्ता ॥

इदानीमहं 'रेल्वे' अधिकारिभिः प्रयाणविषये भारतीयानामुपरि कार्यतया निवेशितानि निबन्धनानि 'रेल्वे' शासनानुसारमपि नहि न्याय्यानीति प्रपत्रं पत्रव्यवहारमकरवम् । अस्य प्रति वचनरूपेण ये भारतीयाः समीचीनवस्त्रधारिणः तेषामुपरितनश्रेणी 'तिकिट'प्रदेयं भवतीति पत्र मागतम् । एतेन सम्पूर्णतया समाहितमिति वक्तुमवकाशो नासीत् । यतः सम्यग्वेषधारी न वेति निर्धारणं 'स्टेशन् मास्टर'स्य हस्तगतमासीत् ॥

'ब्रिटिश एजंट' स्वत्रेऽ स्थितानि भारतीयानां मत्वद्दपत्राणि मम प्रादर्शयत् । तैयब शेठमहाशयेन ममेदृशानि पत्राणि दत्तान्यासन् । एतैर्मम विदितमासीत् यद् भारतीयाः 'ऑरंज फ्रि स्टेट'तः बहिः महता क्रौर्येण निष्कासिता आसन्निति ॥

समग्रनयाऽऽलोक्यमाने प्रिटोरियानगरे ममावस्थानं ट्रान्सवाल्–ऑरेंज्फ्रिस्टेटयोर्भा रतीयानामार्थिकसामाजिकराजनैतिकपद्धतिं सम्यगवगन्तुं शक्यमासीत् । एतद्विदित्वा ममाग्रे मूल्यं साहाय्यं भविष्यतीति तदानीं नाज्ञासिषम् । यतोऽहं वर्षानन्तरमथवा व्यवहारसमाप्तौ ततः पूर्वमेव हिंदुस्थानं प्रति निवर्तितव्यमिति कृतसमालोचन आसम् ॥

परंतु दैवमन्यदन्योऽन्योऽभवत् ॥

त्रयोदशोऽध्यायः

# 'कुली' स्थितेरनुभवः

ट्रान्सवाल-ऑरेंजफ्रीस्टेटवर्तिनां भारतीयानां परिस्थितिं विस्तरेण वर्णयितुं नेदं स्थानम् । एतज्जिज्ञासुभिः मया प्रणीतदक्षिणाफ्रिकासंबन्धी सत्याग्रहेतिहासः पठनीयः । परन्त्वत्र तद्विषयं संक्षेपेण वर्णयितुमावश्यकम् ॥

ऑरेंजफ्रीस्टेटस्थैः अष्टाशीत्युत्तराष्टशताधिकसाहस्रमिते वर्षेऽथवा तत्पूर्वमेव वा शासनमेकं परिकल्प्य तत्रत्यभारतीयानामधिकारनाशोऽकारि । भारतीयास्तत्रावस्थातुमनिच्छन्तो भोजनालयेषु 'वेटर' ( परिवेषकाः ) अथवा तद्विधहीनकार्येषु वर्तितुमशक्नुवन् । तत्रत्या वणिजः स्वैरं भूतनष्टं समीकर्तुं यत्किञ्चित् पणकं दत्त्वा ततस्ते निष्कासिताः । एते वणिजः प्रार्थनापत्राणि चक्रुः । परन्तु तेन न किञ्चित्फलमासीत् ॥

पञ्चाशीत्युत्तराष्टशताधिकसहस्रमिते वर्षे एकं कठिनं शासनं प्रचलितमासीत् । तदनुसारेण तद्देशान्तः प्रविशन् प्रत्येको भारतीयः प्रायः पञ्चचत्वारिंशद्रूप्यकाणि ( 'पाउण्डत्रयम्' ) शिरःकररूपेण दद्यादिति निश्चितमासीत् । यद्येते भूमिं चिक्रीषेयुस्तदा नियतस्थानेष्वेव क्रेतुं शक्यमासीत् । तदानीमपि भूमिं प्रति पूर्णोऽधिकारो नासीत् । एतेषां तत्रत्यशासनसभायां स्वकीयप्रतिनिधीन् वरयितुमधिकारो नासीत् । सर्वाण्येतानि शासनान्येशियानिवासिनां केवलं कल्पितान्यासन् । एतेषां तत्रत्यकृष्णवर्णानां जनानामप्यनुयान्ति स्म । एतदनुसारेण भारतीयानां पादाध्वना गन्तुमधिकारो नासीत् । रात्रौ नववादनानन्तरमनुज्ञापत्रं विना न बहिः संचरितव्यम् । अयमन्तिमो नियमो भारतीयानां विषये नाधिकमुपयुज्यते स्म । आत्मानं ये 'आरब' इत्याह्वयन्ति तेषामुपरि नियन्त्रणमिदं न प्रयुज्यते स्म । अयमेक उपकार इति गण्यते स्म । एष उपकारः स्वभावतो नगररक्षकेच्छा निर्धारितोऽऽसीत् ॥

अनयोर्नियमयोः प्रभावो मदनुभूतिपथमागतः । अहमनेकशः कोट्समहाशयद्वितीयो रात्रौ पर्यक्रमिषम् । दशवादनात्प्रागेव गृहं प्रत्यागमनमपूर्वमासीत् । एतन्मध्ये पुररक्षिभिरवरुद्धश्चेत् किमु । अत्र मदपेक्षया कोट्समहाशयोऽप्यधिकचिन्तापरोऽभवत् । रात्रिसंचाराय स्वकीयेभ्यो 'निग्रो'सेवकेभ्योऽनुज्ञापत्रं प्रदेयमासीत् । किन्तु मह्यं कथं तदनुज्ञापत्रं देयम् । अनुज्ञापत्रप्रदानविषये स्वाम्येव स्वभृत्यानेऽधिकारी । मया कदाचिदनुज्ञापत्रं प्रार्थितं चेत् कोट्समहाशयो यद्यपि तां दातुमनुमन्येत तथापि तां दातुमप्रभुरासीत् । निषिद्धप्रदानं हि प्रतारणा स्यात् ॥

तस्मात् कोट्समहाशयो वा तस्य कश्चित् सखा वा ( न हि सम्यक् स्मरामि ) राजकीयन्यायवादिनो डॉ. क्राउजेमहाशयस्य सन्निधिं मामनैषीत् । आवामुभावप्येकशालाध्यायिनः

समुत्तीर्णो ब्यारिस्टर्जनाज्जित्यबोधि । नवमघण्टात्यये निशाविहाराय मयाज्ञा पत्रं प्राप्तव्यमिति । तु सह वचनमाकर्ण्य मद्विषये स्वीया सहानुभूतिं व्यक्तीकुर्वाण पुररक्षिभिरनुपद्रुतोऽयं स्वेच्छया विहर्तुमर्हतीति पत्रमेकं निलिख्य मह्यमदात् । बहि सञ्चरमाणेन पत्रमेतत् सर्वदा सहैव नीयते स्म । तदुपयोगावसरस्तु कदापि मया न प्राप्त । परन्त्वयं कश्चिदाकस्मिको योग इति वक्तव्यम् ॥

डॉ क्राउझेमहाशय स्वमन्दिरमागन्तव्यमिति मा न्यमन्त्रयत् । उभयोरपि मैत्रीकर्मणोद-पद्यत । मया तत्सकाशमसकृद् गम्यते स्म । तन्मुखेनैव ततोऽपि सुप्रसिद्धस्य तदीयाग्रजस्य परिचयोऽपि मे जात । स किल जोहानिसबर्गे नगरे राजकीयन्यायवादासीत् । असौ ' बोअर ' युद्धसमये जोहानिसबर्गवर्तिन कस्यचिदाङ्ग्लाधिकारिणो वधाय प्रच्छन्नसहकार्यभूदिति सैन्यशासनरीत्या व्यवहारेणाभियुक्त सन् सप्तवर्षावधिकेन कारागृहवासेन दण्डितोऽभवत् । ततो न्यायवादविकारपदादपि वियोजितोऽभूत् । समरावसाने ट्रान्सवाल्देशवर्तिनो न्यायवादिन स्वागतेन त समान्य स्वीचक्रु । अथ तत्रैव भूयोऽपि न्यायवादित्वे व्यापृतोऽभवत् ॥

परिचयोऽयमग्रे मम सार्वजनिककार्येषूपकारकोऽभूत् । अनेन मयानुष्ठेयानि बहूनि कार्याणि सुकराणि समपद्यन्त ॥

पादाक्रमणनियामकशासनादविक मे क्लेश सवृत्त । मया सर्वदा ' प्रेसिडेंट स्ट्रीट ' इत्या ख्यवीथिना कञ्चिदनाकृतदेश प्रति परिक्रमाय गम्यते स्म। तस्यामेव वीथ्या 'प्रेसिडेंट क्रुगर' महाशयस्य गृहमासीत् । तद्गृह निराडम्बरच्छाय परितश्च निरारामशोभम । सन्निहितगृहवद्बाह्यविशेषस्थानम् । एतन्मन्दिरापेक्षया परमसुन्दरतराणि समन्तादारामपरिशोभितानि प्रिटोरियानगरस्य लक्षाधिपतीना बहूनि भवनान्यवर्तन्त । वस्तुत प्रसिद्धोऽभूदनाडम्बर ' प्रेसिडेंट क्रुगर'महाशयस्य । गृहस्य पुरस्तादेकस्य पुररक्षिणो राजपुरुषस्य परिसर्पणादनेन कस्याप्यधिकारिणो गृहेण भाव्यमिति विज्ञायते स्म । अस्य राजभटस्य समक्ष मया निराबाधमेव सर्वदा पर्यक्रामि ॥

राजभटा काले काले पर्यायशो गृहमरक्षन् । एकस्मिन्दिने कश्चिद्भट प्रागेव मामप्रबोधयन-त्वावेदयश्च पादाध्वन परित्याजयितुमकस्मादेव मा ताडयित्वा घण्टापथे निरफालयत् । ततोऽह विस्मितो दु खितश्च चिन्तयितु प्रवृत्त । किंनिमित्तमह ताडित इति यावद्राजभटमहमपृच्छं तावद-कस्मात्तस्मिन्नेव घण्टापथेऽश्वचर्यां कुर्वाण कोट्समहाशयो मा शब्दापयन्नियमवादीत् —

गान्धि सर्वं मया लक्षितम् । भवद्भिरसौ व्यवहारेणाभियोक्ष्यते यदि तदा नूनमह न्यायसभाया तस्योपरि सतोषत साक्ष्य वदिष्यामि । विषण्णोऽस्मि खलु तदत्याचारेणेति ॥

मया कथितम्—

' अलम् कृते भवद्भिर्विषादो न कर्तव्य । हन्त राजभटोऽयम् । किं नाम क इति जानीयात् । तस्य कृते कृष्णवर्णा मनुष्या सर्वेऽपि समाना । मन्निर्विशेषमेव ' निग्रो'जनेऽप्यय

प्रयत्नंत इत्यत्र सदेह कोऽपि नहि । अङ्गीकृत खल्वय नियमो मया यदात्ममात्रसबद्धमया-यमुद्दिश्य न्यायसभा नहि प्रविशामीति । ततोऽहमेन नामियोक्तुमिच्छामीति ॥

स पुन प्राह—

'भवत्स्वभावानुरूपमेव भवद्भि कथितम् । तथापि पुनर्विमृश्यताम् । इतरे जना सद्बुद्धि शिक्षणीया एवेति । एवमुक्त्वा स राजभट निरभर्त्सयत् । तयो प्रवृत्त कथालापो मया नाज्ञायत । तस्य 'गोअर'राजभटत्वात् 'डच'भाषया सवाद वृत्त । भटो मा क्षमामभ्यर्थयत् । एवमभ्यर्थना न खल्वावश्यक्यासीत् । यतो मया पूर्वमेव अक्षमि ॥

तत पर नाह तस्या वीथ्यामगमम् । मया हि चिन्तितम्—

अये राजभटा यद्यागच्छेयु न खलु तेषामय वृत्तान्तो विदित स्यात् । अविज्ञातवृत्ता न्तत्वात्तेऽप्येवमेव वर्तेरन् । वृथैव भूयोभूय निमित्ति यत्र मया ताडनमाप्त तत्र गन्तव्यमिति । इत्यमालोच्य सचारमार्गमन्यमन्विष्य स्वीकृतवान् ॥

अनया घटनया तत्र वास्तव्यिनीना भारतीयाना विषये मम सहानुभूतिर्भूयोऽवर्धत । शासनमेतदधिकृत्यागेयप्रतिनिधिना सह कृतसवादोऽह शासनन्यायान्यायनिर्णयार्थमेको व्यवहारो युष्माभिरुपस्थापनीय इति भारतीयै सह चर्चामकरवम् ॥

अहमेव रीत्या न केवल पठनश्रवणद्वारापि तु स्वानुभवेनापि तत्रत्यभारतीयाना दुरव-दशामज्ञासिषम् । दक्षिणाफ्रिका नाम न खलु भाविन कस्यापि भारतीयस्य निवासयोग्यो देश इत्यहमचिन्तयम् । एतादृशी परिस्थिति कथ समीकर्तव्येति भूयोऽनुसधानपरोऽभवम् ॥

परन्तु तदानीं मम दादा अब्दुल्ला व्यवहारकृत्यमेव प्रधानकर्तव्यमासीत् ॥

चतुर्दशोऽध्यायः

# व्यवहारस्यकृते सज्जीकरणम्

प्रिटोरियानगरे मयातिवाहित एकवत्सरे यावज्जीव पूजनीय परमोत्तमोऽनुभव सपादित । अत्र हि मया सार्वजनिककार्याणा निर्वाहरीतिमवगन्तुमवकाशो लब्ध । अत्रैव हि मया सेवायोग्यतापि सपादिता । अत्रैव मदीया धर्मासक्तिरपि शनै शनैस्तीव्रमत्वेगा समजनि । न्यायवादिकृत्यस्य तात्त्विक ज्ञानमहमत्रैव समपादयम् । नूतनन्यायवादी प्रशस्तानुभवशालिनो न्यायवादिन कार्यालय प्रविश्य यावच्छिक्षितु शक्नुयात्तावदिहैव मया सर्वमशिक्षि । न्यायवादि पदस्य नाहमयोग्य इत्यात्मविश्वासोऽपि अत्रैव मया समपादि । न्यायवादियश सपादनरहस्यमप्य त्रैवाहमुपालप्सि ॥

दादा अब्दुल्ला-महाशयस्य व्यवहारो न खलु साधारणः । स किल पञ्चलक्ष्यरूप्यकाणामिव (चत्वारिंशत्सहस्रपाउण्डात्मकः) इति । तस्य चाभियोक्तारावमी जटिलतर्कगणनाविशेषैः परिप्लुतोऽभूत् । व्यवहारस्य केचिदंशाः स्वीकृता वाग्दानपत्रनिबन्धनाश्चासन् । प्रत्यर्थिना तु तान्येतानि पत्राणि वञ्चनया लेखितानि न चात्र लिखितागीया साकल्येन प्रतिफलमदायीति । विवादः प्रवर्तितोऽभूत् । अस्मिन्नेव व्यवहारे चर्चास्पदीभूता विषया गहनाः । शासनिकविषयाश्च बहवोऽभवन् ॥

उभयपक्षीयैरपि परमोत्तमा न्यायवादिनः स्वीकृताः । एतेन द्वयोरपि पक्षयोः कार्यैव्यनुभवसम्पादनाय सद्वराशो मया लब्धः । वादिस्थापितन्यायवादिनामर्थे वादिपक्षीयलेख्यपत्राणां सञ्जीकरणं व्यवहारसम्बन्धिविषयाणां परिशोधनं च मदीयकर्तव्यतया निर्दिष्टमासीत् । एवं मया सञ्जीकृतविषयेभ्यः कार्यग्राहकेण (सोलिसिटर) कियन्तः स्वीक्रियन्ते तथा च तेन स्वीकृतेभ्योऽपन्यस्तेभ्यः कियन्तो न्यायवादिभिः परिगृह्यन्त इत्यादिवस्तुनिरूपणमात्रेणापि महती व्युत्पत्तिः साधनीयाभवत् । एतद्व्यवहारकर्मणि मम ग्रहणशक्तेर्गृहीतविषयाणां च सुव्यवस्थितरूपेण क्रोडीकरणशक्तेरियत्तानिर्धारणं सुकरमित्येव मे स्पष्टमासीत् ॥

व्यवहारेऽस्मिन्महती श्रद्धा बोधा । किं बहुना । अहं तन्मयोऽभवम् । तत्सम्बद्धलेख्यपत्राणि समस्तान्यपठिषम् । अस्मदीयकार्यिकस्य निरवधिविश्वासमलभ्यम् (?) । स किल महाप्राज्ञोऽऽसीत् । अत एव मदीयकार्यं सुकरं सवृत्तम् । आयव्ययगणनारहस्यमवेदिषम् । भूयिष्ठानां लेख्यपत्राणां गुजरातीभाषामयत्वात् तेषामाङ्ग्लभाषया परिवर्तनमावश्यकमासीत् । अनेन मे भाषान्तरीकरणशक्तिः साधीयसी सम्पन्ना ॥

अहं पूर्वोक्तरीत्या यद्यपि धर्मजिज्ञासया सार्वजनिककार्यव्यासङ्गे च कियन्तमपि कालं मत्यवाहय तथापि तदेतत्कार्यं प्रधानतया नाहमग्रहीषम् । व्यवहाराय सज्जीकरणमेव मदीयमादिमं कर्तव्यमित्यहमगणयम् । यदा तत्सव्यशासनादिके पठितुमापतितं तदा पुनरेव तत्कार्यं निरवर्तयम् । एतेन किं तावत्प्राप्तमिति चेत् व्यवहारसम्बद्धा विषया वादिप्रतिवाद्यपेक्षया मयैव सम्यक्तरामज्ञायन्त । लेख्यपत्राण्युभयपक्षीयाण्यपि मन्निकटे स्थितानि ॥

व्यवहारबलभूयस्त्वं व्यवहारवस्तुनिबन्धनमिति दिवङ्गतस्य पिकटमहाशयस्य बुद्धिवादो मम स्मृतिमागतः । अयमेव बुद्धिवादो दक्षिणाफ्रिकादेशस्य प्रसिद्धन्यायवादिना लॅनर्डमहाशयेनार्वाक् समर्थितः । मया स्वीकृते कस्मिंश्चित् व्यवहारे यद्यपि मदीयकार्यिकस्य पक्षो न्याय्यः स्थितः तथापि धर्मशास्त्रं तस्य प्रतिकूलमिति मयान्वैक्ष्यत । जये निराशः सन् लॅनर्डमहाशयसाहाय्यमिच्छुस्तत्समीपमगमम् । सोऽपि लेख्यपत्राणां बलभूयस्त्वमवलक्ष्य व्यवहारमस्माकमनुकूलममन्यत । किं च मामवनीत्– गान्धे, इदं तावदेकं सम्यगहं जाने । व्यवहारविषया सम्यक् परिशील्य गृह्यन्ते यदि तदा तदुपकारकं धर्मशास्त्रं स्वयमेवोपयातीति । तस्मादेतद् व्यवहारवृत्तान्तं सम्यक्तरामवनोद्धव्य (?) । एवं कृत्वा भवान्पुनरागत्य मां द्रष्टुमर्हतीति । व्यवहारविषया

पुनर्विमृश्यमाना ममान्यथा प्रत्यभासन्त । अपि च स्वपक्षानुकूलं प्रमाणतया समुदाहरणीयो दक्षिणाफ्रिकान्यायसभया निर्णीतपूर्वं प्राचीनव्यवहारोऽप्येको लब्धः । एतेन मे परमानन्दः समजनि । ल्यॅनर्टमहाशयस्य पार्श्वमुपेत्य तस्मै सर्वमेतन्न्यवेदयम् । सोऽपि हृष्टः प्रावोचत् — बाढम् । इदानीमस्मिन् व्यवहारे जयो न सिद्धः । परन्तु द्रष्टा यः प्राड्विवाकः तद् विषये मनागप्रमत्तैर्भाव्यमिति ॥

दादा अब्दुल्लामहाशयस्य व्यवहाराय सन्नीकुर्वाणस्य मम सामान्यविषयावबोधस्य महत्त्वं न सम्यग्विदितमासीत् । व्यवहारविषया नाम भूतार्थाः । भूतार्थश्च सत्यविषयश्च । सत्यस्य परिग्रहे शासनं तावत्स्वयमेवोपसर्तुमायाति । दादा अब्दुल्लामहाशयस्य व्यवहारविषयाणां स्वपक्षानुकूलत्वात् धर्मशास्त्रमप्यवश्यमस्माननुग्रहीष्यतीत्यचेदियम् । किन्तु व्यवहारेऽस्मिन् विवदमानौ द्वावपि समीपबन्धू एकत्रवासिनौ चास्ताम् । अनुपशान्तेऽस्मिन् विवादे द्वयोरपि निःस्वताप्राप्तिरपरिहार्येति मम व्यक्तमासीत् । व्यवहारश्च कदा समाप्तिमेष्यतीति केनापि वक्तुं न शक्यते स्म । विवादे न्यायसभायामेव निर्णयाय मुक्तश्चेदनन्तकालमप्यप्रचलेत् । तेन नैकतरस्यापि पक्षस्य लाभः स्यात् । तस्माज्झटिति व्यवहारोऽयमन्तं गमयितव्य इत्युभयोरप्यासीत् प्रत्याशा ॥

अहं तैयब शेठ-महाशयस्य समीपं गत्वोभाभ्यां मिलित्वा पञ्चानामग्रे मम विवादो व्यवस्थापनीय इत्यमूचयम् । स च निजन्यायवादिनो मतमवगन्तुमिच्छामीत्यवादीत् । उभयोरपि प्रत्ययिनामन्तरस्था स्वीकृताश्चेदचिरेणैव व्यवहारोऽन्तं गमिष्यतीत्यहमब्रवम् । न्यायवादिभ्यः प्रदेयं द्रव्यं तथाधिकाधिकमजायत यथा महावणिजोऽप्यायसर्वस्वमेतदेकमेव ग्रसितुमलमभूत । उभावप्येतद्व्यवहारचिन्तया कार्यान्तराक्षमावभूताम् । एतन्मध्ये तयोर्वैमनस्यं वर्धते स्म । न्यायवादिवृत्त्याद्दह निर्विण्णोऽभवम् । स्वस्वपक्षप्रसिद्धये धर्मशास्त्रीयतन्त्राणामन्वेषणमुभयपक्षीयन्यायवादिनामपि कार्यमभूत् । किं च प्राप्तजयेन पक्षेणापि व्ययीकृतद्रव्यं साकल्येन न कदापि प्रतिलभ्यत इति मया तत्कालमेव प्रत्यभिज्ञायत । न्यायवादी न्यायतः स्वेन स्वीकर्तव्याद्व्यतिरिक्तमपि गृह्णाति स्म । इदं मे दुःसहमासीत् । उभयपक्षयोरपि मैत्रीमुत्पाद्य बन्धुमध्ये स्थैर्यमेव मम धर्म इत्यहमचिन्तयम् । द्वयो भगिनीकरणे शिखप्रयत्नकार्यम् । पर्यन्ते तैयब शेठ-महाशयः स्वाभिमतिमदात् । विवादनिर्णयाय मध्यस्थो निश्चितः । तस्याग्रे व्यवहारः प्राचलत् । दादा अब्दुल्लामहाशयो जयं प्राप ॥

किन्तु नाहमियतैव पर्यतुष्यम् । तैयब शेठमहाशयस्य माध्यस्थ्यविहितद्रव्यमदेयमनेकशो प्रदातुमशक्यमासीत् । दक्षिणाफ्रिकावर्तिनां पोरबन्दरपुरीयाणां वणिजां मध्ये धर्मशास्त्रदत्तपरम्परानीतानि स्वनाश्यापनादपि मृत्युरेवेति पद्धतिः प्रचलितासीत् । तैयब-शेठमहाशयः समस्तसहस्र 'पाउण्ड' मुद्राणां (५५५००० रूप्यकाणां) एकदैव प्रदाने न शक्तोऽभूत् । एवमपि कानिर्णीमप्यूर्नीकृत्य समग्रमेव तत्प्रदातव्यमिति निश्चित्य स्थितः । निःस्वतामापनमस्य नाभिमतमासीत् । अथैक

एवोपाय स्थित । स च प्रदेयार्थस्य अनदुल्लामहाशयेन खण्डश स्वीकरणम् । सोऽर्थादार्यं प्रदर्शयन् ऋणापकरणाय दीर्घकालमवधिमदात् । मध्यस्थनिर्णयेन व्यवहारव्यवस्थापनाय द्वयो पक्षयो समतिग्रहणापेक्षया प्रदेयद्रव्यस्य खण्डश स्वीकरणायानुमतिसंपादन दुष्करमभवत् । परन्तु कृतसंधानावुभावप्यमोदेताम् । एतेन तयोर्लोकमान्यताप्यतिशयमागमत् । मदीयसंतोषस्तु निरवधिरासीत् । एतद्व्यवहारप्रसङ्गादह न्यायवादिवृत्त्यस्य नैजमार्गमवुद्धवान् । मानुष स्वभावस्य सदंशमन्विष्य हृदयानुप्रवेशनरीतिर्मिम विदिताभवत् । द्वैपक्षाद्विभिन्नयोरुभयो पुनर्यत्सङ्घटन तदेव न्यायवादिन पारमार्थिककर्तव्यमित्यज्ञासिषम् । इद ज्ञान मयि तथा रूढमूलमभवद्यथाह न्यायवादिवृत्तिमवलम्ब्य विंशतिवर्षपर्यन्त प्रवर्तमानपरस्परव्यवहारेषु सधानप्रसङ्गैरेव समधिक कालमत्यवाहयम् । एतेन मे न कापि अर्थहानिरजायत । मदीयान्तरात्मनस्तु न कापि हानि सवृत्तेति किमु वक्तव्यम् ॥

पंचदशोऽध्यायः

## धार्मिकमथनम्

उक्तपूर्वं हि मया यत् क्रैस्तमतीयै सह सम्बन्धमकल्पयमिति । तदेतदधिकृत्य पुनरप्यायासायेदानीमवसर प्राप्त ॥

बेकरमहाशयो मम नि श्रेयसमुद्दिश्य भूयो भूयश्चिन्तयाक्रम्यत । स मा 'वेलिंग्टन कन्वेन्शन' इत्येतदाख्य क्रैस्तमतीयजनकूटमेकमनयत् । 'प्रोटेस्टन्ट' सघप्रविष्टा क्रैस्तमतीया स्वधर्मोद्बोधनाय स्वात्मशुद्धिप्राप्तये वा कतिपयवत्सरैरेकवारमेवविधकूटानि परिकल्पयन्ते । तदेतत्कार्यं क्रैस्तधर्मस्य पुन प्रतिष्ठेति वा पुनरुद्धार इति वा व्यपदेशमर्हति । 'वेलिंग्टन कन्वेन्शन' अपि एतादृशकूटमेवासीत् । तत्रत्यप्रख्यातधर्मनिष्ठ 'पूज्य ॲन्ड्रू मरे' महाशयोऽस्य समेळनस्य सभापतिरासीत् । तस्य समेळनस्य धार्मिकवातावरण तत्रागतैर्मिळितानां धर्मोत्साह श्रद्धा च सर्वथा मा क्रैस्तमतावलबिन कुर्वीरन्निति बेकरमहाशय आशसत् ॥

किन्तु बेकरमहाशयस्य पूर्वोक्तप्रत्यय प्रार्थनाया शक्तिमवलम्ब्य स्थित । स किल परम भक्त्या विहिता या भगवत्प्रार्थना सा भगवत श्रोत्रकुहर सर्वथा प्रविशत्येवेति निश्चला श्रद्धा मवत्त । पैहिकार्थसाधनायापि प्रार्थनायामेव कृतप्रत्यय मुल्लरान्य ब्रिस्टोल्नगरवर्तिन कंचित्प्रसिद्ध क्रैस्तजन दृष्टान्ततयोपन्यस्य तथाविधानिनिदानान्युदाहरत् । प्रार्थनागुणान्वर्णीयमानानह निष्पक्षपातेन सावधानमश्रौषम् । अतराभन मम्तौ क्रैस्तमतावलम्बने मे निर्बाधक भविष्यती त्यवोचम् । अन्तरात्मनश्चोदनामतिवर्तिनु चिराय मयाभ्यस्तत्वात् एतद्विधप्रतिज्ञाकरणे निर्विकल्पोऽ

हमासम्। अन्तरा मानुरोधिनी प्रवृत्तिः प्रमोदकरी ममासीत्। तत्प्रतिकूलवृत्तिस्तु क्लिष्टतरा सन्तापकरी चाभवत् ॥

वयं वेलिंग्टननगरमगच्छाम। मादृशं 'विवर्णपुरुषं' सहचरीकृत्य प्रचरणं वेकरमहाशयस्य दुष्करमभूत्। अयमनेकशः केवलं मत्कृते क्लेशभाजनमासीत्। प्रयाणान्तःपातिनि भानुवासरे क्वचित् अस्माभिरवस्थानव्यमापतितम्। वेकरमतस्य हि भानुवासरे प्रयाणं निषिद्धमासीत्। स्थानीयविश्रान्तिगृहस्वामी विवादोत्तरं मम वसतिप्रदानमङ्गीकुर्वाणोऽपि भोजनशालायां मम प्रवेशं सर्वथा न्यषेधत्। वेकरमहाशयस्तु स्थिरानुबन्धः सन्ननुमतप्रवेशानामतिथीनामभिजातानां सहचरस्य ममापि प्रवेशमङ्गीकार्यमिति वादमकरोत्। परन्तु विदितो मया तस्य क्लेशः। वेलिंग्टननगरेऽप्यहं सहैव तेन स्थितः। तत्रास्य क्लेशा यत्नेन प्रच्छाद्यमाना अपि मदीयदृष्टिगोचरे न्यपतन् ॥

इयं सभा भक्तिशीलानां क्रैस्तजनानां समेलनमासीत्। तदीयधर्मश्रद्धामवेक्ष्य सञ्जातहर्षोऽभवम्। मया पूर्वमेरमहाशयस्य दर्शनं प्राप्तम्। मम श्रेयःप्राप्तये प्रार्थयमानान् बहूनहमपश्यम्। तेषां प्रार्थनागीतिषु भूयस्यो मम सम्मता आसन्। अमूः किल मधुरमधुरा अवर्तन्त ॥

सभा दिनत्रयी प्रचलिता। तत्रागतानां भक्तिर्मदीयमानसमग्राहयत्। ममापि सा प्रशंसनीयाभवत्। परन्तु स्वप्रणीतधर्मस्य परिवर्तनाय न कोऽपि हेतुर्दृष्टः। क्रिस्तावलम्बनेनैव स्वर्गप्राप्तिर्मोक्षलाभश्चेत्यदविश्वसनीयं ममासीत्। तदेतन्मदीयमतं कतिपयक्रैस्तमित्राणामग्रे निर्व्याजमेवाहमकथयम्। तदाकर्ण्य ते सुतरां विषण्णविस्मिताः समजायन्त। परन्त्वेतदपरिहार्यमासीत् ॥

विषयेऽस्मिन्मम क्लेशा इतोऽप्यगाधतरायां चित्तभूमौ स्थिताः। क्रिस्तस्त्वीश्वरस्यैक एव देवस्य स्वात्मरूपः पुत्रस्तदेकशरणा एव मुक्तिं भजन्त इत्येतन्मदीयविश्वासमीमांसामतिक्रान्तमासीत्। देवः पुत्रवांश्चेद् वयं सर्वेऽपि तस्य पुत्राः। क्रिस्तस्येश्वरसमानत्वस्य वा तत्स्वरूपत्वस्य चाभ्युपगमे मनुष्याः सर्वेऽपीश्वरसमानास्तत्स्वरूपा वा भवितुमर्हन्ति। क्रिस्तस्य मरणेन तस्य रक्तेन च जगत् पापप्रणाशो विहित इत्येतत्पदार्थ ग्रन्थेषु मदीयबुद्धिर्नान्वमन्यत। तदेतद्रूपकालङ्कारत्वेन गृह्यमाणं कदाचिद्याथार्थ्यप्रत्यायकं स्यात्। किं च मनुष्यमात्रस्यात्मास्तित्वमितरप्राणिनां तु तदभावः तच्छरीरपातमनुकालमेव तद्विनाशं च प्रतिपादयन् स क्रैस्तधर्मोपदेशः स किल मन्मतस्य विरुद्धोऽभूत्। मर्मनात्मानमभ्युपेयगामी क्रिस्तो धर्मस्य कृते प्राणांस्त्यक्तवान्। स च त्यागी महात्मा देवांशसम्भवो धर्मोपदेशकश्चेति। किन्तु परमश्रेष्ठं सर्वगुणसम्पन्नं पुरुषोत्तम इति मया नाङ्गीकृतम्। असौ क्रूसारोपितः सन् भुवनपर्यन्तं दाक्षिण्यप्रायमस्ति जगत् इत्यनिवादन्। परन्त्वस्मिन्कर्मणि गूढगुणस्य वा दैविकप्रभावस्य वा निगमनन्व यदन्तरात्मना नासीत्कृतम्। क्रैस्तमतावलम्बिनो पवित्रजीवनेष्वन्येषां धर्मावलम्बिनां गुणं क्रैस्तजनस्य जीवनेषु न कोऽपि मया पारम्य। एवं जीवने यानि श्रुतानि परिवर्तनानि तान्यन्येषां जीवनेऽपि प्रत्यक्षीभवन्ति स्म। दार्शनिकदृष्ट्या परीक्ष्यमाणेषु क्रैस्तमतरेषु न कोऽपि

विशेषो मयादृश्यत । त्यागदृष्ट्या निरूप्यमाणेषु तत्र हिन्दुजना क्रैस्तमतीयानत्यशेरत इत्यवगतम् । क्रैस्तमत निरवद्यमिति वा सर्वोत्कृष्टमिति वा विश्वसितु नाहमशकम् ॥

मम मनसि परिवर्तमानमिद मथन तत्तदवसरेषु मदीयक्रैस्तमित्रेभ्यो न्यवेदयम् । किन्तु तदीयप्रत्युत्तरैर्नाहमतृप्ये ॥

यथा क्रैस्तधर्मो मया न श्रद्धितस्तथा हिन्दुधर्मस्यापि समग्रता सर्वश्रेष्ठता च नाह श्रद्धातुमशकम् । हिन्दुधर्मस्य व्रणच्छिद्राणि चक्षुर्विध्यन्तीव स्पष्टमलक्ष्यन्त । अस्पृश्यता हिन्दुधर्मस्याङ्गत्वे नून तर्हि तदङ्गेन निरर्थकेन व्रणितपूतेन च भाव्यम् । हिन्दुजनेषु विद्यमानस्य नानाजातिसप्रदायविशिष्टत्वस्य गूढार्थो मया न विज्ञात । वेदानामीश्वरसभूतत्वस्य को वार्थ । अस्य यथार्थत्वे सति 'कुरान–बाइबल'इत्येताभ्यामपि तथाभूताभ्यामेव कुतो न भाव्यम् ॥

यथा क्रैस्तसुहृद स्वमतप्रवेशनाय मा प्रति यत्नमकुर्वत तथा मुसलमानमित्राण्यपि मां स्वमत प्रवेशयितुमयतन्त । अब्दुल्लाशेठमहाशयोऽपि मामिस्लाममताध्ययनाय सर्वदा प्रेरयति स्म । स्वमतगुणप्रशसनाय तु तस्य नित्यदावकाश समुपस्थित ॥

इमान्मदीयक्लेशानधिकृत्य रायचन्दभाईमहाशय प्रति पत्रमलेखिषम् । हिन्दुस्थानवर्तिना मितरधर्माचार्याणामपि मया लिखितानि पत्राणि । तेभ्य प्रत्युत्तराण्यप्यागमन् । रायचन्दभाई-महाशयस्य लेखत शातिरीषल्लब्धा । मया क्षमावता भाव्यम् । हिन्दुधर्मश्चेतोऽप्यधिकयत्नेन परिशीलनीय इति तेनाभ्यधायि । तैर्लिखितस्यैकवाक्यस्य भावार्थो यथा–निष्पक्षपातेन विहित जिज्ञासोत्तरमिद खलु मया निसदिग्धमवगत यदस्मिन् हिन्दुधर्म इवेतरधर्मेषु तत्त्वविचार-सौक्ष्म्य तद्विचारमहत्त्वमात्मवैभवदर्शनमौदार्य च क्वापि न विद्यतेति ॥

अह शेठमहाशयेन विरचित कुरानग्रन्थस्यानुवाद क्रीत्वा पठितु प्रावर्तिषि । इस्लाम धर्मसबद्धा इतरग्रन्था अपि मया सपादिता । अथाहमान्ग्लदेशवर्तिभिर्मदीयक्रैस्तमित्रै सह पत्रव्यवहारमकार्षम् । तेषामेको मा 'एडवर्ड मेट्लेण्ड 'महाशयस्य परिचयमकारयत् । तेनापि पत्रव्यवहारमकरवम् । स च 'ॲना किंग्सफर्ड' इत्येतदाख्यमहिलासहकारेण स्वप्रणीत 'सर्वोत्तमो मार्ग' इत्येतदाख्य ग्रन्थ मे प्राहैषीत् । स च ग्रन्थ प्रचलितक्रैस्तधर्मखडनात्मक । साधुरय "क्रैस्तवेदस्य नवीनार्थ" इत्येतदाख्य पुस्तक मम प्रैषयत् । एतद्द्वयमपि मत्प्रमरोचत । हिन्दुमतमनेन ग्रन्थद्वयेन समर्थितमिव । टॉल्स्टॉयमहाशयेन प्रणीत 'ईश्वरसाम्राज्य ■■ हृदये स्थितम्' इत्येतदाख्य ग्रन्थो मा मुग्धमिवाकरोत् । एतद्ग्रन्थपठनेन स्थिततया मत्स्वारमुद्रा मम मनसि प्रमुद्रा । अस्माद् ग्रन्थप्रसादादागताना तत्त्वान्वेषणस्वातन्त्र्यप्रौढता सत्यपरायणतादीनां पुरत कोट्समहाशयप्रदत्तपुस्तकानि निस्तेजस्कतामगमन् ॥

एव नैकमित्रैरभीप्सितमार्गेण मदीयमध्ययन प्रवृत्तम् । एडवर्ड-मेट्लेण्डमहाशयेन सह पत्रव्यवहारो भूयस्त्वमाप बहूनि दिनानि यावत्प्राचलत् । रायचन्दभाईमहाशयेन तु तस्य जीवितावधिपर्यन्त प्रचचाल स्म । तत्प्रेषितानि कानिचित्पुस्तकान्यहमपठिषम् । तेषु 'पञ्चीकरण'

'मणिरत्नमाला' 'योगवासिष्ठस्य मुमुक्षुप्रकरणं' 'हरिभद्रसूरेः षड्दर्शनसमुच्चयः' इत्येते ग्रन्था अप्यवर्तन्त ॥

एवं मदीयैरेतैर्मित्रैरुद्दिष्टमार्गमनुसरन्मानोऽप्यहं तत्सङ्गेन धर्मजिज्ञासायामुद्बोधं प्राप्तः। चिरमहमृणी संवृत्तोऽस्मि। तत्संगस्मृतिर्मयि नित्यस्थायिनि वर्तते। एतन्मधुरपवित्रसम्बन्धधारा कालक्रमेण वृद्धिमगान्न किल पुनः पर्यहीयत ॥

षोडशोऽध्यायः

# मनुष्यस्य प्रयत्नस्तावदेकश्चेत् दैवेच्छान्या

व्यवहारस्यावसितत्वात् प्रिटोरियानगरे मदवस्थानं निर्हेतुकं संवृत्तम्। तस्मादहं 'डरबन' नगरं गत्वा हिन्दुस्थानं प्रत्यावर्तनाय संनाहमकार्षम्। अब्दुल्लाशेठमहाशयः संमाननां विना मां विसर्जयितुं नैच्छत्। स किल स्वमित्रमण्डलीमामंत्र्य 'सिडनहेम' नगरे तत्समेतं मां विभवोत्तरमभोजयत् ॥

तद्दिनमशेषं तत्रैवातिवाहयितव्यमिति सूचितमासीत्। मन्दिरस्थे बहूनि समाचारपत्राणि पतितस्थितानि। तान्यहं पठितुं प्रावर्तिषि। पाठं पाठमहं तेषामेकतमस्य कोणप्रदेशे 'भारतीयानां मताधिकार.' (न्यायविधायकसभा प्रति स्वकीयप्रतिनिधिप्रेषणाधिकारः) इति शीर्षकस्याधोवर्ति लेखनमेकमद्राक्षम्। अस्य साराशस्तु नाताल्देशस्य न्यायविधायकसभायाः सदस्यत्वेन स्वप्रतिनिधीनां नियोजने भारतीयाः स्वाधिकारं परित्याजयितव्या इति। एतन्निश्चितमेव निर्मितमेकं शासनं तदानीं तत्सभायै समुपस्थापितमासीत्। शासनमिदं मया न विज्ञातम्। न चापि तत्रत्यानामितरेषामस्य वृत्तान्तो विदित. ॥

कीदृशोऽस्यवृत्तान्त इत्यहमब्दुल्लाशेठमहाशयमपृच्छम्। स च प्रत्यवादीत्—अनभिज्ञाः खलु वयमीदृशानां व्यतिकराणाम्। वाणिज्यव्यापारसंबन्धिनोऽर्था केवलमस्माभिरवबोध्यन्ते। विदितमेवेदं भवता यदा 'ऑरेंज फ्रीस्टेट' प्रजातन्त्रे वाणिज्यमस्मदीयमस्तप्रायं भवतीति। अस्य कृतेऽस्माभिरप्रीदृशो यत्नप्रयासः फलकारी नाभवत्। अनक्षराः किल वयं गतिविकला मन्तव्याः। वृत्तपत्राण्यस्माभिरपि तावत्पठ्यन्ते। परंत्वेतदर्घाणामारोहावरोहमात्रविज्ञानाय। शासननियमं निरन्धनानि नाम कथंकारमस्माभिरवगम्येरन्। अस्मदाङ्गलन्यायवादिन एव अस्माकं चक्षुःश्रोत्रमिति ज्ञापनाम् ॥

अथाहमपृच्छम् —

इहैव सजातसवृद्धशिक्षिता नवयुवका भूयासोऽत्र विद्यन्ते । किमेते च साहाय्य नाचरन्तीति ॥

अब्दुल्लाशेठमहाशयो नैराश्य सूचयन्नाह हन्त भो । अमी युवका नास्मानुपसप्तुमिच्छन्ति । यत्सत्यमेतानस्मदीयानपि वय नास्मदीयान्मन्यामहे । ते सर्वेऽपि क्रैस्तमतीया । अतस्ते मतोपदेशकाना मुष्टिगता भवन्ति । क्रैस्तमतोपदेष्टारस्त्वाङ्ग्लजना अतो राजकीयैर्नियन्त्रिता वर्तन्त इति ॥

अहमेतदाकर्ण्य चक्षुरुदमीलयम् । इमे युवका सर्वथास्मदीया कर्तव्या — इत्यचिन्तयम् । क्रैस्तधर्मस्य क्रियमेनार्थ । क्रैस्तमतीया अपि न किं भारतीयास्ते ॥

किन्तु हिन्दुस्थान प्रति गन्तुमुद्यतत्वान्मदीयमनोगतानर्था प्रकाशयितुमहमशक्नवि । तथाप्यब्दुल्लाशेठमहाशय तावदवोचम् — शासनमिद प्रचार गमिष्यति चेद् युष्मदीयावस्था कृच्छ्रतरा सपत्स्यते । भारतीयाना जन्मनिर्मूलनायाङ्गीकृत प्राथमिकोऽय पदविन्यास । अयमेवास्मदात्मगौरवस्य मूलकुठार इति ॥

स्यादेवैतद्वृत्तान्तस्य वयमनभिज्ञा स्थिता । अस्मदीयन्यायवादिराङ्गानामेकतम श्रीमान् 'एस्कूब' महाशयस्तमस्मभ्यो न्यवेदयत् । तदेतदेव सवृत्त यथा — स किल पराजय प्राप्य तूष्णीं नैव तिष्ठेत । सोऽन्तर्यनौकानिवेशस्थानस्य शिल्पाधिकारिणा सह सहृदयता नाकल्पयत् । तेन हि शङ्कित यदयमधिकारी कदाचित् सदस्यत्वानुमोदकाङ्गनान् स्वपक्षीकृत्य त पराजयेतेति । तदसावस्मानविज्ञातनिजस्थितीनकरोत् । तेनोपदर्शितरीत्या वयमस्मन्नामानि मताधिकारिसूचीपत्रे व्यलेखयाम । अदाम च स्वानुमतिं तत्सदस्यत्वाङ्गीकाराय । एतेन भवद्भि सम्यगवगम्येत यदस्माक मताधिकारो नहि तथा पूज्यो भवति यथैन भवतो मन्यते तथापि युष्मद्वाक्य वय जानीमहे । भवतु । किमिदानीमुच्यते ॥

तत्रस्था इतरेऽतिथय सवादमेन सावधानमाकर्णयन्ति स्म । अथ ममैक प्राह — किमिदानीं कर्तव्यमित्यह ब्रूयाम् । अनया नौकया प्रयाणमकृत्वा भवद्भिरेकमासपर्यन्तमिहैव स्थातव्यम् । भवदाज्ञानुवर्तिनो वय सग्रामयिष्याम इति ॥

अन्ये सर्वेऽप्यवदन् — सत्यम् । सत्यम् । एतदेवमुच्यते । ( शेठमहाशयस्याभिमुखीभूय ) आर्या गाधिभाईगमन भवद्भिर्वारणीयमिति ॥

अब्दुल्लाशेठमहाशय पर चतुर । स तानब्रवीत् — तेषामित प्रस्थान निरोद्धुं नाहमधिकारी । अथवा यात्रानत्र ममाधिकारस्तावान्युष्माकमप्यस्त्येव । किं च युष्मद्वाक्य मयानुमोदितम् । परन्तु न्यायवादिन एव ते । ननु प्रदेयमेभ्य पारितोषिकम् ॥

अथ पारितोषिकप्रस्तावो मा विषण्णमकरोत् । अथाहमवोचम् —

आर्या अब्दुल्लाशेठमहाशया अत्र पारितोषिकवार्ता न हि सगच्छते । सार्वजनिकसेवाया किं वा पारितोषिकम् । अहमत्र स्थास्यामि चेत् पर सेवको भूत्वा तिष्ठेयम् । इमे सुहृदो यथ

भवता विदितास्तथा न मे परिचिता भवन्ति । एते मिथः संभूय प्रयसिष्यन्तीति यदि भवन्तो विश्वसेयुस्तदाहमेकमासमिह स्थातुमनुमोदिष्ये । परन्तु वक्तव्याश एको विद्यते । न मे किमपि प्रदेयमित्येतद्यद्यपि सत्यं तथाप्येतादृशकार्यसंदर्भेषु द्रव्यलेशं विना प्रवेशो न संभाव्यते । ननु क्वचित्तन्त्रीसंदेशः प्रेषणीयः स्यात् । किमपि मुद्रापणीयं स्यात् । क्वचिद्गतागतमङ्गीकर्तव्य-मापतेत् । अन्यन्यायवादिनामभिप्रायो प्रष्टव्य. स्यात् । युष्मदीयशासननियमादीनामनभिज्ञत्वान्मया धर्मशास्त्रपुस्तकानि कदाचिदवलोकयितव्यानि भवेयुः । सर्वमेतत्खलु द्रव्यं विना शक्यते कर्तुम् । एतादृशकार्याणि बहूना साहाय्यमपेक्षन्त इति ॥

एतन्निशम्यैककण्ठेन बहवः प्राहु । देवो महान्कल्याणमयथ । सर्वथा द्रव्यसंचयस्तु भवेत् । सहकारिणो जनाश्च बहवो मिलिष्यन्ति । इहावस्थानं तावदनुमोदतां भवद्भि' । सर्वं सुसंपत्स्यत इति ॥

एव भोजनसंतर्पणावसरे मिलितानां मंत्र कार्यकारिस्वरूपमभजत । भोजनाद्युपचारं निर्वर्त्य शीघ्रमस्माभिर्गृहं गन्तव्यमित्यहमसूचयम् । मावि कार्यक्रमं मनस्येवाचिन्तयम् । यथा यथ आत्ममताधिकार इत्यादिकं विचार्य ज्ञातार्थं सनेकमासमुषित्वा तत. प्रस्थातव्यमिति निरचैषि ॥

एवं दक्षिणाफ्रिकादेशे मदीयचिरनिवासस्य मूलाधारो दैवेन कल्पित. । एवं भारतीयाना-मात्मगौरवरक्षायोत्थानस्य च बीजमुप्तम् ॥

सप्तदशोऽध्यायः

# नातालदेशे निवासः

त्रिनवत्युत्तराष्टशताधिकैकसहस्रतमे क्रैस्तशकाब्दे नातालदेशवर्तिषु भारतीयेषु शेठहाजी-महमद – हाजीदादामहाशयाग्रगण्या आसन् । श्रीमत्वदृष्ट्या यद्यपि ' शेठ अब्दुल्लाहाजी-आदम ' महाशयः प्रथमस्तथापि सार्वजनिककार्येषु शेठहाजीमहमदमहाशय एवाग्रस्थानमभ्याप्त । तस्मादस्याध्यक्षतायामब्दुल्लाशेठमहाशयस्य मन्दिरे मिलिता सभा मताधिकारनियामकं शासनं प्रत्यवस्थातव्यमिति निरणैषीत् ॥

नातालदेशे प्रासजन्मानः क्रैस्तभारतीययुवकाः प्रत्याहूयन्त । ' डरबन ' नगरन्यायस्थानद्विभाषी श्रीमान् पॉलमहाशयः तत्रत्यक्रैस्तमिशन्शालामुख्योपाध्यायः श्रीमान् सुभानगॉडफ्रेमहाशयश्च समागतौ । एतावेव बहूनां क्रैस्तयुवकानामागमनस्य हेतुभूतावास्ताम् । इमे सर्वेऽपि स्वयंसेवका अभवन् । तस्या बहवो वणिजश्च प्रविष्टा' । तेषु मुख्यानां नामानि यथा — ' दाउदमहम्मदशेठ आदमजीमियांखान ए. कोलंदावेल्लुपीळै सी. लछीरामरंगस्वामी पडियाचिआमदजीरा ' इति ।

पारसीहस्तमजीमहाशयस्तु स्थित एव । लेखकजनेषु दादाअब्दुल्लप्रभृतीना महापणेषु नियुक्ताः मागेकजीजोशी–नरसीरामप्रभृतयश्च प्राविशन् । सार्वजनिककार्येषु भागिनो भूत्वा ते सर्वेऽपि मुदिता विस्मिताश्चाभवन् । तेषा क्लैशविस्माह्वान स्वजीवने नूतनोऽनुभव । स्वसमुदायस्य समापतितामापद् ध्याय ध्यायमय कनीयानय ज्याय्यय भृत्योऽय हिन्दुजनोऽय मुसल्मानोऽय पारसीकोऽय क्रैस्तोऽय गुर्जरोऽय मद्रदेशीयोऽय सिंधुदेश्य इत्याद्यनन्तभेदकल्पाय व्यस्मरन् । ते किंतु सर्वेऽपि निर्विशेषतया भारतजनन्या पुत्रा मातृभूमे सेवकाश्चेत्यात्मानममन्यन्त ॥

तस्य शासनस्य द्वितीयचर्चा निरवर्तत । समतिथ प्रदत्ताभवत् । चर्चा च समाप्तप्रायासीत् । तस्या धारासभाया सदस्यै कृतभाषणेषु तत्तादृशकठिनशासन प्रति तत्रत्यभारतीयाना प्रत्यवस्थानत्वाभावादमी मताधिकार नार्हन्तीति वाद कृतोऽभूत् ॥

अथ वर्तमाना परिस्थितिस्तत्र मिलितेभ्यो मया व्याख्यायत । अस्य शासनस्य चर्चा दिनान्तरे स्थापनीयेति धारासभाध्यक्ष प्रति तन्त्रीसन्देशमादौ प्राहैष्म । तथा च प्रधानामात्य सर-जॉन्-रोबिनसनमहाशय धारासभाध्यक्ष शासनचर्चादिनद्वयव्यवधानेन पुरश्चालित भवतीति सद्य प्रत्युत्तर प्रादात् । एतेन वय प्रमोदामहि ॥

धारासभाया पुर स्थापयितु प्रार्थनपत्रिका सज्जीकृताभूत् । तस्या प्रतिरूपकाणि त्रीणि समपेक्षन्त । कि च वृत्तपत्रिकासु प्रचार करणाय प्रतिरूपक चतुर्थमपि सज्जीकरणीयमासीत् । सर्वमेतत् कार्यमेकस्यामेव रात्रौ निर्वर्तनीयमासीत् । आङ्ग्लभाषाज्ञा स्वयसेवका इतरे च केचिदेतत्कार्यमुद्दिश्य सर्वामपि रात्रिमजागरु । सुन्दराक्षरलेखी श्रीमान् 'आर्थर' नामा वृद्ध प्रतिरूपकमलिखत् । एकेन कथितमन्ये लिखन्त प्रतिरूपकाणीतराणि च व्यलेखिषु । एव पञ्चप्रतिकृतय समकालमेव सज्जीकृता । स्वयसेवका वणिज प्रार्थनपत्रिका जनै स्वाक्षरीकर्तुं स्वयानैर्वा स्वव्ययेन भाटितयानैर्वा सचरितु प्रावर्तन्त ॥

झटिति कार्यमेतन्निर्वर्त्य प्रार्थनापत्र प्राहिणुम । तदेतदस्मदनुकूलैर्व्याख्यानैर्वृत्तपत्रिका प्रकटीचक्रु । अनेन धारासभोपर्यपि कश्चित्परिणामोऽजायत । तत्रेद चर्चापदवीमवतीर्णम् । प्रार्थनपत्रिकाया शासनप्रतिकूलतया निरूपितहेतून् प्रतिन्यायविन्यासरा किमपि समाधानमाचक्षत । तदेतत्तुस्पष्टमेव निराधारमासीत् । तथापि शासन धारासभायामन्वमोदत ॥

इत्थमेतत्परिणस्यतीति वयमविद्म प्रागेव । किन्तु यत्नकल्पोऽय भारतीयेषु किमपि नूतन चैतन्यमुदपादयत् । इद च तेषा मनसि निरूढिमापन्न यदेते वयमेक समाज प्रविष्टा समाजाद्बहिर्निर्गमनमस्मासु कस्याप्यशक्यम् । यथा वाणि यमत्र धिनामधिकाराणा प्राप्तयेऽस्माभि प्रयत्न कर्तव्य तथैवास्मद्राजकीयाधिकाराणा कृते परिश्रमो वोढव्य इति ॥

अस्मिन्नवसरे लॉर्डरिपनप्रमुखाः ग्येस्वास्थ्यानामध्यक्षसचिवोऽभूत् । पर सहस्रप्रजाभि स्वाक्षरीकृत प्रार्थनापत्रमेक तदग्रे स्थापनीयमिति निरणायि । कार्यमेतत्सुकर नाभवत् । एका-

हमात्रेण नेदं निर्वर्तनीयमासीत्। अस्य कृते स्वयंसेवका न्ययोजिता। ते सर्वे स्वस्वकार्याणि समग्रमन्वतिष्ठन् ॥

एतत्प्रार्थनापत्रस्य सज्जीकरणाय मया भूयान्परिश्रमो व्यूढः। एतत्सम्बद्धवृत्तं यावल्लभ्यं तावदपठिषम्। मताधिकारप्रदानं न्याय्यं युक्तं चेति हेतुद्वयमाश्रित्य मया वादः कृतः। तथाहि हिन्दुस्थाने भारतीयानामस्ति मताधिकारविशेषः। तदत्रापि तेषामधिकारप्रदानं न्याय्यम्। किन्तु मताधिकारप्रयोगक्षमा भारतीयानामिह स्वल्पैव सङ्ख्या। तदेषामधिकाररक्षणं युक्तम्। इत्यहं प्रत्यपादयम् ॥

प्रार्थनापत्रं सप्ताहद्वयमात्रेण दशसाहस्रजनैः स्वहस्तचिह्नितमभूत्। एवंविधकार्यानुभवशून्ये स्वप्रदेशे देशस्यापि विस्तृतविभागेष्वेतावतां जनानां हस्ताङ्कनसङ्ग्रहो नाम न खलु सुकरो व्यापारः। असम्यग्विदितप्रार्थनापत्राभिप्रायात् स्वकं हस्तचिह्नं न कारयितव्या इति कृतनिश्चयत्वात् विशेषयोग्यतासम्पन्ना एव स्वयंसेवका नियोक्तव्या अभूवन्। ग्रामा अन्योन्यविप्रकृष्टाः स्थिताः। बहवः स्वयंसेवका एकान्ततत्परतया यद्यस्मिन्कर्मणि प्रवर्तेरंस्तदा नियतकालमिदं कार्यं समाप्तिमुपेयात्। एवं स्थिते सर्वेऽपि श्रद्धया स्वस्वकार्याणि यथावदुत्साहेन निरवर्तयन्। किन्तु 'शेठदाउदमहम्मद रुस्तमजी आदमजीमियाखान् आमदजीवा' इत्येते पुण्या नामस्मरणीया लिखतो मम स्मृतिमुपयान्ति। एतैर्हि हस्तचिह्नानां भूयिष्ठो भागः समाहृतोऽभूत्। दाउदशेठमहाशयस्तावद् दिनान्तं स्वशकट्या सञ्चरते स्म। सर्वमेतत्सर्वप्रीत्यानुष्ठितं कार्यमासीत्। तेषामेकोऽपि व्ययार्थं द्रव्यमपि नान्वैच्छन्। दादाअब्दुल्लामन्दिरमेव प्रार्थनापत्रस्य निवासस्थलमेव च तत्कार्यालयस्य कार्यालयश्च समजनि। मम साहाय्यकारिणो शिक्षिता मुख्योऽन्ये च बहवस्तत्रैवाभुञ्जत। इत्यस्मिन् कर्मणि महाव्ययं कृतवन्तः सम्भाव्यातिरिक्तो व्ययः न वृत्तः ॥

पर्यन्ते प्रार्थनापत्रं समर्पितमभूत्। जनेषु तस्य पृथग्वितरणाय प्रसिद्धिकरणाय चास्माभिः सहस्रप्रतिरूपकाणि मुद्रापितानि। एतेन नातालदेशस्य परिस्थितिं हिन्दुदेशवर्तिनो भारतीयजना इदं प्रथमतयानुभवन्। अहमेतत्प्रार्थनापत्रस्य प्रतिरूपाणि सर्वेभ्यो वृत्तपत्रकारेभ्यः प्रचारकेभ्यश्च प्राहैष्म ॥

एतद्विषयमधिकृत्य प्रवृत्ते प्रमुखलेखे 'टाइम्स ऑफ इण्डिया' पत्रिका भारतीयाना-मधिकारं पर्यपोषयत्। इङ्ग्लण्डदेशे तत्तद्राजकीयपक्षप्रतिनिधिभ्यो वृत्तपत्रसम्पादकेभ्यः प्रचारकेभ्यश्च प्रतिरूपकाणि प्राहैष्म। लण्डननगरस्य 'टाइम्स' पत्रिकास्मदनुकूलं व्यलेखीत्। ततस्ते निर्वासित मतसिद्ध्याशा समङ्कुरिताभूत् ॥

इदानीं मम नातालदेशं परित्यज्य गन्तव्यकालः समभवत्। मदीयभारतीयमित्राणि मां परिवृत्य नातालेऽस्मिन्मया स्थिरनिवासः कर्तव्य इति निरबध्नन्। मदीयक्लेशान् तेभ्यो न्यवेदयम्। अन्ते स्वगृहप्रतिपालनार्थं वेतनं न स्वीकरिष्यामीति पूर्वमेव मया निश्चितम्।

पृथक्कुटुम्बनिर्वाह आवश्यक इत्यचिन्तयम् । मन्दिरेण प्रशस्तस्थानवर्तिना स्वयं प्रशस्तेन च भाव्यमित्यप्यलक्षयम् । स्वजनस्य गौरवप्राप्तिमिच्छुर्व्यारिस्टर्जनयोग्या जीवनरीतिर्मया प्राप्याश्रयणीयेत्यचिन्तयम् । अन्यूनत्रिंशत्सुवर्णमुद्रा वार्षिकाय्ये कुटुम्बनिर्वाह शक्य इत्यहममंसि । अतस्तत्र्यास्मदीयजनेभ्यस्तावद् द्रव्योत्पादक व्यवहार जात नियमेन मिलेद्यदि तदा तत्र स्थास्यामीति निश्चय मदीय तेभ्यो न्यवेदयम् ॥

तेऽकथयन् ––

सार्वजनिककार्यमुद्दिश्य द्रव्यमेतत्स्वीक्रियते यदि तेन वय सतुष्याम । तदर्थमस्माभिर्द्रव्यसङ्ग्रहोऽपि सुकर स्यात् । न्यायवादिकृत्यप्रसगादुपलभ्योऽर्थस्तु पृथगेवेति ॥

अहमवोचम् ––

सार्वजनिककार्यमुद्दिश्य युष्मभ्यस्तथा द्रव्य नहि स्वीकार्यम् । अस्मिन्कार्ये न्यायवादित्वमाश्रित्य सविशेषबुद्धिमत्त्वमुपयोक्तव्य न भवति । युष्मदीयहस्तेन कार्यनिष्पादन मुख्य मदीयकर्तव्यम् । अस्य कृते कथमह वेतन स्वीकरवै । अपि च तत्तदवसरेषु तत्कार्यमुद्दिश्य युष्मत्सकाशाद्द्रव्य प्रार्थयितव्य भवेत् । वेतनस्वीकारे नि सकोचमेव तद्द्रव्यमार्जितु न शक्येत । पर्यन्ते कार्यमेव विघातमाप्नुयात् । किं च सार्वजनिककार्यार्थं त्रिंशत्सुवर्णमुद्राधिक द्रव्यमस्मदीयै सग्रहीतव्यमित्यहमिच्छामीति ॥

"नून भवदीयस्वभाव कतिपयदिनेभ्यो वय जानीमहे । इद च न सम्यग्विदितमेव यदावश्यकमपि वित्त किमपि भवन्तो न जिघृक्षन्त इति । अपि च भवतामिहावस्थान स्वयमिच्छद्भिरस्माभि स्वयमेव भवदीयव्ययोऽपि सोढव्य इत्येतदनूपपन्नत एव ॥

"युष्मदीयप्रेमोत्साहविशेष एव युष्मानेवमादिन करोति । स एव प्रेमोत्साहस्य निरपायिनी स्यास्यन इति कथमस्माभिर्वेदितव्यम् । युष्माभिरत्वसेवकस्वधर्मानुरूप क्वचिदवसरेषु मया परनोक्ति प्रयोक्तव्या स्यात् । तदानीमपि युष्मत्प्रेमपात्रता मम तिष्ठेद्वा न वेति भगवानेव जानाति । किमन्यत्र विशेषेण भवद्भिरवधेय । तत्सार्वजनिककार्यमुद्दिश्य मया वेतन सर्वथा न स्वीकर्तव्यमिति । युष्मन्न्यायसभासु प्रचलिता ये व्यवहारास्तत्प्रदानप्रतिज्ञाया च कृती स्याम् । तदापि युष्माक दुष्कर परिणमेत् । न खल्वह श्वेतवर्णो न्यायवादी । तस्मात्प्राड्विवाकामपि मन्दया वर्तेतीति को विश्वासोऽपि च न्यायवादिकृत्यनिर्वाहेषु मदीयकौशल कीदृश भविष्यतीति वक्तु शक्यते वा । एव स्थिते युष्माभिर्मे न्यायसभाव्यवहारप्रदानप्रतिज्ञापि वो धैर्य सूचयति । इदमपि मम सार्वजनिककार्याणा प्रतिफलनेन भवितव्यम् ॥"

एव जिज्ञास्य किं तावत्प्रार्थितं चेत् प्रायेण विंशति वणिजो मदीयेकवर्षपर्यन्त न्यायसभासु निर्वर्तनीयकार्याणि मे प्रदातुमभ्यमन्यन्त । दादाअब्दुल्लामहाशयेन मम प्रस्थानावसरे यद्वै प्रदित्सित द्रव्य तेन गृहस्थोचितवस्त्राणि मदर्थे नीत्वा मम प्रादात् ॥

एव मया नतालदेशे निवासोऽङ्गीकृत ॥

## अष्टादशोऽध्यायः

# वर्णद्वेषः

न्यायाधिदेवतामविषमतुलाधरीं निष्पक्षपातिनीमन्धामपि कुशला वृद्धवनिता सांप्रदायिकाश्चित्रयन्ति । न खलु मनुष्याणां मुखदर्शनेन परन्तु पारमार्थिकयोग्यतानुगुण्येन न्यायनिर्णयो देय इति बोधयितुमेव दैवेन सा दृष्टिविधुरा व्यधायि । नाताल्देशस्य न्यायवादिसभा यथा तत्प्रत्यन्यायस्थानमेतत्तत्प्रतिकूलमाचरेत्तथा कारयितुं प्रवृत्ता ॥

तस्मिन्न्यायस्थाने मया न्यायवादित्वेन प्रवेशो लिप्सितः । मन्निकटे मोहमयीनगरस्योच्च न्यायस्थानेन प्रदत्तं प्रमाणपत्रं स्थितम् । तत्र न्यायवादित्वेन प्रवेशावसरे विदेशलब्धं प्रमाणपत्रमर्पणीयमासीत् । नाताल्देशे न्यायसभा प्रविविक्षुणा प्रार्थनापत्रेण सह चारित्रप्रशंसापत्रद्वयमवश्यमेव प्रेषयितव्यमासीत् । तदेतद्यैरोप्यजनप्रदत्तं चेत् प्रशस्यतरमित्यालोच्य शेठअब्दुल्ला महाशयद्वारा धृतपरिचयाभ्यामैरोप्यजनाभ्यां प्रमाणपत्रं समपादयम् । प्रार्थनापत्रं च केनापि न्यायवादिना मदर्थं समुपस्थापनीयमासीत् । प्रायशः प्रार्थनापत्राण्येवंविधानि राजकीयमहान्यायवादिनैव ( ॲटर्नी जनरल ) विनार्थग्रहणं समर्प्यन्ते स्म । एस्कूवमहाशयस्तदानीं तत्पदमध्यास्त । स किल दादा-अब्दुल्ला-कम्पनीपक्षेऽपि न्यायवाद्यभूत् । स एव मया दृष्टः । सोऽपि मम प्रार्थनापत्रिकां समर्पयिष्यामीति हर्षेण प्रतिज्ञातवान् ॥

अत्रान्तरे न्यायवादित्वेन मम प्रवेशं प्रत्यवतिष्ठमानन्यायवादिसभाया सकाशात्सूचनापत्रमेकमागतम् । प्रत्यवस्थानहेतुश्च मम प्रार्थनापत्रेण सहाङ्ग्लविदेशीयलब्धं प्रमाणपत्रं न प्राहैषीति । किन्तु प्रधानहेतुरन्योऽभूत् । पुरा खलु न्यायवादिप्रवेशनियामकशासनस्य निर्माणकाले कृष्णवर्णा वा हरिद्रवर्णा वा मनुष्या न्यायवादित्वाङ्गीकाराय प्रार्थनापत्राण्येव समर्पयेरन्निति केनापि स्वप्नेऽपि न चिन्तितम् । नाताल्देशो हि श्वेतजनानां साहसेनैवाभिवृद्धिमागतः । अतस्तत्रत्यन्यायसभासु प्राधान्यमैरोप्याणामेव रक्षणीयम् । कृष्णवर्णेषु प्रवेशितेषु शनैः शनैराङ्ग्लेयानां प्राधान्यमल्पीभूय स्वात्मरक्षापि तेषां दुष्करा स्यात् ॥

एतदर्थं न्यायवादिसभया कश्चित्प्रख्यातन्यायवादी नियुक्तः । स च दादा-अब्दुल्ला कम्पनीजनं कार्यवान् । तस्मादयमब्दुल्लाशेठमहाशयद्वारा मामाकार्य प्रस्तुतार्थमविकृत्य मया सह निर्व्याजस्पष्टमभाषत । तस्मै मदीयपूर्वाचारविज्ञप्तये सर्वं न्यवेदयम् । अथ सोऽब्रवीत् —भवत्प्रतिकूलतया वक्तव्यं किमपि नास्ति । अत्रैव कश्चन जनो धूर्तानामेकतमो भवद्भिर्भवितव्यमिति मे शङ्का । किं च भवता प्रार्थनापत्रस्य मूलप्रमाणपत्रराहित्यात् स संशयो बलवत्तरोऽभूत् । त्वन्मदीयप्रमाणपत्रयोजका जना न किलात्र दृश्यन्ते । ऐरोप्यजनसकाशादानी-

तत्प्रशंसापत्रद्वयमहमकिंचित्करं मन्ये। मवद्विषयमेतौ किं वा विज्ञाताम्। तयोर्भवत्परिचयोऽपि कीदृशो वा स्यादिति ॥

अहमवोचम्—अत्र सर्वेऽपि मम नूतना एव। अबदुल्लाशेठमहाशयस्य परिचयोऽपि मे प्रथमं जात इति। तेन पुनः कथितम्—

उक्तपूर्वं हि भवद्भिः यदबदुल्लाशेठमहाशयो भवन्तमेकस्थलादागता इति। तत्र भवत्पितरि प्रधानसचिवे सति नूनमबदुल्लाशेठमहाशयेन युष्मत्कुटुम्बपरिचयवतैव भाव्यम्। तत्सकाशाद्भवद्भिः प्रशंसापत्रमानीयते यदि न मे किंचित्प्रतिबंधकं तिष्ठेत्। अथाहमपि भवत्प्रवेशं प्रतिरोद्धुं न शक्नुयामिति न्यायवादिसभां प्रति सप्रमोदं लिखेयमिति ॥

अहमेतदाकर्ण्य क्रोधमूर्च्छितोऽभवम्। परन्तु मया निगृहीतः स कोपः। अथाहमात्मन्येवाचिन्तयम्। अबदुल्लाशेठमहाशयादेव यद्यपि प्रशंसापत्रमानेष्यत तथाप्यांग्लमहापुरुषात्पत्रमेतदानेतव्यमित्यवदिष्यन्। मदीयन्यायवादित्वांगीकारस्य मदीयजन्मचरित्रयोश्च कः संबन्धः। दारिद्र्याद्वा दुश्चरित्राद्वा लब्धजन्मा भवत्वयं जनः। तदेतत्कथमप्रतिकूलतया प्रयुज्यत इति। किन्तु सर्वमेतन्निगीर्य प्रत्यवोचम्—यद्यप्येनमर्थमित्थं न्यायवादिसभा जिज्ञासितुमधिकारिणीति नाहमङ्गीकरोमि तथापि भवदपेक्षानुसारेण प्रशंसापत्रमेकं अबदुल्लाशेठमहाशयादानेतुं सज्जोऽस्मि स्थित इति ॥

अथाबदुल्लाशेठप्रदत्तं प्रमाणपत्रं तस्मै न्यायवादिने प्रादायि। तेन चाङ्गीकृतम्। परंत्वेतन्न्यायवादिसभायै नारोचत। तत्सदस्या मम प्रवेशयोग्यतां प्रति प्रत्यवातिष्ठन्त। प्राड्विवाकश्च श्रीएस्कूंबमहाशयस्य प्रत्युत्तरमशुश्रूषुरेव प्रार्थनापत्रं निरकासयत् ॥

ततः प्रधानप्राड्विवाकेनेत्थमभ्यधायि। प्रार्थयिता मूलप्रमाणपत्रं नोपस्थापितवानिति फल्गुरयं वादः। यद्यनेन प्रेषितं प्रमाणपत्रं मृषात्मकं स्यात् तदासौ व्यवहारेणाभियुक्तः सन्निर्णीतमपराधश्चेत् न्यायवादिवर्गान्निष्कासनमर्हति। धर्मतः परीक्ष्यमाणे कृष्णो जनः श्वेतो जन इति भेदो न प्राप्तः। न्यायवादित्वेन श्रीगांधेः प्रवेशं निरोद्धुं न्यायसभा नाधिकारिणी। तस्य प्रार्थनापत्रमङ्गीक्रियतेऽस्माभिः। गांधिमहाशय क्रियतामधप्रमाणवचनव्याहार इति ॥

ततोऽहमुत्थाय 'रजिस्ट्रार' इति व्यपदिश्यमानं न्यायाधिकरणकार्यदर्शिनमुपसृत्य प्रमाणवचनोच्चारमकार्षम्। अवसितेऽस्मिन्कर्मणि न्यायाधीशो मामाहूय प्राह—भवतः शिरोवेष्टनमिदानीमपनेयनाम्। न्यायवादिभिर्धार्यवेषसंबन्धिनो नियमा भवताप्यनुवर्तनीया इति ॥

अथ मया निरूपिता तादात्विकी मदीयपरिस्थितिः। डरबननगरस्य न्यायसभायां यदेव शिरोवेष्टनं धारयेयमिति यदाग्रहोऽभवं तदेवाहमपनीतवान्। नैवापनेष्य इत्यभिनिवेशबंधस्यात्रापि न किंच कारणानि नाचिन्त। किन्त्वेतदपेक्षया महत्तरयोधनमनुभवाय मामकी शक्ती रक्षितव्याभवत्। शिरोवेष्टनधारणाभिनिवेशमात्रे न मया युद्धाभियोगकुशलता व्ययीकर्तव्या। तदर्थमन्यप्रयोगाय प्रशस्यतरः समयः प्रतीक्षणीयः ॥

एवंविधां मदनुमतिं (मदीयनिर्बलता वा) अवदुल्लागेठप्रभृतिमित्राणामनभिमतामभवत्। न्यायवादिना मया शिरोवेष्टनधारणाधिकारो न परित्याज्य इति तेऽमन्यन्त। अहमेतान्बोधयितुं प्रवृत्तः। देशानुरूपवस्त्रपरिधानमात्रस्यकमिति तेभ्यो न्यवेदयम्। पुनरप्येतानवोचम्—हिन्दुस्थाने यूयमाङ्ग्लेयाधिकारिभिर्वा प्राड्विवाकैर्वा शिरोवेष्टनापनयनमाज्ञप्ताश्चेदवश्यमेव युष्माभि प्रत्यवस्थातव्यम्। किन्तु नातालसदृशविदेशवर्तिनीन्यायसभाहृत्यकारिणो मम न्यायसभाप्रदाय विरुद्धमाचरणं न खल्वनुमोदनीयमित्यादिसयुक्तिकवादे मदीयमित्राण्यहं समादधे। किन्तु विषयस्तावदेकोऽपि सदर्भभेदात् भिन्नदृष्ट्यावेक्षणीय इति यत्तत्त्वं तदत्र प्रसङ्गेऽप्युपयोक्तव्य मित्युपदेशो मदीयस्तेषां हृदयङ्गमोऽभूदिति वक्तुं न शक्यते। अन्याभिप्राये सहिष्णुतामूलं यत्सुखं तन्मदीयजीवने सत्यानुवर्तिनो मम सम्यग्विदितमभूत्। तदेतत्तत्त्वं सत्याग्रहस्य जीवितमित्यनुभवसिद्धमासीत्। ईदृशक्षमावृत्तिवशादनेकशो मम प्राणापायः सुहृज्जनतापश्च समजनि। परन्तु सत्यं वज्रकठोरं कमलवत्कोमलं च भवति॥

एवं न्यायवादिसभया प्रत्यवस्थितोऽहं भूयः ख्यातिमगमम्। बहूनि वृत्तपत्राणि न्यायवादिसभयानुष्ठितमकृत्यमसूयानिमित्तकमिति च प्राहुः। किं च व्याख्यानटीकादिभिरीदृशैर्मम कार्यं भूयः सुकरमासीत्॥

एकोनविंशोऽध्यायः

# नातालभारतीयराष्ट्रमहासभा

न्यायवादिकृत्यं प्रधानकार्यत्वेन मया गणयितुं नाशक्यत। नातालदेशे मम निवासस्य सार्थक्यापादनाय सार्वजनिककार्येषु बद्धलक्ष्येण मया भवितव्यमासीत्। अस्मदीयमताधिकारनिर्मूलनशासनमधिकृत्य प्रार्थनापत्रप्रेषणमात्रेण चारितार्थ्यं न सिध्येत्। अयमर्थः स्वास्थ्यविचारकसचिवस्य यथा मनोऽवगाहेत तथा निरन्तरप्रयत्नकलापोऽवश्यं प्रवर्तनीयः। अस्य कृते स्थायिनीमेकां कार्यमण्डलीं प्रतिष्ठापयितुमावश्यकमित्यालोचयाम। तस्मादवदुल्लाशेठप्रभृतिमित्राणामभिप्रायोऽन्विष्टः। अथ शाश्वती सार्वजनिकमण्डल्येका प्रतिष्ठापनीयेति सर्वमतेन निश्चितमभूत्॥

अस्या नूतनमण्डल्या नामकरणं मम दुष्करो व्यापारः संवृत्तः। तन्नाम्ना किल सघान्तर पक्षपातित्वात्तु भाव्यकेन न भवितव्यम्। ममैतद्विदितमासीत्। यदाङ्ग्लविदेशवार्तिप्राचीनता प्रेमिषक्षीयाना राष्ट्रमहासभेति संज्ञा नाभिमताभूदिति। तथापि भारतवर्षस्य चैतन्यसर्वस्वमपि तत्सभायत्तमासीत्। तस्याः शक्तिः सर्वथा वृद्धिं गमयितव्यैव। प्रस्तुतमण्डल्यां तन्नाम्ना

निर्देष्टु न शक्तित्व्यमियद्‌मालोचयम् । अतोऽहं कारणानि समग्रमपेव मण्टली नाताल भारतीयराष्ट्रमहासभेति संज्ञया व्यवहर्तव्येत्यसूचम् । एवमाग्लपञ्चममासस्य द्वाविंशे दिने सा सभा स्थापिताभूत् ॥

तस्मिन् दिने दादाअब्दुल्लामहाशयस्य विशालकोष्ठशालाजनैरतीव सम्भाभवन् । तत्र मिलिता सर्वेऽपि परमोत्साहेन नवीनमण्डलीनिर्माणमभ्यनन्दन् । तन्मण्डलीकार्यनिर्वाहक्रमस्तु सरल । तदर्थप्रदेय पोषकद्रव्यमनिश्चितमासीत् । मासि मासि पञ्चशिलिंगमितद्रव्यप्रदाताऽर सदस्य त्वमर्जयन्त । आढ्यजनाश्चयाशक्त्यमधिकोऽर्थ प्रदेय इति प्रैरयाम । अब्दुल्लाशेठमहाशय प्रतिमास सुवर्णमुद्राद्वयप्रदान प्रतिपद्य प्रदातृपङ्क्तिकायां प्रथमोऽभवत् । अन्यौ द्वौ सुहृदौ तावदेव पोषकद्रव्य दातुमङ्गीकृतवन्तौ । मयाप्यस्मिन् विषये नोपेक्षितव्यमित्यालोच्य प्रतिमासमेकसुवर्ण-मुद्राप्रदान प्रतिपन्नम् । न खल्विद मे सुकरमासीत् । परन्तु स्वजीविकानिर्वहणक्षमत्वे सति तावत प्रदान न मे शक्तिमतिक्रामतीत्यहमचिन्तयम् । दैवानुकूल्यमप्यधिगतम् । प्रतिमास मेकसुवर्णमुद्राप्रदातृन् बहून् सदस्यानमेलयाम । अर्धसुवर्णमुद्राप्रदातृणा सख्यापि इतोऽपि महती । किं चान्येऽपि धर्मार्थद्रव्यमदु । तदप्यस्माभि कृतज्ञतया स्वीकृतम् ॥

पृष्टमात्र कोऽपि स्वेन प्रदेय द्रव्य न प्रयच्छतीत्यनुभवादज्ञायत । 'डरबन' नगराद्बहिर्निवसत सदस्यान् द्रष्टुमसकृद्गमनमशक्यमासीत् । पूर्वक्षणे दृष्ट उत्साहो नोत्तरक्षणे दृश्यते स्म । 'डरबन' नगरान्तर्वर्तिभ्योऽपि सदस्येभ्यो मासिकद्रव्यमसकृदुपसर्पणमन्तरा नालभ्यत ॥

मासिकशुल्कद्रव्यसग्रहणभार कार्यदर्शिना मयैव वोढव्य आसीत् । गत्वा गत्वा मम लेखकेनादिनान्तमदत्तशुल्कसग्रहप्रयत्नैर कालोऽतिवाहयितव्योऽभवत् । स चानेन निर्विण्णो जात । अस्य दु स्थिते परिहाराय शुल्कप्रदान प्रातिवार्षिकं कृत्वा वर्षारम्भ एव तस्य स्वीकाराय सविधान कर्तव्यमित्यहमालोचयम् । एतदर्थं राष्ट्रियमहासभा समिलिताभूत् । शुल्कप्रदानस्य मासिकत्व मुक्त्वा वार्षिकत्वमङ्गीकरणीय वत्सरारम्भ एव सुवर्णमुद्रात्रय दातव्यमिति सूचितोऽर्थ सर्वैरन्वमोदि । इत्य द्रव्यसग्रह पूर्वापेक्षया सुलभतर सपन्न ॥

विदितपूर्वमेव हि मया यदृद्रव्यमृणीकृत्य सार्वजनिककार्याणि न चालयितव्यानीति । अर्थाद्यत्र लोकप्रतिश्रुत वचन श्रद्धेय स्यात् । प्रतिज्ञातद्रव्यस्य शीघ्रप्रदान नाम न कदापि मदनुभवे दृष्टम् । नातालदेशवर्तिना भारतीयाना प्रवृत्तिरप्येतदनुभवसदृश्यासीत् । नाताल-राष्ट्रियमहासभा द्रव्याभावे किमपि कार्यं नाङ्गीकरोति स्म । अत एव सा न कदापि ऋणग्रस्ता-भवत् । मदीयसहयोगिन परमोत्साहेन नवनवान् सदस्यान् सममेलयन् । ते किलास्मिन्कर्मणि सामिरुच्योऽमून्यानुभव समपादयन् । जटवो तत्कालमेव द्रव्य प्रदाय सदस्यतामापु । देशाभ्यन्तर भागे दूरदूरस्थितेषु ग्रामेषु कार्यं दुष्करमासीत् । जना किल सार्वजनिककार्यस्य स्वरूपानभिज्ञा आसन् । अथापि दूरस्थाः प्रयस्मदागमन प्रार्थयन्ते । स्थले स्थले प्रधानवणिजोऽस्मान् सादरमभ्यनन्दन् ॥

इत्थमटाट्यमानानामस्माकमेकदा स्थिति कष्टतराभवत् । वय कस्यचिद्वणिजो मन्दिरे वसतिमग्रहीष्म । सुवर्णमुद्राषट्कमित शुल्क स प्रयच्छतीति निरीक्षितमस्माभि । परन्तु मुद्रात्रयाधिक तु प्रदानमसौ नान्वमन्यत । तावत्तैव चेद्वय समतोक्ष्याम तदा प्रदातारोऽन्येऽपि तत्कृतमन्वकरिष्यन् । एतेन द्रव्यसग्रहकार्यमवसन्नमभविष्यत् । महती रात्रिवेला समजनि । वय सर्वेऽपि क्षुधिता स्थिता । किन्तु नियमेन जिघृक्षितमर्थमप्राप्य कथ नु भुज्यताम् । तेनेदमङ्गीकारयितुमस्माभि कृत प्रयत्न सर्वोऽपि निष्फलोऽभूत् । स किल वज्रमनस्क इवालक्ष्यत । इतरेऽपि तत्रत्या वणिजस्त मार्गमन्वेतुमयतन्त । स च वय चोभयेऽपि प्रादेशमात्रमपि न चलितव्यमिति बद्धग्रहा सर्वामपि निशामजागृम । मत्सहचरेषु भूयिष्ठो जन क्रोधेन प्रज्वलन्नपि क्रोधमन्तर्निगीर्यातिष्ठत् । पर्यन्ते प्रत्युषस्येव स वणिक् पराजितमात्मान निरूप्य षट्सुवर्णमुद्रा प्रदाय महार्हभोजनेनास्मान् समतर्पयत् । सैषा घटना टोंगाटग्रामे समवृत्ता । किन्त्वस्य परिणाम प्रसृमर सन्नुत्तरतीरोपनिविष्ट-'स्टेंगर'स्थलपर्यन्तमाभ्यन्तरप्रदेशवर्ति 'चार्ल्स टाउन' नगरपर्यन्त च व्याप्तिमगच्छत् । एतेन द्रव्यसग्रहव्यापारोऽस्मदीय शीघ्रतरमचलत् ॥

परन्तु कार्यमस्मदीय द्रव्यसग्रहमात्रविश्रान्त नाभवत् । वस्तुत कार्यनिर्वहणाय यावानर्थोऽपेक्षित तावत समधिकमस्मन्निकटे न खलु स्थापनीयमिति तत्त्वमेतदनुबुद्धपूर्वम् ॥

मण्डली प्रतिमास वा सति समये प्रतिसप्ताह वा सभाममेलयत् । पूर्वसभानिर्णीत वृत्तान्तानामुपन्यासानन्तर नानाविषयाणा जिज्ञासा प्रावर्तत । जनास्तानेव सभाया चर्चयितु सभाजनतया सङ्क्षिप्तभाषण कर्तुमप्यनभ्यासिनोऽभवन् । उत्थाय भाषितु सर्वोऽप्यशङ्कत । एतादृशसभास्वनुवर्तनीयाना नियमाना व्याख्यानमकार्षम् । तेऽपि तदनुरोधेन प्रावर्तन्त । इदमप्येक शिक्षणमिति तैरबोधि । एतावत्पूर्व चतुर्णां जनानामग्रे भाषितुमशङ्कन्त त एव जनोऽद्य सार्वजनिकताया सम्यगालोच्य सभायामुपन्यसितुमभ्यासिनोऽभवन् ॥

सार्वजनिककार्येष्वितरान्यव्यय एव बहुलमर्थं प्रसरत इति मयानुद्धत्वादादौ स्वीकृतिपत्रमुत्तराण्यपि न मुद्रापितव्यानीति प्रथमेन निर्धारितमभूत् । मदीयकार्यालयस्थिते प्रतिकृतीकरणयन्त्रे स्वीकृतिपत्राणामावेदनपत्राणा च प्रतिरूपकाण्यचीकरम् । राष्ट्रियमहासभाकोशो यदा पुष्कलद्रव्येणापूर्यत यदा च सदस्यसङ्ख्या कार्यं चाभिवृद्धिमगात्तदाहमीदृशार्थाना मुद्रापण मङ्गीकृतवान् । सर्वास्वपि संस्थास्वीदृशो मितव्यय आवश्यक । तथापि संस्थाचालका सर्वथा बद्धमुष्टयो न भवन्तीत्यह जाने । अत एव मया बाल्यसंस्थाया शनै शनैरभिवृद्धिमुपेत्य प्रौढिमानमागताया पूर्वदशासम्बन्धिनोऽर्या अल्पाल्पा अपि व्याख्याता ॥

प्रदत्तद्रव्यस्य स्वीकारपत्रप्राप्तौ निरादरोऽभूज्जन । परन्तु गृहीतद्रव्येण स्वीकृतिपत्रमवश्यदात्रे प्रदातव्यमिति नियम आसीत् । इत्थं प्रतिकार्षापणगणना रक्षिताभूत् । अद्यापि नातालभारतीयराष्ट्रियमहासभावेलपत्रेषु चतुर्णवत्युत्तराष्टशताधिकसहस्रतमाब्दस्यायव्ययगणना-

समग्र मिलतीत्यह ब्रूयाम्। अप्रमादेन गणनास्थापन सर्वसंस्थानामत्यावश्यको विषय । अनेन प्रवर्तिनी संस्था नूनमपकीर्तिं यास्यति। यथावद्गणितरक्षणाभावे ह्यखण्डितसत्यरक्षा दुःशका भविष्यति ॥

किं चैषा मण्डली तादृशाभिजनाना सुशिक्षितभारतीयाना सेवामप्यङ्गीकृतवती। 'वि कोलोनियल बोर्न इन्डियन् एज्युकेशनल ॲसोसिएशन्' इत्येतदपराख्यस्वास्थ्याभिजात भारतीयविद्यार्थिक्रमणनाम्नी राष्ट्रियसमाव्यपाश्रयिणी एका संस्था प्रतिष्ठापिता। तत्सदस्येषु भूयिष्ठा सुशिक्षिता इमे युवका। नाममात्रमेभि शुल्क प्रदेयमासीत्। निजक्लेशान्स्वाभीप्सितार्थश्च प्रकाशयितु निजामालोचनाशक्तिमभिवर्धयितु भारतीयवणिजा परिचय सपादयितु सार्वजनिककर्मे- वावकाश प्रापयितु च मघोऽयमेषामुपकारकोऽभूत्। अयमेकस्थर्चामघविशेष आसीत्। सदस्या नियमेन मिलित्वा विविधविषयानधिकृत्य भाषणान्यकुर्वत। अथवा प्रबन्धानवाचयन्। एतत्संस्था संबन्धी पुस्तकसग्रहाख्यश्चैक प्रतिष्ठापितोऽभवत् ॥

इङ्ग्लैण्डदक्षिणाफ्रिकादेशवर्त्याङ्ग्लेयजनेभ्य भारतवर्तिजनेभ्यश्च नाताल्देशस्य यथार्थ परिस्थितिनिवेदन मण्डल्याङ्गीकृत तृतीय कार्यमासीत्। अहमस्य कृते लघुग्रन्थद्वयमरचयम्। तयो प्रथमस्य नाम दक्षिणाफ्रिकावर्तिप्रत्येकाङ्ग्लेयजनेषु विज्ञप्तिरिति। अस्मिन् ग्रन्थे नाताल्- देशवासिना भारतीयाना सामान्यपरिस्थितिरुपावर्णि। द्वितीयग्रन्थस्य नाम 'भारतीयमताधिकार एका विज्ञप्ति' इति। अत्र भारतीयमताधिकारस्य सक्षिप्तचरित तत्सबद्धवृत्तान्ता सख्याश्च प्रत्यपादिषत। एतन्मनद्धविषयाणा पठनमननसधानैरतीव परिश्रम्य पुस्तकद्वयमिद मया प्रणीतम्। तत्परिश्रमानुरूप च फलमवापम्। तत्किल बहुभिर्जनैरपठ्यत ॥

प्रस्तुतपनसलाभादस्माभिर्दक्षिणाफ्रिकादेशे बहुना व्यपाश्रयो हिन्दुस्थाने सर्वपक्षाणा कार्यरूपा सहानुभूतिश्च प्राप्यत। एतेनाग्रे दक्षिणाफ्रिकादेशवर्तिभिर्भारतीयैरङ्गीकरणीय कार्यक्रम स्पष्टमालोकगोचरोऽभवत् ॥

## विंशोऽध्यायः

# बालासुन्दरमः

शुद्धान्तःकरणेन मनःपूर्वकमभीप्सितोऽर्थ सर्वथा मेस्यति। उक्तनियमस्य व्यापरः स्वानुभव एवानेकशो मया दृष्ट। दीनजनसेवैव मदन्तरात्मनो लालसा। इयमेव लालसा मा सर्वदा दीनजनै मघटय तत्सहवृत्तिनाक्षम कृतवती ॥

यद्यपि तद्देशाभिजना भारतीया लेखकवर्गीयाश्च नाताल्देशस्य राष्ट्रियमहासभाया सदस्या आसन् तथापि सामान्यकर्मकर प्रतिज्ञाबद्धकर्मकरैश्च तद्बहिरेवास्थीयत । महासभा नाद्यापि तदीयाभवत् । न किल ते नियतशुल्कप्रदानेन सदस्यत्वमाप्तुमशक्नन् । महासभायास्तु तत्सेवया तत्प्रीतिनिष्पादन शक्यमासीत् । एतदर्थं मया वा महासभया वा न यावद्यत्न कृत तावत्तदर्थकारी कश्चिदवसर स्वय प्राप्तोऽभूत् । न्यायवादिकृत्यमनुतिष्ठतो मम नाद्यापि त्रिचतुर्मासा अपि व्यतीयु । महासभा चाद्यापि शैशवेऽवर्तत । तदैकस्मिन्दिने कश्चन तामिल पटच्चरधारी शिरोवेष्टन हस्ते गृहीत्वा रुदितकम्पमान सम्मुखमुपेत्य स्थित । भग्नाग्रदन्तद्वयस्य तस्य मुखाद्रक्त-मुत्स्रवति स्म । स किल निजस्वामिन प्राप्तबलवत्प्रहार । मम लेखकोऽपि तामिल आसीत् । त मुखेन वृत्तान्तमखिलमवेदिषम् । बालसुन्दरमो (इ॰ हि मजिकूटमागतस्य नाम) डरवन नगरवर्तिन कस्यचित्प्रसिद्धाङ्ग्लपुरुषस्य समीपे प्रतिज्ञाबद्धकर्मकरोऽभूत् । तस्य स्वामी क्रोधावेगसमोहित त बालसुन्दरम बलवत्प्रहारेण भग्नदन्तद्वयमकार्षीत् ॥

तमह कस्यचिद् भिषज समीप प्रैषयम् । तदानीमाङ्ग्लेयवैद्या एव मिलन्ति स्म । बालसुन्दरमस्य प्राप्तक्षतस्य स्वरूपद्योतक वैद्यादेश निर्णयपत्रमावश्यकमासीत् । तदेतत्प्राप्य त क्षताक्षत दण्डाधिपस्य समीप नीत्वा प्रमाणवचनान्वितामभिशसनपत्रिका तदग्रे न्यवेदयम् । दण्डाधिपस्ता वाचयित्वा क्रोधेन स्वामिन प्रत्याह्वानपत्र प्राहिणोत् ॥

नाह स्वामिन दण्डभाजनीकर्तुकाम आसम् । तस्य हस्ताद्बालसुन्दरमो मोचयितव्य इत्येतावदेव ममोद्देश्यम् । प्रतिज्ञाबद्धकर्मकरत्वसबन्धिशासननियमानहमपठिषम् । साधारण कर्मकर पूर्वमनावेद्य परित्यक्तकर्मा निर्गच्छेद्यदि 'सिविल' न्यायस्थाने व्यवहारेणाभियोक्तव्य स्यात् । प्रतिज्ञाबद्धकर्मकरस्य तु विषयोऽन्य । स किल सदृशसदर्भे 'क्रिमिनल' न्यायस्थाने व्यवहार्योऽभवत् । निर्णीतापराधश्चेत् कारागृहे स्थाप्यते स्म । अत एव सर विलियम विल्सन-हण्टरमहाशय प्रतिज्ञाबद्धकर्मकरत्वे प्रायेण दासत्वदेवानर्थप्रदमित्याह । यथा दासस्तथा प्रतिज्ञाबद्धकर्मकरोऽपि स्वामिन स्व निरवासीत् ॥

बालसुन्दरमस्य विमोचनाय मार्गद्वयमेव स्थितम् । प्रतिज्ञाबद्धकर्मकराभिरक्षकत्वपदेशिन-मधिकारिण प्रार्थ्य स्वाम्यन्तरप्रतिपादनरूप तद्विमोचन वा तदभावे बालसुन्दरमस्य स्वामिनैव स्वय विमोचनमित्यह तत्स्वामिन पार्श्वमुपेत्यायाचिषम् । नाह भवन्तमनुसृत्य व्यवहार प्रवर्तयितुकामोऽस्मि । भवत्कृते नास्य मनुष्यस्य दण्डदानेन युष्मदीयमनो दूयत इत्यह जाने । अयमन्यस्मै कर्मकरत्वेन समर्प्यत यद्यह तावतैव । तदेतत्क्षणमेव स प्रत्यपद्यत । ततो मयाभिरक्षको दृष्ट । अन्य कश्चन स्वामी तद्ग्राहको निश्चितश्चे-दस्त्वेवमित्यभ्युपगमोऽदात् ॥

अथाहमेनमन्यत्र कर्मकरत्वाय स्थापयितु प्रास्थित । भारतीयाना प्रतिज्ञाबद्धकर्मकर स्थापनाधिकारो नासीत् । तस्मादस्य नवीनस्वामिनाङ्ग्लेयेनैव भवितव्यमासीत् । तदानीं मे

परिचिता केचिदेवाङ्ग्लेयजना अभिवन् । तेषामेको मया दृष्टः । स च तं कर्मकरत्वेन स्थापयितुमादरेण प्रत्यपद्यत । इत्थमुपकृतोऽहं तस्मै कृतज्ञतां व्यक्तीकृतवान् । दण्डाधिपो बालासुन्दरमस्य स्वामिनमपराधिनं निर्णीय दत्तामस्यानुमतिं निर्णये लिलेख ॥

बालासुन्दरमव्यवहारं सर्वस्यापि प्रतिज्ञाबद्धकर्मकरस्य श्रोत्रमगाहत । ते कर्मकरा स्वमित्रं मामन्यन्त । अहमनेन सम्बन्धेन मुदितोऽभवम् । एतत्कर्मकरप्रवाह एव मदीयकार्यालयं प्रति स्यन्दितुं प्रावर्तत । एतेन तदीयसुखदुःखपरिज्ञानाय मयात्युत्तमोऽवकाशो लब्धः ॥

एतद्व्यवहारप्रथा दूरवर्ति मद्रासनगरीपर्यन्तं प्रसृताभूत् । तत्रत्य नानाप्रदेशेभ्यः समागच्छद्भिः प्रतिज्ञाबद्धकर्मकरैरेतद्व्यवहारवृत्तान्तो निजवयस्यमुखादश्राव्यत । अस्मिन्व्यवहारो यद्यप्यसाधारणो विषयः कोऽपि नासीत् तथापि नातालदेशेऽस्मिन्नस्मदीयपक्षमवलम्ब्य सर्वसमक्षमस्मदभ्युदयाय प्रयत्नवान्कश्चित् पुरुषः कश्चिदस्तीति तेषां प्रतिज्ञाबद्धकर्मकराणामाश्चर्यमानन्दो धैर्यं च समजायन्त ॥

उक्तपूर्वं हि मया यद्बालासुन्दरमः स्वहस्ते शिरोवेष्टनमादाय मदीयकार्यालयं प्रविष्ट इति । न केवलमयमतिमात्रमनोव्यथाहेतुर्विषयः परन्त्वनेनास्मदीयावनतस्थितिरपि व्यक्तीभवति स्म । मदीयोष्णीषापनयनाज्ञामभिकृत्य प्रागेव मयोपन्यस्तम् । ऐरोप्यजनं दिदृक्षुभिः प्रतिज्ञाबद्धकर्मकरैरागन्तुकभारतीयैश्च शीर्षकधारिभिरुष्णीषधारिभिर्वस्त्रवेष्टितशिरोभिर्वा तत्र शीर्षकोष्णीषशिरोवेष्टनानि सर्वथापनेतव्यानीत्यनुल्लङ्घ्य कश्चिन्नियमो रूढमूलः । करौ सम्पुटीकृत्य नमस्कारोऽपि न पर्याप्तोऽभूत् । मदग्रेऽप्ययमभ्यासोऽनुवर्तनीय इति बालासुन्दरमोऽमन्यत । इदं प्रथममेवेदृग्विषयो मदनुभवगोचरः समवृत्तः । अनेनापमानसन्तापग्रस्तोऽहमुष्णीषं धारयस्वेति तमवोचम् । स च मनाक् सङ्कोचमनुभवन्नेव यथोक्तमकार्षीत् । किन्त्वयमनेन प्रमोदमापेति तन्मुखावलोकनाद्विदितमभूत् । स्वनिर्विशेषं मानुष्यकमासन्नामितरेषामवहेलनया स्वगौरवमुच्छ्रायमाप्नोतीति जनः कथं वा मन्येतेत्ययं मे रहस्यः सर्वथा दुःखगम्योऽर्थः ॥

एकविंशोऽध्यायः

## त्रिसुवर्णमुद्राशुल्कम्

बालासुन्दरमव्यवहारेण प्रतिज्ञाबद्धकर्मकराणां भारतीयानां परिचयो मे जातः । तेभ्यः प्रातिस्विकं शुल्कमादातुं तत्रत्यश्वेतजनैः कृतं सन्नाहं कर्मकराणां परिस्थितिं सम्यक् परिशीलयितुमनोद्बुद्धं मां प्रैरयत् ॥

तस्मिन्नवसरे तथा च चतुर्णवत्युत्तराष्टशताधिकैकसहस्रतमेऽब्दे नाताल्राज्यभार प्रतिज्ञाबद्धकर्मकराणामुपरि पञ्चविंशतिसुवर्णमुद्रामितं वार्षिकं शुल्कमारोपयितुमुद्यतोऽभूत्। अहमिदं दृष्ट्वा विस्मितोऽभवम्। नियमेन राष्ट्रियमहासभाया चर्चाविषयं नीतवान्। तत्क्षणमेव प्रत्यवस्थानाय यथावत् यतितव्यमिति निश्चय कृत ॥

आदौ करस्यास्य मूलं सङ्क्षेपादुपवर्ण्यते ॥

प्राय पञ्चोत्तराष्टशताधिकैकसहस्रतमे वत्सरे नाताल्देशस्थायिन आङ्ग्लेयास्तत्रेक्षुव्यवसाय सार्थयितुमस्ति प्रशस्तोऽवकाश इति मत्वा कृष्यारम्भाय कर्मकरानपैक्षन्त। इक्षुव्यवसाय शर्करानिष्पादनं च श्रमाधिक्यं विना न शक्यमासीत्। नाताल्देशवर्ती जुलुजन तत्काय क्षमो नाभवत्। तस्मान्नाताल्राज्यभारो हिन्दुस्थानराज्यभारेण कृतपत्रव्यवहारो हिन्दुस्थाना त्कर्मकरानानाययितुमनुज्ञामवाप। एतदनुसारेण कर्मकरैर्नाताल्देशे पञ्चवर्षाणि यावत् भृतिकर्म करिष्याम इति प्रतिज्ञापत्रं लेखितव्यम्। पञ्चवर्षात्यये च तत्रैव निवासकरणाय स्थिरत्व स्वीकरणाय च तैरधिकारवद्भिर्भवितव्यम्। इत्यासीन्नियम कर्मकराणा प्रलोभनाय प्रदर्शितेयमाशा। समाप्ते हि प्रतिज्ञावधौ कर्मकराणामेषा परिश्रमेण फलितव्यवसायस्याभिवृद्धि सुकरा भविष्यतीति तत्रत्यश्वेतजना निरीक्षा चक्रिरे ॥

परन्तु भारतीया चिन्तितादधिकं साधयामासु। ते किल शाकानि प्रकाममरोहयन्। न केवलं स्वदेशीयशाकानि तैस्तत्रारोप्यन्तापि तु तदन्यानि शाकानि महार्घतामनीयन्त। किं च देशेऽमुष्मिन्नाम्रसस्यारोपणं तैरेवारभ्यत। एतेषा साहसं व्यवसायमात्रविश्रान्तं नाभूत्। ते किल वाणिज्येऽपि प्रवृत्ता। मन्दिरनिर्माणाय भूखण्डमक्रीणत। एतेषा भृतकवृत्तयोऽपि बहवो गृहक्षेत्रारामस्वामिनो बभूवु। हिन्दुदेशस्य वणिजोऽप्येताननुसरन्तो वाणिज्याय स्थितिं तत्रैव जगृहिरे। दिवंगतोऽबुबकर आमद् शेठ्महाशयस्तेषा प्रथम। शेठवणिजाना व्यापार सर्वत्र शीघ्रं व्यानशे ॥

इदमालोक्य श्वेतवणिजो भीतिमापु। पुरा हिन्दुदेशीयकर्मकराणामागमनमिच्छद्भि रेतैर्वणिग्वर्गोदयस्तदीय न पर्यगण्यत। स्वतन्त्रव्यवसायस्तदीयो यद्यपि श्वेतजनाना सहनीय स्यात्तथापि वाणिज्याया पारस्पर्धा दु सहाभवत् ॥

तदेतद्भारतीयान् प्रति द्वेषस्य बीजमुवाप। अन्ये च बहवोऽर्थास्तदभिवर्धनाय सह कारिणोऽभवन्। आर्ययोर्जीवनप्रणालीवैलक्षण्यमस्माकमार्जवमल्पव्ययमेनापि तुष्टिरारोग्यशौचयोरल्प श्रद्धा परिसरप्रदेशस्य नैर्मल्यरक्षणोपेक्षापादनेन यथावदभिरक्षणेऽस्मदौदासीन्य मन्दिराणा सौन्दर्यस्य रक्षाविधानेऽस्मदीयकार्पण्यमिति सम्प्रदाययोर्भूतभेद इत्यादिभिर्विभिन्नभूय द्वेषाग्नि समधुक्षयन् ॥

अथ द्वेषो भारतीयानामधिकारापरिहाराय प्रवृत्तशासनरूपेण प्रतिज्ञाबद्धकर्मकरेभ्यः शुल्कग्रहणाय प्रवृत्तशासनरूपेण च स्वात्मानमाविश्चकार। अपि चान्यविधा अप्युपद्रवाः प्रागेव प्रादुरासन्॥

भारतीयकर्मकरान् बलात्स्वदेशं प्रतिनिष्काल्य तदीयप्रतिज्ञावधिस्तत्रैव यथा समाप्येत तथा सन्निधातव्यमिति प्रथमसूचना प्रवृत्ता। हिन्दुस्थानराज्यभारस्तामेतां नानुमोदेतेति द्वितीया सूचना समुपस्थापिताभूत्। सा यथा—

(१) समाप्ते प्रतिज्ञावधौ कर्मकरेण हिन्दुस्थानं प्रति गन्तव्यम्। अथवा

(२) प्रतिवर्षद्वयं नूतनप्रतिज्ञालेख्यं प्रदेयम्। प्रत्येतदवसरं भृतिवृद्धिं करिष्यते। किं च

(३) हिन्दुस्थानं प्रति परागन्तुमिच्छुर्वा नूतनप्रतिज्ञाकरणमप्रतिपद्यमानो वा कर्मकरः प्रतिवत्सरं पञ्चविंशतिसुवर्णमुद्रामितं शुल्कं प्रदद्यात्॥

तामेनां सूचनां प्रति हिन्दुदेशराज्यभारस्यानुमतिप्रेप्सया नातालराज्यभारः 'सर–हेन्री बीन्स श्री मेसन' इत्येतदाख्यौ प्रतिनिधी प्रजिघाय। तदा हिन्दुस्थाने लॉर्डएल्गिनमहाशयो राजप्रतिनिधिरासीत्। यद्यप्यसौ पञ्चविंशतिसुवर्णमुद्राशुल्कग्रहणं नानुमेने तथापि प्रातिस्विकत्रिसुवर्णमुद्राशुल्कप्रदेयतामङ्गीचकार। अथ हि राजप्रतिनिधेर्महान् कर्तव्यलोप इत्यह तदानीं चिन्तयम्। इदानीमपि तथैव मन्ये। अनुमतिमीदृशीं ददानस्यैष नूनं भारतदेशस्य श्रेयो मनसि नैवाकलयत्। एवं नातालदेशस्थायिनामाङ्ग्लेयानामानुकूल्यकल्पनं सर्वथा तस्य कर्तव्यं नाभवत्। इतश्चितुरवत्सरान्ते सर्वेणापि प्रतिज्ञाबद्धकर्मकरेण तस्य भार्यया षोडशवर्षातीतपुत्रेण त्रयोदशवर्षातीतदुहित्रा च शुल्कमेतत्प्रदेयमासीत्। गृहे स्वामिना प्रतिमासं सपाद्यमानेऽर्थे चतुर्दशशिलिङ्गपरिमितद्रव्यादनधिकेऽपि चतुर्भिर्जनैर्दम्पतीभ्यां पुत्राभ्यां च समन्वितकुटुम्बाद्द्वादशसुवर्णमुद्राशुल्कग्रहणमत्यन्तमन्याय्यमासीत्। ईदृशो न्यायो जगति कुत्रापि न दृश्यते स्म॥

वयमेतच्छुल्कविरोधेन प्रचण्डयत्नकलापं व्यदध्महि। विषयेऽस्मिन्नातालभारतीयराष्ट्रमहासभा तूष्णीमकरिष्यद्यदि राजप्रतिनिधिः प्रायेण पञ्चविंशतिसुवर्णमुद्राशुल्कग्रहणमभ्युपागमिष्यत्। पञ्चविंशतिसुवर्णमुद्राभ्यो मुद्रात्रय प्रत्यवरोहस्य महासभा प्रवर्तितो यत्नकलाप एव बहुशः कारणमासीत्। किन्त्वेवं मया यदनुबुद्धं तदयथास्थितमपि स्यात्। महासभा तावत् प्रत्यवतिष्ठेत वा न वा हिन्दुस्थानराज्यभारस्तु पञ्चविंशतिसुवर्णमुद्राशुल्कग्रहणमनङ्गीकृत्य स्वयमेव त्रिसुवर्णमुद्रा शुल्कत्वेन निर्णीतवान् स्यात्। इदमस्तु यथा कथं वा। हिन्दुस्थानराज्यभारस्तु वैयक्तिकशुल्कग्रहणमनुज्ञाय विश्वासघातमाचरत्। हिन्दुस्थानस्य श्रेयोऽर्थमधिकृतेन राजप्रतिनिधिना कथमप्यस्यानुमतिर्न प्रदातव्यासीत्॥

पञ्चविंशतिसुवर्णमुद्राभ्य त्रिसुवर्णमुद्रात्वेन शुल्कस्य न्यूनीकरणाय महासभया कृतः प्रयत्नो न तावन्महत्त्वपूर्णमिति गणयितुमर्हमासीत्। कर्मकराणामास्थितो य सौख्यभङ्गस्तस्य

साफल्येन निवृत्तिरसम्भवेति भीतिरनास्थितैव । करोऽयमवश्यमेवापसारणीय इत्येतन्महासभाया नित्यध्येयमासीत् । किन्तु मनोरथस्यास्य सिद्धये विंशतिवर्षाण्यपेक्ष्यन्त । सा सिद्धिर्न केवलं नातालदेशावस्थितभारतीयानामपि तु दक्षिणाफ्रिकाखण्डवर्तिनिखिलभारतीयानामपि परिश्रमात्फलिताभूत् । दिवंगतगोखलेमहाशयाय प्रदत्तवाग्दानभङ्ग एव चरमयुद्धस्य हेतुरासीत् । सर्वेऽस्मिन् कर्मकरैर्निजभारं समवहन् । तेषु केचिद्राजकीयगोलीप्रहारेण प्राणानत्यजन् । शतसहस्राधिका कारालयस्य वासमन्वभूवन् ॥

किन्तु पर्यन्ते सत्यस्यैव जयोऽभवत् । तत्सत्यं भारतीयैरनुभूतदुःखकष्टरूपेण मूर्तिमदासीत् । किन्तु निर्विकल्पश्रद्धा निरवधिकतया निरन्तरप्रयत्नानामभावे सत्यस्य जयो नाभविष्यत् । अस्मत्पक्षीया समरादपासरिष्यन्यदि राष्ट्रियसभा च युद्धाद्विरम्य शुल्कप्रदानमिदं सर्वथा परिहार्यमिति शिरो नानमयिष्यत् यदि तदा प्रतिज्ञाबद्धकर्मकरैः सतावत्करोऽयं व्यक्तिशुल्को न केवलमद्यावधि प्रादास्यत । अपि तु दक्षिणाफ्रिकाखण्डवर्तिभारतीयानां हिन्दुस्थानभारतीयानां चापमानो ध्रुवस्थायी समपद्यत ॥

द्वाविंशोऽध्यायः

## तुलनात्मकदृष्ट्या धर्मज्ञानलाभः

जनसेवायामहमेकान्ततो निमग्नः खलु । तत्कारणं चात्मसाक्षात्कारलिप्सैव । सेवापुरःसरमेव भगवत्सान्निध्यलाभः शक्य इति मन्वानोऽहं सेवाधर्ममेव स्वधर्मतयाग्रहीषम् । मम दृष्ट्या सेवा नाम भारतदेशसेवा । सेवा मम निसर्गसिद्धाभवत् । अहं काठियावाडदेशस्य कुतन्त्रेभ्यो दूरीभवितुमिच्छु स्वजीविकां सम्पादयितुं च दक्षिणाफ्रिकादेशं गतोऽभवम् । किन्तु पूर्वोक्तरीत्या भगवदन्वेषणे स्वात्मसाक्षात्कारसाधने चाहं समुद्यतः स्थितः ॥

ज्ञानार्जनतृषा मदीया मम क्रैस्तसुहृद्भिः शमयितुं नाशक्यत । यद्यपि कदाचिन्मया ज्ञानार्जनासक्तिः परित्यक्ता स्यात् तथाप्यमी न मामसक्तं मुञ्चेयुः । डरबननगरे दक्षिणाफ्रिकावर्ति 'जनरलमिशन्'सङ्घप्रधानः स्पेन्सर वॉल्टननामा मयि दृष्टिमाक्षिपत् । अहमपि तदीयकुटुम्बस्यैकतम इव संवृत्तः प्रिटोरियानगरे क्रैस्तमनीषिभिः सह सम्पर्क एवास्य परिचयस्य हेतुरिति पृथगनुमातुमशकम् । वॉल्टनमहाशयस्य रीतिरेवान्यादृशी । क्रैस्तमतं मयावलम्बनीयमिति तेन कदाप्युपदिष्टं न स्मरामि । परन्तु स्वजीवनमखिलं विवृतपत्रमिवासौ मदग्रे प्रादुरकरोत् । तस्य वाक्कायकर्माणि यथा उक्तं तथा स्वयमाचरत् । तस्य भार्या सौम्यप्रकृतिः कुशला च । ममानयोर्दम्पत्योः प्रवृत्तिभि-

नीयाभवत् । आवयोर्मुख्यांशेषु यो मतभेदः सोऽस्माकं विदित आसीत् । स तु निरवधिकजिज्ञासयापि प्रमार्जितुमशक्योऽवर्तत । सहनौदार्यसंयमनिधाने भेदा अप्येतादृशा उपकरिष्यन्ति । अनयोर्दम्पत्योर्नम्रता धर्मश्रद्धा सहिष्णुता च मम सतोषमजनयन् । सर्वदा वयममिलाम हि ॥

एषा मैत्री मदीयधर्मासक्तिमपार हीयमानामरक्षत् । प्रिटोरियानगर इव नात्र धर्मजिज्ञासावकाशो लभ्यते स्म । तथापि स्वल्पमल्पमवकाशमहं यथावदुपायुङ्क्षि । धर्मविषयकः पत्रव्यवहारो मदीयोऽद्यापि प्राचलत् । श्रीमान् रायचन्द्रभाईमहाशयो मम मार्गं दर्शयति स्म । कश्चित्सखा नर्मदाशङ्करप्रणीतं धर्मविचाराख्यं प्रबन्धं मे प्रैषयत् । तद्गता पीठिका मम बहूपकारिणी जाता । श्रुतपूर्वी हि मयानवस्थितमद्यावमानस्य तस्य जीवनवृत्तान्तः । स्वीयधर्माभ्यासेन तस्य जीवनमयथा परिवृत्तमिति तत्पीठिकाया यद्गुणादितं तन्मदीयं मानसमाकर्षत् । ग्रन्थेऽस्मिन् जाताभिरुचि सावधानमेनमामूलान्तमपठिषम् । मेक्समूलरप्रणीतं 'भारतवर्षम्-अनेन किमस्माभिः शिक्षणीयं' इत्येतदाख्यं पुस्तकं ब्रह्मज्ञानमण्डल्या ( थियॉसोफिकल सोसायटि ) प्रकाशितमुपनिषद्भाषान्तरं च तत्परतयापठिषम् । सर्वमेतत्तु केवलं हिन्दुधर्मे ममाभिमानमवर्धयदपि तु तद्धर्मसौन्दर्यं मे शनैः शनैर्व्यक्तमकरोत् । किन्त्वनेन मतान्तरतिरस्कारबुद्धिर्मे न जाता । वॉशिंग्टनअर्विंगप्रणीतं "'महमदः' तदुत्तराधिकारिणश्च" इत्येतत्पुस्तकं कार्लाइलविरचिता महमदप्रशंसा च मयापाठि । एताभ्यां पुस्तकाभ्यां महमदे मम सदभिप्रायोऽजायत । किं च जरथुस्त्रवचनानि इत्येतदाख्यो ग्रन्थोऽपि मया पठितः ॥

इत्यहं तत्तद्धर्माणां ज्ञानमधिकाधिकमुपार्जयम् । अनेन न केवलमात्मपरामर्शदार्ढ्यमजनि परन्त्वेतदभ्यासिनो मम यचनिर्दोषतया ग्राह्यमस्फुरत्तत्स्वयमनुष्ठाय प्रदर्शयितुं प्रावर्तिषि । इत्थं मार्गग्रन्थानधीयानो यथाशक्ति योगाभ्यासमनुष्ठातुमारभे । किन्त्वस्मिन्मार्गे नाहमतिदूरं प्रयातुमशकम् । अतोऽहं निरचैषं यन्मया हिन्दुस्थानं प्रति निवृत्य योगतत्त्वाभिज्ञानां साहाय्येन पुनरभ्यसितव्यमिति । किन्त्वेष मनोरथो नाद्यापि सिद्धः ॥

टॉलस्टॉयमहाशयस्य ग्रन्थानभ्यापाततोऽहमपठिषम् । 'क्रिस्तस्योपदेशानां सारांशः' 'किं कर्तव्यम्' इत्यादिपुस्तकान्यतिमात्रं हृदयङ्गमान्यासन् । विश्वप्रीतेरमेयशक्तिः शनैः शनैर्मया सम्यगबोध्यत । प्रायोऽस्मिन्नेवावसरे मयान्येन क्रैस्तकुटुम्बेन सम्पर्कः सवृत्तः । तद्वाक्यानुरोधेन प्रतिभानुवासरमहं 'वेस्लियन'प्रार्थनामन्दिरमगच्छम् । तेषु दिवसेषु तद्गृह एव भोक्तुमामन्त्रितोऽभवम् । प्रार्थनामन्दिरविषये सदभिप्रायो मे न जातः । तत्र क्रियमाणा उपन्यासा स्फूर्तिकरा नाभवन् । तत्र मिलन्तो जना धर्मविषये नहि श्रद्धालवोऽदृश्यन्त । न किल सा भक्त्युपेता मण्डली । ते जना मनःक्लान्तिपरिहाराय सम्प्रदायानुवर्तनाय च प्रार्थनामन्दिरं जिगमिषवो लौकिकमनस इवालक्ष्यन्त । तत्र कस्मिंश्चिदवसरे निद्रापरवशोऽभवम् । एतेन मे लज्जा समजनि । किन्तु परितो वर्तिनां केषाञ्चिज्जनानां समवस्थां मदीयसदृशीमेवावलोक्य मन्दीभूतव्रीडः संवृत्तः । चिरायैव वर्तितुं न शक्यमभूत् । कतिपयैरवाहोभिस्तद्गमनादुपारंसिषम् ॥

प्रतिभानुवासरं भयोपस्थीयमानेन कुटुम्बेन मदीयमभ्यन्य सहसा विजवटे। वस्तुतो मदागमनं तैर्निषिद्धमित्येव वक्तव्यम्। तदेव संवृत्तम्। तद्गृहस्वामी सरलस्वभावः सज्जनश्च। परन्तु मनाक् क्षुद्रहृदयः। आवां सदा धर्मजिज्ञासामकुर्वहि। तदानीं 'आर्नोल्ड' प्रणीतस्य 'एशिया-ज्योति' नामकग्रन्थस्य पठनावृत्तिः क्रियते स्म। एकदा क्रिस्तबुद्धयोर्जीवनमभिकृत्य परस्परं तुलनामकुर्वहि। अथाहमवोचम्—गौतमस्य दयालुतां पश्यत। न खलु सा मनुष्यमात्रे विश्रान्ता। परन्तु सकलजीवजन्तुव्यापिनी बभूव। तदीयस्कन्धोपरि सानन्दमुपविष्टश्छागपोतो यदि स्मरण-पदवीं नीयते तदास्मदीयहृदयं ननु प्रेमरसपरिपूर्णमिव हि लपचते। सर्वप्राणिगोचरं ईदृशं प्रेमक्वचो न किल क्रिस्ते दृश्यत इति। इमां तुलनामाकर्ण्य सा व्याकुलाभवत्। तस्याश्चित्तवृत्तिर्मया ज्ञाता। तत्कथालापादहं व्यरंसिषम्। वयं भोजनशालामगच्छाम। जलपञ्चवर्षदेशीयः यस्तस्याः सुन्दरः कुमारोऽपि सहास्माभिः स्थितः। बाल्यकोटीगतस्य मे पाल्यानन्दस्तादृगन्यदा मया कदापि नानु-भूयते। अहं बालश्च वहो कालासुहृद् बभूव। अहं तदीयशरावगतमांसं तुच्छीकृत्य मदीयशराव-स्थितं शैवफलमेव प्राशंसिषम्। तदेतन्मुग्धबालस्य मनसि स्फुटमुदभासीत्। सोऽपि मया सह फलं प्रशंसितुं प्रवृत्तः॥

किन्तु तन्माता शङ्किताभवत्। अहं प्रबोधमापम्। तां कथां विरमय्य प्रस्तावान्तरमकरवम्। भाविनिवारे यथापूर्वं तदीयगृहमगच्छम्। मनस्तु न क्षानरमासीत्। तथापि गमनवैमुख्यं नेष्टिनम्। नचैव पराङ्मुखत्वमुचितमलक्ष्यत। परन्तु सा मदीयमार्गं सुगमं नकल्पयत्॥

सा प्राह—शास्त्रिमहाशय भवन्मतान्मम कुमारस्य श्रेयो न हि भविष्यतीत्युक्तिं मदीयामा-कर्ण्य भवता नान्यथा मन्तव्यम्। स किल प्रतिदिनं भवदुपन्यस्तकारणान्येवोक्त्वा मांसाशनं शङ्कमानः फलं चिरस्मादिभुर्मां पृच्छति। नाहमिदं सहितुमुत्सहे। मांसवर्जनादस्यास्याभावेऽपि तस्य शक्तिः परिहीयेत। इदमहं कथं सहेयम्। इतः परं निजाभिप्रायकाले प्रौढैरस्माभिर्निज्ञास्यताम्। एवंविधा जिज्ञासा सर्वथा बालकानामनर्थप्रदा स्यादिति॥

अहं प्रत्यवोचम्—भवति विषण्णोऽस्मि। ममापि पुत्रवत्त्वाभिमाने खलु पुत्रस्य कृते भवत्याश्चिन्तनम्। अस्या तु स्थिते परिहारं सुकरमहं मन्ये। अस्य शिरोभद्रवाक्यश्रवणापेक्षया मदीयभोज्याभोज्यस्वीकारवर्जनक्रियावलोकनेन दृढतरं परिणामो मनसि जायेत। तस्मादिहाग-मनाद्विरमणमेव प्रशस्यतमोपायः। अनेनावयोर्मैत्र्या न कापि क्षतिः स्यादिति॥

सद्य एव स्पष्टमुपलक्ष्यमाणमनोनिर्वृत्तिः सा प्रत्यवोचत्। अहं च कृतज्ञास्मीति॥

त्रयोविंशोऽध्यायः

# गृहे याजमन्यम्

संसारप्रतिष्ठापन तावन्ममासीन्नूतनोऽनुभव । किन्तु मोहमयीलण्डननगरयो कुटुम्बनिर्वाहा-पेक्षयात्र तन्निर्वाहे विशेष आसीत् । अत्र ह्यात्मगौरवरक्षार्थमधिको व्यय समपद्यते । नाताद्य देशे भारतीयरायबहादिना भारतीयप्रतिनिधेश्च मम योग्यतानुरूप तन्त्रयितव्यमिति मया व्यचिन्ति । अत शोभने प्रदेशे दर्शनीयमेकमल्पमन्दिर निवासायाग्रहीषम् । तदुचिताश्च सभारा समपाद्यन्ते । यद्यपि वय सामान्याहारमगृह्णीमहि तथाप्याङ्ग्लेयमित्राणा भारतीयसहचराणा च तत्तदवसरेषु मया भोक्तुमामन्त्र्यमाणत्वात् तन्निमित्तो व्यय सवदाधिकमासीत् ॥

सद्भृत्य प्रतिकुटुम्बमावश्यक । किन्तु भृत्यवत् कमपि गणयितु ममाभ्यासो नास्त्येव ॥

मम वयस्य साहायकृच्च सुहृदेक कौटुम्बिकजनवदेव स्थित । सूद एकश्चास्ताम् । मम कार्यालयलेखका मया सहैव भुञ्जाना गृहे प्रत्यवसन् । अस्मिन्कुटुम्बनिर्वाहप्रयत्ने मम प्राय प्रयोजनलाभे दृष्टेऽपि जीवनस्य कटुफलमपि न किल न दृष्टम् ॥

मम वयस्य पर बुद्धिमान् । स च प्रामाणिक इत्यपि मया चिन्तितम् । परन्त्वत्राह वञ्चितोऽभवम् । स किल मसहवर्तिन्येतस्मिन्लेखकेऽसूया दधान तद्विषयिणीं कथा तथोपपादय यथाहमेना श्रुत्वा लेखक प्रति सशयग्रस्तोऽभवम् । स एष लेखक पर स्वतन्त्रप्रकृतिरात्मान सशयभाजनीभूतमवगतमात्र एव गृह स्वोद्योग च सम परित्यज्य निरगात् । एतेन मे सतापो जात । मयास्य कदाचिदन्याय्यमनुष्ठित स्यादिति चिन्तया सदा मे हृदयमदूयत ॥

अत्रान्तरे कतिपयदिनानि विश्रान्तिमपेक्ष्य वा कारणान्तरेण वा न जाने मम सूदो गत । अतस्तस्या तनिधानाय कश्चिदन्विष्य नियुक्तोऽभवत् । स च ( द्वितीयसूद ) सुतरामयोग्य इति पश्चादज्ञासिषम् । किन्तु पर्यन्ते तथोपयुक्तोऽभवद्यथाहमेन मम श्रेयोऽर्थमेवागत देवदूतममसि ॥

असौ निजागमनात् द्वित्रदिनसंख्य मपरोक्ष मदीयगृह एव प्रचरन्तीरक्रमघटना काश्चिदप्यक्षीकृत्य तद्विषये मा प्रबोधयितु कृतनिश्चयोऽभवत् । सहसा प्रत्ययशीलोऽप्यह निश्चि तस्वभावो मनुष्य इति लोको मामन्यत । अतस्तस्य तत्प्रत्यक्षीकरणकथा भूयो भयकरी समदृश्यत ॥

मया मध्याह्ने प्रतिदिन एकवादनसमये भोजनाय कार्यालयाद् गृह प्रति गम्यते स्म । एकदा प्रायो द्वादशवादनवेलायामय सूदो मपार्श्वमेको द्रुतसेन प्रधावित सन्नकथयत् । झटिति गृह गम्यताम् । आश्चर्यमस्त्यत्रमिति ॥

अहमपृच्छम् - किमिद ब्रूषे । कथ्यता किं वृत्तमिति । तदसावेमितुमिदानीं कार्यालय विसृज्य पयलागन्तव्यमिति ॥

अनागमने पश्चात्तापो भविष्यति। विरोमाद्भकु नो सदे॥

तदीयमङ्गिमालोक्य तद्वचन यथार्थमित्यहमचिन्तयम्। लेखकमेक समादाय गृह प्रति प्रास्थिषि। मूढोऽस्मत्रे गत। स मामगलिकोपरि नीत्वा मदीयमित्रस्य कोष्ठ प्रदर्शयन् तत्कोष्ठ-द्वार तावदुद्घाट्य निहुत्यतामित्यवादीत्॥

तदाहि मया ज्ञातम्। द्वारमह नृत्तेनासाल्यनम्। न हि प्रतिवचनम्। भित्तिकाश बल्वन् द्वारमयम्। द्वारमपात्रियन। अन्तरेका वेश्या स्थिता॥

तामवोचम्—भगिनि त्वमितोपसर। इत पर अत्र मा ते पाद निरा इति॥

अथ वयस्यमगादिषम्—अद्य प्रभृत्यावयोर्न कोऽपि नव न। अहमनिमात्रवचिनामा बुद्धिशून्योऽस्मि। त्वयि बद्धविश्वासस्य मे नन्वयमर त्वया कृत उपकार इति॥

वयस्यस्तु प्रबोधमनवाप्य गर्वान्ध सन् त्वामह प्रकाश नेष्यामीति मामनर्जयत्॥

तदाहमवोचम्—निगूहितव्य नाम वृत्त मयि किमपि नास्ति। यत्किमप्यस्ति चेत्तदवश्य प्रकाश्यताम्। किन्तु त्वया नन्वेतस्मादेवापसर्तव्यमिति॥

एतदाकर्ण्य वयस्यस्याविवेक परा कोटिमारोहत्। अत्र नासीत्कोऽप्यन्युपाय। तदहमत्र स्थित लेखकमित्यमवोचयम्—'पोलीससुपरिन्टेन्डट' स्यस्याधिकरणि समीप गत्वा मदीय वचनानि तस्म निवेद्य ब्रूहि मत्सहवर्ती कश्चिमनुष्यो दुष्कृत्यकारीति मया स्वगृहे स्थापयितु नयते। स तु याहीयुक्तोऽपि न गमिष्यामीति हठात् तिष्ठति। अतो भवन्त साहाय्यमत्र कर्तुमर्हन्तीति॥

इद श्रुत्वा मद्वाक्य वृथा विभीषिका न भवतीत्यसाववुध्यत। आत्मानमपराधिन मन्वान शिथिलप्रद्रोऽभवत्। अथ क्षमाभिक्षुर्नगररक्षिणामाह्वान न कर्तव्यमिति मामभ्यर्थयमान तत्क्षण-मेव गृह त्यक्तुमन्वमन्यत। तथा तत्परित्यज्य निरगात्॥

अहमेतद्वृत्तान्तेन काले प्रबोधमापम्। अथ वयस्यो मम व्यामोहकोऽनर्थहेतुरभूदिति स्पष्टमिदानीं ममावगम्यत। तस्याहमाश्रय ददान सदर्थप्रेप्सुरप्यसत्स्थापनमुपायुक्ति। मया निष्प निर्वञ्चनात्रयत्र्याप्तिरपेक्षिताभूत्। वयस्यस्य चारित्रदोषममिनानत्वयमु विश्वसनीयमकल्पयम्। तत्समीकरणप्रयत्ने स्वय विनाशोन्मुख आसम्। हितैषिणा वाक्यो मया न लक्षित। मोहन गजनिमीलिका प्राप्तोऽभवम्॥

पूर्वोत्तरीया मदीयचतुर्दैवलभ्यात् मीलित नामविष्यद्यदि नूनमह सत्याश नैवाशास्यम्। अपि च वयस्येन वचसा नीत सतुपशान्त नगरहितजीवन निर्वाहयितु नाहमशक्ष्यम्। तस्य कृत सर्वगाह कालमक्षिपम्। स किल मामप्रकार नियाय दुर्मार्गमात्रेण समर्थ आसीत्॥

श्रीरामो यथापूर्व मामरक्षत्। शुद्धान्तःकरणवत्त्वात् सदोषोऽप्यह निस्तारमवापम्। सामर्थ्यानुभवोऽय मा समग्रमुन्नोचयत्॥

ग्लभाषायाः सामान्यज्ञानमात्रस्य क्रमासीत् । एतत्कार्यार्थमहमादमजीमियाखानमहाशयस्य नामधेयं धारासभायाः पुरतः स्थापितवान् । सदस्यास्तस्य कार्यदर्शित्वमङ्गीचक्रुः । अस्मिन्कार्ये तस्य नियोजनमत्यन्तमुचितमिति भाविनोऽनुभवाद्विस्पष्टमभूत् । अथ आदमजीमियाखानमहाशयो निजौदार्यमाधुर्यक्षमाश्रद्धागुणमपत्या निखिलानप्यानन्दयन् कार्यदर्शिकृत्यनिर्वाहाय न खलु न्यायवादिना ब्यारिस्टर्जनेन नाग्लभाषापाण्डित्यमपन्नेन वा भवितव्यमिति लोकेभ्यो न्यदर्शयत् ॥

प्राय पण्णवयुत्तराष्टशताधिकैकसहस्रतमस्य कैस्तशताब्दस्य मध्यभागे 'पोंगोला' नाम कनौकायानेन स्वदेशं प्रति प्रयाणमङ्गीकृतवान् । एषा तरणिः जञ्जिबारनगरगामिन्यासीत् ॥

अस्या नौकाया केचिदेव पान्था अविद्यन्त । तेषामाग्लाधिकारिणौ द्वावास्ताम् । ममैताभ्यामधिकपरिचयो जातः । अनयोरेकेन सह चतुरङ्गक्रीडया प्रत्यहमेकहोराकालमयापयम् । नौकायां वैद्यमहाशयो मे द्राविडभाषास्वयम्बोधिनीमदात् । तत्पुस्तकेन तामिलभाषां शिक्षितुमुपाक्रमे । मुसल्मानजनैर्निकटसम्बन्धाधिगमायोर्दूभाषाशिक्षणं तथा च मद्रासप्रदेशवर्तिनां भारतीयानां स्नेहसम्पादनाय तामिलभाषाशिक्षणं चावश्यकमिति नातात्यदेशे मदनुभवाद्विदितमासीत् ॥

उर्दूभाषां मया सह शिक्षमाणेनाग्लेयमित्रेणानुबोधितः सन्नौकायाहाशालाम प्रयितेषु पथिकेषूर्दूमहापण्डितमेकमन्विष्याग्रहीयम् । आवयोरध्ययनव्यासङ्गः सम्यगेव प्राचलत् । अस्मिन्मदपेक्षया प्रकृष्टतरमेघाशक्तिमानभूत् । सकृदवलोकनादसौ नैकशब्दुर्दूशब्दान् व्यस्मरत् । मम तावदक्षरपाठ एवानेकशः क्लिष्टतरोऽलक्ष्यत । तदपेक्षया भूयः प्रयस्यन्नपि नाहं तत्समानकोटिमारोढुमशकम् ॥

द्राविडभाषाभ्यासो मे प्रचलति स्म । अभ्यासेऽस्मिन् किमपि साहाय्यं मयालभ्यत । किन्तु मन्निकटस्थिता 'तामिलस्वयम्बोधिनी' समीचीनं पुस्तकमासीत् । अतः साहाय्यान्तरं नात्यन्तमावश्यकमासीत् ॥

स्वदेशं प्राप्तेनाप्यभ्यासोऽस्मिन् प्रौढिमाधिगन्तव्य इत्यासीत्प्रत्याशा । किन्तु नेदं शक्यमभूत् । त्रिनवयुत्तराष्टशताधिकैकसहस्रतमाब्दात्मम व्यासङ्गः कारालयेष्वेव प्रवृत्तः । तत्र कार्याण्येषनयोर्भाषयोर्मम व्युत्पत्तिरभिवृद्धिं प्रापिता । तामिलभाषायां दक्षिणाफ्रिकाकार्यालयेषूर्दूभाषायां 'येरवडा'बन्धनालये च । परन्तु तामिलभाषया सम्भाषणव्यवहारो मया नैव शिक्षितः । पठितमल्पं स्वल्पमप्यभ्यासविरहात्मान्द्यमुपगच्छतीव ॥

द्राविडभाषाया आन्ध्रभाषाया वा ममानभिज्ञत्वात् समवदानुकूल्यमद्यापि गोचरीभवति । दक्षिणाफ्रिकावर्तिभिर्द्राविडैर्मत्पुरः वर्णिता वात्सल्यवृष्टिरद्यापि प्रतिक्षणं मे स्मृतिमुपैति । तामिलानान्ध्रान् वा सुहृदः प्रत्यक्षीकुर्वतो मम दक्षिणाफ्रिकादेशवर्तिनां बहूनां तज्जनानामुद्योगशीलताश्रद्धाविश्वासस्वार्थत्यागादिगुणजातं न किल स्मृतिपथं नोपयाति । किन्तु परीक्ष्यमाणेषु तेषु भूयिष्ठाः खलु पुरुषा वा स्त्रियो वा पठनलेखनशक्तिविधुरा आसन् । दक्षिणाफ्रिकादेशे

सूदो देवेनोपसृष्टो दूत इति वक्तव्यम् । स कित्यनभिज्ञ पाकविधानस्य । अतस्तेन मद्गृहे सूदवृत्त्या स्थितिर्न सभाव्यते स्म । किन्तु त विना नान्येन मदीयचक्षुरुन्मीलित कर्तुं शक्यमासीत् । मद्गृह प्रति तद्वारयोषिदानयनस्य नायमेव प्रथमोऽवसर इति पश्चादहमवेदिषम् । सा किल तत पूर्वमनेकश समागतवती । परन्तु सूदवद्धैर्यशाली न कोऽप्यासीत् । अह किल वयस्येऽस्मिन्नधवद्विश्वासमागिति सर्वलोकविदितोऽयमर्थ । ममैतावदुपकर्तुमेव सूदोऽय लब्ध इति वक्तव्यम् । कुत इति चेत्क्षणमेवासौ मदीय गृह परित्यज्य गन्तुमनुज्ञा मामपृच्छत् ॥

निर्गमिष्यश्च मामवोचत् 'युष्मद्गृहेऽवस्थातुमह शक्नोमि । अह्नैवैनेव भग्नमानस विकारस्य गमनीय भविष्यति । नाय मम योग्य प्रदेश इति । तिष्ठेति नाहमेन निरवन्धाम् ॥

अथ खलु मया ज्ञात यन्मदीयवयस्येनैव लेखकस्योपरि मम शङ्का जनितेति । तस्य लेखकस्य कृतमन्याय समीकर्तुं मया महान्प्रयत्न कृत । तथाप्येन साकल्येन समाधातु नाहम शकम् । एतद्धि मे सदा विषाद जनयति । भग्नो मणिक सम्यगेव सधीयता नाम । तथाप्यसौ भग्नमणिक एव किल ॥

चतुर्विंशोऽध्याय:

# स्वदेशयात्रा

अत्रान्तरे दक्षिणाफ्रिकादेशे कृतनिवासस्य मम त्रीणि वर्षाणि व्यतीयु । मम च तत्रत्याना च परिचयो जात । इतोऽपि बहूनि दिनानि दक्षिणाफ्रिकादेशे मया स्थातव्यमिति ज्ञात्वा हिन्दुस्थानगमनाय षण्मासान्त्यावद्विश्रान्तिमपैक्षिषि । मम न्यायवादित्वमूर्जित प्रचलति स्मेति वक्तव्यम् । तत्र मदवस्थितिरावश्यकीति लोकमत स्पष्टमुपालक्ष्यत । अतोऽह सदारापत्यो दक्षिणाफ्रिकादेशमागम्य कुटुम्बसमेतो वत्स्यामीति निरचैषि । किं च हिंदुस्थान प्रति गमनेन तत्रत्या जना दक्षिणाफ्रिकावर्तिना भारतीयाना परिस्थितौ यथा समधिकतुतहला सपद्येरन् तथा लोकमुद्बोधयितु शक्नुयामित्यचिन्तयम् । त्रिपुवर्णमुद्राशुल्क तु रुजद्व्रणमिव स्थितम् । तद्गुण यावन्न रोदेचयन् शान्तिप्रतिष्ठा दु शकाभवत् ॥

किन्तु मदसन्निधौ राष्ट्रियमहासभाया शिक्षामण्डलाना च कार्यभार केन वोढव्य । मदीया दृष्टिर्द्वयोरपर्यापतत् । तौ च आदमजीमियाखान-पारसीरुस्तमजीमहाशयौ । इदानीं वणिग्वर्गे कार्यनिर्वहणाय बहवो जना अलभ्यन्त । किन्तु कार्यदर्शिनानुष्ठेयकृत्याना नियमेन निर्वहणसामर्थ्यमत्स्वेषु स्वदीयभारतीयाभिमतेषु द्राविमावग्रगण्यावास्ताम् । कार्यदर्शिनो जनस्याङ्-

ग्लभाषाया सामान्यज्ञानमावश्यकमासीत् । एतत्कार्यार्थमहमादमजीमियाखानमहाशयस्य नामधेय धारासभाया पुरत स्थापितवान् । सदस्यास्तस्य कार्यदर्शित्वमङ्गीचक्रु । अस्मिन्कार्ये तस्य नियोजनमत्यन्तमुचितमिति भाविनोऽनुभवाद्विस्पष्टमभूत् । अथ आदमजीमियाखानमहाशयो निजोदार्यमाधुर्यक्षमाग्रह्वादिगुणमपत्त्या निखिलानप्यानन्दयन् कार्यदर्शिकृत्यनिर्वाहाय न खलु न्यायवादिना ब्यारिस्टरजनेन वाग्लभाषापाण्डित्यमपन्नेन वा भवितव्यमिति लोकेभ्यो न्यदर्शयत् ॥

प्राय पण्णवत्युत्तराष्टशताधिकैकसहस्रतमस्य क्रैस्तशताब्दस्य मध्यभागे 'पोंगोला'नाम कनौकायानेन स्वदेश प्रति प्रयाणमङ्गीकृतवान् । एषा तरणि कलिकातानगरगामिन्यासीत् ॥

अस्या नौकाया केचिदेव पान्था अविशन्त । तेषामाङ्ग्लाधिकारिणौ द्वावास्ताम् । ममैताभ्यामतिपरिचयो जात । अनयोरेकेन सह चतुरङ्गक्रीडया प्रत्यहमेकहोराकालमनवाहयम् । नौकाया वैद्यमहाशयो मे द्राविडभाषास्वयबोधिनीमदात् । तत्पुस्तकेन तामिलभाषा शिक्षितुमुपाक्रमे । मुसल्मानजनैर्निकटसम्बन्धाधिगमायोर्दूभाषाशिक्षण तथा च मद्रासप्रदेशवर्तिना भारतीयाना स्नेहसपादनाय तामिलभाषाशिक्षण चावश्यकमिति नातालदेशे मदनुभवाद्विदितमासीत् ॥

उर्दूभाषा मया सह शिक्षमाणेनाङ्ग्लेयमित्रेणानुबोधित सन्नौकायात्राशालाम्युपितेषु पथिकेपूर्दूमहापण्डितमेकमन्विष्याग्रहीषम् । आवयोरध्ययनव्यासङ्ग सम्यगेव प्राचलत् । अधिकारी मदपेक्षया प्रकृष्टतरमेधाशक्तिमानभूत् । सकृदवलोकनादसौ नैकमप्युर्दूशब्द व्यस्मरत् । मम तावदक्षरपाठ एवानेकश क्लिष्टतरोऽलक्ष्यत । तदपेक्षया भूय प्रयस्यन्नपि नाह तत्समान कोटिमारोढुमशकम् ॥

द्राविडभाषाभ्यासो मे प्रचलति स्म । अभ्यासेऽस्मिन्न किमपि साहाय्य मयाऽलभ्यत । किन्तु मन्निकटस्थिता 'तामिलस्वयबोधिनी' समीचीन पुस्तकमासीत् । अत साहाय्यान्तर नात्यन्तमावश्यकमासीत् ॥

स्वदेश प्राप्तेनाप्यभ्यासोऽस्मिन् प्रौढिमाधिगन्तव्य इत्यासीत्प्रत्याशा । किन्तु नेद शक्यमभूत् । त्रिनवत्युत्तराष्टशताधिकैकसहस्रतमाब्दादारभ्य मम व्यासङ्ग काराल्येष्वेव प्रवृत्त । तत्र कारालयेष्वनयो भाषयोर्मम व्युत्पत्तिरोवर्धिता प्राप्ता । तामिलभाषाया दक्षिणाफ्रिकाकार्यालयेष्वदूभाषाया 'येरवडा'बन्धनालये च । परन्तु तामिलभाषया सभाषणव्यवहारो मया नैव शिक्षित । पठितमल्प स्वल्पमप्यभ्यासविरहान्मालिन्यमुपगच्छताव ॥

द्राविडभाषाया आद्यभाषाया वा ममानभिज्ञत्वात् सभवदानुकूल्यमद्यापि गोचरीभवति । दक्षिणाफ्रिकावर्तिभिर्द्राविडैर्मदुपार वर्षिता वात्सल्यवृष्टिरद्यापि प्रतिक्षण मे स्मृतिमुपैति । तामिलान्द्रान् वा सुहृद प्रत्यक्षीकुर्वतो मम दक्षिणाफ्रिकादेशवर्तिना बहूना तज्जनानामुद्योग शीलताश्रद्धाविश्वासस्वार्थत्यागादिगुणजात न किल स्मृतिपथ नोपयाति । किन्तु परीक्ष्यमाणेषु तेषु भूयिष्ठा खलु पुरुषा वा स्त्रियो वा पठनलेखनशक्तिविधुरा आसन् । दक्षिणाफ्रिकादेशे

प्रवृत्त युद्धमपि तदर्थमेव । तद्युद्धप्रवर्तकाश्चैत एव निरक्षरा योधा । युद्धमिद दीनजनप्राणनम् । तत्र दीना सर्वा मना निज मारमवहन् ॥

एषा साधुजनाना सरलहृदयापहारे मम तद्भाषानभिज्ञता कमपि प्रतिबन्ध नाचरत् । ते किन्त छिन्नभिन्नया हिन्दुस्तानीभाषयाङ्ग्लभाषया वा व्यवहर्तुमशक्नन् । अत तावतास्मदीय-कार्यमचलत् । परन्त्वेभिर्मयि निवेशिता ममतामह बहुमन्यानो द्राविडान्ध्रभाषे शिक्षितुमकामये । पूर्वोक्तरीत्या द्राविडभाषा यत्किंचिदशिक्षिषि । आन्ध्रभाषा तु हिन्दुस्थान प्रत्यागत शिक्षितु प्रारभेऽपि । परन्त्विद शिक्षणमक्षरयोजनाभ्यासमतीत्य नाचलत् । द्राविडान्ध्रभाषयोराशा मया परित्यक्ता । अतस्तद्भाषाव्यवहारिणो जना हिन्दुस्तानीभाषां शिक्षेरन्निति यहमातिष्ठे । दक्षिणा-फ्रिकास्थितेषु द्राविडभाषाङ्ग्लभाषानभिज्ञा प्रायेण हिन्दीभाषा हिन्दुस्तानीभाषा वा जानन्त्येव । सर्वोऽप्यय क्लेश शिक्षिताङ्ग्लभाषाणा जनानामेव । तदेतदनुध्यायन्नाङ्ग्लभाषाज्ञानमस्मदीयभाषा शिक्षणस्य महानन्तराय किं नु वा स्यादिति चिन्तये ॥

आस्तामय विषयान्तरप्रस्ताव । मदीयप्रयाणवृत्तान्त समापयिष्यामहे ॥

अथेदानीं पाठका पोंगोलाख्यनौकाप्रवहणस्य मुख्याधिकारिण परिचय कारयितव्या । आवयोर्मैत्री परस्पर समवर्तत । आसीदय प्लीमथ्भ्रातृसम्प्रदायानुवर्ती । अस्मदीयकथालापविषयस्तु न तावन्नौकायानविधाज्ञान यावदाध्यात्मिको विचार । स किल नीतिधर्मयोर्द्वयोर्भेद प्रत्यपादयत् । तदीयदृष्ट्या क्रैस्तवेदोपदेशो लेशतोऽपि क्लिष्टाङ्गको नाभूत् । तस्य सौन्दर्यं नाम तद्गता सरलता आबालस्त्रीपुरुषमखिलजनैरपि क्रैस्ते तन्महाबलिदाने च यदि विश्वास क्रियते नून तर्हि तत्पापाना परिहारो भविष्यतीति कथयति स्म । तमेनमनुचिन्तयतो मम प्रिटोरियाभ्रातर स्मरणमागता । नीतिनियमोपेता सर्वेऽपि धर्मास्तस्य नीरसा अभूवन् ॥

अस्या सर्वस्या अपि धर्मचर्चाया मदीयशाकाहारित्वमेव हेतुरासीत् । कुतो मास भवता न भक्षणीयम् । गोमासभक्षणे को दोष । यथा सस्यवृक्षादय फलमूलादयश्च मनुष्योपभोगायैव देवेन निर्मितास्तथापि ननु हीनजातय सर्वेऽपि प्राणिनो मनुष्यजातेरुपभोगायैव सृष्टा । एवविधा प्रश्नमाला आध्यात्मिकवार्ताप्रवेशमपरिहार्यमकरोत् ॥

आवयोरभिप्रायसाम्य नैवासीत्स्यत् । धर्मनीत्योर्नास्ति पारमार्थिको भेद इत्यभिप्रायो मयि दार्ढ्यमापद्यत । किन्तु मुख्याधिकारी तद्विरुद्ध निजाभिप्रायमेव नि सशयेन समर्थमन्यत ॥

गतेषु चतुर्विंशतिदिनेषु प्रमोदावहमिद समुद्रयान समाप्तिमगमत् । हुगलीनदीसौन्द-र्यावलोकनेनानन्दमनुभवन् कलकत्तानगरे नौकायानादुत्तीर्य तस्मिन्नेव दिने धूमशकट्या मोम्बयीनगर प्रापासिषम् ॥

# हिन्दुस्थाने

मोहमयीनगरगामिनि मार्गे धूमशकटी पञ्चचत्वारिंशन्निमिषकालं प्रयागनगरे तिष्ठति स्म। इयति काले पुण्यरथमारुह्य भ्रमता तन्नगरमवलोकनीयमिति निश्चयमकार्षम्। किं चौषधालये मया कतिचिद्रोगग्रस्तानि मित्राण्यासन्। आपणिकस्तावदर्धनिद्रामग्नः सत्वरप्रदानं नितरामचिरयत्। आपणमादाय यावदयोऽध्वनिवेशनमहं प्राप्तस्तावदेव धूमशकटी प्रचलिता। तन्निकेतनस्वामी मदर्थं धूमशकटीमेकनिमिषपर्यन्तमस्थापयत्। तथापि मामनुपस्थितं मत्वा मम सम्भारान् यन्त्रतो बहिरुद्धार्य स्थापितवान्॥

अह 'केल्नर' विश्रान्तिमन्दिरेऽवतीर्य तत्र एव भक्तार्थोपक्रमायानन्तरमेवाकार्षम्। तन्नगरात् प्रचरन्त्याः 'पायोनियर'पत्रिकायाः ख्यातिर्मया श्रुतपूर्वा। तद्वृत्तपत्रं भारतीयानामप्रातिकूल्यमवर्तनेत्यहमज्ञासिषम्। तत्काले (चस्नीयान्) चेस्नमहाशयस्तत्पत्रिकासम्पादकोऽभूदिति स्मरामि। सर्वपक्षाणामपि साहाय्यं मया सम्पादयितव्यमासीत्। तस्माच्चेस्नमहाशयायानागतधूमशकटीक्रमानुमानमावेद्य परेद्युः प्रस्थानाभिघातेन दर्शनावकाशो देय इति लेखमलिखम्। सोऽपि सद्य एव मां द्रष्टुमन्वमन्यत। एतेन मे सतोषः समजनि। अपि चाय सावधानं मद्वाक्यमशृणोत्। अथ च मामवादीद्यदि भवद्भिः किमपि लिख्यते तदा स्वपत्रिकायामेव तद्वस्य समालोचयिष्यामि। किन्तु दक्षिणाफ्रिकास्थभारतीयैः काङ्क्षितमधिकारं सर्वस्वमपि परिपोष्य लेखिष्यामीति नाहं प्रतिजाने। मया हि स्वकर्तव्यपरामर्शिना तत्रत्यानामाङ्ग्लजनानामभिप्रायमप्यादाय तत्सदृशं गौरवं च प्रदेयं भविष्यतीति॥

अहमवोचम्—

एतत्समस्याविचारमवबुध्य भवद्भिः पत्रिकायां चर्चा विधास्यते यदि तावतैवाहं सतुष्येयम्। न्यायमेकं विना नान्यत्किमपि मया मृग्यते न चापेक्ष्यत इति॥

तद्दिनावशेषमखिलं भव्यत्रिवेणीसङ्गमावलोकनेन भाविकार्यविचारपर्यालोचनया च्यत्यवाहयम्॥

इत्थमतस्मात्सवृत्तपायोनियरपत्रिकासम्पादकघटनाश्रेणिर्नातालदेशे ममाङ्ग्लजनैरवष्टभ्य प्रहरणे पर्यवास्यत्॥

मोहमयीनगर्यामनवस्थाय राजकोटं गत्वा दक्षिणाफ्रिकाभारतीयानां परिस्थितिमभिवृत्य लघुप्रबन्धरचनाय सञ्जीभर्तुमुपाक्रमे। तस्यास्य लेखनप्रकाशनादिकं प्रायेणैकमासमपेक्षत। एतत्पुस्तकपृष्ठस्य हरिद्वर्णतया प्रबोधोऽयं हरितपुस्तकमिति पश्चात्प्रथामगच्छत्। अस्मिन् ग्रन्थे बुद्धिपूर्वमेवाहं दक्षिणाफ्रिकाभारतीयानां दुःस्थितिं मन्दमचित्रयम्। पूर्वोक्तरीत्या नातालदेशे प्रणीतयोर्ग्रन्थयोर्यादृशो

भाषाप्रयोगस्तदपेक्षयास्मिन्प्रबन्धे सौम्यतरा वाणी प्रायुज्यत । मया किलैतद्विदितं यदल्पाल्पविषया अपि दूराद्दृश्यमाना महत्तरा प्रतिभान्तीति ॥

अस्य हन्त पुस्तकस्य दशसाहस्रमचिरात् मुद्राप्य भारतदेशस्य निखिलसमाचारपत्रेभ्यः सर्वपक्षप्रमुखेभ्यश्च प्राहापयत । इतरपत्रिकाभ्यः पूर्वमेव पायोनियरपत्रिका स्वटीकामलेखीत् । तट्टीकायाः सारांशो 'राइटर' तन्त्रीवृत्तान्तद्वारेणेङ्ग्लण्डदेशमत्राप्यत् । तत्र लण्डननगरस्य राइटरकार्यालयद्वारा तन्त्रीसन्देशतो नाताल्देशमागमत् । स एव तन्त्रीसन्देशो मुद्राक्षरात्मकपङ्क्तित्रित्रयाधिको नाभवत् । नाताल्देशभारतीयानां परिस्थितिमधिकृत्य यन्मयोपनिबद्धं तदेतदेतादृशलघुस्वरूपेण पर्यणंसीत् । नेदं किल मदीयभाषात्मकं किन्तु मल्लेखनस्यायुक्तिस्वरूपमासीत् । नाताल्देशे यादृशोऽस्य परिणामः सवृत्त इत्यग्रे निरूपयिष्यते । अत्रान्तरे प्रधानपत्रिकाः सर्वा अप्येनत्प्रश्नमधिकृत्य महामहाव्याख्यानान्यलिखन् ॥

एतेषां पुस्तकानां पत्रप्रापणाधिकरणद्वारा प्रेषणाय सज्जीकरणं न सुकरमासीत् । यदि द्रव्यं प्रदाय कार्यमिदं कार्येत तदा बहुद्रव्यं व्ययीकर्तव्यं भवेत् । अतो मया सुलभोपाय एकोऽन्विष्टो मदभितो वर्तिनो बालकास्तत्र मेलयित्वा स्वयमिच्छया प्रातःशालाविरामकाले द्विनहोरापर्यन्तं कार्यमनुष्ठातव्यमित्यबोधयम् । ते च हृष्टास्तथानुं प्रत्यपद्यन्त । मया सगृह्य स्थापितानि सदुपयुक्तानि पत्रप्रेषणाधिकरणीयशुल्कपत्राणि च महाशिषश्च तेभ्यो बहुमानं दास्यामीति प्रत्यजानि । ते च मदीयकार्यमक्लेशेन निरवर्तयन् । बालकान् स्वयमेवकत्वेन सबध्य तैर्मया कार्यानुष्ठापनस्यायमेव प्रथमोऽवसरः । तेषां बालकानां द्वाविदानीं मम सहचरौ स्तः ॥

एतत्कालमेव मोम्बईनगरे प्लेग्ज्वरः प्रादुरासीत् । तन्निमित्तोद्भ्रान्तिश्चतुर्दिक्षु प्रासरत् । राजकोटेऽप्येष सम्भवेदिति शङ्काऽभवत । आरोग्यरक्षाधिकरणे मत्तोऽपि काचिदुपकृतिः स्यादिति मन्वानः सेवां कर्तुमहं सज्जोऽस्मीति राज्यभाराधिकारिभ्यो न्यवेदयम् । तेऽपि मदीयसेवां स्वीकृत्य सेवासमितेर्मामपि सदस्यमकुर्वन् । मलमोचनस्थानानां नैर्मल्यरक्षणमावश्यकमित्यहमसूचयम् । समितिस्तां प्रतिवीथि गत्वा तानि स्थानानि द्रष्टुं निश्चयमकरोत् । दीनगृहेषु गत्वा मलमोचनस्थानानि परीक्षितुं न किमपि प्रतिबन्धमासीत् । प्रत्यवेदयन् न । ते किल यथोक्तरीत्या तानि संस्कुर्वन्ति स्म । परन्तु राजकीयाधिकारिणां स्वमन्दिराणि द्रष्टुमुपगतानां मलमोचनस्थानपरीक्षणमप्यनुमतं नासीत् । आस्तां पुनस्तत्संस्कारणवार्ता । अस्मदनुभवे श्रीमतां मन्दिरेषु यानि मलमोचनस्थानानि तान्यतिमात्रमशुचीन्यभवन् । अन्धकारमयानि पङ्कदुर्गन्धपूर्णानि च । तत्र कृमयः नानाप्रकाराः सञ्चरन्ति स्म । तेभ्योऽन्यानि गुप्तानि सुधारणानि पर सुकराण्यभूवन् । मलोत्सर्गाय एव मलमोचनस्थानेषु मलस्य भूमिस्पर्शवर्जनाय पात्राणि वा भाजनानि वा स्थापितानि । तत्र भूमिस्पर्शो न भवति तथा पात्रेषु नाप्रवेशयत् । पश्चाद्गारसदृशं शुद्धपात्रस्थाने निवेश्य पश्चाद्दोषापगमं यथा स्यात्तथा सम्यक् प्रक्षालयितुमनुकूलं स्थानं च पश्चाद्भागान्तरेषु सूर्यप्रकाशश्च प्रविशेत्तथा परिवर्तनीयम् । श्रीमन्तिनामुचिता

प्रत्यवतिष्ठमाना श्रीमन्तो बहूनन्याजानाचक्षत । तेषु भूयिष्ठो जनो नास्मदीयसूचनामन्ववर्तत ॥

समित्या पञ्चमाना वसतयोऽपि परीक्षितव्या आसन् । सदस्येष्वेक एव मया सह तत्रागन्तुमन्वमन्यत । अपरे तु कथं नाम तत्र गच्छेयुः । तत्रापि तत्रत्यकच्चरागाराणि ते कथमहो द्रष्टव्यानि । किन्त्वहं तावत्तद्वसतिदर्शनेन विस्मितप्रमुदितोऽभवम् । पञ्चमाना वीथ्या गमनस्यायमेव मे प्रथमोऽवसरः । तत्रत्याः पुरुषाः स्त्रियश्चास्मान् दृष्ट्वाचिन्तयन् । तदीयकच्चरागाराणि द्रष्टुमहमनुज्ञामपृच्छम् । ते अकथयन् कुतो न कच्चरागाराणि नाम ग्रामबाह्यवर्ती विशालः प्रदेश एवास्मदीयकच्चरागारम् । कच्चरागाराणि नाम युष्मादृशां महापुरुषाणामेवेति ॥

अहं पुनरपृच्छं वाटं यदि तावद्युष्मदीयगृहाणि वयं किमवलोकयेमेति ॥

अवश्यमेव स्वामिन् । यथेष्टं गत्वावलोक्यताम् । अस्मद्वसतयः कथं गृहाणीत्युच्यताम् । ताः खलु बिलानि ॥

अहमन्तः प्राविशम् । गृहस्याङ्गणानां च नर्मन्य सानन्दमालोकयम् । अङ्गणं निरवकरशोभितमासीत् । भूतले सर्वत्र सम्यग्गोमयेनोपलिप्तमासीत् । स्थिता छिन्नमणिकशरावा अपि निर्मलाश्चकासति स्म । अत्र व्याधिप्रसरणभयं नासीत् ॥

श्रीमज्जने गृहाणामेकस्मिन्नस्माभिः परीक्षितकच्चरागारमवश्यं मया विस्तरेणैव वर्णयितव्यम् । तत्र प्रतिकोष्ठमेकं जलवाटमवर्तत । तच्च मूत्रविसर्जनाय हस्तपादप्रक्षालनायोपयुज्यते स्म । तस्मात्प्रायेण गृहे दुर्गन्धमुक्तः प्रदेशः क्वचिदपि नासीत् । तेषां हर्म्याणां एकस्याः प्रणालिकाया वासगृहान्तर्वर्तिजलवाटं मलमूत्रविसर्जनार्थमुपायुज्यत । तन्मलमूत्रमेकस्या वाटान्तनलिकयाधस्तास्त्रवति स्म । तस्मिन्कोष्ठे स्थातुमप्यसह्यमासीत् तत्र । गृहजनाः कथं शेरते स्मेति पाठकैरेवाभ्यूह्यताम् ॥

सामितेयास्तत्रत्य हवेल्यालयमुख्यवैष्णवदेवालयमपि पर्यैक्षन्त । अस्मद्गृहजनस्य देवालयस्यापि चिराय मैत्री समवर्तत । अतोऽस्माभिस्तत्र गत्वा परीक्षितुं यथाभिमतसुधारणानि सूचयितुं च स प्रत्यपद्यत । तस्मिन् देवालये तेनाप्यदृष्टचरो भागः कश्चिदासीत् । यत्र कुड्याद् बहिरुच्छिष्टभोजनपत्राणि प्रक्षिप्यन्ते स्म । काकाः गृध्राश्च सर्वदा तत्राभिलन्त । मलमोचनस्थानानि तु परमकच्चराण्यासन् । सूचितसुधारणानुसारेण देवलकः कीदृग्व्यवस्थामकरोदिति न मया प्रत्यक्षीकृतम् । अहं हि राजकोटे न तावन्तं कालं स्थितः ॥

एतावदशुचित्वं देवालये दृष्ट्वा विषादमगमम् । पवित्रस्थानमिति प्रतीतिमागतेषु स्थलेषु लोका आरोग्यनियमानवर्तन्त इति स्वभावतोऽस्माभिर्निरीक्ष्यते । बाह्यशुद्धिरन्तःशुद्धिश्च द्वे अत्यावश्यके इति स्मृतिकाराः प्राहुः । अयमर्थस्तस्मिन्नवसरेऽपि न मे ध्येयवर्ती नासीत् ॥

# राजनिष्ठा रोगिशुश्रूषा च

आंग्लेयप्रभुत्वे मम यादृशी राजभक्तिरासीत्तादृशभक्तिसंपन्नः पुरुषो न कोऽपि मया दृष्ट इत्यहं ब्रवीमि। मम राजनिष्ठाया मदीयसत्यप्रियत्वमेव मूलमासीदित्यहमिदानीं जाने। आत्मनः राजनिष्ठां वा गुणमन्यं वा व्याजेन प्रदर्शयितुं न कदाप्यशक्नवम्। नातालदेशे मयोपस्थीयमानासु सर्वास्वपि सभासु 'देवो रक्षतु राजानम्' इत्यादिकाङ्ग्लराष्ट्रगीता नियमेन गीयते स्म। तदा ममापि तज्जिज्ञासा समजनि। न खलु मया तदानीमप्याङ्ग्लेयराज्यभारे दोषा न लक्षिताः। परन्तु समष्ट्या विमृशन् राज्यभारोऽयं स्पृहणीय इत्यकल्पयम्। समष्टिपरामर्शः श्रेयस्कर इति श्रद्धा तात्कालिकी ममावर्तत॥

दक्षिणाफ्रिकादेशे मया प्रत्यक्षीकृतो नीतिविरोधीयो वर्णद्वेषः स तावदाङ्ग्लेयसम्प्रदायविरुद्धः क्षणिकः स्थानिकश्चेति प्रत्ययो ममासीत्। ततोऽहं राजनिष्ठायामाङ्ग्लेयानप्यतिशेतुमयतिषि। श्रमं श्रममाङ्ग्लराष्ट्रगीतामुचितरागेण गातुमशिक्षिषि। प्रतिसभं गीयमानायामस्यामहमपि नियमेन सहैवागायम्। किं च निराडम्बरेण राजभक्तिप्रदर्शनसंभवेषु प्रसंगेष्वहमपि सहकार्यभूवम्॥

मदीयजीवमाने न कदाप्यहं राजभक्त्या स्वप्रयोजनमसाधयम्। तदवलम्बेन स्वकार्यसाधनेच्छा न मे जाता। राजनिष्ठया वर्तनं मम कर्तव्यमिति विभाव्य प्रतिफलमनपेक्षमाणस्तत्कर्तव्यं निरवर्तयम्॥

हिन्दुस्थानमहं यदा प्राप्तस्तदा श्रीविक्टोरियामहाराज्ञ्या वज्रमहोत्सवाय एवाभीमरपेशातिप्रयुक्तसन्नद्धः प्रवर्तते स्म। राजकोटे तदर्थं परिकल्पितां सभां सदस्यतया प्रवेष्टुमहमामन्त्रितोऽभवम्। मया च तदङ्गीकृतम्। किन्तु समारोऽयं प्रायेणाडम्बरप्रधान इति मम संशय आसीत्। तत्र भूयिष्ठो भाग परेषां नयनेषु धूलिप्रक्षेपार्थं निर्मित इत्येतत्साक्षात्कृत्य दुःखितोऽभवम्। ईदृगवस्थाप्रसादे नत्र सभायां मम सदस्यतया वर्तितव्यं युक्तायुक्तत्वमालोचयन् पर्यन्ते निश्चयमियमकार्षम्। यन्महोत्सवं पक्षपातेन मया नतोऽयमिति॥

अस्मद्गृहबालकानप्याङ्ग्लगीतामहमशिक्षयम् । तत्रस्थशिक्षणमहाविद्यालय (ट्रेनिंग कालेज) वर्तिनोपि बालकास्ता मया शिक्षिता इति ज्ञप्तिरस्ति परन्त्वेतत्तन्महोत्सवसमये या 'सम्म-एडवर्ड' प्रभो राज्याभिषेकसमये वेति विस्मृत भवति। गच्छत्सु दिवसेषु गीतिरियं मे कर्कशकर्कशा प्रत्यभासीत्। अहिंसातत्त्वं मया यथा हृदये वृद्धिमागत तथा तथाहं निजानुन्ध्यानकथालापेषु पर जागरूक। मत्कृत तद्गीते 'शत्रून् विद्राव्य सकानुशक्त तान् विनिपात्य चाशिथिलीकृत्य वनेन तद्राज्यशासनस्य निवसनम्। तदीयानि कुतन्त्राणि निभिन्दि परमेश्वर' इति पादगीयमानोऽर्थो मम हिंसात्वविरुद्ध प्रत्यभासत। तमेन मदीयमभिप्राय डॉ. बूथमहाशयाय न्यवेदयम्। सोऽप्याह साप्रययेन पुरुषेणेय न गातव्येयमि-प्रेतमान्। अहमप्यवोचम्। यान् किल वय शत्रून् व्यपदिशामहे ते कुतन्त्रकारिण इति कथं मन्तव्या। शत्रुत्वव्यपदेशमात्रे वा तेषामपराधित्व कथमस्माभिर्मन्तुमुचितम्। परमेश्वराभि-गमाय केवलमस्माभि प्रार्थना समाश्रयन इति। डॉ. बूथमहाशय सर्वानिमान्मदभिप्रायानङ्गीकृत्य स्वमडल्या कृते नूतन सकीर्तनमरचयत्। परत्वस्य डॉ बूथमहाशयस्य वृत्तान्तमग्र निरूपयिष्यामि॥

यथा राजभक्तिस्तथा रोगिशुश्रूषापि मम स्वभावमवगाह्यान्तरूढमूलाभवत। रोगिण स्तान्मदीयवान्यत्रो वापरे वा सन्तु। तदुपचारो ममातीव प्रिय॥

राजकोटे दक्षिणाफ्रिकावृत्तमधिकृत्य प्रबन्धरचनोद्यतस्य मम मोहमयीनगर प्रति शीघ्रप्रयाणमुपस्थितम्। प्रधाननगरेषु सभा परिकल्प्य लोकमन कार्यो-मुख करणीयमिति ममोद्देश्यमासीत्। एतदर्थमादौ मोहमयीनगर मयोपस्थितम्। तत्र तावन्न्यायाधीशरानडेमहाशयो मया दृष्ट। स च मद्वाक्य सावहितमाकर्ण्य सरफिरोजशहामहेतामहाशयस्य दर्शन कर्तव्यमित्यसूचयत्। अथाह न्यायाधीश बदरुद्दीनतैयबजीमहाशयमपश्यम्। सोऽपि तामेव सूचनामकरोत्। एवमकथयच्च। अह वा रानडेमहाशयो वा भवता विशेषेणोपकर्तुं न शक्नुव। विदितैव भवतामस्माकी स्थिति। वय राजकीयविचारेषु न हि प्रवेश कुर्वीमहि। तथाप्यस्मदीय चेत सर्वात्मना व साहचर्य न मुञ्चति। भवता यथाक्न्मार्गदर्शी फिरोजशामहाशय एवेति॥

सरफिरोजशामहाशयस्य दिदृक्षा मम प्रागेवासीत्। किन्त्वेतन्महाजनद्वयमुखात्तद्दर्शनाय प्रेरित सन् प्रजानामुपरि यादृशस्तस्य प्रभाव इत्यह सम्यगवेदिषम्॥

अथ गत्वा मया सरफिरोजशामहाशयो दृष्ट। तत्सन्निधौ मम भयभक्तिसमुद्रेको भविष्यतीति मया निरैक्षि। श्रुतपूर्वा हि मया तस्मै लोकै प्रदत्ता विरुदावलि। द्रष्टव्यो हि मया मोहमयीनगरकण्ठीरव। मोहमय्याधिपत्यस्यानभिषिक्तो नरेश एव। किन्त्वय 'नरेशो' मा भयाकुल नाकरोत्। यथा ममतामि पूर्ण पिता प्रबुद्धवयस निजकुमार पश्यति तथाय मामपश्यत्। स मया तदीयकार्यालये दृष्ट। तस्यानुयायिन सुहृदश्च त पर्यवारयन्। तन्मध्ये श्रीमान्-वाच्छामहाशय कामामहाशयश्चास्ताम्। अनयो परिचयमह कारित। वाच्छामहाशयस्य

नामधेय तु मया पूर्वमेव श्रुतम्। स किल सरफिरोजशामहाशयस्य दक्षिणबाहुरित्यागम्यत। तत्कथालापे वीरचदगाधिनाप्यसौ देशस्य स्थितिगतीना सूक्ष्मवेदीति महामावेदि। वाच्छामहाशय प्राह–गाधे पश्चादह वो द्रष्टुमिच्छामीति ॥

सर्वोऽप्ययमभिज्ञानपरिचयादिकलापो निमिषद्वयमपि नापैक्षत। सरफिरोजशामहाशयो मदुक्त सावधानमशृणोत्। वृत्त न्यायाधीशयो रानडेतैयबजीमहाशययोर्दर्शन तस्मै न्यवेदयम्। स चाह–गाधे तवाहमुपकर्तुमिच्छामि। अत्रैका सार्वजनिकसभा मेलयितव्या –इति ब्रुवाणो निजसहायक मुनशीमहाशयमभिवीक्ष्य सभाचालनाय दिननेक निश्चीयतामित्याचष्ट। किं च सभामेलनात्पूर्वदिने त्वयाह द्रष्टव्य इति मामुक्त्वा व्यसर्जयत्। अस्य दर्शनान्मम भीतिर्निशेषमस्तमगात्। प्रमुदितान्तरङ्ग सन् गृह प्रति न्यवर्तिषि ॥

मोहमयीनगरे वर्तमानोऽह तत्रैव रुग्णशयित मम भगिनीपतिं द्रष्टुमगमम्। नायमिभ्यो जन। एकाकिनी मम ज्येष्ठभगिनी (तस्य भार्या) तदौषधपथ्यविधाने न समर्थाभवत्। जाड्यमुल्वणमासीत्। तावुभावप्यह राजकोट नेष्य इति भगिनीपतिमब्रुवम्। तेन च प्रतिपन्नाभ्या ताभ्यामह स्वपुर प्रत्यागमम्। व्याधिनिरीक्षितात् दीर्घतरकाल तमशीशयत्। तमह मदीय कोष्ठागारे स्थापयित्वा रात्रिंदिव तन्निकट एवाहमासम्। मया रात्रावपि चिराय जागरितव्यमासीत्। तदा त शुश्रूषमाणोऽह दक्षिणाफ्रिकासवधिकार्यमप्यचालयम्। पर्यन्ते स स्वर्गस्थोऽभवत्। किन्तु तस्यावसानदिनेषु मम तत्सर्वविकाशलाभ सुतरा मदीयमन समाधायको विषय आसीत् ॥

शुश्रूषाकर्मणि ममेयमभिरुचि शनै शनैस्तथावर्धत यथा तत्कृतेऽहमितरकार्याणि पर्यत्यजमनेकशश्च न केवल मम भार्यामपि तु सर्वानपि गृहजनमस्मिन् कर्मणि न्ययोजयम् ॥

कार्यमेतदभिरुचिमूलमिति ब्रवीमि। कुत इत्युक्तौ तत्कर्तु सतोषाभावे कार्यं न चलति। आडम्बरार्थिना प्रमादभीरुणा वा यदि शुश्रूषा कृत्यमङ्गीक्रियते तदा तत्र केवल मनुष्यस्योत्साहो मन्दीभविष्यत्यपि तु तस्य हृदय सकुचिष्यति। प्रेमवर्जमनुष्ठितसेवया सेवाकर्तुर्वा सेवितजनस्य वा न कोऽपि लाभ। पर तु सहृदयतया प्रेमपुरःसरमनुष्ठिताया शुश्रूषाया पुरतो भोगैश्वर्य यत्तुच्छ प्रतिभाति ॥

सप्तविंशोऽध्यायः

## मोहमयीनगरे प्रचलितसभा

मम भगिनीपतेर्मरणात् परेद्युरेव मया मोहमयीनगर प्रति प्रयातव्यमासीत्। सार्वजनिकसभाया यो भाषणीयोऽर्थस्तस्य पर्यालोचनाय मया नावसरोऽलाभि। दिवानिशा

जागरणचिन्तया च ममालस्य समवर्तत । कण्ठो गर्गरायते स्म । भगवान् कथमपि मां निस्तारयिष्यतीति श्रद्धया मोहमयीनगरमगच्छम् । मदीयभाषणं लेखितव्यमिति स्वप्नेऽपि मया न दृष्टम् ॥

सरफिरोजशामहाशयस्याज्ञानुरोधेन सभायाः पूर्वदिने पञ्चघण्टावादनकाले तस्य कार्यालयमगच्छम् । स मामपृच्छत् भावे त्वदीयभाषणं सज्जस्थितं न वेति । भयेन कंपमानोऽहमवोचम्—न हि । तत्रैव भाषणं कर्तुमिच्छामीति ॥

मोहमयीनगरे तन्न चलति । अत्र वृत्तपत्रिकाजना भाषणानि यथावत् लेखयन्ते । अनया समयास्माभिः प्रयोजनं यदि लिप्स्यते तदा भाषणं पूर्वमेव लेखितव्यम् । किं चानेन प्रयोगेण प्रभातात्मुद्रापयितव्यम् । ननु रात्रेः पूर्वं त्वदीयभाषणं लेखितुं पारयसे ॥

अहमुद्भ्रान्तोऽभवम् । तथापि करिष्य इत्यहं प्रत्यजानि ॥

एवं तर्हि त्वदीयलेखनमानेतुं मुनशीमहाभागः कदा तव समीपमायात्विति ब्रूहि ॥

अद्य रात्रावेकादशवादनघण्टावेलायामिति प्रावोचम् ॥

फिरोजशामहाशयकृता सूचना नियतप्रयोजनकरीति परेद्युः समागतस्य मे विदितमासीत् । 'फरामजी कावसजी इन्स्टिट्यूट' इत्येतन्नाम्यशालायां सभा प्रचलिता । श्रुतपूर्वं हि मया यत्सरफिरोजशामहाशयेन श्लोकोपन्यासे सभासु सर्वास्वपि निःप्रवेशस्थानावकाशो दुर्लभ इति । ता इमा सभा सरफिरोजशामहाशयोपन्यासश्रवणकुतूहलिभिर्विद्यार्थिभिः पूर्णा बभूवुः । एतादृशसभादर्शनस्यायमेव प्रथमोऽवसर आसीत् । मम कण्ठध्वनिः कस्यापि श्रव्यो भविष्यतीति नाहमज्ञासिषम् । कंपमानः स्वभाषणं पठितुमारभे । सरफिरोजशामहाशयस्तु ततोऽपि किंचिदुच्चैस्तरामिति वदन्नुत्तेजनं मे यच्छति स्म । यथा यथाहमुत्तेजितस्तथा तथा मम ध्वनिरवसन्नोऽभूदिति स्मरामि ॥

मदीयपूर्वमित्रश्रीकेशवरावदेशपाण्डेमहाशयो मम साहाय्यं कर्तुमागतः । मदीयं भाषणमहं तस्य हस्ते न्यक्षिपम् । तस्य ध्वनिस्त्वार्यसदृशोऽभवत् । परं ते सभिका न श्रोतुमिच्छन्ति वाछा वाछेति घोषेण सभाभवनं प्रतिध्वनितमभूत् । वाछामहाशय समुत्थाय देशपाण्डेमहाभागाद्भाषणमादाय स्वयमवाचयत् । कृतं मत्कार्यम् । सभिका मध्य एव शान्ता भूत्वा तत्तदुचितावसरेषु हियर् हियर् इत्याक्रोशमिदमिति चालयमाना करतालं देदीयमानाश्च भाषणमाद्यन्तमक्षरशोऽशृण्वन् । अहं सन्तुष्टोऽभवम् ॥

सरफिरोजशामहाशयो मदीयभाषणमश्लाघत । गङ्गास्नात इव सानन्दोऽभवम् ॥

सभाफलमिदमागतं यद् देशपाण्डेमहाशय एकः पारसीगृहस्थश्च मदीयमतावलम्बिनावभूताम् । अस्य पारसीगृहस्थस्य इदानीमधिकारिपदमलंकरोत्यनन्तरस्तस्य नाम प्रकटीकरणे शिथिलप्रयत्नोऽस्मि । तस्य निश्चयः प्राड्विवाकः खुर्शेदजीमहाशयः शिथिली-

चकार। अत्रैका पारसीवनिता कारणम्। उद्वहेद् वा दक्षिणाफ्रिकादेशमागच्छेदिति। स उद्वोढुमनिक योग्यमित्यमन्यत। किन्तु अस्य पारसीसुहृदः कृते पारसीरुस्तमजीमहाशयः स्वयं प्रायश्चित्त चकार। एवं च पारसीवनितायाः कृतेऽन्याः पारसीस्त्रियः 'खादी'व्रतमङ्गीकृत्य सेविका भूत्वा प्रायश्चित्तं कुर्वन्ति। अतोऽहं दम्पती कृतक्षमोऽस्मि। देशपाण्डेमहाशयस्य उद्वहनप्रलोभनं नासीत्। परं न आगत। तस्य प्रायश्चित्तं स्वयं करोति। प्रत्यागमनाध्वनि झाञ्जीबारनगरे स्थितम्। तत्र कश्चित् 'तैयबजी'महाशयं मीलितवान्। सोऽपि आगन्तुकाम परं कथं स दक्षिणाफ्रिकादेशमागच्छेत्। अनागमनस्यैतस्य प्रायश्चित्तं अब्बास तैयबजीमहाशय करोति स्म। ब्यारिस्टर्मित्राणि दक्षिणाफ्रिकादेशमागन्तुं प्रलोभनाय सर्वे प्रयत्ना मदीया निष्फला सवृत्ता॥

अत्र पेस्तनजी-पादशाहमहाशयं स्मरामि। तेन साकं मदीयो मधुरः परिचयः आङ्ग्लदेशादेव। पेस्तनजीपरिचयस्तु लण्डननगरस्थशाकाहारभोजनालये सम्पन्न। तस्य भ्राता बरजोरजीमहाशयोऽसाधारणचेता इति ख्यातिरहमश्रृणवम्। परं तं न प्रत्यक्षमदर्शम्। परं मित्रमण्डले तस्य 'बुद्धिहीन' इति ख्यातिः। अश्वकारुण्यात् 'ट्राम' इति अश्वकर्षितयान उपविशति स्म। शतावधानशक्तिमानिव स्मरणशक्तियुतोऽपि न पदवीलिप्सु। बुद्धि-स्वातन्त्र्यात् सर्वैरप्यपरिभूत। 'पारसी' गृहस्थरसनपि शाकाहारी। पेस्तनजी सर्वथा न तादृश एव परं बुद्ध्या प्रख्यात। तदाङ्ग्लदेशेऽपि विदितम्। किन्तु अस्मद्परिचयमूलं तु शाकाहारनिमित्तम्। बुद्धिशक्तौ तमतिशेतुं नाहमशकम्॥

अहमेनं मोहमयीनगरे प्रत्यभिज्ञातवान्। स किल तत्रत्यप्रधानन्यायस्थाने प्रोथोनोटरीति व्यपदिश्यमानोऽधिकार्यासीत्। अथ मया गुजरातीमहाशब्दकोशप्रणयने सामग्रीसंग्रहपरो दृष्ट। न खलु सोऽप्यस्ति स्निग्धो जनो यमहं दक्षिणाफ्रिकादेशकार्ये साहाय्यकरणाय न प्रार्थितवान्। पेस्तनजीमहाशयस्तु न केवलं मे साहाय्यं न करिष्यामीत्यवोचदपि तु ममापि दक्षिणाफ्रिकादेशगमनं निश्चयनियमरोधयत यथा-मया तत्र किं नाम साहाय्यं स्यात्। दक्षिणाफ्रिकादेशगमनं स्वदीयं न मे रोचते। स्वदेश एव कर्तव्यमनन्तं ननु विद्यते। स्वभाषाभ्युदय कर्तव्य किमल्पीयसी सेवा। विज्ञानविषयक शास्त्रं मया अन्वेष्टव्यम्। परन्त्वस्म-दीयकर्तव्यस्वरूपं [illegible] शाखा। देशस्य दारिद्र्यं विमृश्यताम्। दक्षिणाफ्रिकावर्तिनो मदीया जना कष्टपतिता भवन्ति यद्यपि मम तथापि भवादृशैस्तदीयकार्यं शक्तिसर्वस्वोपयोगो न मे रोचते। वयमत्र स्वराज्यं सम्पादयामः। तत्र खलु तत्रत्यानामस्मज्जनानां स्वत साहाय्यमुपलभ्यते। स्वभिमतमङ्गीकारयितुं न शक्नोमीत्यहं जाने। किन्तु त्वया सह ममादरणीयैषां प्रश्ने नाहं भागी भवितुमिच्छामीति॥

एता येषणा यद्यपि मे नारुचन्त तथाप्यनया पेस्तनजीपादशाहमहाशये

समानभावर्धत । तस्य देशवात्सल्य भाषावात्सल्य च ममाश्चर्यमजनयताम् । आवयो प्रेमबन्धनमेतत्प्रसङ्गेन भूयो दार्ढ्यमाप्नोत् । अहमपि मदीयदृष्ट्या विलोकितु क्षम सपन्न । परतु दक्षिणाफ्रिकादेशकार्यपरित्यागकथामपास्य तत्कार्यसाधने दृढतरसकल्पोऽभवम् । देशवात्सल्यविशिष्टो जन प्रायेण देशसेवाया नैकमप्यङ्गमुपेक्षते । मम तावद्गीताश्लोकोऽय प्रत्यक्षवर्ती स्फुरति स्म । यथा —

> श्रेयान्स्वधर्मो विगुण
> परधर्मात्स्वनुष्ठितात् ।
> स्वधर्मे निधन श्रेय
> परधर्मो भयावह ॥ इति ॥

अष्टाविंशोऽध्यायः

# पूनायां मद्रासनगरे च

**सरफिरोजशामहाशयेन** मम मार्ग सुगम कृतोऽभूत् । अह मोहमयीनगरात् पूनापुरीमगच्छम् । तत्र पक्षद्वयमवर्तत । सर्वपक्षाणामपि सहकारो मयापेक्षित । प्रथमतोऽह तत्रभवतो लोकमान्यतिलकस्य दर्शनमकार्षम् । स मामित्थमब्रवीत् — सर्वपक्षाणामपि साहाय्य सपादनीयमिति यद्भवतोद्दिष्ट न तु तद् युज्यते । दक्षिणाफ्रिकासमस्यामधिकृत्य भिन्नाभिप्रायो जन सभाव्यते । किन्तु युष्मत्सभायामध्यासनमध्यासितुमनुभयपक्षीयो जन कश्चिदन्वेष्टव्य । प्रोफेसरभाण्डारकरमहाशय गत्वा द्रष्टुमर्हति भवान् । स किल दिवसेष्वेतेषु सार्वजनिकयनकलापे क्वचिदप्यकृतप्रवेशस्तिष्ठति । अथ प्रश्न कदाचिदेन वहिराकृष्य व्यापारयेत् । कृततद्दर्शनेन भवता तत्प्रतिवचन महामावेद्यताम् । यावच्छक्यमह भवत साहाय्य चिकीर्षुरस्मि । यदा यदा वापि स्वच्छन्दतो भवान् मत्समीपमागन्तुमर्हतीति ॥

इदमेव मे लोकमान्यप्रथमदर्शनम् । जनानामस्मिन्नसाधारणप्रीति किं निमित्तेत्यह तत्क्षणमेवावेदिषम् ॥

ततोऽह गोखलेमहाशयस्य सनिधिमगाम् । स हि तदा फर्ग्युसनविद्यालये स्थित । स मे परमवात्सल्येन स्वागतमकरोत् । तत्प्रीतिसाक्षात्कारक्षणमेव तत्परवशोऽह सवृत्त । इदमेव मे तस्य प्राथमिक दर्शनम् । तथाप्यावयो समागमोऽय चिरप्रेमविशिष्टयो पुनरन्योन्यदर्शनमिवाभवत् । सरफिरोजशामहाशयो मम हिमालयसदृशोऽलक्ष्यत । लोकमान्यस्तु समुद्रसदृश । गोखलेमहाशयस्तु गगासमान । सर्वोऽपि किल गङ्गा सानन्दमवगाहेत ।

सर्वस्यापि किल गंगा सुखावगाह्या वर्तते। हिमालयः पुनः दुरारोहः। समुद्रेऽवतरणं तु भयङ्करं भवति। परंतु गंगा निजाङ्कोपरि क्रीडितुं जनमाह्वयति। गङ्गायां हि द्रोणीचलयनानन्दमनुभवेत्रोऽ। यथा शिक्षकः पाठशालां प्रविविक्षुर्बालकानेव पुरा परीक्षते तथा मां गोखलेमहाशयः सूक्ष्मतया पर्यैक्षत। कथं कथं मया द्रष्टव्यं कया रीत्या च द्रष्टव्यमित्यादि मामबोधयत्। मदीयभाषणं मसौ द्रष्टुमैच्छत्। महाविद्यालयस्य व्यवस्थां प्रादर्शयत्। भवतः साहाय्यमाचरितुमहं सर्वदा सज्जोऽस्मि स्थितः। डॉ॰ भाण्डारकरमहाशयस्य प्रत्युत्तरं मे निवेदयितुमर्हसीति प्रीतिवचनं प्रकाममुक्त्वा मां विदाय व्यसर्जयत्। गोखलेमहाशयो राजकीयक्षेत्रवर्ती स्वजीवितकाले मम हृदये यत्स्थानमावसत् तत्स्थानमेव स्वजीवितोत्तरकालेऽप्याक्रम्य तिष्ठति॥

रामकृष्णभाण्डारकरमहाशयः प्रेम्णा पुत्रनिर्विशेषं मामभ्यनन्दत्। तमहं मध्याह्ने द्रष्टुमगच्छम्। तस्यां वेलायामपि कार्यव्यासक्तं मां दृष्ट्वा निरन्तरपरिश्रमेणाप्यनिर्विण्णशीलोऽयं मनीषी, सन्तुष्टोऽभवत्। अनुभवपक्षीयेण तटस्थेनैव जनेन सभाध्यक्षेण भवितव्यमिति मद्वाक्यमाकर्ण्य तत्क्षणमेव तदेव युक्तं तदेव युक्तमिति वदन्नात्मनो मनःसंमतिं व्यक्तीचकार॥

अथ समाप्तवचने मयि तेन कथितम्—अन्ये ये केऽपि व्यापृच्छन्ताम्। अहमर्वाग्राजकीयव्यापारेभ्यो निवृत्त इत्येतत्सर्वे वदन्ति तथाप्यहं भवद्वाक्यं न खलु निराकर्तुं शक्नुयाम्। भवद्भिः परिगृहीतः पक्षः परं बलवान्। भवदीय उद्यमश्च परं श्लाघ्यः। अतोऽहं भवदीयसभां नागमिष्यामीति वक्तुं नोत्सहे। भवद्भिस्तिलकगोखलेमहाशययोर्दर्शनान्ते प्रशस्तमेव कृतम्। उभयपक्षाभ्यां संभूय प्रवर्त्यमानायां सभायामध्यक्षतामहं सानन्दमङ्गीकरिष्यामीति ताभ्यां निवेदयत। सभा यदा मेलयितव्येति नाहं प्रष्टव्योऽस्मि। द्वयोः पक्षयोरपि यदानुकूलं स्यात् तदा ममाप्यनुकूलमेव। इत्येवमाख्याय मम धन्यवादमुक्त्वा लब्धाशिषं मां व्यसर्जयत्॥

निरहङ्कारं निराडम्बरं च कञ्चित्सामान्यं गृहस्थं चालयित्वा स्वार्थत्यागिना विदुषा सज्जनानामेषा मण्डलीमानन्दपरवशं विधाय व्यसर्जयत्॥

ततोऽहं मद्रासनगरं गतः। तन्नगरं परमोत्साहेन सोन्मादमिवाभवत्। बालासुदरम व्यवहारः सभाजनानां मनसि स्फूर्तिमदात्। मदीयभाषणं तदेतन्मुद्रापितमासीत्। दीर्घ उपन्यास इत्येव वक्तव्यम्। परन्तु समितिसदस्य पदश सावधानमशृण्वन्। सभाविसर्जनात्पूर्वं हरितपुस्तकानि लुण्ठितानीव क्षणाद्विक्रीतान्यासन्। पुनः नशोध्य मद्रासनगरे दशसाहस्रप्रतिरूपकाण्यहं मुद्रापितवान्। तानि च उष्णापिष्टका इव व्यक्रीयन्त। परन्तु तावत्संख्याकानां प्रतिरूपकाणां मुद्रापणमनावश्यकमासीदिति पश्चादवगतम्। अयुसाहवशादिति हि मया गोपिता तद्विक्रियता। मदीयभाषणं केवलमाङ्गलभाषाभिज्ञानामेव हृदयमस्पृशत्। मद्रासनगरे तद्विधा एव दशसाहस्रसंख्या नासन्त॥

तत्र मे दिवगत 'जी. परमेश्वरन्–पिल्लै' महाशया सर्वाधिक साहाय्यमलभ्यत। स किल 'मद्रासस्टैंडर्ड' वृत्तपत्रिकाया सपादकोऽभूत्। तेन दक्षिणाफ्रिकादेशीयसमस्यानवद्धविषया परमेतान्तनपरतया सगृह्यावद्धा। सोऽयमनेकशो मा स्वकार्यालये समाहूय मदीयकार्ये मार्गदर्शकोऽभवत्। 'हिन्दु' पत्रिकासपादको 'जी. सुब्रह्मण्यम्' महाशयोऽपि मया दृष्ट। स च 'डॉ. सुब्रह्मण्यम्' महाशयसमेन सहानुभूति महती प्रादर्शयत्। किन्तु 'जी परमेश्वरन् पिल्लै' महाभागेन मम्मस्य कार्यस्य कृते स्वकीयसमाचारपत्रिकामुपयोक्तु पूर्णमवकाशमदात्। मयापि सा स्वैरमुपयोजिता। यथाहमिदानीं स्मरामि तथा 'पाच्याप्पा' शालाया 'डॉ. सुब्रह्मण्यम्' महाशयस्याध्यक्षताया सभा प्राचलत्॥

मद्रासनगरे भूयासो जना ममोपरि प्रेमवृष्टिमवर्षयन्। तदीयोत्साहस्तथातिशयितोऽभूद्यथाहमनन्यगत्याङ्गभाषयैव व्यवहरन्नपि मदीयगृहजनैर्मिलित इवानीषम्। न हि प्रेमबन्धेन निर्मोचनीय किमपि वन्धनमस्ति॥

एकोनत्रिंशोऽध्यायः

## ' झटिति निवर्तस्व '

मद्रासपत्तनादहं कलकत्तानगरीमगच्छम्। तत्र मे दुरन्ता क्लेशा समुपनता। तत्र येन केनाप्यपरिचितत्वात् तत्रत्ये 'ग्रेट इस्टर्न होटेल' नामकविश्रान्तिमन्दिरेऽहमवात्सम्। अत्र 'डेलि टेलिग्राफ' नामकवृत्तपत्रिकाप्रतिनिधे 'एल्लर्थोर्प' महाशयस्य परिचयो मे जात। स च 'वगाल क्लब' मंदिरे प्रतिवसति स्म। तत्रागन्तव्यमिति अयमामन्त्रयत। तन्मन्दिरस्य महाशालाया न कोऽपि भारतीय प्रवेशयितव्य इति नियमस्तेन नाज्ञायि। स्वकोष्ठागार नीत्वा भारतीयेषु तत्रत्यानामाख्यानामनादर प्रतिविषण्ण सन् न तन्महाशालाप्रवेश मा क्षमाममर्पयन॥

वगाना पूजाविग्रह इति ख्यातिमागत सुरेन्द्रनाथबॅनर्जीमहाशयो मयावश्य द्रष्टव्य आसीत्। तदवलोकनाय प्राप्ते मयि तद्दर्शनार्थमागता बहवोऽन्ये जनास्त पर्यविष्टन्। अथ बॅनर्जीमहाशयो मामवदत्—

मन्दीयकार्ये लोकास्तावदकुतूहलिन इत्यह शङ्के। अस्माक क्लेशा बहवो भवन्तीति भवतामप्येतद्विदितमेव। तथापि भवद्भि सर्वथा यावच्छक्ति प्रयतितव्यम्। अस्मिन्कर्मणि महाराजाना सहानुभूति सपादनीया। 'ब्रिटिश इंडियन असोसियेशन' नाम्रस्य

प्रतिनिधयो द्रष्टव्या इत्येतन्न विस्मरणीयम्। राजा सर-प्यारीमोहन-मुकर्जी महाशयस्य महाराज-टागोरमहाशयस्य च द्वयोरपि दर्शनमावश्यकम्। इमौ सज्जनावुदारहृदयौ। किं च सार्वजनिक-कार्येष्वेतौ प्रवर्तिष्येत इति॥

अहमेतौ सद्गृहस्थावपश्यम्। किमु प्रयोजन तत किमपि नालभे। द्वावपि मामुदासीन-भावेन दृष्ट्वा कलकत्तानगरे सार्वजनिकसभाप्रचालन नाम खलु सुकरो व्यापार। यदि कदाचि-दवश्यमेव सा प्रचलितव्या तर्हि तत्सर्वमेतत्सुरेन्द्रनाथबॅनरजीमहाशयायत्तमित्यरोचताम्॥

मदीयकार्यक्रम कठिनकठिन सपद्यमानो मया दृष्ट। अहममृतबझारपत्रिकाकार्या-लयमगच्छम्। तत्र ये गृहस्था मामैक्षन्त ते किल किंचिद्याचक भिक्षुक यामन्यन्त। "नगवासी" जना ममेतोप्यधिका समाननामकुर्वन्। तत्पत्रिकासपादको मामेकहोरापर्यन्त व्यलबयत्। नूनमेन द्रष्टुमनेके जना उपस्थिता। किन्तु सर्वैस्तै कृतभाषणस्यापि तस्य दृष्टिर्ममोपरि नापतत्। एकहोरा यावत् प्रतिपाल्य यावदह धैर्यमवष्टभ्य स्वकार्यमस्मै निवेदयितुमुपाक्रंसि तावदयमब्रवीत्–यथा किमत्कार्यव्यापृतोऽहमिति किं न पश्यति भवान्। भवानिवास्मत्पार्श्वे परिसर्पकाणा नास्त्यादिर्नान्त। अपसर्पतु भवान्। एतदाकर्ण्य क्षणमह क्रोधसकटे व्याकुलोऽभवम्। किन्तु शीघ्रमेव तदीयस्थितिमज्ञासिषम्। श्रुतपूर्वा हि मया बगवासीप्रख्याति सपादक प्रति गतागता कुर्वता जनाना प्रवाहश्च दृष्ट। ते जना सर्वेऽपि सपादकस्य परिचिता आसन्। तत्पत्रिकाया चर्चनीयविषया नाल्पा अविद्यन्त। दक्षिणाफ्रिकादेशस्य नामापि तत्काले जनानामविदितमासीदिति वक्तु शक्येत॥

कस्यचित्पुरुषस्य सकट निजदृष्ट्या महत्तरमेवास्तु। तथापि तद्वदेव स्वस्वदु खनिवेदनाय सपादकस्य कार्यालयमुपधावता पर शतजनाना मध्ये त्वयमप्येकतम। सपादकस्त्वेषा सर्वेषामपि किं नाम कुर्यात्। यद्यप्येते दु खिन सपादक देशनायक मन्यन्ते तथाप्यय सपादक स्वकार्यकलाप निजकोष्टागारदेहल्या अर्वाग्वर्तिन मन्यते। तथापि नाहमधीर, सवृत्त। इतरपत्रिकाणामपि सपादकानपश्यम्। तथा चाग्लेयपत्रिकासपादकाश्च मया दृष्टा। 'स्टेट्समेन्' 'इग्लिशमेन' इतीमे पत्रिके प्रश्नस्यास्य महत्त्वमवबुध्येताम्। एत प्रश्नविचारानह सविस्तरमाभ्यामात्रेदयम्। ते पत्रिके समग्रमेतदप्राकटयताम्॥

'इग्लिशमेन' पत्रिकासपादक सॉडर्समहाशय मा स्वकीयमकरोत्। स्वकार्यालय स्वपत्रिका चोपयोक्तु महामवकाशमदात्। एतप्रश्नमधिकृत्य स्वेनलिखितप्रधानलेखनादर्श ममकरार्दा प्रेष्य तत्र चेत् किमपि शोधयितुमिष्ट स्यात्तर्हि तद् भवतैव सशोध्यतामिति च मम स्वातन्त्र्यमदात्। आवयोरुभयोरपि सत्यमर्धेतेत्युक्तिर्नातिशयोक्तिकोटिमध्यगाहेत्। यावच्छक्ति साहाय्य करिष्य इति मे वाग्दानमकरोत्। एव दत्तवचनमक्षरश पर्यपालयत्। अपि च याव-दतीवरुग्णतामापन्न तावदसौ मया सह पत्रव्यवहारमकरोत्॥

मम जीविते बहव एतादृशा मधुरनिवेशा परमकल्यादपटिपन्। मम सत्यपरायणता मया कृतमनिशायोनेत्र्यनदूरीकरणं तद् द्वयमपि सौंटर्समहाशयस्य परितोषहेतुरासीत्। महानुभूतिप्रदर्शनात्पूर्वमसौ मा सूक्ष्मतया परीक्षणीयतामनयत्। तत्परीक्षायामनेन प्रत्यक्षीकृत यदहमत्यन्तमविशङ्कितस्वरूप दक्षिणाफ्रिकादेशस्थायिना श्वेतननाना पक्षमपि निष्पक्षपातित्या दृष्ट्या प्रकाशयन् तदियत्ता च यथावदवधारयन् पर परिश्रममन्वाक्षम्॥

इद हि मदनुमते दृष्ट यदस्मत्प्रतिपक्षेऽस्माभिन्यायेन वर्तनमेवानिशीत्र स्वपक्षस्य न्यायसंपादनमार्ग ॥

इत्यमकस्मात् सौंडर्समहाशयादुपलब्धसहायस्य कलकत्तानगरीसार्वजनिकसमामेळनाय क्रियमाणप्रयत्न साफल्यमुपेयादित्याशा समुदपद्यत। तात्र डरबननगरवृत्तान्तप्रवृत्तिगता यत्रैव नादिष्टमासीत् न्यायविधायकसमा 'जान्युआरी'मासे मिलति। अहमिति प्रस्थातव्यमिति॥

अतोऽहं कलकत्तानगरी यच्छीघ्र परित्यज्य निर्गन्तु कारण पत्रमेक लिखित्वा वृत्तपत्रिकासु तल्लेखन प्रकटीकृत्य मोहमयीनगर प्रति प्रास्थिपि। प्रस्थानात्पूर्वं दादा-अबदुल्लामहाशयस्य तन्नगरवर्तिन प्रतिनिधेस्तन्त्रीसन्देशमेक प्राहैषम्। दक्षिणाफ्रिकादेशगामिन्यामव्यवहितोत्तरनौकाया प्रयातुमानुकूल्य विज्ञातव्यमिति। तत्काळमेव दादा-अबदुल्लामहाशय 'कुरलँड' नामकतरणिमेकाममक्रैषीत्। स कुटुम्बेन मया तन्नौकायानेन निःशुल्क प्रयातव्यमिति मामुपारुन्दत्। तदमिप्रायममिनद्य डिसेंबरमासस्य प्रारमे मम भार्यामपत्यद्वय भगिन्या एकपुत्र च सहादाय तस्या नौकाया द्वितीयवार दक्षिणाफ्रिकादेश प्रति प्रयाणमहमङ्गीकृतवान्। तया सहैव 'नादरी' नाविकात्यानतरणिडरबननगर प्रति प्रायात्। तस्या दादाअब्दुल्लाकपनीजनो माध्यस्थ्यमग्रहीत्। नौकाद्वये नभूयाष्टशत वा सहस्र वा भारतीयप्रायाणिका अवर्तन्त। तेषामर्धजन. 'ट्रान्सवाल' देशगामी॥

इति श्री गान्धिमहात्मन
सत्यशोधनाख्यायामात्मकथाया
द्वितीयो भाग
समाप्त

प्रथमोऽध्यायः

# चण्डमारुतसूचना

दारापत्यसमेतेन मया कृतस्य समुद्रयानस्यायमेव प्रथमोऽवसरः । अस्यामात्मकथायामनेकशो हि मया निरूपितं यन्मध्यवर्तिदेशेषु हिन्दुजनेषु बाल्यविवाहप्रचारात्तेषां भूयांसः पुरुषा विद्यावन्तः स्त्रियस्तु निरक्षराश्च वर्तन्ते । तस्मात्तेषां दम्पतीनां जीवने परस्परं महतोऽन्तरस्य विद्यमानत्वात् पत्या भार्याशिक्षकत्वमवश्यमङ्गीकरणीयं भविष्यतीति । तदेव मदीयदारापत्यस्य स्ववेषभाषाहारस्थितिगतिषु यथा वर्तितव्यमिति मया चिन्तनीयमासीत् । तदीयनवीनावरणस्थितिसमुचिता रीतिनीतीस्ते परिशिक्षयितव्या इत्यापतितम् । काश्चित्तदानींतनान्वृत्तान्तानिदानीं स्मरतो मम हासो जायते । हिन्दुकुलस्त्रीजन निश्चलमनः पतिवाक्यानुरोधेन वर्तनमात्मनः परमो धर्म इति मन्यते । हिन्दुपतिस्तु स्वभार्यायाः शासकोऽहं प्रभुरिति तथापि सर्वदा परिचर्यया तदेकानन्यपरायणया भवितव्यमिति च मन्यते । नागरिकत्वख्यातिक्रमेण निजनेपथ्यविधौ वहिर्व्यवहारे च यथाशक्यमशेष्यजनवद्वर्तितव्यमित्यासीत्तदा मे मनीषा । तथाविधया हि प्रवृत्त्या गौरवप्राप्तिर्भविष्यतीति तया च लोकमान्यतामसम्पाद्य देशसेवा तु शक्या भविष्यतीति तदाहमचिन्तयम् ॥

अत एव भार्यापुत्राणामाकल्पविधानं स्वयमेव निरचैषम् । असाम्प्रतं खल्वभीप्य काठियावाडवणिग्जनवत्प्रदर्शनम् । तदानीं निखिलभारतीयेषु पारसीजना एव परमनागरिकत्वेन पर्यगण्यन्त । तस्मादशेष्यनेपथ्यानुकरणं समग्रतया यत्र यत्र संभवि न स्यात्तत्र तत्र पारसीवेषविधानमेवास्माभिरङ्गीकृतमभूत् । मम भार्यायाः पारसीनवं परिधेयमन्तरीयं दारकाणां च पारसीकवचाप्रपदीनानि चानीय प्रायच्छम् । 'बुट्स' नामकोपानद्विशेषाः पादप्रसेवाश्च सर्वैरप्यवेक्षिता एव । मम भार्यायाः कुमाराणां च तद्धारणाभ्यासो न चिराय साध्योऽभवत् । उपानहश्चरणं दशन्ति स्म । पादप्रसेवाः प्रस्वेददुर्गन्धिनोऽभवत् । पादाङ्गुलीषु क्षतानि जायन्ते स्म । ईदृशाखिलक्लेशानां कृते समाधायकं प्रतिवचनं सर्वदा मदीयमुखे सज्जस्थितमासीत् । परन्तु तादृशप्रतिवचनगौरवापेक्षया मदधिकारवलमेव तेषां प्रवर्तकमासीदिति मे प्रतिभाति । ते किल गत्यन्तराभावादेतन्नूतनवेषमङ्गीचक्रुः । नितान्तमसन्तुष्टा अप्यनेनैव कारणेन ते भोज्यपदार्थग्रहणोपयोगिनीश्छुरिका अपि प्रयोक्तुमारभन्त । यदा मे नागरिकत्वलक्षणेषु नामैवेषु भ्रमो न्यवर्तत तदा तेऽपि तासामुपयोगमजहुः । आदौ तदभ्यासस्तेषां यथा क्लेशप्रदोऽभूत् तथा तदन्यूनमेवाचिरा-

भ्यस्तपरित्यागोऽपि सर्वथा क्लेशावह समजनीति मन्ये। किन्तु यदेतत् सुधारणाडम्बरस्य तिलाञ्जलिरस्माभिर्दायि तदस्माकमिदानीं जीवन प्रकाममसरल लघुतर च सवृत्तमित्यनुभूयते ॥

तस्मिन्नेव नौकाप्रवहणे मदीया केचिद्बन्धव परिचिताश्चावर्तन्त । सा च नौका मदीयकार्यकजनस्य मित्राणा स्वमासीत् । अतोऽह तस्या सर्वेष्वपि प्रदेशेषु स्वैरविहरणाय लब्धावकाशस्तांश्च नौकावाहशालापथिकांश्च सर्वदादर्शम्। असतकमेव नाताळदेश गमिष्यन्ती तरणिरियमष्टादशदिवसमात्रेण निर्वर्तनीयप्रयाणाभवत् । किन्तु पुरस्तादाफ्रिकाभूमिखण्डे समुपनस्यन्त महाक्षोभ पिशुनयन्निव, त्रिचतुरदिनावशेषे प्रयाणे महाश्चण्डमारुत सागरे समुदभवत् । भूमण्डलस्य दक्षिणार्धगोले डिसेम्बर – इत्याङ्ग्लद्वादशमासे निदाघकालो भवति । अतस्तत्रत्येषु जलराशिषु लघुर्वा कठोरो वा चण्डमारुतो बहुश समुदेत्येव । इदानीं पुनरुत्थितो य प्रचण्डवात स नितान्तभीषणो भूत्वा चिराय प्रावासीत्। तस्मादस्मनीनकदम्बकमुद्भ्रान्तमभूत्। तदानींतन दृश्यमतिगम्भीरमासीत् । विपद सर्वेऽपि समगोष्ठन्त । मुसलमाना हिन्दव कैस्तजनाश्च विस्मृतान्योन्यभेदा परमेश्वर ध्यातुमारभन्त । तस्य केचिदुपहारप्रतिज्ञामकुर्वत। नौकामुख्याधिकारी प्रार्थनाप्रसङ्गे सर्वैर्मिलित्वा पथिकानामित्थ समाधानमाचष्ट । "चण्डमारुतोऽयमनपायकारीति यद्यपि न शक्यते वक्तु तथाप्यनेकशो मयास्मादप्यधिकभयानका प्रवाता दृष्टा । प्रवहण चेद्बलवद् दृढतर स्यात्तदा कठोरमपि चण्डमारुत तत् प्रधर्षयेदिति ॥"

एतेन तदीयक्षोभो न शान्तिमगमत् । अनुक्षणमुज्जृम्भमाणमहानिर्घोषश्रवणेन प्रवहण भज्येत वा च्छिद्रित वा स्यादित्यमी व्यभावयन्त । परिदोधूयमानमेतदवलोक्य ते क्षणे क्षणे तस्य विपर्यासमशङ्कत । एतादृशेऽवसरे तरणेर्वाहशालायामवस्थान कस्य वा शक्य स्यात् "दैवेच्छा प्रभवतु" इति वचनोद्गारमेकमन्तरेण नान्यत्किंचनवच श्रूयते स्म । यथाह स्मरामि तथा वयमेवंविधचिन्तयाक्रान्ताश्चतुर्विंशति होरायत कालमयापयाम । अथान्ते रादम्बिनी विजघटे। भगवान्सूर्यनारायणो दर्शनमदात्। विरतश्चण्डमारुत इति नौकाधिकारी न्यवेदयत् । लोकाना मुखाच्चिन्ता व्यपगताभूत् । तया सहैव तन्मुखत पुरोच्चार्यमाण-भगवन्नामाप्यस्तमगात् । गानविनोदा खादनपानसम्भ्रमाश्च यथापुर व्यजृम्भन्त । मृत्युभीतिस्तिरोऽभवत् । तत्कालमात्र भगवद्ध्याननिरता या चित्तवृत्ति सा पुनर्मायावरणेन प्रतिच्छन्नाभवत्। यद्यपि यथापुर नमस्याभजनानि च प्राचल्न् तथापि भयकरे तत्तादृशेऽवसरे ये दृष्टचरे श्रद्धागाम्भीर्ये ते वापि पलायितेऽभूताम् ॥

किन्तु चण्डमारुतोऽयं मे पथिकैरापाममन्त्र धमघटयत् । अह चण्डमारुतोदये निराकुल एव स्थित । मया हि तारगनुभवपूर्व एव समुद्रयान मम सर्मीभूतमिति वक्तु शक्नुयाम् । नौकायां मे वमनं न भवति । शिरो न घूर्णति । तदह पथिकानां मध्ये नि शङ्कमेव गतागत

कुर्वाणस्तासमाढ्मानश्च प्रन्हिोर मुम्याधिकारिण सकाशात् प्रवृत्तिमादाय तेभ्यो निवेदयितु-मवकाशमापम् । एवं सम्पादितं प्रणयं ममाग्रे वक्ष्यामि चेत् ॥

वयं डिसेम्बरमासस्य द्वादशतमे वैकोनविंशतितमे वा दिने टरबननगरस्य नौकानिवेश-स्थानमासादयाम । 'नादरी' नाम्ना तरणिरपि तस्मिन्नेव दिने तत्र प्राप्त ॥

किन्तु पारमार्थिकश्चण्डमारुतोऽद्याप्युदयिष्यमाणः स्थित ॥

## द्वितीयोऽध्यायः

## चण्डमारुतः

निरूपितपूर्वं हि यन्नौकाद्वयी प्रायेण डिसेम्बरमासस्याष्टादशतमे दिवसे टरबननगरोपकण्ठ-माप्नोदिति दक्षिणाफ्रिकाखण्डस्य नौकाजनस्थानेषु पथिकजनासमम्पर्करोगनिर्जन्तु-रोग्यस्थितिर्नाम-तरणं निवेशन्ति । यत्नोऽपि तेषां सन्निवेशस्याविस्पृष्टश्चेत् पथिका रोगिताश्चेत् ता नावः तीरतो बहिष्कृत्य विविक्ते स्थापयन्ति । अस्मदीयप्रस्थानकाले मुम्बापुर्यां ग्रन्थिज्वरस्य विद्यमानत्वादस्माकं तरणौ कश्चित्काल प्रतिरुध्येतेति न शङ्कामहे । निवेशमुपगमे प्रवहणे हारिद्रपताका सम्स्थापनीयेत्यस्मिन्नियम । अथास्मिन्परीक्षस्य भिषक्पतेरनुज्ञामवाप्यैव जनोऽयमवरोपयिष्यते । तदनु पान्थाना सुहृद्बन्धुवर्गं नौकामारोढुमनुजानन्ति ॥

प्रचरितनवैतानुरोधेनास्मान्तरणेरुपरि पीतध्वज समारोपित आसीत् । ततो भिषगुपा-गत्यास्मान्परीक्ष्य पञ्चाहपर्यन्तमिय नौका बहिष्कार्येत्यभ्यधात । यदस्य मते ग्रन्थिज्वरकृमीनां सम्पूर्णवृद्धये त्रयोविंशतिदिनान्यपेक्ष्यन्त । तन्नोहमयीनगरात प्रस्थानप्रभृत्यात्रयोविंशतिदिवस नौका बहिः स्थापनीयेति निरणायि । किन्त्वेतदाज्ञाप्रवर्तको हेतुरारोग्यमात्रनवद्धो नाभवत् ॥

टरबननगरनिवासिभिर्गौराङ्गैरस्मत्पराववर्तनाय प्रयत्नकलापः पुरैव समाश्रितोऽभूत् । सैव कलापश्च तदाज्ञाया कारणमासीत् ॥

नगरान्ते प्रचलतोऽस्य यत्नकलापस्य वृत्तान्तं प्रतिदिनमस्मन्मकाशं दादा-अब्दुल्ला-कम्पनी-नियोगिजनद्वारा समागच्छति स्म । तत्रस्था गौराङ्गाः सभा महतीरकारयन् । दादा-अब्दुल्ला-कम्पनीजनाश्चानाप्रकारैरभीषयन् । कदाचित्तदीयानुमतिप्रेम्णा तानानाप्रदर्शकैर्वाक्यै प्रालोभयन् । युष्माभिरेषा नौकाद्वयी परावर्त्यते यदि तदा च समक्षनष्ट वयं सोढुं सन्नद्धस्थिता स्म इत्यवोचन्त । परन्तु कम्पनीजना कस्यापि बिभीषिकया न हृत्कम्पमापुः । तत्काले शेठ-अब्दुल्ला करीम-हाजी-आदममहोदय कम्पनीप्रबन्धकर्तासीत् । तेन हि दृढप्रतिज्ञेनैतया समस्तेऽपि तरणिद्वय निवेश-

स्थानमागम्य पथिका समुद्रतारणीया एवेति शपथो न्ययायि। किं चार्मी प्रयह न पत्राणि विस्तरेण विलिख्य प्रेषयति स्म। सुदैवविपाकादस्मिन्नवसरे मनसुखलाल हीरालाल-नासरमहोदयो मा द्रष्टुं डरबननगरमागमत्। स विद्वान् कार्यदक्षो निर्भयश्च। स एव भारतीयानामग्रेसरोऽभूत्। तथा स इव तेषां न्यायवादी लॅटनमहाशयोऽपि धीर आसीत्। तेन हि गर्हिता गौराङ्गानां प्रवृत्तिः। तेन किं त्वस्मिन्नवसरे पर भारतीयानां हिताकाङ्क्षिणा मित्रेणैव कर्तव्योपदेशः कृतो न पुनः पारितोषिकमादाय कार्योपदेशं कुर्वता न्यायवादिनेव॥

एवं डरबननगर्यामुभयपक्षयोरसमं द्वन्द्वयुद्धं प्रावर्तत। एकतः कतिपये धैर्यशालिनो दरिद्राः समेतास्तपस्विनो हिन्दुजना अन्यतो धनबलेन बाहुबलेन विद्याबलेन सङ्ख्याबलेन च सम्पन्ना गौराङ्गाः स्थिताः। एवं स्वतः प्रबलानां प्रतिपक्षीयाणां राज्याधिकारबलस्य प्राप्तिरप्यासीत्। यतो नातालराज्याधिकारः प्रकटमेव गौराङ्गानां साहाय्यमकरोत्। मन्त्रिमण्डले सर्वाग्रगण्यो हॅरी एस्कम्ब-महाशयः सर्वसमक्षमेव गौराङ्गानां सभास्वागमनं सहकारित्वं प्रादर्शयत्॥

तस्मात् पञ्चदिनानि यावदस्मद्विधाणं न स्वास्थ्यारोग्यसम्बन्धिना नियमानामनुसरः सवा क्वनम्। तस्य तावदय वास्तवो हेतुर्यच्चया कयापि रीत्याऽस्मान् कम्पनीजनान्वा भीषयित्वा पथिकाः परावर्तयितव्येति कम्पनीप्रतिनिधिः पूर्वमेव सतर्जितोऽभूत्। इदानीं पुनरस्मान् वित्रासयितुमारभन्त। तथा च ते प्राहुः यदि यूयमिदानीं न परावर्तध्वे तदा नूनमम्भोधौ मज्जनं व समापतिष्यति। परावर्तितुमनुमन्यमानास्तु प्रतिमार्गस्य भाटकमपि लप्स्येध्वमिति॥ अहमध्वगानां मध्ये धैर्यमाचक्षाणः सर्वदा पर्यक्रामिषम्। नादरीसञ्ज्ञकनौकायानवर्तिनामध्वन्या-नामपि धैर्यसन्देशमहं प्राहैषम्। सर्वेऽपि शान्ता अविक्लवाश्चासन्॥

पथिकानां विनोदाय तरण्यामुच्चावचा खेलालीला समपद्यन्त हि। अथ क्रिस्तजयन्ती-महोत्सवः समागमत्। तस्मिन्दिने नौकामुख्याधिकारी प्रोत्सवकक्ष्यां प्राथमिकानखिलानपि भोजनाय न्यमन्त्रयत। एषामहं मम कुटुम्बजनाश्च मुख्यप्राघुणिका अभूम। भुक्तोत्तरं भाषणानि प्रवर्तन्ते किल। तत्प्रसङ्गे पाश्चात्यनागरिकत्वमधिकृत्याहमभाषिषि। एतादृशासदर्भेषु गभीर-भाषणानि न क्रियन्त इति यद्यपि मे विदितं तथापि विधानान्तरमाश्रित्य भाषणाय नावकाशोऽभूत्। सर्वेष्वेतेषु विनोदेषु यद्यप्यहं प्रासजं तथापि मदीयहृदयं डरबननगरे प्रवर्तमानं युद्धमेवोपधावति स्म॥

तन्निमित्तं चैतदासीद्यदहमेव तस्मिन्नायोधने केन्द्रस्थानमभूवम्। ममोपरि द्विविधो दोषः समारोप्यत। तद्यथा—

(१) मया हिन्दुस्थाने नातालनिवासिनो गौराङ्गा वृथा दूषिता इति।

(२) नातालदेशं हिन्दुजनैः पूरयितुकामेन मया तरणिद्वयसम्भृतो भारतीयजनसार्थो नातालदेशे स्थितिं ग्राहयितुमेव समानीत इति।

आत्मीयामनुयोज्यतामहमवेदिषम्। अज्ञासिषं च यन्मञ्चते दादा-अवदुल्ला-महाशयो महति संकटे लग्नः पथिकानां जीवितं गण्डान्तरप्रस्तमिव वर्तते मया सहानीय कुटुम्बकं क्लेशे निपातितमिति च ॥

परमहं निर्दोषी स्थितः। न खलु मया नाताल्देशं प्रयाणगमनाय कश्चिदपि प्रेरितोऽभूत्। नौकामारोहतां पथिकानां परिचयोऽपि मे नासीत्। मदीयद्वित्रबन्धून्विना तत्रत्यानां परःशतपथिकानां मध्ये नैकस्यापि नामधेयं वा निवासस्थानादिकं वा मयावोधि। नाताल्देशवासिनामैरोप्याणां विषये तस्मिन्देशे यन्मयोद्घाटितं तद्व्यतिरेकेण भारतवर्षे मया न किंचिदुपन्यस्तम्। किं च मदुक्तयः सर्वा अपि प्रमाणानुगता एवासन् ॥

तस्माद् या नाम नागरिकता नाताल्देशवासिभ्य ऐरोप्यजनेभ्योऽस्वजीवितं समर्पितवती या चास्मांस्तदीयाचरणमङ्गीकार्यं तदवलम्बनं नः संपादितवती तामहं नितान्तमन्वशोचिषम्। एतत्सम्यगविचारः सदा मे मनसि स्थितोऽभूत्। अतोऽहमस्य लघोर्जनकूटस्याग्रे तां प्रकृत्य मामकीनं मतं प्राचकाशम्। तत्र मिलिता नौकामुख्याधिकारिप्रभृतयो मदुपन्यासं सावधानमाकर्ण्य यादृशभावैर्नैतानभिप्रायानहं व्याकार्षं तादृग्भावेनैव तानग्रहीषुः। न जाने मदुक्तार्थग्रहणात्तेषां जीवनक्रमे या काचित्परिवृत्तिः फलिता न वेति। किंतु ततः परमनेकशोऽहं 'कॅप्टन' प्रभृतिभिरधिकारिभिः सह पाश्चात्यनागरिकतामधिकृत्य चिराय कथालापानकरवम्। तत्र पाश्चात्यसभ्यतामूलं पाशवबले निरूढम्। पौरस्त्या नागरिकता त्वहिंसायां प्रतिष्ठितेति मदीयभाषणे मया प्रत्यवादि। प्रष्टारो मदीयसिद्धान्तस्यैव मामबध्नन्। तेषामेको (स च नौकामुख्याधिकारीति स्मर्यते) मामपृच्छत्—यदि गौराङ्गास्तर्जनानुरूपमेव युष्मान् हिंसयेरंस्तदा भवन्तः स्वकीयमहिंसासिद्धान्तं कथं पालयिष्यन्तीति। अथाहम् प्रत्यवोचम्—यथा वयं तेषु क्षमां कुर्मो यया च तत्प्रतीकारं परिहरामस्तथा नो भगवान् बुद्ध्या धैर्येण चानुग्रहीष्यतीत्यहमाशंसे। तेभ्योऽहं न कुप्यामि। परमहं दूये तदीयमज्ञानं संकुचितदृष्टिं च ध्यायं ध्यायम्। तेऽमी स्वप्रवृत्तिं यथार्थतो न्याय्यां समुचितां च प्रतिपन्तीत्यहं जाने। तस्मादहेतुकी स्यान्मदीया तेषां क्रोधप्रवृत्तिरिति ॥

प्रष्टा मन्दमन्दमस्मेष्ट। मदुक्तमश्रद्धेयमिति प्रायो मन्यमानः ॥

एवं दिनानि शनैर्व्यतीयुः। कियच्चिरमस्मान् निषेधयिष्यन्तीत्यधाप्यनिश्चितमभूत्। अथात्र पृष्टोऽधिकारी प्राह——अयमर्थो मदीयहस्तादपगतः। राज्याधिकारादिदेशप्राप्तिसमनन्तरमेव पथिकानवतरीतुमनुज्ञातोऽस्मीति ॥

पर्यन्ते मम च मदीयसहचारिपथिकानां चान्तिमप्रबोधना प्रादायि। तत्र हि भर्त्सिता वयं यदस्माभिर्जिजीविषुभिस्तद्वाक्यमङ्गीकरणीयमिति। अथास्माभिः पथिका वयं नाताल्नौकानिवेशस्थानेऽवतरीतुमधिकारिणः स्म इति प्रतिपाद्य यदस्तु महाक्लेशसंभवेऽपि वयमवतीर्य नाताल्विषयं प्रवेक्ष्याम इति दृढसंकल्पा भवाम इति प्रतिवचनमलेखि ॥

पर्यन्ते त्रयोविंशतितमे दिने नौकायाननिवेशस्यान्तःप्रवेशायानुज्ञा समागता। पथिकाश्चावतरीतुमन्वज्ञायन्त ॥

तृतीयोऽध्यायः

# परीक्षा

नौकानिवेशस्थानं ! प्रविष्टयोस्तरण्योः पथिकास्ततोऽवतरितुमुपाक्रमन्त । किन्तु एस्कान्ब-महाशयो नौकामुख्याधिकारिणे सन्देशमेव प्रैषयत् । यद्गौराङ्गा गान्धिमभिक्रुद्धा भवन्ति । तस्येदानीं प्राणसंशयो वर्तते । तस्माद्वर तेन प्रदोषतिमिरेऽवतीर्य नौकानिवेशस्थानविचारके टैटममहोदयैरभिरक्षितेन प्रयातुमिति । अहमप्यनर्गमनयाचिकार्थस्तथैव कर्तुमन्वमंसि । तदनु होरार्धान्तरे टैटममहाशयो नौकामुख्याधिकारिण पार्श्वमुपेत्य प्राह — श्रीगान्धिमहाशया न चेदन्यथा मन्यन्ते तदाहमेता मया सह निर्नेतुमस्मि । एस्काम्बमहाशयेन यत्सन्दिष्टं तदनुविधान-मनावश्यकं भवतीति दाशा अनड्कुला कम्पनी न्यायशाखह भवीमीति । तदनु मत्समीपमासाद्य स मामित्थमभाषत ॥

न चेद्भीतो भवन्तस्तर्हि श्रूयतां यद्ब्रवीमि । भवता कलत्रं दारकाश्च रुस्तमजीमहाशयस्य मन्दिरं यानेन गच्छन्तु । वयमन्वक् पादचारेण गच्छाम । भवद्भिः रात्रौ स्तेनवन्नगरप्रवेशः सर्वथाह न रोचये । अन्यैर्भवतामुपद्रवस्य नावकाशमिहोपलक्षये । अस्त्यधुना सर्वमुपशान्तम् । समवेता ये गौराङ्गास्ते व्यपगता । तत्तु यथा वास्ताम् पर भवद्भिर्नगरे न हि चौर्येण प्रवेष्टव्यमिति सोऽवोचत् ॥

इदं मया सद्य प्रतिपन्नम् । भार्या कुमाराश्च रुस्तमजीगृहं निरातङ्कमापुः । अथ नौकामुख्याधिकारिणमापृच्छ्य टैटममहाशयेन सार्धमहमगतम् । रुस्तमजीमहाशयस्य गृहं नौकानिवेशस्थानाद्विमाइलदूरेऽभवत् ॥

निजातपत्रमुद्धाट्य मम च जनस्यान्तरा पराफतत् । तामेनामहिंसित्वा मा प्रहर्तुमेषा दुरशक्तया मदुपरि जनकूटस्य रोषप्रतीकाराय प्रतिप्रबन्धकमजनि ॥

अत्रान्तरे दृष्टव्यतिकरः कश्चिद्भारतीययुवकः पुरक्षिस्थानं प्रधावितोऽभूत् । अलेक्झा-डरमहाशयो रक्षादलमेकं मां परिवार्य गन्तव्यस्थलं प्रापयितुं मत्सकाशं प्राहिणोत् । तद्दलं काले समागच्छत् । पुररक्षिस्थानमस्मन्मार्ग एवासीत् । तत्र प्राप्तं मां रक्षिपर्यवेक्षी प्राह — भवद्भिरस्मि-न्नेव स्थाने रक्षिभिः परिरक्ष्यमाणैः स्थातव्यमिति । तेन दित्सितं साहाय्यं कृतज्ञतापुरःसरमङ्गीकृत्या हमवोचम् मिज्ञातनिजदोषास्ते स्वयमेव विरमन्तीति न सन्देहः । अहं तेषां न्यायपक्षपातित्वे दृढप्रत्ययोऽस्मीति । रक्षिजनपरिवृतोऽहं क्लेशान्तरमनवाप्य रुस्तमजीमहाशयस्य मन्दिरमासा-दयम् । सर्वाङ्गनिर्लेखितस्यापि मम क्षतमेकमेवासीत् । तत्प्रदेशवर्ती नौकाभिषक्प्रवरो डा. दादी बरजोरमहाशयः स्वशक्त्यनुरूपं मम साहाय्यमकरोत् ॥

मन्दिरान्तः सत्यामपि शान्तौ तस्य बाह्ये गौराङ्गा गृहं परिवृत्यातिष्ठन् । रात्रिः प्रत्यासीदति स्म । क्षोभको जनः "वयं गान्धिमिच्छामः" इति चाक्रुश्यमानः स्थितः । सूक्ष्मदृष्ट्या पर्यवेक्षकोऽधिकारी क्षोभकजनस्तोममुत्साहवचनैर्नैः पुनर्भाषणोक्तिभिः स्ववशे स्थापयितुमयतत । तथापि तस्य चिन्ता न साकल्येन निवृत्तिमयासीत् । अतोऽयं मामवोचत्— यदि भवन्तो मित्रगृहं मित्रस्य निजकुटुम्बकं च रक्षितुकामास्तर्हि मदुक्तरीत्या वेषमास्थाय गृहादस्मादपवार्य निर्गन्तुमर्हन्तीति ॥

इत्थमहमेकस्मिन्नेव दिने विरुद्धप्रवृत्तिमशिश्रियम् । संशयिते प्राणापाये लॅटनमहाशयो मामशेषपलोकप्रत्यक्षमेव मया निर्गन्तव्यमित्यवोचत् । मया तत्प्रतिपन्नम् । तदनु प्रत्यक्षस्थितेऽपाये सुहृदन्यस्तद्विरुद्धमबोधयत् । तथापि मया प्रतिपन्नम् । केन वा तद्वक्तुं शक्यते यदहं प्राणसंशयेऽ स्थितः तथान्वतिष्ठमुताहो मित्रस्य जीवितस्य वा मदीयदारापत्यजीवितं वापायाद्रक्षितुकामस्तथा समाचारमिति । यदहं तुमुलजनकूटासत्रस्य धैर्येण प्रान्तमपि यदा च वेषान्तरमास्थाय स्वात्मापहारमकार्षं तयोर्द्वयोरवसरयोर्मामकीना प्रवृत्तिः सुसमञ्जसेति निश्चयेन वक्तुं को वा प्रभवेत् ॥

अतीतव्यतिकराणां युक्तायुक्ततानिर्णयोद्यमस्तावदकिंचित्करः । परन्तु वृत्तार्थानुभवेन जागर्तिमधिगम्य सति सम्भवे भाविनीप्रवृत्तिरनुरूपं यदि नियम्येत तदा हि प्रयोजनमवाप्येत । अमुकस्यामुकसन्दर्भेषु प्रवृत्तिरित्थमभविष्यदिति निश्चयेन वक्तुं दुष्करम् । किं च पुरुषस्य बाह्य प्रवृत्त्या तदीययोग्यतावधारणं नाम परं सदिग्धाभ्यूहमूलं भवतीत्युपलक्ष्यते । यतः सोऽभ्यूहः पर्याप्तप्रमाणानुगतो न भवति ॥

यथा वा तदास्ताम् । आत्मानमपवाहयितुं सन्नह्यमानेन स्वक्षतानि विस्मृतान्यभवन् । नगररक्षापर्यवेक्षकस्य बोधनामनुसृत्य भारतीयरक्षापुरुषसदृशं कञ्चुकाद्यायकल्पममुष्य शरावमेकं

मद्रपूरीमस्तेण सवेष्ट्य शीर्षकप्रतिरूपकमामन शिरसि न्यदधि। द्वौ प्रणिधी मामन्वगच्छताम्। तयोरेको भारतीयमदामान दर्शयितु वर्णनोपलिप्तमुखो भारतीयपणिवेषमधारयत्। द्वितीयस्य वेषो मया विस्मृत। वय केचिन्मार्गद्वारा पार्श्वस्थितमापण प्रविश्य तत्र भाण्डागारे सभृतस्थिताना प्रसेवाना मध्ये प्रक्रम्य निषद्याद्वारेण बहिरागतास्तुमुलजनमध्यान्निर्गत्य वीथ्यन्ते मत्प्रतीक्षयैव-स्थिता शकटीमासादयाम। तदनु तत्रोपविश्य पुरा मद्रक्षणार्थं 'अलेकझाडर' महाशयो यस्मिन्रक्षि-वर्गाश्रयस्थाने मम प्रच्छन्नस्थितिमुपादिशत्तत्स्थानमगाम। तत्राह 'अलेकझाडर' महाशय गूढचारा च कृतोपकारान्नदिवि ॥

इत्थमात्मानमपवाह्य प्रक्रामति मयि तुमुलजनमधस्य पुरस्ताद् 'अलेकझाडर' महाशय-स्तिष्ठन् 'गानिरुद्धस्यनामाम्लवेतसभूर्मीरुहे द्रुत' इति गानेन जनान् विनोदयनस्थापयत्। अथ मा सुरक्षित प्रासरक्षिस्थानमुपलभ्य क्षोभकजनवोचत्—'—युष्माभिर्दण्डनीयतया समुद्दिष्ट पुरुष पार्श्वगतनिषद्याद्वारेणात्मानमपवाह्य निर्गतो भवति। यूयमिदानीं गृहाणि गच्छत' इति ॥

तेषा केचिदक्रुध्यन्। केचिदहसन्। परे केचिद् एन वृत्तान्त न हि व्यश्वसन् ॥

तदा पर्यवेक्षकस्तानवोचत् बाढ तर्हि। यदि मे वचो युष्माकमश्रद्धेय स्यात् तदा युष्मन्मध्याद् द्वौ जनौ निश्चिनुत। तानह गृहाभ्यन्तरे नेतु सज्जस्थितोऽस्मि। ताभ्या गान्धिर्लभ्यते चेन्नूनमह सतोषतस्त युष्मदीयहस्ते प्रदास्यामि। अथ निष्फले तदन्वेषणे युष्माभिरितो निर्गन्तव्य जाने खल्वहं यद् रुस्तमजीमहाशयस्य गृह नाशयितु वा गान्धेर्दारा-पत्यानि निप्रहर्तुं वा नैव समुद्यता यूयमिति ॥

अथ क्षोभका गृहान्तरान्वेषणाय निजकूटात् प्रतिनिधी प्रैषयन्। तौ शीघ्रमेव प्रत्यागच्छ-ताम्। श्रुतवृत्तान्तास्तत्र मिलिता जना भग्नाशा बभूवु। तेषा भूयिष्ठा प्रकृतसभवे नगररक्षाधिकृतेन प्रदर्शित चातुर्यं श्लाघमाना केचिद्रोषेण कथ्यमानाश्च सर्वे प्रचेलु ॥

तदानीं निटिशास्वाराज्याना यो मन्त्री श्रीमान् चेम्बरलेनमहोदय मद्धिंसका व्यवहारे-णाभियोक्तव्या इति नाताल्राज्याधिकार तन्त्रीद्वारा समादिशत्। एस्कम्बमहाशयो मामाकार्य मयानुभूतहिंसाया कृते स्वविषाद व्यक्तीकृत्य मामवोचत् ॥

मानिमात्रमप्युपद्रुत भवदीयशरीरमित्येतत्र मेऽभिनन्दनीयम्। लॅटनमहाशयस्य सूचना-महीकृत्य तदनुबन्धिनी कष्टपरम्परामनुभवितुमधिकारो भवतामासीदेव तथापि मदीयसूचना यदि स्वीकृताभविष्यत् तदा नैना विषादकरी घटना समवर्त्स्यतेति निश्चिन मन्ये। यदि हिंसका भवद्भि प्रदर्शयितुं तदा तानाप्य व्यवहारेणाभियोजयितुं सज्जोऽस्मि। चेम्बरलेनमहाशयो मम्पेद दर्तुमिच्छतीति ॥

अह तानित्थ प्रत्यवोचम्—कमपि व्यवहारेणाभियोक्तु नाह रोचये। हिंसकानां मध्या-देक वा द्वौ वा प्रदर्शयितु शक्नुयाम्। परतु तद्दण्डने कि वा प्रयोजन भविता। अपि च मम

हिंसकान्नाहं अपराधिनो मन्ये। अहं हिंसास्थाने नानादेशवर्तिनां गौराङ्गानां दोषं दशगुणीकृत्य व्याख्याय तान्दूषयामीति तरश्चावि। प्रतीतनट्टवृत्तान्ताना मे तादृग्बोधोदयो नाम महाश्चर्यमिव। अत्र हि प्रमुखा अपराध्यन्ति। अथवा भवन्त एवेमहमनुवानो ब्रूयाम्। भवन्त किल जनाना सन्मार्गप्रदर्शने प्राभवन्। तथापि भवन्तो 'रॉस्टर'वृत्तान्त यथार्थं मिथ्यस्याहमतिशयोक्तिमालम्ब्य भाषणमकार्षमिति निर्निमित्तेन प्रत्यन। नाहं कमपि दण्डे पातयितुमिच्छामि। अवगतभूतार्थास्ते निजाचरितमनुशोचिष्यन्तीत्यहं जाने॥

अथ मामेस्कम्बमहाशय प्राह—'इदं भवन्त पत्रमारोप्य प्रदातुमर्हन्ति। मया हि चेम्बरलेनमहोदयं प्रति भवद्वाक्यं तन्त्रीद्वारा प्रेषणीयं भवति। भवद्भिस्त्वरया नाहं कमपि वाक्यं दीपमानमिच्छामि। यदि वो रोचते तर्हि लॅटनमहाशयेन भवदीयैरन्यैः सुहृद्भिश्च नमन्त्र्य कर्तव्यता निश्चीयताम्। परन्तु हिंसकाभियोगत्वालम्ब्य यदि भवद्भि परित्यज्यते तदा शान्ति प्रतिष्ठापनाय तदेतं मम बहूपकरिष्यति भवदीयं यशश्च प्रसृमर जायत इति मयावश्यमभ्यु-पेतव्यमिति॥

तदनु मयाभ्यधायि—"अहं श्रीमत्सुकृतज्ञोऽस्मि। न हि मे केनापि मन्त्रणीयमस्ति। भवन्निधिं प्रत्यागमनात्पूर्वमेव तदेतं मया निश्चित्य गृहीतम्। हिंसका नाभियोक्तव्या इति मे दृढ प्रत्यय। मदीयनिश्चयमेतं क्षणमेव पत्रमारोप्य समर्पयितु सन्नद्धस्थितोऽस्मीति। इत्यभिधाय तदपेक्षित वाक्यं लिखित्वा प्रादाम्॥

## चतुर्थोऽध्यायः

# चण्डमारुतविरामोत्तरकालीना शान्तिः

तदनु दिनद्वयानन्तर (तदा पुरक्षिस्थानमद्यापि मया न परित्यक्तमासीत्) एस्कम्बमहाशय द्रष्टुमहमनायिषि। तदानीं यद्यपि जागर्तिरनावश्यकी तथापि मद्रक्षणाय द्वौ राजपुरुषौ प्राहीयेताम्॥

नौकावतरणदिवसे पीतपताकासमवरोपगोचरं 'नाताल एडवरटाइजर' स्याख्य-वृत्तपत्रिका प्रतिनिधिर्मया सह कथालाप कर्तुमागमत्। सुबहु प्रश्नामामपृच्छत्। तेषामहमुत्तरं ददान स्वस्योपरिकृतानि दोषारोपणानि सर्वाण्यपि व्यपगमयितुमशक्नम्। सर फिरोजशा-मेहेता-महाशयेन बोधितोऽहं भाषणात्पूर्वं मदीयभाषणानि लिखित्वस्थापितान्यकरवम्। मत्समीपे तेषामितरलेखनानां च प्रतिरूपकाण्ययमन्त। तानीमानि प्रतिनिधये प्रदाय दक्षिणाफ्रिकाखण्डे मया प्रव्रततियोक्तिमिर-

प्रतिपादितोऽर्थ कोऽपि मया भारतवर्षे नोपन्यस्त इति प्राददर्शम्। अपि च कुरलेण्ड-नादरीति नौकाद्वयादवतीर्णानामधनीनाना दक्षिणाफ्रिकाखण्ड प्रयानयनेनाह सहकार्यभूवमिति स्पष्टीकृतवान्। बहवस्तेषा पूर्वमेव दक्षिणाफ्रिकाभूमौ वद्धस्थितयोऽभवन्। भूयिष्ठो जनस्तत्र नातालदेशे निवासग्रहणमनिच्छु ट्रॅन्सवालदेशं गन्तुमुद्यतोऽभवत्। तत्कालमर्थापार्जनाय प्रवृत्तानामाशापूर्तये ट्रान्सवालदेशे हि भूयानवकाश आसीन्न पुनर्नातालविषये। अत एव भारतीयेषु बहवस्तत्रैव गमनमरोचयन्त ॥

एतत्सवादप्रकाशनान्मद्द्विसकानामुपरि व्यवहाराभियोगनिराकरणाच्च महानगाध परिणाम समजनि। तथा हि डरबननगरवर्तिनो गौराङ्गा स्वीयप्रवृत्तिमनुचिन्त्य नितरामजिह्रयु। वृत्तपत्राणि मम निर्दोषित्व प्रतिपाद्य क्षोभकजनानखण्डयन्। एव मद्द्विसन मम—ममेति मत्साधनीयो देशस्य यशस्कर पर्यवास्यत्। एतेन दक्षिणाफ्रिकावर्तिना भारतीयाना गौरवमुच्छ्रायमापत्। मदीयकार्यं च सुकर सवृत्तम् ॥

त्रिचतुरैरहोभिरह स्वगृहमागाम्। पूर्ववत्प्रतिष्ठा साधयितु चिरकालो नापेक्ष्यत। पूर्वोक्त घटनया मदीयन्यायवादिकृत्यमुर्जितत्वमाप ॥

नूनमेतेनास्मदीयजनगौरवमुन्नतिं प्रापत्। परमुन्नतिप्रातिरेषा द्विषा दुराग्रहज्वलने सर्पिष क्षेप इवाचरत्। भारतीया वीर्युद्धक्षमा इति यदा सुव्यक्तमभूत्तदा गौराङ्गास्तान्निजपथे कटकाय मानानमन्यन्त। नातालदेशस्य न्यायविधायकसभाया शासनद्वयमुपस्थापितम्। तत्रैक भारतीयवणिजा प्रतिकूलम्। द्वितीय च तद्देशे स्थितिग्रहणार्थमाजिगमिषूणा भारतीयानामागमननिरोधोद्देश्यकम्। भाग्यवशात्सदस्यन्याविकारमुद्दिश्य प्रवृत्तपूर्वमायोधन भारतीयानामनुकूलनिर्णये पर्यवास्यत। तथाहि तत्रैव निरणायि। यद् भारतीयाना भारतीयत्वमात्रेण किमपि शासन तद्विरुद्ध न प्रचारयितव्यम्। शासनद्वयेषा वर्णभेदो वा जातिभेदो वा नहि स्थित इति। पूर्वोक्तशासनद्वयी यद्यप्य क्षरत सर्वसमानान्वयिनी तथाप्युद्देशतो नि सदिग्धमेव नातालदेशवर्तिना भारतीयनिवासिनामधिकारध्वसनरोधनार्थमेव निरमीयत ॥

एतच्छासनोदयात् प्रागेव मम सार्वजनिककार्यमभिवर्धितमपि तु लेखा स्वकर्तव्य प्रति नितरामजागर। शासने भारतवर्षस्य भाषाभिरनूद्य तद्गत सूक्ष्मोऽर्थो यथा लोकबुद्धिगोचर स्यात्तथा व्यवस्थापि। अस्मिन्विषये स्वास्थ्यमन्त्री च विरष्ट। परतु स्वप्रवेशप्रतिपद्यमाने नग्निन् शासनद्वयं प्रचारमागमत ॥

इदानीं सार्वजनिककार्यं मदीयकालस्य भूयिष्ठांश ग्रसते स्म। पूर्वोक्तरीत्या मनसुखलाल नाजरमहाशयो डरबननगरे वाम मे समीपमगमत। तेन च स्वकार्यं सार्वजनिककार्येषु किंचि त्पुराने मदीयमगो यद्यपि मपुरत् ॥

मदसन्निधौ शेठ-आदमजी-मियाखान-महाशय स्वकार्यमनीव श्लाध्यतया निरवर्तयत्। तेन हि सदस्यानां सङ्ख्यां बहुलीकृत्य नाताल्राष्ट्रमहासभाया कोशे सहस्रसुवर्णमुद्रामितं स्वापतेयं समग्राहि ॥

शासनप्रचारनिमित्तया जागर्या पथिकविरोधिना यत्नकल्पेन च लब्धावकाशः सदस्य सङ्ख्यावृद्धये द्रव्यसङ्ग्रहाय जनान् प्रार्थयिषि। ततो राष्ट्रमहासभाकोशे सुवर्णमुद्राणां पञ्चसाहस्री समग्रहीनाभवत्। शाश्वतिकं भाण्डबलं ममाथ तेन राष्ट्रमहासभाया कृते स्थिरस्वं क्रीत्वा तन्मूल्येनादायेन सभाकार्यं निवर्तितव्यमित्यासीन्ममाभिलाषः। सार्वजनिकसंस्थाया कार्यनिर्वाहे ममायमेव प्राथमिकोऽनुभवः। मदीयमहोद्यमिनः सूचनामिमां बोधिता सादरमङ्गीचक्रुः। अथ क्रीतं स्थिरस्वं मान्येभ्यो भाटकाय प्रादायि। तस्मादुत्पद्यमानं भाटकद्रव्यं राष्ट्रसभाया साधारण-व्ययार्थं पर्याप्तमासीत्। स्थिरस्वं निश्वाससगौरवपात्राणां केषांचिद्धर्मदर्शिनां वशेऽन्यस्यत। अद्यापि तत्तत्रैव वर्तते। परन्तु साम्प्रतमदः प्रभूतस्यान्तःकलहस्य हेतुभूतं तिष्ठति। अत एव तत्स्थिरस्वादायो न्यायसभायामिदानीमुपचीयमानो वर्तते ॥

एषा विषादकरी दशा दक्षिणाफ्रिकादेशपरित्यागोत्तरं यद्यपि समभवत् तथापि शाश्वतिकभाण्डबलमधिकृत्य मदभिप्रायस्तत्कलहोदयादपि पूर्वमेव सञ्जातपरिवृत्तिरासीत्। साम्प्रतं हि निर्व्यूढानेकसार्वजनिकसंस्थाकार्येण सम्प्राप्तपरमानुभवेन मया सम्यगवबद्धं यत्तादृशकोशबलमाश्रित्य सार्वजनिकसंस्थाकार्यनिर्वाहो नाम सर्वथा न प्रशस्य इति। संस्थाया शाश्वतधने तन्नीतिपतनस्य बीजं वरीवर्ति। सार्वजनिकसंस्था नाम सार्वजनिकसम्मत्या सार्वजनिकसाहाय्येन च प्रवर्तमाना संस्था। सा यदि सार्वजनिकसाहाय्यं हापयेत्तदा स्वीयमधिकारमेव हापयिष्यति। शाश्वतिकधनसाहाय्येन प्रचलन्त्यः संस्थाः सार्वजनिकमतमनेकशस्तीरस्कुर्वन्तीति न प्रत्यक्षमेव। तन्मतविरुद्धान्येव कार्याणि ताः असकृत्समाचरन्ति। तदेतदस्माकीनदेशे प्रतिपदमस्मदनुभूतिपदमायाति। धर्मार्थं प्रतिष्ठापिता इति श्लाघ्यमानाः कतिपयसंस्थाः आयव्ययगणनामेव न स्थापयन्ति। धर्मदर्शिन एव स्वस्य स्वामिनः संवृत्ताः। तेऽमी न कस्याप्यनुयोज्या भवन्ति। सार्वजनिकसंस्थानां प्रकृतेरिवाहन्यहनि कालक्षेपः प्रशस्यतम इति बाढं सन्दिहे ॥

जनसामान्यादुपष्टम्भमप्राप्ता या संस्था सा किल संस्थात्वेन वर्तितुं नाधिक्रियते। तस्याः प्रामाणिकतायाः प्रीतिपात्रतायाश्च तदीयवार्षिकद्रव्यसङ्ग्रह एव निकषायते। सर्वाभिरेमाः परीक्षामुत्तीर्णाभिर्भवितव्यमिति ममाशयः ॥

किन्तु मा कोऽपि मदीयवाक्यमन्यथा विदाकरोतु। एतद्वाक्यं स्थावरं स्वीयमन्दिराणि विना याः संस्थाः प्रचलितुं न शक्नुवन्ति ता न परामृशन्ति। इदं हि मया विवक्षितं यत्तदीयः साधारणो व्ययः प्रतिवत्सरं सङ्गृह्यमाणेन द्रव्येणैव निर्वाह्य इति ॥

एषामभिप्रायाणां तात्त्विकत्वं दक्षिणाफ्रिकासत्याग्रहावसरे समर्थितमभूत्। षड्वर्षाणि प्रवृत्तं तन्महायोधनं लक्षान्तररूप्यकव्ययसाध्यमपि शाश्वतधनं विनैव प्राचलत्। अलभ्ये द्रव्यसंग्रहे परेद्यु किं करणीयमिति प्रतिपत्तिमूढतामुत्पादितवन्तः तत्तादृशाः सन्दर्भाः स्मृतिमिदानीमुपयान्ति। किन्तु भाविन्यो घटना नेदानीमुपवर्ण्यन्ते। उक्ताभिप्रायसमर्थनं वक्ष्यमाणकथाया पाठका एव ज्ञास्यन्ति ॥

पञ्चमोऽध्यायः

## वालकविद्याभ्यासः

सप्तनवत्युत्तराष्टशताधिकैकसहस्रतमे क्रिस्ताब्दे प्रथममासे डरबन्नगर्यामवतीर्णेन मया सह मम कनिष्ठभगिन्या दशवर्षदेशीयः कुमार एको नवपञ्चवर्षदेशीयौ मदीयौ कुमारौ चागतवन्तः। एते कुत्र पाठयितव्याः ॥

यूरोपीयबालकानां पाठशालां प्रति तान्प्रेषयितुं शक्यमासीत्। परन्त्वेतन्मदर्थमेव केवलं कृतः पक्षविद्रुपकार इव गण्यते स्म। तत्र हि भारतीयबालका न प्रावेश्यन्त। तेषामर्थे क्रैस्तमतप्रचारकाणां शालाः स्थिताः। किन्तु मदीयबालकांस्तत्र प्रवेशयितुं नाहं सज्जोऽभवम्। तत्र प्रवर्तमानं विद्याभ्यासक्रमं नाहमरोचयम्। तत्र हि केवलमाङ्ग्लभाषया वा कदाचिदशुद्धहिन्दी-तमिळभाषाभ्यां वा पाठमध्यापयन्। अत्र प्रवेशोऽपि प्रयासमन्तरा न सुलभः। सर्वस्यास्य वैरस्यं महन्ममासह्यमासीत्। अत्रान्तरे स्वयमेव तानध्यापयितुमयतिषि। नूनमिदं यद्यपि प्रशस्यं तथापि नियमेन नाचलत्। मयाभिमतः योऽपि गुजरातीशिक्षको नालभ्यत ॥

हि दुदेशवर्तिनस्तत्तत् छात्रालयान्प्रति प्रेषिताविति यद्यपि सत्य तथाप्यचिरेणैव तौ पुनरानायिषाताम् । तदनु मम ज्येष्ठकुमार प्रबुद्धवय प्राप्तेऽह्नो कालादनन्तर दक्षिणाफ्रिकादेश विहाय स्वयमह 'अमदावाद' नगर्यांमुच्चविद्यालये प्रवेशमिच्छुर्हिन्दुस्थानमगमत् । मत्स्वश्रियो मत्सकाशादधिगतशिक्षणेनैव विश्रान्तविद्याभ्यासोऽभवतिति स्मृतिमायाति । दुर्दैववशात्कियन्त कालमुपतप्त पूर्णयौवने मृत्युवशमगात् । त्रयोऽपि मे पुत्रा सार्वजनिकशाला न कदाप्यगमन् । आफ्रिकाखण्डे सत्याग्रहिणा बालकाना कृते मया प्रतिष्ठापितासु शालासु ते कचिन्नियमेन शिक्षणमलभन्त ॥

मम प्रयत्ना सर्वेऽप्यपूर्णा एव स्थिता । बालकानामध्यापनाय यथेप्सितोऽवकाशो मया न लभ्यते स्म । अस्मात्कारणादितरप्रतिकूलसयोगाच्च स्वमनोरथानुरूपमक्षरज्ञान तेषामुत्पादयितु मदाशक्यमभूत् । अस्मिन्विषये मम पुत्रा कचिद्दोषा मय्यापादयन्ति । यतस्ते 'बी ए' परीक्षा वा 'एम् ए' परीक्षा वा तदपाये 'मेट्रिक्युलेशन' परीक्षा वा समुत्तीर्णाना कदाचित्कथाप्रसङ्गे पाठशालायामामनोऽनध्ययनमनुध्यायन्तस्तन्निमित्त किमपि वैकल्यमिव प्राप्तमात्मानमाकलयन्ति ॥

यद्यप्येव ते मन्येरस्तथापि स्वीयो ममाभिप्रायोऽन्य । तथा हि । यद्येते सार्वजनिक शालासु कथमप्यध्येतु निरभवस्यन्त । तदा ते स्वानुभवाद्वा मातापित्रो सहवासमात्राद्वा प्राप्य यच्छिक्षण तच्छिक्षण नैवाप्स्यन्त । तेषा कृते यथाहमिदानीं निश्चिन्तोऽस्मि तथा वर्तितु मे नैव शक्यमभविष्यत् । एते मत्त पृथग्भूयेग्लडदेशे वा, दक्षिणाफ्रिकादेशे वावस्थाय तत्र प्रतिपाद्यमान कृत्रकशिक्षण यदलप्स्यन्त तदाधुना स्वजीवने परिदृश्यमाना सरलता सेवाप्रवणवृत्ति च तेन शिक्षणेन नैवाप्यगमिष्यन् । अपि च तदीय कृत्रकजीवन मम सार्वजनिककार्याणा प्रति बन्धमाचरिष्यत् । तस्मान्मदिष्टानुरूप वा तदिष्टानुरूप वा तेषा विद्याभ्यास कारयितुमशक्यमभूत् । तथापि व्यतिक्रान्तव्यतिकरा स्मर्यन्ते यदि तेषामभ्युदयाय स्वकर्तव्यमह नान्वतिष्ठमिति वक्तु न शक्नुयाम् । सार्वजनिकशाला ते न प्रवेशिता इति नाहमनुतप्ये । किं च मदीयज्येष्ठकुमारे परिदृश्यमानमनिष्टलक्षणजात परामृशतो ममैव सदा प्रतिभाति यदेतत्सर्वमपि तात्कालिकस्य ममैवाशिक्षितस्यापक्वजीवनस्य प्रतिबिम्बमिति । सोऽय मे जीवितकालो ममार्धप्रबोधकालो भोगलालसकालश्चेति तर्कयामि । तत्कालमस्य बाल्यवयस स्वभावे तत्कालीना मदीयस्थिती रूढमूलाभवत् । स कालो मदीयमूढत्वव्यामोहशीलत्वकाल इत्यसौ स्वभावादेव नाङ्गीकरोति । स एष कालो मदीयजीवनान्तराले नितान्तशोभन कालस्तदुत्तरकालीना परिवृत्तिस्तु न हि ज्ञानोदय पर भ्रान्तिरेवेति तस्य प्रत्यय । तदेतत्र किंचिदाश्चर्यम् । अत्र मम मित्राण्यनेकश प्रश्नानकार्षु । यथा स ते पूर्ववयस काल एव ज्ञानोदयकालस्तदुत्तरकालीनप रिवर्तनदिनानि तवाज्ञानाहकारदिनानीति कस्मात्तर्न मन्तव्यम् । तत्र कुमारेषु विद्यामध्यापितेषु

का वा क्षतिरभविष्यत् । तदीयपक्षपुच्छच्छेदने को वा तवाधिकारः । महापदवीमारुरुक्षूणां स्वजीवितं निर्विवाहयिषूणाममीषामन्तरायः कुतस्त्वया कृत इत्यादि ॥

तानीमानि वचनानि नितान्तफल्गूनीत्यहं मन्ये । अहं हि बहुभिर्विद्यार्थिभिः कृतसम्बन्धोऽस्मि । इतरबालकानां विद्याभ्यासेऽपि मदीया उन्मत्ताभिप्राया यथा प्रविशेयुस्तथा स्वयमेवान्यमुखेन वा संविधाय तत्परिणामोऽपि मया परीक्षितः । मत्पुत्राणां सवयसो युवकानहं बहूञ्जानामि । तेऽमी मत्कुमारापेक्षया मानुष्यके प्रशस्ततरा इति वा तेभ्यः शिक्षितव्यं यत्किंचिदस्तीति वा न मे प्रतिभाति ॥

किन्तु ममैषां प्रयत्नानामन्तिमः परिणामो भविष्यत्यर्थे निगूढस्तिष्ठति । अस्य विषयस्य जिज्ञासाया इदं हि ममोद्देश्यं यन्मानवीयनागरिकताचरित्रमधिजिगांसुभिः प्रशस्तगृहशिक्षण-पाठशालाशिक्षणयोर्वैलक्षण्यं मातापित्रोर्जीवनक्रमगतव्यत्यासैस्तदपत्येषु जनिष्यमाणः परिणामश्च सम्यगभिगृह्यतामिति । इदं हि चास्य प्रकरणस्योद्देश्यं यत्सत्यशोधकः स्वशोधनैः कियद्दूरमाकृष्यते । किं च स्वातन्त्र्यदेवताया उपासकेन तस्याः कठिनहृदयाया देव्याः कृते कियन्तो भोगाः परित्यक्तव्या इति सम्यक् प्रदर्शनीयमिति । यद्यहमात्मगौरवं निगीर्य बालकान्तराणां दुर्लभं विद्याभ्यासं मदीयकुमारान् कारयिष्यं तदा नूनमेतेषामक्षरव्युत्पत्तिरभविष्यत् । परन्तु तैरधुना शिक्षितः स्वातन्त्र्यस्याभिमानपाठः सर्वथा तद्बुद्धिगोचरो नाभविष्यत् । यदि स्वातन्त्र्याक्षरज्ञानयो-रेकतरं वरणीयं तदाक्षरज्ञानापेक्षया स्वातन्त्र्यमेव सहस्रगुणमधिकं वरिष्ठमिति को वा न ब्रूयात् ॥

विशाखपत्तननगरनागरिकसभासदनमेकस्मिन्नब्दे नवयुवकाननुद्दिश्य मया बोधनाकारि यथा—

“ दासनाथा मातृगृहायमाणाः पाठशालामहाविद्यालयांश्च परित्यज्यागच्छत । दास्यशृङ्खलाभि-र्बद्धौ मार्गौ प्रान्तरभेदनं न पुनरक्षरज्ञानलाभ इति । तद्बोधनाया मूल्यमिदानीं प्रायशस्तेन सुधैव भवति ॥

स्मिन्कोष्ठे तमाक्रस्य तस्य क्षतानामौषधिमर्पयित्वा त शुश्रूषितुमुपाक्रसि । परन्तु नहूनि दिनान्येवरीत्या निर्वाहयितुमशक्यमासीत् । तमपि नियममन्तरेण त मदीयगृहे स्थापयितु ममाप्युचितमानुकूल्य नासीत् । न चैव कर्तुं धैर्यमाकलयम् । तस्मादमु धर्मकराणामर्थे स्थापिता राजकीयवैद्यशाला नीत्वा तत्र व्यसर्जयम् । तथापि न मे मन शान्तिरभूत् । ईदृशीमातुरशुश्रूषामह सर्वथा कर्तुमरोचयम् । डा० बूथमहाशय 'सेट ॲटम्स मिशन' सस्थाया प्रमुख आसीत् । स च दयालु । स्वपार्श्वमुपगताय रुग्णवर्गाय धर्मार्थमौषध प्रयच्छति स्म । तदधीना लघ्वी धर्मवैद्यशाला पारसी रुस्तमजीमहाशयस्य वादान्यकेन प्रतिष्ठापिता भवत् । तत्र शुश्रूषाकार्य दिशातु मम प्रबलेच्छा समजनि । तत्रौषधाना सविभजन प्रत्यहमेक-द्विहोराकालमपेक्षत । अतोऽहमेव निश्चैषि यदस्या वैद्यशालायामौषधागारे तदेतत्कार्य मयानुष्ठातव्य तदर्थमवकाशश्च मदुद्योगादिच्छिद्य सपादनीय इति । मम व्यवहार ममुद्योगे भूयिष्ठ काल कार्यालये मया समुपविश्य व्यवहारिणा वो गनामि करणाना लेखनामि पचापनप्रसङ्गश्चातिवाह्यते स्म । मेजिस्ट्रेट्न्यायसभाया कतिपये व्यवहारा मदीया अविद्यत । किन्तु तेषा बहव प्रत्यवस्थानशून्या आसन् । मया सह दक्षिणाफ्रिकादेशमागत्य सहाव स्थित खानमहाशयो मसन्निधौ व्यवहारचालनभारमवहत् । इत्थ मे लघुवैद्यशालाया कार्यावसरा लब्ध । तत्र तत्कार्ये गतागतकाल मिलित्वा प्रायो होराद्वयमपेक्षत । अनेन कार्येण मम मनाक्त्वन शान्तिरुत्पन्ना । रोगिणा व्याधिं विचारेणावगत्य भिषजे त निवेद्य तेन दिष्टमौषध निष्पाद्य रोगिभ्य प्रदान मदीयकार्यमासीत् । अनेन मे भारतीयैस्तत्रक्लेशमनुभवद्भि परिचयो गाढ समजनि । भूयासस्तेषामाधा द्राविडा औत्तराहा वासन् ॥

बोअरयुद्धावसरे स्वयसेवामङ्गीकृतवतो मम पूर्वोक्तोऽयमनुभवस्तत्र लब्धक्षताना योधानामुप चरणे रोगिणा शुश्रूषणे च बहूपकारक सवृत्त । शिशुरक्षणविचारस्तदा म मनसि स्थित । दक्षिणाफ्रिकादेशे ममान्ये द्वे पुत्रपत्ये समजायेताम् । तयो पालनपोषणसवर्धनकर्मणि मम वैद्यशालानुभव साहाय्यमकरोत् । मदीया स्वातत्र्यप्रीतिर्मामतीव क्लेशभाजन व्यधात् । भार्याया प्रसवकाले भिषक्प्रवरमेवमयुक्तमा गर्भग्राहिका च सनिधापयितु निरचेष्म । किन्तु काले तयोरसनिधौ का गति । गर्भग्राहिकया च भारतीयमहिलयात्र भाव्यम् । किन्तु हिन्दुस्थान एव सुशिक्षितगर्भग्राहिकाजने दुर्लभे सति दक्षिणाफ्रिकादेशस्य स्थिति सुवितर्क्या भवति । तस्मा मया सुखप्रसवसपादका विषया पाठेनागता । 'डॉक्टर त्रिभुवनदास' महाशयप्रणीत 'माने शिखामण' ( मातुर्बुद्धिवाद ) इति ग्रन्थमपठिषम् । यथासभव स्वानुभवानुरूपपरिवर्तनानि कुर्वाणस्तद्ग्रन्थोपदिष्टनियमानेवानुसृत्य चरमे द्वौ शिशू स्वय समरक्षयम् । धात्री द्वयोरपि काल्यो कतिपयाहमात्र मासद्वयमनतीत्य स्थापितामवत् । एतच्च पर मम भार्या शुश्रूषणार्थमेव न पुन शिशुरक्षणार्थम् । तत्पोषण कृत्स्नशो मयैव स्वयमकारि ॥

का वा क्षतिरभविष्यत् । तदीयपक्षपुच्छच्छेदने थवे वा तवाधिकार । महापदवीमाररक्षणा स्वजीवित निर्निवाहयिषूणाममीषामन्तराय कुतस्त्वया कृत इत्यादि ॥

तानीमानि वचनानि नितान्तफल्गूनीत्यह मन्ये । अह हि बहुभिर्विद्यार्थिभि कृतसम्बन्धोऽस्मि । इतरबालकाना विद्याभ्यासेऽपि मदीया उन्मत्ताभिप्राया यथा प्रविशेयुस्तथा स्वयमेवान्यमुखेन वा सविधाय तत्परिणामोऽपि मया परीक्षित । मत्पुत्राणा सवयसो युवकानह बहूञ्जानामि । तेऽमी मत्कुमारापेक्षया मानुष्यके प्रशस्यतरा इति वा तेभ्य शिक्षितव्य यत्किंचिदस्तीति वा न मे प्रतिभाति ॥

किन्तु ममैषा प्रयत्नानामन्तिम परिणामो भविष्यत्यर्थे निगूढस्तिष्ठति । अस्य विषयस्य जिज्ञासाया इद हि ममोद्देश्य यन्मानवीयनागरिकत्वाचरित्रमधिजिगांसुभि प्रशस्तगृहशिक्षण पाठशालाशिक्षणयोर्वैलक्षण्य मातापित्रोर्जीवनक्रमगतस्य यासैस्तदपत्येषु जनिष्यमाण परिणामश्च सम्यग्विमृश्यतामिति । इद हि चास्य प्रकरणस्योद्देश्य यत्सत्यशोधक स्वशोधनै कियद्दूरमाकृष्यते । किं च स्वातन्त्र्यदेवताया उपासकेन तस्या कठिनहृदयाया देव्या कृते कियन्तो भोगा परित्यक्तव्या इति सम्यक् प्रदर्शनीयमिति । यद्यहमात्मगौरव निगीर्य बालकान्तराणा दुर्लभ विद्याभ्यास मदीयकुमारा न कारयिष्य तदा नूनमेतेषामक्षरव्युत्पत्तिरभविष्यत् । परन्तु तैरधुना शिक्षित स्वातन्त्र्यस्वाभिमानपाठ सर्वथा तद्बुद्धिगोचरो नाभविष्यत् । यदि स्वातन्त्र्याक्षरज्ञानयो रेकतर वरणीय तदाक्षरज्ञानापेक्षया स्वातन्त्र्यमेव सहस्रगुणमधिकं वरिष्यति को वा न ब्रूयात् ॥

त्रिंशदुत्तरनवशताधिकैकसहस्रतमे क्रिस्ताब्दे नवयुवकानुद्दिश्य मया बोधनाकारि यथा— "दासताया मातृगृहायमाणा पाठशालामहाविद्यालयाश्च परित्यज्यागच्छत । दास्यशृङ्खलाभि यद्वर्बर मार्गे प्रस्तरभेदन न पुनरक्षरज्ञानलाभ इति । तद्बोधनाया मूलमिदानीं प्रायशस्तेषा सुवेद्य भवति ॥

षष्ठोऽध्यायः

## सेवावृत्तिः

मदीय उद्योग सम्यक् प्रचलति स्म । तथाप्यात्मा नैव पर्यतुष्यत् । मदीयजीवनेन भूयोऽपि सरलतरेण भाव्यम् । मदभिन्नो वर्तिना जनाना कापि सेवा वरणीयेत्यय भाव सर्वदा मन्मनसि समुदेति स्म । एव स्थिते कदाचिदेक कुष्ठरोगी मदीय गृहद्वारमगमत् । तमेन भोजनमात्रेणोपचर्य विसर्जयितु नाहमतृप्यम् । तदेय-

स्मिन्कोष्ठे तमानीय तस्य क्षतानामौषधिमर्पयित्वा तं शुश्रूषितुमुपाक्रमि । परन्तु बहूनि दिनान्येवमेनं निर्वाहयितुमशक्यमासीत् । तमपि नियमन्तरेण न मदीयगृहे स्थापयितुं ममाप्युचितमानुकूल्यं नासीत् । न चैवं कर्तुं धैर्यमाकलयम् । तस्मादमुं गिर्मिटकराणामर्थे स्थापिता राजकीयवैद्यशाला नीत्वा तत्र व्यसर्जयम् । तथापि न मे मनःशान्तिरभूत् । ईदृशीमातुरशुश्रूषामहं सर्वदा कर्तुमरोचयम् । डा० बूथमहाशयः 'सेन्ट एडम्स मिशन' संस्थायाः प्रमुख आसीत् । स च दयालुः । स्वपार्श्वमुपागताय रुग्णवर्गाय धर्मार्थमौषधं प्रयच्छति स्म । तदधीना लघ्वी धर्मवैद्यशाला पारसी-रुस्तमजीमहाशयस्य वादान्यकेन प्रतिष्ठापिता भवत् । तत्र शुश्रूषाकृत्यं विधातुं मम प्रबलेच्छा समजनि । तत्रौषधदाना सविभजन प्रत्यहमेक-द्विहोराकालमपेक्षत । अतोऽहमेवं निश्चैषि यदस्यां वैद्यशालायामौषधागारे तदेतत्कार्यं मयानुष्ठातव्यं तदर्थमवकाशश्च मदुद्योगादिच्छित्त्य सपादनीय इति । मम व्यवहार-समुद्योगे भूयिष्ठः कालः कार्यालये मया समुपविश्य व्यवहारिणा वोधनाभिः करणाना लेखनाभिः पञ्चायतनप्रसङ्गश्चाभिवाह्यते स्म । मेजिस्ट्रेटन्यायसभाया कतिपये व्यवहारा मदीया अविद्यन्त । किन्तु तेषां बहवः प्रत्यवस्थानशून्या आसन् । मया सह दक्षिणाफ्रिकादेशमागत्य सहावस्थितः खानमहाशयो मत्सन्निधौ व्यवहारचातुर्यमाप्तवहत् । ......... मे लघुवैद्यशालायां कार्याचरणे ...... । तत्र तत्कार्यं गतागतकालं मिश्रित्वा प्रायो होराद्वयमपेक्षत । अनेन कार्येण मम मनाक् मनःशान्तिरुत्पन्ना । रोगिणां व्याधिं विचारेणावगत्य भिषजे तं निवेद्य तेन दिष्टमौषधं निष्पाद्य रोगिभ्यः प्रदानं मदीयकार्यमासीत् । अनेन मे भारतीयैस्सहाक्लेशमनुभवद्भिः परिचयो गाढः समजनि । भूयांसस्तेषामान्ध्रा द्राविडा औत्तराहा वाऽऽसन् ॥

सोऽभ्युद्गातमरे स्वयसेनामङ्गीकृतवतो मम पूर्वोक्तोऽयमनुभवस्तत्र व्रणक्षताना योधानामुप-चरणे रोगिणां शुश्रूषणे च बहूपकारकः सवृत्तः । शिशुरक्षणविचारस्तावन्मे मनसि स्थितः । दक्षिणाफ्रिकादेशे ममान्यौ द्वौ पुत्रावजायेताम् । तयोः पालनपोषणवर्धनकर्मणि मम वैद्यशालानुभवः साहाय्यमकरोत् । मदीया स्वातन्त्र्यशीलता मामतीव क्लेशमानयन् व्यथयत् । भार्याया प्रसवकाले भिषक्प्रवरमेकमत्युत्तमा गर्भग्राहिणी च नितियापयितुं निरचैषम् । किन्तु काले तयोरन्यतरा का गतिः । गर्भग्राहिकया च भारतीयमहिलयैव भाव्यम् । किन्तु हिन्दुस्थान एव सुशिक्षितगर्भग्राहिकालनने दुर्लभे सति दक्षिणाफ्रिकादेशस्य स्थितिः सुतितरां भवति । तस्मान्मया सुखप्रसवसपादका विधयः पाठेनावगताः । 'डॉक्टर त्रिभुवनदास' महाशयप्रणीत 'माने शिखामण' (मातुर्बुद्धिवाद) इति ग्रन्थमपाठिषम् । यथानुभवं स्वानुभवानुरूपपरिवर्तनानि कुर्वाणस्तद्ग्रन्थोपदिष्टनियमानेवानुसृत्य चरमौ द्वौ शिशू स्वयं समरक्षयम् । धात्री द्वयोरपि कालयोः कतिपयाहमात्रं मासद्वयमनतीत्य स्थापिताभवत् । एतच्च परं मम भार्या शुश्रूषणार्थमेव न पुनः शिशुरक्षणार्थम् । तत्पोषणं कृत्स्नशो मयैव स्वयमकारि ॥

कनिष्ठकुमारस्य प्रसवकाले ममाय तत्कठिणा परीक्षा समुपानमत। प्रसूतिवेदना हि सहसा प्रवृत्ता। वैद्यो गृहे न स्थित। गर्भग्राहिकानयनप्रसङ्गे न मम कियान् कालो व्ययात्। सन्निहितायामपि तस्या प्रसवकाले तया किमपि साहाय्य न सभाव्यते स्म। तत्कालोचितमशेष कृत्य मयैवानुष्ठेयमासीत्। अयमर्थो 'डॉक्टर त्रिभुवनदास' महाशयस्य 'माने शिरामण' इति ग्रन्थात्सम्यक्परिशील्य समग्राहि। तदेतदस्मिन्नवसरे परमोपकारक समवृत्तम्। तत्कालमह क्लेशातोऽपि वैक्लव्य नाध्यगच्छम्॥

निजापत्याना पालनपोषणार्थे मातापितृभ्यामर्भकशुश्रूषाविषयक सामान्यज्ञानमधिगन्तुमावश्यकमिति दृढमह प्रत्येमि। एतद्विषयकेन तादृशज्ञानेन लब्ध प्रयोजन मया पदे पदे प्रत्यक्षीकृत भवति। तादृशज्ञानविहीन सन्नहमनुपयोगी यद्यभविष्य तदा मम कुमारैरिदानीमुपभुज्यमानमारोग्य ते नाध्यगमिष्यन्। आपञ्चवर्ष शिशुना शिक्षितव्योऽर्थो न कोऽपि विद्यत इति मूढभावना क्वचिदस्मासु दृश्यते। किन्तु वस्तुतो विचार्यमाणे शिशुराजन्मत पञ्चवर्षान्तरे यद्यत्सम्बोधविपर्यानुर्यात्तत्तदनन्तरजीवितकाले सर्वथा न शिक्षिष्यते। निजानुभवादहमेव ब्रवीमि यथा — शिशो शिक्षण जननीगर्भगतस्यैव तस्य प्रारभ्यते। गर्भाधानकाले मातापित्रोर्यादृशी शारीरिकी मानसिकी च स्थिति सैषा शिशौ प्रतिबिम्बिता भवति। ततश्च गर्भवासे जनन्याश्चित्तवृत्तिदोहदप्रकृत्याहारविहारानुरूप संस्कारमधिगत्य शिशुर्जन्म गृह्णाति। जातश्च पित्रोरनुकरोति। अनेकवर्षपर्यन्तमस्य विकास पितृमूल एव भविष्यति॥

विज्ञाततात्त्विकार्थौ दम्पती केवल पुत्रकाम्यन्तौ सगच्छेते न पुनर्विषयोपबुभुक्षया। निद्राहारवदैन्द्रियिक सुखमप्यावश्यक स्वतन्त्र च सुखमिति यन्मन्यते तदेतद्घोरमज्ञानमिति मे प्रतिभाति। जगतो हि सत्ता जननक्रियायामायत्ते। जगदीश्वरस्य लीलास्थान तन्महिम्न प्रतिबिम्बश्च जगत सुव्यवस्थिताभिवृद्धिरेव जननक्रियाया उद्देश इति ये जना अवबुध्यन्ते ते खलु महद्भिरपि प्रयत्नै स्वविषयलालसामवरुध्य निजसन्तते शारीरिकमानसिकाभ्यामभ्युदयार्थमावश्यक ज्ञानमधिगम्य तत सपादितेन श्रेयसा मानुष्यक योजयन्ति॥

# ब्रह्मचर्यम् — १

**ब्रह्मचर्यव्रतस्य** सङ्कल्पकाले कथायामस्यां निरूप्यते । आविवाहादेकपत्नीव्रतं मम हृदये प्रतिष्ठितम् । भार्यां प्रत्यद्रोहो मदीयसत्यव्रतस्याङ्गमासीत् । किन्तु भार्यां प्रत्यपि ब्रह्मचर्यपालनस्य महिमा प्रथमतो मे दक्षिणाफ्रिकादेशे गोचरोऽभवत् । येन प्रसङ्गेन येन वा पुस्तकेन मानसं मदीयमाकृष्यतेति वक्तुमिदानीं न शक्नुयाम् । तथाप्येतावदहं स्मरामि यदितः पूर्वमेव पाठकानां परिचायितस्य श्रीरायचन्दभाईमहोदयस्य प्रभाव एव मुख्यो हेतुरासीदिति । अहमेकदा ग्लैडस्टनमहाशये तस्य भार्यायाः प्रेमातिशयं नितरामश्लाघिषि । मयेदं क्वचिदपाठि यत् 'इङ्ग्लैण्ड'देशे न्यायविधायकसभायां (पार्लमेण्ट) प्रचलन्त्यामपि स्वयमेव सा भर्तुरर्थे 'टी'पेयं निष्पाद्य प्रयच्छति स्म । नियमानुसारेण जीवनं निर्वहतोरनयोर्दम्पत्योरयमप्येको नियम एव संवृत्त इति । एतदहं दम्पतिप्रेम श्लाघमानः कविप्रवराय (श्रीरायचन्दभाईमहाशयाय) कथितवान् । स मामित्थमवोचत्—अनयोर्भवता कतरा गरीयसी विमन्यता पत्नीबुद्ध्या तस्मिन्निवेशिता प्रीतिः किं वा तन्मवनमनिभाव्य क्रियमाणा प्रीतिपुरःसरी सेवा । सा कदाचित्तस्य कनीयसी भगिनी वा तस्य प्रयपिना किङ्करी वा भूत्वा तथैव यदि श्रद्धया तमसेविष्यत् । स्निग्धयोर्भगिन्योः सेवकयोर्वा निदर्शनं किं न लभ्यते । कदाचिदीदृशी प्रेमसेवा क्वचित्पुरुषे भवता यदि प्रत्यक्षीकृता स्यात्तदा किं भवानित्थमेव समतुष्यत् । मदुक्तमेतद्विमृश्यतामिति ॥

श्रीरायचन्दभाईमहाशयो विवाहित आसीत् । तत्कालमस्य वचनानि निष्ठुराणि यद्यपि प्रत्यभासन्त तथापि तानि पश्चान्मम हृदयं वज्रवदगृह्णन्तेति स्मरामि । अथाहमचिन्तयम्—ईदृशी भृत्यस्य प्रीतिः पत्न्याः प्रीतिमपेक्ष्य सहस्रगुणाधिका श्लाघनीया । दम्पत्योरैक्यसम्भवात् पत्या भार्या स्निह्यतीत्येतन्नैवाश्चर्यम् । परमेतन्नैसर्गिकम् । किन्तु स्वामिभृत्ययोरीदृशं प्रेमबन्धनं प्रयत्नविशेषेणैव साध्य इति कवेरुक्तिः क्रमेण मे मनसि मूल्यमवाप्नोत् ॥

अहमात्मनात्मानमपृच्छं यथा — एवं तर्हि भार्यया सह मया कीदृशः सम्बन्धः कर्तव्यः । एकपत्नीव्रतं नाम किं भार्या मदीयविषयासक्तेरुपकरणीभावः इति । यावदहं विषयासक्तस्तावद्भार्याविषयिणी मम प्रीतिर्निरर्थिका करी । अत्रेदं वक्तव्यं यन्मे भार्या मम व्यामोहनाय न कदाचित्प्रवृत्तेति । तस्मान्निजसङ्कल्पमात्रेण ब्रह्मचर्यव्रताचरणस्य सुकरत्वं सिद्धम् । तत्र हि सङ्कल्पदार्ढ्याभावो विषयासक्तिरूप एव प्रतिबन्ध आसीत् ॥

एवं समुदितसद्विवेकोऽप्यहं हि पराजितोऽभवम्। मम प्रयत्नेषु तीव्रसंवेगाभाव एव मत्पराभवहेतुः। बहुसन्तानप्राप्तिपरिहार एव मम मुख्योद्देश आसीत्। सन्ततिनिग्रहमधिकृत्य किंचिदपाठि। 'डॉक्टर ॲलिन्सन' महाशयेनात्रविषये कृतं प्रचारं शाकाहाराध्याये पूर्वमेव निरूपितो भवति। यद्यप्येतत् क्षणिकानुमतिं मदीयामलभत तथापि हिल्समहाशयेन कृतं प्रत्याख्यानं मनोनिग्रह एव संयम एव श्रेयानिति तदीयं मतं च हृदयस्पृगासीत्। प्रायेणायमभिप्रायः स्वानुभवाद्दार्ढ्यमापत्। ततः परं मम मतानिरपेक्षत्वान्मनोनिग्रहाभ्यासं कर्तुमहं प्रवृत्तः। तत्र मामापतितानामन्तरायाणामन्त एव नास्ति। आवामुभावपि पृथक्शयनयोः शयितुमुपाक्रमाव। निर्वृत्तनैत्यकव्यापारेण परिश्रान्तेनैव शयनमाश्रयणीयमिति निश्चयम् किन्तु प्रयत्ना इमे निष्फला इति मे प्रययात्। तथापि तात्कालिकीमवस्थामनुसंदधानस्तैरेव प्रयत्नैर्ममान्तिमः संकल्पो कार्यक्षमोऽभूदिति भावये॥

एवमन्तिमं संकल्पं षड्वत्सरप्रशनाधिकैकसहस्रतमाब्दात्पूर्वं न कर्तुमशकम्। तदानीं हि मयाग्रहो नाद्याप्युदयं प्राप्तः। मम स्वप्नेऽपि तस्या चिन्ता नासीत्। बोअरप्रश्नात्परमल्पीयसैव कालेन 'झुलु' जनस्य द्रोहमुदभवत्। तदानीमहं जोहानिसबर्गनगरे न्यायवादिकृत्यमचालयम्। तस्मिन्नवसरे नातालराज्याधिकारस्य स्वयंसेवामर्पयितुमरोचयम्। सा तद्राज्याधिकारेणाङ्गीकृता। वृत्तान्तोऽयमग्रे वर्णयिष्यते। सेवाकार्यमिदं मनोनिग्रहाख्याने माजयत्। तदेतन्मदीयपद्धत्यनुसारेण मामकाः सहचरैः सहाचर्यम्। प्रजोत्पादनं तत्फलीभूतशिशुपालनं च सार्वजनिकसेवा विरोधी रन्तरायभूतमित्यमेयि। तस्मिन् जनद्रोहसमुपन्नावसरे सेवाविधित्सया जोहानिसबर्गनगरवर्तिनो मदीयमन्दिरस्य द्वारं मया पिधानत्वमापनत्। सेवाङ्गीकारादेकमासाभ्यन्तर एव तत्तादृशेन महता ममरचनेन सर्वीकृतं मन्दिरं परित्यक्तव्यमासीत्। दारापत्यादीनि 'फिनिक्स' इति संज्ञे मदीयाश्रमे निसृज्य नातालसैन्यानुगामिभारतीयशुश्रूषादलमादाय प्रस्थातव्यमुपानमत्। एतद्वारिरे कठिनानि प्रयाणानि कुर्वाणस्य मम हृदये स्फूर्तिरासीद्यथा—लोकसेवाया तत्पर्यीभारमाविशुना मया पुत्रैषणा वित्तैषणा च परित्यक्तव्येति। अपि च वानप्रस्थाश्रम स्वीकार्यं। तथा च ममारभारशून्यस्य जीवनं समाश्रयणीयमिति। जनोत्थानव्यतिकरे मम सेवाकार्यं सार्धमासं यावदचलत्। तथापि तत्समाप्त्यन्तरं मम जीविते परमोत्तमं पात्रं आसीत्। व्रतग्रहणमहत्त्वं मया तदानीं पूर्वापेक्षया सम्यङ्न्तरां प्रत्यक्षीकृतम्। एवं व्रताङ्गीकरणं स्वातन्त्र्यस्य मार्गो न पुनर्निरुन्धनायेत्यबोधिषम्। अद्यावधि मम प्रयत्ना न सफलत्वमयान्। तत्र कारणानि संकल्पदार्ढ्याभावः स्वसामर्थ्यविश्वासः ईश्वरानुग्रहस्याविश्वासश्च। अत एव मदीयमनःमुखावरोधानपद्भ्यांनं परवशीभूय सरागाम्भोनिधौ पोप्लूयते स्म। ब्रह्मचर्याना विना दारेषु पुरुषो मोहवशं गमिष्यति व्रतनियमस्वीकारश्च स्वाभिमानत्यागश्च ब्रह्मचर्याना परवर्तीनि। मम स्पष्टमभावत। आरभन् प्रयत्ने ममापि विधायो

व्रतनियमपारवश्य न मे रोचत इति व्याहार पर नैर्बल्यलक्षणम्। तत्र ह्यनिष्टस्यापि भोगेच्छा सूक्ष्मतयान्तर्भूता दृश्यते। अन्यथा त्याज्यवस्तुन सर्वथा परित्यागे को वा क्लेश । मामय सर्पो दक्ष्यतीति जानन्नह त सर्प दूरीकृत्य सद्य पलायिष्ये एव न पुन पलायितु यतमानस्तथैव तूष्णीमवतिष्ठेयम् । ज्ञात हि मया यद्यतमानेन तूष्णीमवस्थितो मृत्यु सभवेदेवेति। प्रयतमानास्तिष्ठाम सर्वे नियमस्तीति नहि स्पष्टमनुभूयन्ते। इत्थ च यत्र क्वापि कार्ये परमह यत्न करिष्यामीति यो ब्रूयात्तस्य तत्कार्यसाफल्यस्यावश्यकता न स्पष्टमवभातेति वक्तव्यम्। केचिदेव शङ्कन्ते यथामनोऽभिप्राय कदाचिदग्रे परिवृत्तो भवेत् । तत्र्यक्तनियमाना स्वीकार विमुचित स्यान्नवेति। एव विकल्पमाना वयमनेकशो व्रतग्रहणाद्बिभीम । एषा शङ्कैव वस्तुनस्त्याग्येऽस्माक विश्वासदार्ढ्यस्य राहित्य सूचयति। अत एव श्रीनिष्कुलानन्दो गायति —

> वैराग्यरहित विद्धि
>
> त्यागमेतं विनश्वरम् । इति ।

तस्मादेषणापगमे त्यागश्च स्वतो निष्प्रतिबन्ध प्रवर्तते॥

अष्टमोऽध्यायः

# ब्रह्मचर्यम् — २

पर जिज्ञास्य सावधान विमृश्य पर्यन्ते षोडशोत्तरनवशतातिरिक्तसहस्रतमेऽब्देऽह ब्रह्मचर्य व्रतमगृह्णे। व्रतग्रहणात्पूर्वमिद मे भार्यायै नाहमवेदयम्। व्रत गृह्णानेन मया तन्मतम जिज्ञासि। तया मदीयनिश्चय लेशतोऽपि न प्रत्यवास्थितम्। परन्तु पर्याप्तशक्त्यभावान्ममैव तद् ग्रहणमतीव कठिनमासीत् । भार्यया सह विषयसुखसबन्धस्य परित्यागो नाम तदानीं मे नवीन कोऽपि विषय इव प्रतिभाति स्म। तथापि परमेश्वरे भार निवेश्य सर्वात्मना व्रतमग्रहीषि॥

अथ व्यतीतेषु विंशतिवत्सरेषु इदानीमेतद्वृत्तस्मरणमाश्चर्यमानन्द च जनयति। यद्यप्यह-मेकोत्तरनवशताधिकसहस्रतमादब्दत प्रभृति सयममपाल्य तथापि गृहीतव्रतेन मयाभूतपूर्वं सुख स्वातन्त्र्य चान्वभावि। पुरा हि मम वासनाबद्धतया तत्परवशीभाव सर्वदा सभाव्यते स्म। इदानीं तु व्रत मा भोगतृष्णावशादरक्षत्। ब्रह्मचर्यस्य महिमानमहमनुदिनमधिकाधिकमज्ञासिषम्। तदेतद्व्रत फीनिक्सग्रामवर्तिना मयाग्राहि। अवसिते व्रणचिकित्साना शुश्रूषणे फीनिक्सग्राममगच्छम् । ततश्च मया जोहानिसबर्गनगर प्रति निर्गन्तव्यमासीत्। मदीयगमनादेक साम्यन्तर एव सत्याग्रहयुद्धस्य बीजमवापि। एतदर्थं ब्रह्मचर्यव्रत मा जोषमेव सनाहयति स्म । सत्या-

ग्रहस्य कल्पनापि मे न भूतपूर्वा । सा निरायासमेव मदिच्छामन्तरेणैव समभूत् । किन्तु मया यत्पूर्वमाचरितं तत्सर्वमपि मामेतन्मार्गमाकर्षतीति स्मेत्यहमवागमम् । जोहनिसबर्गनगरे गृह-व्ययमल्पीकृत्य ब्रह्मचर्यव्रतग्रहणायैव फीनिक्सग्रामो मयाश्रीयते ॥

ब्रह्मचर्याभिरक्षणात्सम्पाद्य ब्रह्मसंदर्शनाख्यं ज्ञानं मया शास्त्रतो नाधिगतम् । इदं क्रमशः क्रमशः स्वानुभवादसिध्यत् । तन्निरूपकाणि शास्त्रवाक्यान्यहं पश्चादपाठिषम् । ब्रह्मचर्याद्दाम-रक्षणं बुद्धिरक्षणं देहरक्षणं च सिध्यन्तीति व्रतग्रहणादनन्तरं मे दिने दिने विशेषतो मदनुभवगोचरो भवत् । ब्रह्मचर्यमिदानीमामनं कठिनतपोभावं विहाय शान्तिमयज्ञानं दमनं च प्रत्यभात् । अनुदिनमिदं नवं नवं सौन्दर्यमाविरकरोत् ॥

इत्यस्मादधिकाधिकमानन्दमनुभवतो मम न कोऽपि क्लेशः समभूदिति मा स्म विचिन्ति । पञ्चपञ्चाशद्वर्षदेशीयोऽपि तस्य कठिनतामद्याप्यहमनुभवामि । यदेतद्व्रतपालनं तदपि धाराक्रमणतुल्यमिति प्रतिदिनं प्रतिभाति । प्रतिक्षणमत्र प्रमादाभावस्यावश्यकता मे प्रत्यक्षीभवति ॥

ब्रह्मचर्यं निपालयितुणा जिह्वा तावज्जेतव्या । रुचे निग्रहे सति ब्रह्मचर्यमतीव सुलभमित्यनु-भवादवेदम् । अत एवाहमाहारविषयकशोधनानि न केवलं शाकाहारदृष्ट्यापि तु ब्रह्मचर्यदृष्ट्या च कर्तुमुपाक्रंसि । तेभ्यः शोधनेभ्यो मयोपलब्धं यद्ब्रह्मचारिभिः सेव्यमानेनाहारेण कृतेन साधारणेनोपस्करशून्येन सति सम्भवेऽपक्वेन च भवितव्यमिति ॥

षड्वर्षपरिस्थितं पक्वं फलमेव ब्रह्मचारिणः प्रशस्त आहार इति मया पञ्चषाणि-यावद्विहितेभ्यः शोधनेभ्योऽहमज्ञासिषम् । वानफलानि सामान्यफलानि चाभ्यवहरता मया यादृशी निर्विकारावस्थानुभूयते स्म तादृशी कृताहारपरिवर्तनेन नान्वभावि । दक्षिणाफ्रिकादेशवर्तिनः फलाहारिणो मम ब्रह्मचर्यसाधनं नैव क्लेशावहमासीत् । यदा प्रभृति दुग्धपानमहमाश्रिस तदारभ्य प्रयत्नो महान् विधेयः संवृत्तः । फलादिकं विहाय क्षीरं पुनः सेवितव्यमासीदित्येतद्यथा-वसरं वर्णयिष्यामि । दुग्धस्य ब्रह्मचर्याचरणप्रतिबन्धकत्वे मम नास्ति लेशतोऽपि संदेह इत्यत्र विप्रतिपत्तिर्भवति । एतेन ब्रह्मचारिभिः सर्वैरपि क्षीरं परित्याज्यमिति न मन्तव्यम् । तत्तदाहारविशेषेण ब्रह्मचर्यस्योपरि यादृशः परिणामो जायते इत्येतद्बहुभिः शोधनैरेवावगन्तव्यम् । दुग्धवत्पुष्टिकरं सुजरं फलमद्यापि मयालब्धम् । भारतीयेनाङ्ग्लेन महम्मदीयेन वा वैद्येनापि निरुक्तं तादृशं फलं मे प्रादर्शि । अतोऽहं क्षीरमीनादिविकारजनकः पदार्थ इति जानन्नपि तत्परित्यागार्थमिति मम यत्नमपि बोधयितुं न शक्नोमि ॥

ब्रह्मचर्यपालनाय बाह्योपचारेण मितप्रमाण आहारो यथावश्यकस्तथोपवासोऽ-प्यावश्यकः । इन्द्रियाणि [illegible] । सोऽधऊर्ध्वतोऽसावितस्ततः [illegible] निरङ्कुशानि । अतस्तानि नैव प्रभवन्तीति सर्वथापि विदितोऽयं विषयः । साम्प्रतिकानुभवार्थं [illegible] उपवासो ब्रह्मचर्यस्योपकारीति न मे संदेहः । येषां-

चिदुपोषण निष्फलमेव पर्यवस्यति। तत्राय हेतु —उपोषणमात्रेण कृतार्थता मन्वानास्ते यद्यपि जठरे न किमपि प्रवेशयन्ति तथापि मनसा परःशतान्भोगाननुभुञ्जते। अपि चान्तरान्तरा पारणाविधानमनुध्यायन्त पेयभोज्यादिकं मनसा समास्वादयन्ते। एतदुपवासस्तेषा जिह्वानिग्रहे विषयवासनाप्रतिबन्धे वा नोपकारको जायते। यतो यथाप्रदुपवासफलप्राप्तये शरीरमनसो सहप्रवृत्तिरावश्यकी। सहप्रवृत्तिर्नाम शरीरेण त्यक्तेषु पदार्थेषु मनसोऽपि विरक्तभाव। इन्द्रियसुखस्य मूल मनस्येव प्रतिष्ठितम्। उपवासादिसाधनानामापेक्षिकत्वे सुमहत्यपि तस्य परिमितिरस्त्येव। उपवासात्रापि किञ्च विषयासक्तो भवेत्। किन्तु विषयासक्तेरुन्मूलनमुपवासमन्तरा न शक्यते। अत एवोपवासो नाम ब्रह्मचर्यव्रतस्यापरिहार्यमङ्गमिति वक्तव्यम्। ब्रह्मचर्यपालनाय प्रयतमाना बहव स्वप्रयत्नेषु पराभवं प्राप्नुवन्ति। यतस्ते भोजनाभ्यवहारादिषु ब्रह्मचारिवन्न प्रवर्तन्ते। तेषा किल प्रयत्नस्तत्रिदोषमध्ये प्रपाटलीयानुभवमिच्छो प्रयत्नमनुहरति। सयमिस्वच्छन्दिनोर्योगिभोगिनोर्जीवने वैलक्षण्येनावश्यमेव भाव्यम्। तयो साम्य तु केवलमापातदृश्यमेव। भेदस्त्वाह प्रकाश इव स्पष्ट। तथा हि उभौ चक्षुषा पश्यत। ब्रह्मचारी स्वचक्षुषा भगवद्दर्शन करोति। भोगी तु नाट्यपरिहासप्रसङ्गी भवति। उभौ श्रोत्रेण शृणुत। एको भगवन्नाम निशामयति। अन्यस्तु शृङ्गारगीतिकाश्रवणमग्नो भवति। उभौ चिराय रात्रौ जागृत। एको जाग्रदवस्थायामात्मनो हृदयमन्दिरे विराजमान श्रीरामचन्द्र भजते। अन्यस्तु नाट्यविलासप्रयुक्तमदेन परवशीकृतो निद्रा जहाति। उभावभ्याहार स्वीकुरुत। एको देवालयस्यास्य शरीरस्य रक्षणार्थं यावदावश्यक तावन्मात्रमुपादत्ते। अन्यस्तु जिह्वाचापल्येन स्वदेहमुच्चावचैर्वस्तुभि स्तूपयित्वा पवित्रमठं दुर्गन्धित करोति। इत्थमनयोरन्तर नियत एव। तच्च कालक्रमेणोपचीयते न पुनरपचीयेत सर्वथा॥

ब्रह्मचर्यं नाम मनोवाक्कायकर्मभि सर्वेन्द्रियाणा निग्रह। एतन्नियमसिद्धये पूर्वोक्तनियमानामावश्यकता दिने दिने मम स्पष्टतरमुपलक्ष्यते। यथा ब्रह्मचर्यस्य महिमा निरवधिकस्तथा त्यागस्य प्रभावोऽप्यपरिमेयो भवति। ईदृश ब्रह्मचर्य नाल्पेन यत्नेन साध्यम्। पर कोटिजनानामिदमादर्शमात्र कल्प्यते। पूर्णब्रह्मचर्यसाधक सदा स्वदोषानस्मरन् हृदयान्तरे प्रच्छन्नस्थितान्विकारानन्विष्य तत्परिहाराय यतते। मनसा तथा दृढेन भवितव्य यथा नियमेनेच्छापूर्वक एव भाव समुदियात्। यावदीदृश स्थैर्यं नाविगम्यते तावत्पूर्णब्रह्मचर्यं न सिध्यति। अनिच्छापूर्वको मनोभावोऽपि विकारविशेष। भावाना वशीकार एव मनोनिग्रह। स च वायोर्निग्रहादपि दुष्करस्तथाप्यन्तरात्मन प्रभावादय साधनीय। दुःसाध्यत्वमात्रेण न कोऽप्यसाध्यमेनदिति मन्यताम्। अयमेव परमार्थ। परमार्थसिद्धिश्च परम प्रयत्नो यथावश्यकस्तत्र किमाश्चर्यम्॥

हिन्दुस्थानं प्रति मम प्रयागमनोत्तरमेव मयाऽवगतं यद्ब्रह्मचर्यं मानुषप्रयत्नादेव केवलमसाध्यमिति । तदवधि फलाहारेण विकारजातस्य समूलनाशो भविष्यति । नान्यत्किमपि कर्तुमावश्यकमिति स्वाभिमानाद्विश्वस्य तद्विश्वासमायाया लग्नोऽभवम् ॥

एतद्वृत्तान्तनिरूपकं प्रकरणमग्रे वर्तते। अथ पुनरेतावन्मात्रं स्पष्टीकर्तव्यं यं मोक्षसाधनाय ब्रह्मचर्यं रिरक्षिषुभिः स्वप्रयत्ने यावान् विश्वासो निधीयते तावान् भगवत्यपि निवेश्यते यदि प्रेप्सितभङ्गो नैव शङ्कनीयः । तथाहि भगवदुक्तिः —

विषया विनिवर्तन्ते निराहारस्य देहिनः ।

रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ भ. गी. २,५९

अत एव मुमुक्षोः श्रीरामनामैव श्रीरामकृपैव परमाश्रयः । भारतखण्डं प्रत्यागतस्यैव ममेदं तत्त्वं बुद्धिगोचरोऽभवत् ॥

नवमोऽध्यायः

## सरलजीवनम्

मया तावदारब्धो भोगप्रधानो जीवनक्रमः । परन्तु चिराय सैष नहि प्राचलत् । मन्दिरं महतायत्नेन मया सज्जीकृतमासीत् । किन्त्वेतन्मदीयमानसं न व्याकर्षत् । अथाहं गृहव्ययमल्पयितुं प्रवृत्तः । रजकाय प्रदेयां भृतिर्वर्धते स्म । स तावद्वसनानि कालेनोपाहरत् । यस्मादिरिशाया द्विशाया वा कञ्चुकेषु गलपङ्क्तेषु स्थितेष्वपि न पर्याप्नुवन् । गलपट्टिका प्रतिदिनं आतरसचुरा एकाहव्यत्यासेन वा परिवर्तनीया ह्यासन् । एतेन मे द्विगुणो व्ययः समवर्तत स्म। मयैतत् समञ्जसमित्यहमचिन्तयम् । तद् व्ययं रिरक्षुः स्वयमेव वस्त्रक्षालनमारभे। क्षालनविधानं वृत्तिपुस्तकादवबुध्य भार्यामप्यशिक्षयम् । एतेन यद्यपि कार्यस्य बाहुल्यमुपजातं तथापि तस्य नूतनोपक्रमाद्वयोरेतद्विनोदकरमेवासीत् ॥

गलपट्टिकाया स्वयं निर्णेजनव्यतिकरः यद्यप्यविस्मरणीयो भवति। मया विलं सायाविस्मयजिकेन योजिताभवत । घट्टन ( पारभरण ) यन्त्रं प्रथमनार्पितं नासीत । दहनशङ्कया गलपट्टिका सम्यक्घट्टिता नाभूत । एतेन दृढस्तम्भापि पट्टिका सर्वदा काजिकपिष्ट सुघनि स्म। ईदृशीमहं प्रतिमुच्य न्यायसभां गत सहस्थितानां व्यारिस्टरजनानामुपहास्यतामगमम्। तथापि पारे पारदामगदनदाक्मिमार्मात ॥

अहमवोचम्—स्वय गलपट्टिकाक्षालनस्यायमेव मे प्रथमोऽवसर । अत एव काञ्चिका-विक्यात् पिष्टमुक्त्यर्थेन विलम्बनेन मम क्लेश कोऽपि नास्ति। पर भवता विनोदप्राप्तिरप्येकौ लाभ इति ॥

ततस्तु सुहृदपृच्छत्—किमत्र रजका दुर्लभा इति ॥

अहमवोचम्—

इह निर्णेजकाय प्रदेय द्रव्य ह्यत्यधिक मे प्रतिभाति। यावत्त पट्टिकामूल्य तावन्निर्णेजन व्ययो भविष्यति। किन्तु रजकस्याश्रयण पदे पदे प्रमाद्यते। तन्मन्ये स्वयमात्मना स्वेनैव क्षालन वरमिति ॥

एतत्स्वावलम्बनस्वारस्य मदीयमित्राणि ग्राहयितु नाशकम्। अथ क्रमेण कुशलस्य रजकस्येव स्वकर्माणि नैपुण्यमहमभ्यगच्छम्। रजकानुष्ठितकार्यापेक्षया मदीयकार्य न पर्यहीयत। दृढत्वे भास्वरत्वे च मदीयगलपट्टिका निर्णेजकशोधितपट्टिकाभ्य कथमपि नावरा अभूवन् ॥

दक्षिणाफ्रिकादेशमागतस्य गोखलेमहाशयस्य निकटे महादेव गोविंद-रानडे-महोदय प्रदत्तमेकमुत्तरीय स्थितम्। तदेतद् दातु प्रज्ञापक गोखलेमहाशयो यत्नेन नाम्यरक्षत्। अपूर्वसदर्भेष्वेव च तदुपायुङ्क्त। जोहानिसबर्गनगरनिमित्तभारतीयस्तम्भमाननार्थमवक्लृप्त भोजन सतर्पणमप्येको निदिष्टावसर आसीत्। तदानीमेतदुत्तरीय नवीकरणायमपतितम्। पुटितपुटि-तस्थितत्वात्तन्निर्णिज्य तत्र्यक्तेन परिष्करणीयमासीत्। रजकमाकार्य निर्णेजयितुमवकाशो नाविद्यत। स्वकौशलमुपयुञ्जानस्तत्कार्यमह करिष्यामीत्यवोचम्। तदा गोखलेमहाशयोऽकथयत। यथा—

"न्यायवादित्वस्य भवद्भि सम्यगनुष्ठीयत इत्यत्र मे विश्वास। परन्तु वो निर्णेजन-पाण्डित्ये नाह श्रद्धालु। दूषितेऽमुष्मिन् का गति। उत्तरीयमिद मया नियन्मूल्यवद्गण्यत इति ज्ञायते वेति॥"

एवमाख्याय बहुमानत्वेन यथा बहुमानत्वेन तत्रलाभ समुपालनत्वस्या परमोत्साहेन महामुपार्पयत्। तथाप्यह यथावत्कार्य करिष्यामीति सविनय प्रतिज्ञाय तापनेन वस्त्र परिष्कर्तुमनुज्ञामाप्नम्। कृतकार्यश्च श्लाघावचनस्यानन्दितो। इदानीमपि जगदेव यद्यपि मदीयकौशल नाङ्गीकुर्यात्तदा मे का वा क्षति ॥

यथाह रजकाश्रयात्तथा नापिताश्रयणादप्यात्मान व्यमोचयम्। आफ्रिकागन्तुमुद्यता सर्वेऽपि स्वय क्षौरविधान शिक्षन्ते। तथापि स्वय लोमलुञ्चनस्य शिक्षिता जनो नाद्यापि मया दृष्ट। मया तदपि शिक्षणीयमासीत्। अहमेकदा प्रिटोरियानगरे कस्यचिदाङ्ग्लाधिनस्य कार्यालयमागच्छम्। मम केशलुञ्चन न करिष्यामीति मोऽब्रवीत्। एव प्रतिभाषणेन प्रदर्शिता त्वनज्ञा वर्णयितुमशक्या भवति। अह परमखिन्न। तत्क्षणमेव विपणि गत्वा केशलुञ्चनयन्त्र

कीय दर्पणस्याग्रे स्थित । स्वशिरोऽग्रभागस्य केशानलुञ्चि । किन्तु चरमभागस्य केशलुञ्चनं दुष्करमासीत् । तदेतन्नैव सुनिष्पन्नम् । न्यायसभाया सुहृदो मामव्रत्यस्य परिहासमग्ना अभवन् । ननु गाधिमहाशय किं वृत्त भवत केशानाम् । तान्मूषका किमलुञ्चन् ॥

नहि गौरनापित कृष्णशीर्षं मदीय कथं वा स्प्रष्टुमर्हेत् । अतोऽहमतमीचीनतामनाकलय्य स्वयमेव तानलुञ्चिषम् । प्रत्युक्तिरेषा न मे सुहृदामाश्चर्यमजनयत् । केशान् लुञ्चिष्यामीति वदता नापितेन किमपि नापराद्धम् । कृष्णाङ्गाना केशलुञ्चने तस्य वृत्तिरेव विनाशमुपेयात् । न खलु वयमस्मदीयक्षौरकै पचमानामुपसर्पणमनुजानीमहे । ईदृगाचरणाय फल न तावत्-कृदेव परमनेकशोऽनुभावि । अस्मदीयपापानामिद प्रायश्चित्तमिति मन्वानो विषयेऽस्मिन्न तदानीं क्रोधमाकलय्यम् ॥

सरलतास्वावलम्बनयोर्ममादर शनै शनैस्तीव्ररूपमापद्यतेति यथावसर वर्णयिष्यते । किन्तु पूर्वमेवास्य बीजमवापि । तच्च रूढमूल पुष्पितु फलितु च जलसेचनमात्रमपैक्षत जलसेचन च काले प्राप्तमेव ॥

दशमोऽध्यायः

## बोअर-युद्धम्

आसप्तनवत्यधिकाष्टशतोत्तरसहस्रतमादानवनवत्यधिकाष्टशतोत्तरसहस्रतम् वत्सर मदनुभवगोचरीभूतान् बहून्विषयान् विसृज्य साम्प्रत बोअरयुद्धस्य वृत्तान्त उपवर्णनीयो भवति । एतद्यो धनस्य प्रारम्भकाले बोअरजनैरेव सर्वात्मना सहानुभूतिरस्माकमासीत् । किन्तु स्वामिप्रायानुसारेण वर्तितुमद्याप्राप्तोऽहमिति ममासीत्तदानीं मनीषा । इद दक्षिणाफ्रिकासत्याग्रहेतिहासेऽस्मिन्नत्रहृदयमूल्मपरामर्शेन मया सम्यगुपावर्णि । तस्मादस्य पुनर्निरूपणमत्र निरवकाश भवति । एतद्वृत्तान्त वुभुत्सुभि स एवेतिहासो द्रष्टव्य इति बोधयामि । इह तावदियन्मात्रमिदानीं वक्तव्य यथा — आङ्ग्लसाम्राज्य प्रति ममासीद्यादृशी स्वामिभक्ति सा तस्मिन्नायोधने ममाङ्ग्लपक्षमाश्रित्य प्रवर्तनाय बलात्प्रैरयत् । आङ्ग्लराज्यप्रजाधिकारोऽस्य मया सपिपादिविलसत्तदाङ्ग्लप्रजावदेव ममापि तद्राज्यरक्षणे प्रवृत्त्याश्रयण धर्म्यमित्यहमचिन्तयम् । तत्कालमह हिन्दुस्थानस्य पूर्णस्वातन्त्र्यासि 'ब्रिटिश' चक्राधिपत्य एव स्थित्वा तत्राधिपत्यद्वारेव साध्येत्यभिप्रायवानासम् । अत एव यथाशक्य मित्राणि सघस्य लब्धक्षतानां योधानां शुश्रूषणाय सेवादलमेकं पर्यकल्पयम् । एतद्दलस्य सेवा राज्याधिकारिण स्वीकारयितु महान् प्रयास आस्थेयोऽभवत् । तदा विल तत्रत्या आङ्ग्लेया प्रायेण भारतीयान्सर्वानपि कापुरुषान् स्वार्थैकपरायणाश्चामन्यन्त । अत एव

बहवो माङ्ग्लेयसुहृद: प्रयत्न मदीयमनभिनन्दन्तो मा निरुत्साहाचक्रु । डॉ. बूथमहाशयस्तावदेक एव सर्वात्मना मामपोषयत् । परिक्षतयोधाना शुश्रूषणस्य विधानमस्मानशिक्षयत् । एतत्कार्यनिर्वाहोचितशरीरदार्ढ्यमपन्ना वयमिति भिषक् सकाशाद्योग्यतापत्रिका वय समपादयाम । एस्कम्बमहाशयो लॅटनमहाशयश्च प्रयत्नमेन सोत्साहमन्वमोदेताम् । अथान्ते वय युद्धे सेवा करिष्याम इति राज्याधिकार प्रति विज्ञप्तिमकुर्महि । राज्याधिकृताश्च तद्विज्ञप्तिहेतो स्वकृतज्ञता प्रख्याप्याधुनैव सेवया न कार्यमित्यस्मानवेदयन् ॥

किन्तु तदनङ्गीकारवाक्येन नाह परितुष्य जोषमवास्थिषि । डॉ. बूथमहाशयस्य साहाय्यमुपलभ्य नातालदेशवर्तिन कैस्तमनाचार्यमदर्शम् । अस्माकसेवादले बहवो भारतीया क्रिस्तमतावलम्बिनोऽवर्तन्त । ममोपदेशमाकर्ण्य मताचार्य पर समतुष्यत् । राज्याधिकारेणास्मदीया सेवा यथा स्वीक्रियेत तथाहमुपकरिष्यामीति च प्रत्यजानीत ॥

एतन्मध्ये कालस्याप्यनुकूलमयोगोऽस्माभिर्लब्ध । बोअरयोधा अविनिर्वित धैर्य स्थैर्य विक्रम च प्रादर्शयन् । अथ राज्याधिकारोऽस्मदीयसेवाया आवश्यकतामपश्यत ॥

आस्माकसेनादलमेकशतोत्तरसहस्रजनसख्याकमासीत् । तत्र नेतार उपचत्वारिंशज्जना । त्रिशत स्वतन्त्रभारतीया शेषा प्रतिज्ञाबद्धकर्मकरा । डॉ बूथमहाशयोऽपि सहास्माभिरेव स्थित । सेनादल स्वकार्य श्लाघ्यतया निरवाहयत् । यद्यप्यस्मदीयकार्य शतघ्नीप्रहारसान्निविदूरे प्रदेशे निर्वर्तनीयमासीत् । यद्यपि वय 'रक्तस्वस्तिक' ( रेड क्रॉस ) बन्धेन समरक्षिष्महि तथापि प्रतिबद्धनिर्गमे समयेऽस्माभिराग्नेयगुलिकाप्रपातस्थ एव सेवाकृत्यमनुष्ठेयमित्यादिश्महि । गुलिकापातस्थलप्रवेशनिषेधको यो नियम सोऽस्मदिच्छया न प्रयुक्त किन्तु राज्याधिकार-निदेश एव तादृशोऽभूत् । तथापि स्पियाकोपे पराजयप्राप्त्यनन्तर परिस्थितिरन्यथा समजनि । तथाहि सेनापतिर्बुल्लरमिनान सदेश व्यसर्जयद्—यद्यपि यूय विपद्गोचरे स्थातुमनर्हा तथापि समराङ्गण प्रविश्य परिक्षतयोधानानयथ चेत्तदा राज्याधिकारस्य महती युष्माभिरुपकृति-र्विहिता स्यादिति । विपद्गोचरीभवितु वय सज्जा एव स्थिता । तस्मात् स्पियाकोपयुद्धे शतघ्नीप्र-हारान्त पातिषु प्रदेशेषु गत्वा कार्य कर्तुमारभामहि । एषु दिवसेषु परिक्षतान्योधान् वीवरैर्वहन्तो वय विंशत्या पञ्चविंशत्या वा माषणैर्दवीयस प्रदेशानन्वयघयामहि । इत्यमस्माभिरपोढाना योधाना मध्ये जनरलवुड्गेटप्रभृतयो जना अविचन्त ॥

सप्ताहषट्क यावत्कृताया सेवायामस्मदीयदलो व्यसर्जि । स्पियाकोपवालक्रान्झस्थल्यो-र्लब्धपराजया प्रधाना आङ्ग्लसेनापतयो बोअरजनास्कन्दात् लेडीस्मिथप्रभृतिस्थलाना सद्यो

विमोचनप्रयत्न विहाय हिन्दुस्थानादाग्लदेशाच्च सैन्यागम प्रतीक्षमाणैरस्माभि समुद्योगो विलम्ब-नीय इति निश्चिंयु ॥

इमामल्पामपि सेवा तस्मिन्नवसरे बहु प्राशसिषु । भारतीयेषु माननावृद्धिमापत् । 'सर्वेषामपि न समा हि मतिता साम्राज्यसपुत्रता' इति पद्यावलीयुतानि प्रशसनपद्यानि सर्वत्र प्राचकाशन् ॥

बुलरमहाशय सेनापतिलेखनद्वारास्मदीयदलस्य सेवाकार्यमस्तावीत् । दलनायकेभ्य समरविरुदमुद्रा अपि प्रादायिषत् ॥

भारतीय समवाय परतु सघटित समपर्नेन । प्रतिज्ञानद्धकर्मकरान् भारतीयानह सम्यक्तरा पर्यचैषम् । तेषामतिशयिता जागर्तिरुदपद्यत् । हिन्दुमुसल्मानक्रैस्तमद्रासीगुजराती-सिंधीजना सर्वेऽपि भारतीया एव सर्वे च मातृभूमेर्भारतवर्षस्य पुत्रा इति भावना बलवत् दृढ-मूलाभवत् । भारतीयाना क्लेशा सर्वेऽपि सर्वथा दूरीभविष्यन्तीति सर्वोऽप्यमन्यत । गौराङ्गाना वर्तनमपि परिवृत्तिमागतमिव स्पष्टमलक्ष्यत । युद्धकाले गौराङ्गै सह घटित सम्बन्धोऽपि मधुर एवासीत् । पर सहसैराङ्ग्लयोधै सह सङ्गो न समजनि । तेऽस्मासु केवल मित्रभावेनाव-र्तन्तापि तु तत्सेवार्थमागता वयमित्यस्मदीयामुपवृत्तिं सस्मरन्ति स्म ॥

निसर्गतु मानुषी प्रवृत्ति यथा परमोत्कर्षमाविष्करोतीति निदर्शनार्थमेका मधुरसस्मृति-रिहावश्यमुपन्यसितव्या भवति । चीवलीस्तडाक सेनानिवेशस्थानमस्माभिर्गम्यते स्म तत्रैव लॉर्डरॉबर्ट्समहाशयस्य कुमारो 'लेफ्टनन्ट रोबर्ट्स' नामा मृत्युसन्निभेनाग्नेयगुलिकाप्रहारेण पञ्चतामगात् । प्रेतकार्यनिर्वहणसमानोऽस्मानुपनत । अस्मदीयप्रयाणदिवसे नैदाघमौष्ण्य समधिकमासीत् । वय सर्वेऽपि तृष्णार्दिता अभूम । मार्गे क्षुल्लका स्रोतस्विनी काचिदलक्ष्यत । जलपानेन पिपासोपशमन सुकरमासीत् । किन्तु प्रथम केन पातव्यम् । आङ्ग्लयोधेषु पीत तृप्तेषु वय च पास्याम इत्यस्माभि सूचितम् । परतु ते प्रथम पातुमप्रतिपद्यमाना पूर्वमस्मानेव पानाय निरबन्धन् । कचित्कालमित्थ पौर्वापर्यजिज्ञासा प्रावर्तत ॥

### एकादशोऽध्याय:

## नैर्मल्यसुधारणं क्षामनिवारणं च

**स**माजाङ्गस्यानुपयुक्तस्थितिनिरूपणं सर्वदा मे दुस्सह भवति । जनतादोषनिगूहन वा तद्दोषापनयनमन्तराधिकारप्राप्तये सघर्षण वा नाह मोचयामि । अत एवाह नातालदेशे स्थितिमद्ग्रारभ्य दक्षिणाफ्रिकानिवासिषु भारतीयेष्वारोपित दोष (एतदारोपणमीषत्सत्यां-

शोपेतमासीत्) अपास्तुमुद्यतोऽभवम्। एवं हि प्रवादः श्रूयते स्म। यथा—"भारतीया अलसाः। ते स्वकीयगृहद्वाराणि निर्मलानि न हि स्थापयन्ति। श्वपचा एते" इति॥

एतल्लक्ष्यमुद्दिश्य नैर्मल्योद्देश्यतयास्मदीयजनप्रमुखानां गृहेषु पूर्वमेव सुधारणमारब्धमासीत्। किन्तु टरन्तनगरे ग्रथिच्चग्रसरेणाहमहं यदा समुदस्तदा प्रतिगृहं परीक्षितुमुपाक्रमहि। पौरसभासदस्यं सह ममन्त्र्य प्राप्तानुमतिभिरस्माभिः कार्यमारभि। ते निजगृहं सहकारमर्पयन्। अविगतास्मदीयसहायानां तेषां कार्यं सुकरमभवत्। आरभात्र (भारतीयानां) कृशास्तान- चमापद्यन्त। यतो ग्रथितरास्वधिकृतेषु समुचितेऽधिकारिणा प्रायेणास्तमितक्षमागुणा सुदुर्धर- ल्सक्लाहानामरम्यं निनन्नो भपावीभूताज्ञनान् दण्डयन्ति। अस्मदीयास्तु स्वयं परित्यज्य नैर्मल्यकार्यं निर्वाह्य मयदादामानमरक्षन्॥

मदीयानुभवेषु सर्वं न मधुरमासीत्। तत्रत्या याचिकारास्वाधिकारप्रार्थनाय भारतीयानां साहाय्यमवाप्तुं सुकरमासीत्। तथापि स्वकर्तव्यस्य स्वयं विधानप्रसङ्गे तत्साहाय्यं दुर्लभ- मलक्ष्यत। ते मां कचिदपमानयन्। कचित्सविनयमौदास्यमदर्शयन्। स्वमभितः स्थलस्य निर्मलीकरणक्लेश एव तेषां दुस्सहोऽभूत्। तत्पात्र कथा प्रसक्तकार्यस्य कृते द्रव्योत्सर्जनस्य। जनैः किमपि कार्यं कारयितुकामेन निरवधिक्षमासंपन्नेन भवितव्यमित्युपदेशो मदनुभवैरेते सम्यक्तया शिक्षितोऽभूत्। सुधारणसिद्धिसमुत्सुको जनः सुधारक एव। तेन च समानद्वेषापमानप्राणान्तिकहिंसा फलत्वेन प्रतीक्षणीया। न पुनरन्या कापि प्रत्याशा मनसि निधेया। सुधारको यद्यपि सुधारणं प्राणप्रियं मन्यते तथापि समाजेन त्वनिष्टमेवमिति कुतो न मन्तव्यम्॥

अथाप्येतत्प्रयत्नात् उपायः परिणतोऽयं स कथ्यते। तत्रत्या भारतीया स्वगृहद्वारादिकस्य स्वच्छतयावस्थापनमावश्यकमित्यज्ञासिषुः। अधिकारिणो मयि गौरवमुपाचीयन्त। ते विज्ञाप्य ताननयद् यद्वहिरस्मदीयन्यूनातिरिक्तानि प्रकाश्य स्वाधिकारस्य कृते यदि कालतो युध्यमानः धैर्यमवलम्ब्य स्थितवान् पश्चात् सुधारणस्य कृतेऽपि स्वयं साहसपन्नोऽभवमिति॥

किन्तु कार्यमन्यदवशिष्यत। तच्च तत्रस्थानिवासिनां भारतीयानां निजमातृभूमिं प्रति स्वकर्तव्योपदेशः। भारतवर्षमनाथभूमिः। भारतीया अर्थार्जनाय दक्षिणाफ्रिकादेशं गताः। एवमर्जितादर्थात्किंचिनोऽप्यस्य विपन्नमातृभूम्यै प्रदानं तेषां कर्तव्यम्। सन्नवत्युत्तराष्टशताधिकसहस्रतमे वैस्ताब्दे नवनवत्युत्तराष्टशताधिकसहस्रतमेऽपि वत्सरे च घोरक्षामरूपा विपदा भारतमभ्यागमन्। द्वयोरप्यवसरयोर्देशान्तरवासिनां सहायतां माहाय्यमुदारमदान्। प्रथमवारे मयार्जित- द्रव्यापेक्षया द्वितीयवारमधिकतरं द्रव्यं समनाहि। तस्मिन्नवसरेऽप्यांग्ला अपि सहाय्यमर्पयन्ति। तत्सार्थमवश्यं प्रभूतोऽभवत्। गिरिमिटियाख्या प्रतिज्ञाबद्धसेवकमजूराश्च स्वदेयांशमददुः।

इत्थमनयोर्दुष्काल्ययोरस्थ्योऽयमभ्यासोऽद्यापि स्थायी वर्तते । भारतवर्षे मार्गजनितसमस्याग्रस्तां दक्षिणाफ्रिकावासिभारतीयेभ्य साहाय्य प्रकाममुपनमयेत ॥

दक्षिणाफ्रिकादेशे भारतीयसेवासमुद्यतस्य मम सत्यमहिमा पदे पदे प्रत्यक्षीभवति स्म । सत्यमेको विशालस्तरु । स च प्रत्यासपोषित सन् प्रकाम फलिष्यति । सत्यपर्णं यथा यथान्तरवतीर्यते तथा तथा महार्हरत्नानि हस्तमुपागच्छन्ति सेवाया विनियोऽरमावाश्योपलभ्यते ॥

द्वादशोऽध्यायः

## हिन्दुस्थानं प्रति निवृत्तिः

**युद्धव्यतिकराभिवृत्तोऽहमचिन्तयम्** । यदिह पर मम कार्यं स्वदेशे वर्तते । न तु दक्षिणाफ्रिकादेश इति । एतच्च दक्षिणाफ्रिकादेशे कर्तव्याभावात् । परन्तु द्रव्यार्जनमेव मम मुख्योद्योगो माभूदिति ॥

भरतखण्डवर्तिनो मे सुहृद प्रत्यागमनाय मा निरबध्नन् । तत्र मदीयागमनेनाभिकप्रयोजनलाभ स्यादित्यहमप्यचिन्तयम् । दक्षिणाफ्रिकादेशे कार्यनिर्वहणाय खानमहाशयो मनसुखलाल नाजर-महाशयश्च स्थितावेव । अतोऽह प्रस्थानाय मदीयसहचरानपृच्छम् । तदनुमतिप्राप्तिस्तु बहुप्रयाससाध्याभवत् । मम प्रस्थानादेकवत्सराभ्यन्तर एव पुनरागमन जनैरपेक्ष्यते यदि तदा सद्य प्रत्यागन्तु सन्नद्धेन मया भवितव्यमिति समयपूर्वकागमनमन्वज्ञासिषु । समयबन्धोऽय मम कठिन प्रत्यभात् । तथापि प्रेमपाशबद्धोऽहमिम प्रत्यपासि ॥

गोवर्धनधरेणाह स्वामिना प्रेमसूत्रेण नीतास्मि बन्धन यस्मादासी तस्यास्मि सर्वदा—इति श्रीमत्या मीराबाईमहाशया वाचापम्य मदीयस्थिते समञ्जसमासीत् । प्रजावाण्येव हि पारमेश्वरी वाक् । मम मित्रवाक्यमनिराकरणीयमासीत् । अतोऽह समयमङ्गीकृत्य हिन्दुस्थान प्रयातुमनुज्ञामवापम् ॥

अस्मिन्नवसरे पर नातालदेशेन मम निकटसम्बन्ध आसीत् । तत्रत्या भारतीया प्रेमामृते मामाप्लावयन् । स्थले स्थले ममाभिनन्दनाय सभा हि मिलिता । महार्हाश्चोपदा मे प्राददु ॥

पुरा पण्णवत्युत्तराष्टशताधिकसहस्रतमेऽपि वर्षे हिन्दुस्थान प्रस्थास्यमानेन मयैवा प्रीतिदाया मयाऽऽलभ्यन्त । परन्त्ववसरेऽस्मिन्वसर्जनसमारम्भो महत्तर आसीत् । प्रीतिदायेषु न केवल सौवर्णराजताश्च पदार्था अपि तु वज्रखचितान्यपि वस्तून्यासन ॥

एतानि वस्तूनि स्वीकर्तुं को वा ममाधिकारः । तानि मया स्वीक्रियन्ते यदि प्रतिकृत-मन्तरेण लोकसेवा विक्रीयेत मम कथं वा चेतः समाधीयेत । मदीयव्यवहारिलोकैर्निगीर्णप्रीति-दायान्मुक्त्वा शेषाः सर्वेऽपि प्रजासेवार्थमेव प्रदत्ता आसन् । किं च व्यवहारिणामितरमित्राणां च भेदमाकलयितुं नावकाश आसीत् । यतो मदीयकार्थिकाः सर्वेऽपि सार्वजनिककार्येषूपकर्तार एवासन् ॥

एतेषां प्रीतिदायानां मध्ये पञ्चाशद्गिनी (अष्टशतरूप्यक) मूल्यं सौवर्णहार एकः कस्तूरबाईमहाशयायै निवेदित आसीत् । किन्तु तस्यापि मदीयसार्वजनिकसेवात्मकतयादेवो-पलब्धत्वादितरेभ्यः पृथक्कर्तुं नाशक्नवम् ॥

यस्मिन्मानपत्रमिदिवसे रात्रौ नाहं न्यद्रासिषम् । शोचनापरवशः सन् इतस्ततः कोष्ठे गता-गतमकरवम् । तथापि प्रतिपत्तिमूढोऽस्मि स्थितः । परं सहस्ररूप्यकमितमुपहारं दुस्त्यजमलक्ष्यत । तस्य स्थापनं तु ततोऽपि दुष्करं प्रत्यभात् ॥

अहं तावदमूनि वस्तूनि स्वगृहे स्थापयेयम् । परं मदीयदारापत्यानां का गतिः । अमी हि सेवयैव जीवितं यापयितव्यमिति मया शिक्ष्यन्ते स्म । सेवाया इतरः प्रतिफलाभावस्तदीयबुद्धि-गोचरी क्रियते स्म ॥

अस्मद्गृहे महार्हवस्तूनि नैव स्थितानि । अस्मदीयजीवितमत्यन्तं सरलमभवत् । एवं स्थितेऽस्माभिः सुवर्णघटितकङ्कणानि कथं धारणीयानि । आभरणभ्रान्तिर्दूरीकरणीयेति तदानीमपि लोको मया बोध्यते स्म । मया प्राप्तरत्नाभरणवस्तुभिः किं करणीयम् ॥

इमानि वस्तूनि सर्वथा न परिग्रहीतव्यानीति निश्चयम् । एतेषां कृते तद्रक्षणाय पारसी-रुस्तमजीप्रभृतीन् लोकान् धर्मदर्शित्वेन नियुज्य लेख्यमकरवम् । श्वो भूते भार्यापुत्रांश्च सम्मन्त्र्य तैरनुमतश्चिन्ताभारनिर्मुक्तोऽभवम् ॥

प्रस्तावेऽस्मिन्भार्यासम्मतेर्दुर्ग्रहत्वं कुमाराणामप्रतिकूलत्वं च मम विदितमेवासीत् । तस्मादिमे बालका मध्यस्थादिनः कर्तव्या इति निरचैषि ॥

बालका मदीयसूचनां सद्य एवाङ्गीचक्रुः । तेऽवोचन्—

एतैर्महार्हवस्तुभिरस्माकं हि न कार्यमस्ति । तानि प्रदातृजनेभ्यः प्रत्यर्पणीयानि । यदि कदाचित् वस्तून्यपेक्ष्यन्ते तदा स्वयं तानि क्रेतुमर्हामि ॥

अहं सन्तुष्टस्तानपृच्छम्—एवं तर्हि युष्मदीयजनन्यैतद्रोचिष्यते न वेति ॥

ते प्राहुः—अवश्यमेव । तदस्मदुपकर्तुमर्हति । किन्तु न्याय्यान्यानि न तथा भाग्यवत्यानि । सा किमप्यर्थमेव तेभ्यः स्पृहयति । अस्माभिरेतेषु विषयेषु विविच्यतया तत्परिग्रहेऽपि निषेद्धव्यमिति ॥

परमेतत्सुखं च न तावत्सुखकरमासीत् ॥

मम भार्याब्रवीत्—भवतस्तावदिदं न स्पृहणीयं स्यात् । भवदीयकुमाराश्च नेदमपेक्षेरन् । ते प्रोत्साहिता भवद्वाक्यमनु नरीनृत्यन्ते । मयापि न धारणीयमित्यस्यार्थमप्यहं जानीयाम् । परं मम स्नुषाणां का गतिः । तासामप्येतदनपेक्षणीयं वा । श्वश्रूरिति नु भार्येति को हि विद्यात् । एतादृशान् प्रीतिदायानाहं सर्वथा प्रत्यर्पयेयमिति ॥

एवं वाग्धारा तदनु पोषिणी नेत्राम्बुधारापि च प्रावहत् । तथापि बालका वज्रमनस्का स्थिताः । अहं तु निष्कम्प एव ॥

अथैनां मृदूक्तिभिस्तामवोचम्–युज्यते । पुत्राणां विवाहः कार्य एव । परन्तु बालवयसस्तान्विवाहयितुं नाहमिच्छामि । वयं प्राप्तवयस्केतत्सर्वं स्वयमेव ते निर्वोढारः । किं च रत्नाभरणगृध्नूः कन्यास्तदर्थे वयं न वृणीमहे । अथ कियन्तिचिदाभरणानि अवश्यमेव कारयितव्यानि चेत्तदा त्वहं पलायिष्ये । त्वं मा प्रक्ष्यस्येवेति ॥

भार्या प्रत्यवोचत्—

किं नाम प्रष्टव्यम् । न खलु भवान्मे न विदितं मदीयमाभरणसर्वस्वं भवता विनाशितम् । मया तत्कारणमसहमानो भवान् ननु स्नुषाणां पुनस्तान्युपहरिष्यति । अद्यप्रभृत्येव बालकानवधूतान्कर्तुं व्यवसितो भवान् । ननु सर्वथा नाहमाभरणानि प्रत्यर्पयिष्ये । मम हारस्योपरि भवतः को वाधिकार इति ॥

अथाहमपृच्छम्—

हारोऽयं भवत्कृताया सेवाया कृते प्रादायि किं वा मत्कृतसेवाया इति ॥

"तत्तावदुच्यते । भवत्कृतसेवाया मयापि सेवा कृता स्यादिति मन्ये । भवतः कृते रात्रिंदिवं मया मपरिश्रान्तम् । तद्भवत्कृतसेवा ते न गणनामर्हति तदानीममुकामुकान् स्वैरमेव गृहमानयन् मा रोद रोद परिश्रमस्य च परं प्रैष्यमकारयद्भवान् । हन्त सर्वस्यास्य गणना कुत्र सम्भवेदिति ॥

इमे वाणास्तीक्ष्णा अभवन् । तेषां केचिद्दुर्लक्ष्या प्राहरन् । तथापि रत्नाभरणानां प्रत्यर्पणस्य मया पूर्वमेव निश्चितत्वात्कथंचमपि सार्थमसान्त्वयम् । यानि मया पण्णवत्युत्तरशततातिकसहस्रतमे वत्सरे लब्धानि रत्नाभरणवस्तूनि तानि प्रत्यार्पयम् । धर्मदर्शिलेख्यमेव वृत्वा वा धर्मदर्शिना ॥ लेख्यानुसारेण सार्वजनिककार्येषु यथासमयं तेषां विनियुज्यता नियम्य क्वचिद्द्रव्यनिक्षेपाउये तान्यक्षेपयम् । अनेकशः सार्वजनिककार्येष्वावश्यकता प्राप्य यद्यप्यहमेतानि वस्तूनि विक्रेतुं सज्जस्थस्तथापि तन्निरपेक्ष एव पुष्कलधनं सम्ग्रहीतुमशकम् । अद्यापि तदेवाभरणं तिष्ठति । अपि चैतदुपचीयमानं वर्तते ॥

एवं कृतवतो मम न कदाप्यनुतापोऽजनि । गच्छत्सु दिवसेषु मम भार्यापि तदौचित्यमजानात् । इदमस्मान् बह्वीभ्यो दुराशाभ्यस्समरक्षत् ॥

सार्वजनिककर्मसेवासमुत्कैर्महार्हैरुपायनानि नैव स्वीकर्तव्यानीति दृढं मे मतम् ॥

### त्रयोदशोऽध्यायः

## पुनश्च हिन्दुस्थाने

इत्थमहं स्वदेशं प्रति प्रास्थिषि । मार्गे 'मोरीश्यस'-द्वीपं प्राप्नवम् । तत्र नौकायानस्य चिरायावस्थानादवकाशमुपलभ्याहमेतद्द्वीपस्य स्थितिगती प्रायः सम्यगेवाज्ञासिषम् । तत्र यवन-कीयप्रतिनिधेः 'सर चार्ल्स ब्रुस' महोदयस्य प्राघुणीभूय रात्रिमेकामत्यवाहयम् ॥

हिन्दुस्थानं प्राप्य कतिचिद्दिनानि देशपर्यटनेनायापयम् । तदानीमेकोत्तरनवशताधिकसहस्रतमो वत्सरः । तद्वर्षस्य राष्ट्रमहासभा कलकत्तानगरेऽधिनिवेष्टव्याभूत् । दीनशा-एदलजी-वाच्छा ( इदानीं 'सर' बिरुदधारी ) महाशयेनाध्यक्षतापदमास्थेयमासीत् । अहमपि महासभामगच्छमिति न पृथग्वक्तुमावश्यकम् । अयमेव मे महासभायाः प्रथमोऽनुभवः । मोहमयीनगरात् सर-फिरोजशा-महेता-महाशयेनोपस्थितधूमयानस्थैरहमपि प्रास्थिषि । यतस्तेन सह दक्षिणाफ्रिकादेशस्य स्थितिमधिकृत्य वक्तव्यं स्थितम् । स तावत् पृथगेकां शकटीं भाटयित्वा प्रयाणमकरोत् । राजभवनेन जीवनमसौ निर्वाहयतीति स्मेति मम विदितमासीत् । प्रयाणमध्ये कश्चित्कालं तदीयशकटीं प्रविश्य मया सभाजनीयमिति प्राप्तानुज्ञस्तदनुरोधेन तन्निर्दिष्टे लोहाध्वनिवेशने तस्य शकटीं गत्वा तमवालोकयम् । तदानीं वाच्छा-महाशयः श्रीमान् ( अद्य 'सर' बिरुदधारी ) चिमनलाल-सेतलवाड-महाशयश्च तेन सहोपविष्टावास्ताम् । सर्वेऽप्येते राजकीयप्रस्तावांश्चर्चयन्ति स्म । सरफिरोजशामहाशयो दृष्टमात्रं मामकथयत् । गान्धे तव कार्यमुद्दिश्य न किंचित्कर्तुं शक्यत इति प्रतिभाति । त्वदिष्टानुरोधेन प्रस्तावं तावदङ्गीकुर्महे । किन्तु स्वदेशेऽप्यस्माकं कियानधिकारः । स्वनिलय एव यावदधिकारोऽस्माकं न घटते तावत्परस्थाननिवासिनामस्मदीयानामवस्थापरिवर्तो दुर्लभ इति । अहमनेन किंचिन्नानुमतोऽभवम् । अयमाशयः सेतलवाडमहाशयस्याभिमत एवासीत् । वाच्छामहोदयः सानुकम्पां दृष्टिं मयि व्यकिरत् । सरफिरोजशामहाशयं मदीयमतमङ्गीकारयितुमहं प्रायतिषि । नाल्पो राजकार्यभारेऽपि कार्यतो मोहमयीनगरस्य परिवृढत्वमधिगतस्य तस्याङ्गीकृतिं मादृशो जनः कथं नापादयेत् । तदहं महासभायां मदीयप्रस्तावोपस्थापनं तेनाप्यनुज्ञातमित्येतावतैव समतुष्यम् ॥

प्रस्तावपत्रमारोप्य मे प्रदर्शयन्तु भवन्त इति वाच्छामहोदयो ममोत्तेजनप्रदिलिप्याऽऽख्यत् । तस्मादह मदीयकृतज्ञता प्राव्याप्यात्यमहितोत्तरत्वोहाचनिवेशनस्थिताया धूमशकट्या ततोऽ नितीर्य स्वशकटीमगच्छम् ॥

अथ कलकत्तानगर वयमामादयाम । सभाध्यक्ष स्वागतमण्डल्या विभवोत्तरवसतिमनायि । मया कुत्र गन्तव्यमिति स्वयसेवकमहमपृच्छम् । स मा रिपनमहाविद्यालयमनैषीत् । तत्र हि बहूना प्रतिनिधीना वसति परिकल्पितासीत् । मयाध्युषितविभाग एव मदीयभाग्यवशा-त्तत्रभवान् लोकमान्योऽप्यवर्तत । स च मदागमनादेकदिनोत्तर तत्र प्राप्त इति स्मरामि ॥

निसर्गतो लोकमान्यस्य सनिधौ जनास्थानी सर्वदा वर्तते स्म । स च प्रदेशस्तत्रो-पविष्टजनसमाज इत्येतत्सर्वं स्फुट मे स्मृतिपथे वर्तते । यद्यह चित्रकरोऽभविष्य तदा मचोपविष्ट तत्रभवन्तमचित्रयिष्यम् । तद्दर्शनार्थमागतेष्वसख्येषु जनेष्वेकस्यैव नाम मयाद्य स्मर्यते । स च "अमृत बझार" पत्रिकासपादको मोतीलालघोषमहाशय । लोकमान्यस्य 'हा हा' प्रहासा राज्याधिकृतानामन्यायवर्तनमधिकृत्य प्रवृत्तस्तयोरालापश्च दुर्विस्मरो भवति ॥

अथ तत्रत्यानि सविधानानि सविस्तर परिशीलयिष्याम । स्वयसेवका परस्पर प्रतिबन्ध माचरन्ति स्म । कश्चिदेकस्मिन्कर्मणि नियुज्यमान सद्य एवापरमाह्वयत् । स चान्य स चान्यम् । एतन्मध्ये हन्त प्रतिनिधीनामवस्था त्वनिर्वचनीयासीत् ॥

कतिभिश्चित्स्वयसेवकैरह मैत्रीमकल्पयम् । तेभ्यो दक्षिणाफ्रिकासबन्धिन काश्चिद्वृत्तान्तान् न्यवेदयम् । एतेन ते मनागजिह्मु । सेवायास्तत्त्वमेतान् बोधयितुमयतिपि । ते च तदाशयेनाबु-ध्यन्तेव । तथापि सेवा पात्रके निक्षिप्य प्राशयितु न शक्यते । प्रथम तावदिच्छा ह्यावश्यकी । ततोऽभ्यास । ऋजुचेतसामेषामिच्छा प्रकाममासीत् । पर शिक्षणमभ्यासश्च कुतो लभ्येत । महासभा प्रतिवत्सर त्रीणि दिनानि प्रचल्य ततो निद्रामभजत् । दिनत्रय प्रचलति वार्षिकोत्सवे कियन्मात्र ज्ञानमुदियात् । प्रतिनिधयोऽपि स्वयसेवकानुरूपा एवासन् । तैर्लब्ध शिक्षणमपि तत्सदृशमेव तात्कालिकमेव च । ते स्वय न किञ्चिदकुर्वन् । इद कुरु—अद कुर्विति सर्वदा स्वयसेवकानाज्ञापयन्ति स्म ॥

अत्राप्यस्पृश्यताया साम्राज्यविलास प्रत्यक्षीभवति स्म । द्राविडाना पाकशाला शाला-न्तरेभ्यो दवीयसिप्रदेशे सनिविष्टाभूत् । इमान्प्रतिनिधीन् दृष्टिदोष स्पृशति स्म । (द्राविडदेशाना ब्राह्मणा भोजनवेलाया इतरवर्णैर्दृष्टमात्रा अपि मालिन्यमाप्नुवन्ति । अत एव ते स्वगृहेषु मद्रकमाश्य भुञ्जते ।) तस्मादेषा कृते महाविद्यालयस्याङ्गणान्तरे विलिंजकभित्तिभि सवृता भोजनशाला पृथक्कल्पनीया भवेत् । सा च श्वासप्रतिरोधिना धूमजालेन परिपूर्णाभूत् । सैव पाकशाला सैव भोजनशाला सैव मज्जनशाला च । ततो बहिर्निर्गन्तुमवकाश एव नासीत् । मर्ममेतत्पश्यतो ममैते वर्णाश्रमधर्ममुपहसन्त इव लक्ष्यन्ते स्म । नानादिग्भ्य समागत्य महासभाया

मिलन्तु प्रतिनिधिभिर्वैरताद्दशस्वच्छतापरमगमो यदि दृश्येत तदा तान्दृष्ट्वा प्रेषितवत्सु जनेषु तथा क्रियमाणतया भवितव्यमित्यात्मन्येवाचिन्तयम्। इदं च स्मारं स्मारमहं दीर्घनिश्वासममुचम्॥

मलीमसत्वं तु दुरन्तमासीत्। परीक्ष्यमाणे सर्वत्र कर्दममेव। मलागाराण्यल्पान्येवा-विद्यन्त। दुर्गन्धं स्मरतो ममाद्यापि रोमहर्षो जायते। इदमहं स्वयंसेवकेभ्यः प्रादर्शयम्। ते तु विहस्य निःसङ्कोचमवदन्–तदेतद् भङ्गीजनस्य कार्यं न पुनरस्माकमिति। एका शोधनी मे प्रदीयतामित्यहमपृच्छम्। ते मम मुखमपश्यन्। अहमेकां मार्जनीं समर्थ्य मलागारमशोधयम्। किं तु मय्येव तद्विश्रान्तिमगच्छत्। जनस्तोमस्यातिबाहुल्यान्मलागाराणामत्यल्पीभवनाच्च तानि वारं वारं समार्जनीयान्यासन्। इदं मदीयशक्तिमतिक्रान्तमासीत्। तस्मान्मया स्वानुकूल्यमात्रमवेक्ष्य सन्तोष्टव्यमापतितम्। शेषास्तदशुचित्वं दौर्गन्ध्यं च नालक्षयन्त॥

परं नैतावदेव। केचित्प्रतिनिधयः स्वकोष्ठस्य बहिर्वेदिकामेव रात्रौ मलविसर्जनस्थानं निःशङ्कमकुर्वत। प्रातरिदं स्वयंसेवकेभ्यः प्रादर्शयम्। शुचीकर्तुं न कोऽपि सन्नद्धः स्थितः। अहमेक एव तन्निर्मलीकरणमानपात्रमासम्। इदानीमत्र विषये महती व्यवस्थितिर्दृश्यते। तथाप्यद्यापि महासभामण्डपं स्वच्छन्दतो मलमूत्रादिना दूषयन्तो निर्विचाराः प्रतिनिधयो न किल न विद्यन्ते। न च सर्वे स्वयंसेवकाः शोधयितुं सदा सन्नद्धा भविष्यन्ति॥

महासभा तत्तादृशावेशमध्ये तनोऽप्यधिकदिनानि प्रचलेद्यदि व्याधिप्रसरणं निष्प्रतिबन्धं स्यादिति अहमलक्षयम्॥

चतुर्दशोऽध्यायः

# लेखको भृत्यश्च

महासभादिनद्वयात्परं मेऽवशिष्टमभवत्। तत्कार्यालये मदीयसेवा यदि स्वीक्रियेत तदा तत्र कार्यमनुतिष्ठन्ननुभवं सम्पादनीय इति निरचैषम्॥

तस्मात्कलिकत्तानगरप्राप्तिदिवसमेव स्नानादिकं निर्वर्त्य महासभायाः कार्यालयमगच्छम्। श्री भूपेन्द्रनाथवसु-महाशयः श्री. घोषाल-महाशयश्च कार्यदर्शिनावभूताम्। आर्यभूपेन्द्रमुपेत्य मम सेवाभिलाषुकत्वमवेदयम्। स च मामभिवीक्ष्याकथयत्–मन्निकटे भवतानुष्ठेयं न किंचित्कार्यमस्ति। किं तु घोषालमहाशयः किंचिद्भवते प्रयच्छेत्। तत्पार्श्वं याहीति॥

श्रीघोषालमहाशयस्य पार्श्वमहमगच्छम्। स मामापादशिरोऽवलोक्य मन्दस्मितपूर्वकमपृच्छत्। तवाहं परं लेखकोद्योगं प्रयच्छेयम्। अपि त्वमेनं कुर्या इति॥

अहं प्रत्यवोचम्—अवश्यमेव करिष्ये । मदीयशक्तिमनतिक्रान्तमुद्योगं सर्वमपि चिकीर्षुः सन्निधिमागतोऽस्मीति ॥

सैव खलु साध्वी भावनेति घोषालमहाशयोऽकथयत् । परितः स्थितान् स्वयसेवकाननभि-वीक्ष्याब्रवीत्—ननु श्रुतमनेन युवकेनोक्तमिति । तदनु मामवोचत्—यदि तावन्निरूप्यतामत्र भूयांसि पत्राणि पतितस्थितानि । तानि सर्वाणि परीक्षेथाः । पश्य तत्रैवासन्दी वर्तते । तामालम्ब्य कार्यमुपक्रमस्व । इह मत्पार्श्वमागच्छतः परः शताञ्जनानिमान् पश्यति भवान् । अहं किं कुर्वीय । किम् हमेतानाभाययेयमुताहो पत्रपुञ्जेषु मा निमज्जयतामेवा निरुद्योगिना जनानामुत्तराणि लिखेयम् । कार्य मेतद्विधातु मत्निकटे नैकोऽपि लेखको वर्तते । एषु पत्रेषु भूयिष्ठानि नैव मुख्यानि भवन्ति । तथापि त्वं सर्वाणि परीक्षस्व । यस्य यस्य पत्रस्य प्राप्तिः सा लेखतो निवेदयितव्येति मन्यसे तस्य तस्योत्तरं प्रेष्यताम् । यत्र पर्यालोच्य प्रतिवचनं देयं तन्मे विदितं कुर्विति । एतद्विश्वासेन ममानिर्वचनीयः प्रमोदः समजनि ॥

अस्मिन्कर्मणि मां नियुञ्जानस्य श्रीघोषालमहाशयस्य मत्परिचयो नासीत् । मन्नामप्रत्यभिज्ञा-दिकं तेन पश्चादबोधि ॥

मम कार्यं तत्पत्रराशिपरीक्षणं मम सुकरमलक्ष्यत । प्रथमराशिरचिरेणैव समापितः । श्रीघोषालः सुतरामतुष्यत् । कथालापप्रसङ्गो हि तस्य स्वाभाविकः । अविच्छिन्नकथालापेनैव पचपा होरास्तेन याप्यन्ते स्म । मत्सकाशान्मदीयचरित्रविस्तारमुपलभ्य स्वनियोगेन लेखकोद्योगे व्यापारितं च मां चिन्तयमानो मनागलज्जत । परमस्मिन्विषये तमेनमहं निश्चिन्तमकार्षम् । तथाहि मयोक्तम्—

अलं विचार्य । क्व यूयं क्व चाहम् । महासभासेवयैव वार्धक्यमाप्ता भवन्तः । अतो मे गुरुसमानाः । अयमस्मि परमनुभवशून्यः कल्पायान् । अस्मिन् कर्मणि मां नियुञ्जानैर्भवद्भिर्महू-पकृतं मे । मम हि महासभाकार्यचिकीर्षा वर्तते । तत्कार्यकलापं विस्तरेणावगन्तुमपूर्वोऽ-वकाशः किल भवद्भिरदायीति ॥

श्रीघोषालमहाशयोऽप्यकथयत्—

यस्त्वयमिथमेव साध्वी वृत्तिः । आधुनिका युवकास्तु नैव गृह्णते । आ तज्जन्मप्रभृति महासभामहं जाने । किं बहुना । अस्याः प्रतिष्ठापनप्रसङ्गे श्रीह्यूममहोदयेन मम सहभागित्वमिष्टं किल ॥ इत्थमावयोरुभयोरपि मैत्री समवर्धत । मध्याह्ने चाभ्यवहारं सहैव करिष्याव इति मामन्वरुध्यत् ॥

श्रीघोषालमहाशयस्य भृत्यो निजस्वामिनः आन्तरकञ्चुकस्य बन्धनं घटयति स्म । तद्दृष्ट्वा तस्य कार्यं सम्पादितुमिष्टम् । ममेदमिष्टमासीत् । मम हि सर्वदा ज्येष्ठेष्वादरो महानभूत् । विशालमर्त्यपदद्वयेऽप्यानम्नोऽस्मि सेवा कर्तुमवकाशं मे प्रयच्छति स्म । कञ्चुकस्य बन्धनं

घटयन्त मा सास्मिनमवादीत्—ननु प्रेक्ष्यताम् । महासभाकार्यदर्शी स्वकञ्चुके बन्धनं घटयितुमप्यवकाशं न लभते । सर्वदा यत्र क्वापि कर्मणि व्याप्तो भवतीति ॥

तस्यार्जवमनुध्यायतो मम यद्यपि हासोऽजायत तथापि तत्सेवायामपि दुष्यनादरो मम नोदपादि । एतत्सेवया कश्चितो लाभः परममूल्यो भवति ॥

नित्यद्वित्रैव दिवसैर्मम महासभायाः कार्यचाऽनस्य मर्म ह्स्तगतमासीत् । भूयिष्ठानां नेतृणां सह दर्शनमभवत् । गोखले-सुरेन्द्रनाथप्रभृतीनां योधानां प्रवृत्तीरपश्यम् । कालं वृथा क्षिप्यमाणमपश्यम् । अस्मदीयकार्येष्वाङ्ग्लभाषायाः प्राधान्यमनाभालोकयम् । एतेन परं विषण्णोऽभवम् । शक्तिर्वृथा क्षिप्यते स्म । एकेन निर्वर्त्यं कर्म बहवोऽन्वतिष्ठन् । बहूनि महत्त्वपूर्णानि कार्याणि न कस्यापि कार्याण्यासन् ॥

मदीयमानसं यद्यपि दोषानिमान् सूक्ष्मतया न्यरूपयत् तथापि प्रकाममोदारमासीत् । तस्मादहमामानमित्यमबोधयं यथायथं प्रचलति स्म ततोऽपि साम्प्रतं मार्गेण तच्चालयितुं शक्यं स्यादिति । इत्थमनुसन्धानवशात्कार्यस्य कस्यापि न्यक्कृतिभावनाया नावकाशोऽभवत् ॥

पञ्चदशोऽध्यायः

## महासभायाम्

अथ महासभामिरत् । स्वर्णायतया सन्नीकृतं महामण्डपं विभवोत्तरनावद्धव्यूहं स्वयंसेवकगणं वेदिकामध्यासीनान्वयोवृद्धपुरुषांश्च निभाल्यमत्याश्चर्यचकितोऽभवम् । अस्मिन्महति समाजे क्वाहमिति निरुपायोऽजायत ॥

सभाध्यक्षस्य भाषणं तावदेकं पुस्तकमेवासीत् । तत्कात्स्न्येनाद्यन्तं वाचयितुमशक्यत्वादिति निश्चित् तत किंचिदुपादाय सभायां तदपाठि ॥

तदनु विषयनिर्धारिणीमभिते सदस्यानां वरणं समवर्तत । गोखलेमहाशयो मां समितिं द्रष्टुमनयत् ॥

सरफिरोजशाहमहाशयेन तावन्मदीयं प्रस्तावमङ्गीकर्तुं प्रतिपन्नमासीत् । किन्तु तेन स प्रस्तावो विषयसमितेः पुरो नेतव्यः कदा-इति चिन्तयन्नहमुपाविष्टोऽभवम् । प्रतिप्रस्तावं दीर्घभाषणं चलति स्म । तच्च पुनराङ्ग्लभाषया । प्रतिनिर्णयमुपष्टम्भको यः कोऽपि प्रस्तावनायकः पश्चादवतिष्ठते स्म । एतादृशमेतेर्नानेर्योषमध्ये मम गिरं क शृणुयात् । यथा यथा निशामुखं प्रत्यासदत् तथा तथा मे हृदयं वेगेन धडधडायितुं प्रावृतत् । यथाहमिदानीं स्मरामि

तथा प्रस्तावा चरमगृहीता निवृद्धेगेन व्यदाव्यन्त । सर्वोऽपि ततो निर्गन्तुमुद्यतो भवति स्म । अथ रात्रावेकादशाहोरावादनवेला समुपस्थिता । अहं वक्तृमञ्चे स्थितः । प्रागेव मया दृष्टेन गोखले-महाशयेन प्रस्तावो मदीयः पठित आसीत् । अहं तस्य पीठमुपसृत्य शनैरवोचम् । यथा कथापि भवद्भिरहमुपकर्तव्योऽस्मीति । स मामाह स्म । तव प्रस्तावो मया न विस्मृतः । इहत्य सभ्रमो ननु प्रत्यक्ष एव । तथापि प्रस्तावमेनं विस्मर्तुं नाहमवकाशं दास्य इति ॥

अथ सरफिरोजशामहाशयोऽब्रवीत्—अद्यतनं कार्यजातं समाप्तिमागतं खलु । तदनु गोखलेमहाशयः प्रोच्चैरघोषयत्—ननु दक्षिणाफ्रिकाप्रस्तावोऽद्यापि तिष्ठति । आर्यो गान्धि र्कियता कालेन समीक्षमाणः स्थित इति ॥

अपि प्रस्तावोऽयं भवता दृष्ट इति सरफिरोजशामहाशयोऽपृच्छत् ॥

अथ किम् ॥

तमत्रभवान् कच्चित्सङ्गतं मन्यते ।

सङ्गतमस्ति ॥

यदि तावद्वाच्यतामिदानीं गान्धे ।

अहं कम्पमानस्तमवाचयम् ॥

अथ सर्वैरुद्घुष्टं सर्वसम्मत्या स्वीकृतोऽयमिति ।

वाच्छामहाशयो मामवादीत्—गान्धे इतः परं सभायां भाषितुं तव निमिषपञ्चकमवकाशो विद्यत इति ॥

कार्यक्रमोऽयं न मां पर्यतोषयत् । प्रस्तावमर्थतो ग्रहीतुं न केनापि प्रायासि । सर्वोऽपि निर्गमनाय त्वरते स्म । गोखलेमहाशयेन प्रस्तावो दृष्ट इति हेतोरन्यैस्तस्य पठनमवबोधश्च नावश्यक इति व्यमान्यत ॥

अथ निशा प्रभाता । तद्दिने मया भाषितव्यमविकल्प्याहमचिन्तयम् । पञ्चभिर्निमिषैः किं भाषितव्यम् । सम्यग्गृहीतविषयस्यापि यथोचितशब्दाना न स्फूर्तिरासीत् । भाषणं विलिख्य न पठितव्यं किन्तु तत्रैव स्थित्वा भाषितव्यमिति पूर्वमेव निश्चयोऽकारि । परन्त्वसकृदुपयासितु दक्षिणाफ्रिकादेशे मया ■ कृतोऽभ्यासः सोऽत्र विलुप्तिं गत इवालक्ष्यत ॥

उपनते मदीयप्रस्तावसमये वाच्छामहाशयो मन्नामधेयमघुषत् । अहमुत्थाय स्थितः । मम शिरो घूर्णति स्म । कथं कथमपि प्रस्तावमवोचयम् । तत्र कश्चित् स्वप्रणीतं पद्यप्रबन्धमेव मुद्रापयित्वा प्रतिरूपकाणि प्रतिनिधिभ्यः सव्यभाजयत् । स च विदेशयानसमुल्लङ्घन-प्रस्तावस्तुतिग्रन्थः । अहमेकं पद्यं वाचयित्वा दक्षिणाफ्रिकादेशेऽस्मदीयजनानां क्लेशजातमुद्दिश्य द्वित्रवचनान्यवदम् । तत्क्षणमेव वाच्छामहाशयो घण्टामनादयत् । भाषमाणस्य ममाद्यापि पञ्च-निमिषा न व्यतीता इत्यहं दृढमवदम् । शिष्टेऽपि निमिषद्वये प्रागेव मम प्रबोधनाय घण्टा

वादितेति न मे विदितमासीत् । अन्येषु होरान्तकाले पादोनहोराकाले च मात्रमात्रेऽपि घण्टा न वाद्यते स्मेति मया प्रत्यक्षीकृतमासीत् । तस्मादहं विस्मितो घण्टावादनोत्तरक्षणमेवोपविष्टोऽभवम् । तथापि मदीया वाग्बुद्धिस्तम्भयत्नेन मरफिलोनगामहाराजस्य प्रत्युत्तरमार्तण्डिन्यलप्यत । महासभया प्रस्तावस्य स्वीकृतिप्रकारं प्रति किमु वक्तव्यम् । न्यायार्थं प्रतिनिधीनां प्रेक्षकाणां च भेदबाहुल्यं नादृश्यत । सर्वेऽपि हस्तमुदयच्छन् । सर्वेऽपि प्रस्तावा ऐकमत्येन स्वीचक्रिरे । मदीयप्रस्तावस्यापि गतिरभिन्नैवासीत् । तस्मान्मदीयदृष्ट्या प्रस्तावस्य महत्त्वं सर्वमस्तमितमेव । तथापि महासभया स्वीकृत इत्येतावदेव ममानन्दमुत्पादयितुं पर्याप्नोत् । महासभाया मतमिति निखिलभारतवर्षस्य स्वीकारचिह्नमित्येषा भावना कस्य वा प्रमोदं न जनयेत् ॥

षोडशोऽध्यायः

## लॉर्डकर्झनराजास्थानम्

**महासभामेलनं** तावदवसितमासीत् । किन्तु दक्षिणाफ्रिकादेशार्थं मया व्यापारमण्डली ( चेम्बर आफ़ कामर्स ) प्रभृतयः संस्था द्रष्टव्या अभूवन् । इदमुद्दिश्य कलकत्तानगरेऽहमेकमासमध्यष्ठम् । अस्मिन्नवसरेऽहमतिथिमन्दिरे स्थितिग्रहणात्प्राक् परिचयं प्राप्य 'इण्डिया क्लब' इत्यत्र कोष्ठकैकं यत्नेन समपादयम् । अस्याः संस्थायाः सदस्येषु केचन प्रमुखा भारतीया आसन् । तत्परिचयं सम्पाद्य दक्षिणाफ्रिकादेशस्य कार्यमुद्दिश्य तेषु किंचित्कुतूहलमुत्पादयितुमाशा ममासीत् । एतद् 'क्लब्-मन्दिरं' गोखलेमहाशयो 'बिलियर्ड' क्रीडार्थमागच्छति स्म । कलकत्तानगरे मया स्थितं कालं स्थास्यत इति ज्ञात्वा स्वमन्दिरं एव वस्तुं मामामन्त्रयत् । तदामन्त्रणमहं कृतज्ञतापूर्वकमङ्गीकृतवान् । किं तु स्वयमेव तत्र गमनं मे नारोचत । स च मासैकमहं वा दिनद्वयं वा प्रतीक्ष्य स्वयमेवागत्य गृहमनैषीत् । मदीयसङ्कोचप्रकृतिमवबुध्य सोऽभ्यधात् । तथा आर्या गान्धिमहाशया भवद्भिरस्मिन्नेव देशे किल स्थातव्यम् । तस्मादेवंविधः संकोचो न युज्यते । यावद्धि शक्यं तावद्भिर्जनैः सह सम्बन्धो भवद्भिर्घटनीयः । महासभायाः कार्यं भवद्भिः करणीयमित्यस्ति ममाभिप्राय इति ॥

गोखलेमहाशयेन सह ममात्रस्थितिं प्रकृत्य वृत्तान्तो यावत्र वर्ण्यते तावन्मम 'इण्डिया क्लब' मन्दिरे संवृत्तः कश्चिदनुभवो निगद्यते ॥

प्रायोऽस्मिन्नेव समये चक्रवर्तिप्रतिनिधिना लॉर्डकर्झनमहोदयेन कल्पिता राजसभा प्राचलत् । तदर्थमाहूताः कतिपये राजानो महाराजाश्चैतत् 'क्लब् मन्दिर' अध्यवसन् । तत्र-

स्थितैरेतै सुन्दर वङ्गदेशीयमन्तर्नेपथ्यकञ्चुकप्राकारकं धार्यमाणं मया प्रत्यक्षीक्रियते स्म । राजसभोपस्थानदिवसे भरण्यभुज इवाप्रपदीनायुष्णीषान् विराजमानचार्मणपादुश्च तेऽचारयन्त । इदमालोकमानस्य मम विषादोऽजायत । तेषामेकमहमपृच्छम्—कुतोऽयं वेषपरिवर्तनमिति ॥

स च प्रत्यवादीत्—यथास्मदीयदुःखमस्मद्देवमेव । स्वविभवविरुद्धसंरक्षणाय कियन्तो चापमाना सोढव्या इत्यन्ये कथं जानीयु इति ॥

"परमेतानि भुजिष्यधार्याणि शिरोवेष्टनानि तद्योग्या पादुकाविशेषाश्च कुतो धार्या ते।"

भुजिष्याणामस्माकं च वैलक्षण्यमस्तीति किं भवन्तो मन्यन्ते । यथामी गृहे न किंकरास्तथा वयं च लॉर्डकर्झनस्वामिन किंकरा स्म । यद्यहमेतस्या सभाया न संनिधास्ये तदा तत्फलं मयानुभवितव्यं स्यात् । सामान्यवेषधारी यद्यहमुपतिष्ठेय तथापि दोषत्वेन गण्यते । अथ चैवात्मानं सन्नह्य तत्रोपससृवत कर्झनप्रभुणा सहालपितुमवकाशो लभ्यत इति किं भवन्तो मन्यन्ते । लेशतोऽपि न हीति ॥

ऋजुहृदयमित्रस्य दशां दृष्ट्वा मम कारुण्यमुदपद्यत ॥

एतदुपोद्घातादीदृशस्यैवान्यस्य राजास्थानस्य स्मृतिरायाति ॥

लॉर्डहार्डिंगमहोदयेन यदा काशी हिन्दु-विश्वविद्यालयस्य प्रतिष्ठा कृता तत्काल तदास्थानमचलत् । तदानीमपि राजमहाराजकदम्बकं मिलितमासीत् । मयापि तत्र संनिधातव्यमिति भारतभूषणश्रीमालवीयमहाशयै सोपरोधमामन्त्रित सन्नहमप्यगच्छम् ॥

पर वनिताजनयोग्यवेषधारिणो महाराजाश्च वीक्ष्य विषादमगमम् । अहो कौशेयाप्रपदीन कौशेयदीर्घकवच उरसि वज्रमौक्तिकहारा बाहोरङ्गदबन्धा उष्णीषोपरि वज्रमौक्तिकस्तबका । एतै सह सौवर्णकोशनिविष्टा खड्गलता कटिबन्धतोऽप्यालम्बन्त ॥

एतानि न तेषां राज्याधिकारस्य चिह्नानि पर तदीयदासत्वस्य बहुत्राच्छनानीत्यहमवेदिषम्। तेऽमी निजनैर्मल्यचिह्नानि एतानि स्वच्छन्दतः पर्यगृह्णन्तेति ममासीन्मनीषा । परतु पश्चादवगत मया यदेवंविधेषु समेलनेषु राजभी रत्नभरणान्येतानि अवश्यमेव प्रतिमोक्तव्यानीति नियमो विधत इति । अन्यच्च मया विज्ञात यदेव भूषणैरात्मन परिष्कार केषाचिन्नितान्तमसह्यमासीत् तैश्चाभरणान्येतादृशेष्वेव सदर्भेष्वधार्यन्त न पुनरन्यदेति ॥

एतद्वचन वियसयतामात्मन इत्यहं न जाने । परन्तु तैरेतदाभरणजातमन्यदा धार्यता न धार्यता वा तथापि सार्वभौमप्रतिनिधेरास्थाने महिलाजनयोग्यभूषणैरात्मानमलङ्कृत्य तै संनिधातव्यमिति नियमो न किं नितान्तविषादकर ॥

अहो धनसम्पत्तिप्रभुत्वमहत्त्वाभिमानैर्मनुष्य पापानर्थरूपं वियत्कुत्र प्रदाप्येत ॥

सप्तदशोऽध्यायः

# गोखलेमहाशयेन सहैकमासः ( १ )

गोखलेमहाशयः स्वगृहे मदागमनप्रथमदिनात्प्रभृति यथा मम पालकया बुद्ध्या समवर्तत तथा सत्यवत्। कनीयसि भ्रातरीव मय्यवर्तत। मदपेक्ष्यमखिलं ज्ञात्वा तदनुकूलसविधानान्यकारयत्। भाग्यवशान्मदपेक्ष्यमत्यल्पमेवासीत्। स्वकार्याणि स्वयमेव कर्तुमभ्यस्ततया ममान्यसेवासापेक्षता प्रायो नासीत्। मदीया स्वावलम्बनता मदीयमङ्गशौचं वस्त्रशौचं च मदीय उद्यमो नियमाचरणं चेत्सर्वं तस्य मनोऽगाहत। एतदवलोक्य मम विस्मयं जनयन् परं मामश्लाघत ॥

सर्वमागते मयि विस्रम्भेण प्राकाशयत्। स्वसन्निधिमागतानां प्रमुखपुरुषाणां परिचयं मामकारयत्। तेषां जनानामिदानीं डाक्टर ( अद्य 'सर' विरुदधारी ) प्रफुल्लचन्द्र-रॉयमहाशयः सुस्पष्टं मे स्मृतिमायाति। स हि गोखलेभवनस्य समीप एव कृतनिवासः सर्वदा तत्रागच्छति स्म। तस्य परिचयं मामेव बोधयन्नकारयत्—

"इमे खलु प्रतिमासमष्टशतरूप्यकाणामर्जितारोऽपि स्वकीयव्ययार्थं परं चत्वारिंशद्रूप्यकान्निक्षिप्य शेषमखिलं सार्वजनिककार्येषु विनियुञ्जाना प्रोफेसररॉयमहाभागाः। अनूढा इमे। न च विवाहयितुमिच्छन्तीति ॥"

अद्यतनरॉयमहाशयस्य तदानींतनाध्यापकरॉयमहाशयस्यापि न कोऽपि भेदो दृश्यते। पूर्वं यथा साधारणं नेपथ्यमपोषयत् साम्प्रतमपि तथैव सामान्योऽस्य वेषः। परमिदानींतनः 'खादीवास' इति विशेषः। पूर्वमेभिः खादीवस्त्रं न धार्यते स्म परं स्वदेशशिल्पालयोत्पन्नवासः। गोखले-डाक्टर-रॉय महाशयो कथालापेन नाहमतृप्यम्। स हि कथालापो देशसम्बन्धिना वा विषयाणां चर्चाज्ञानमधिकृत्य वा जिज्ञासा समासीत्। कांश्चिद्विषयानाकर्णयतो मम दुःखं च जायते स्म। ते हि विषया नेतॄणां दोषोद्घाटनरूपा अभूवन्। यानहं महायोद्धॄनगणयं तेऽमी क्षुद्रका इति मे बुद्धिरुदेतुमारभत ॥

गोखलेमहाशयस्य कार्यानुष्ठानरीतिर्यथा प्रमोदकरी तथा शिक्षाप्रणयिनी च। असौ नैकमपि क्षणं वृथाक्षपयत। तस्य कथालापस्य सर्वथा सर्वेऽपि देशकार्यार्थमेव। तद्वाक्यमसत्यस्य छायामपि कार्पण्यस्य चिह्नमपि नाविष्करोत्। हिन्दुस्थानस्य पारतन्त्र्यं दारिद्र्यमित्यादिकमेव सर्वदा तस्य चिन्ताहेतुरासीत्। कार्यान्तरेषु तं प्रवर्तयितुं बहवो जनास्तमुपसर्पन्ति स्म। ते सर्वेऽप्येकमेवोत्तरमलभन्त। तद्यथा—

" एतत्कार्यं युष्माभिरेव क्रियताम्। मत्कार्यमनुष्ठातुं मा मुञ्चत। देशस्य स्वातन्त्र्यसम्पादनं तावन्मयापेक्षितम्। तस्मिन् प्राप्ते कार्यान्तरं मे बोधयत। अद्य पुनरेतत् कार्यैकव्यसनस्य मम क्षणमात्रमवकाशो वा एकश्वासशक्तिर्वा नावशिष्यत इति ॥ "

रानडेमहाशये तस्य गौरवं तु वाचि वाचि प्रत्यक्षीभवति स्म। तथाहि। रानडेमहाशया प्राड्विवाकाश्च (सबजज) जयन्त्युत्सवार्थमामन्त्रितौ सत्यविधानाम्। तदानीं रानडे-महाशयमधिकृत्य निजस्मृतिपथवर्तिनः वाधिवृत्तान्तान् गोखलेमहाशयोऽवर्णयत्। रानडे-तेलंग-मण्डलिक' इति त्रयाणां पुरुषाणां परस्परं तारतम्यमदर्शयत्। तेलंगमहाशयस्य मनोहरा भाषण-शैलीमश्लाघत। माण्डलिकः सुधारकदृष्ट्या प्राशंसत्। व्यवहारिजनं प्रति तस्य कर्तव्यपालनं दृष्टान्तयितुमेकां लघ्वीं कथामकथयत्। तथाहि। तद्दिनस्य धूमशकटी तदागमनात्पूर्वमेव प्रचलिता। ततो या स्वकार्यिकस्य व्यवहारमुद्दिश्य काले न्यायसभां जिगमिषुः पृथग्धूमश-कटीमेकां भाटयित्वा प्रस्थित इति। अथ रानडेमहाशयस्य सर्वतोमुखानां शक्तिमुपवर्ण्य यथासौ महापुरुषस्तत्कालीनसर्वनायकानग्रयशोरोति प्रादर्शयत्। रानडेमहाशयो न केवलं परमनिष्णातः प्राड्विवाकोऽभूदपि तु प्रगल्भतमोऽयमितिहासकृदर्थशास्त्रवेत्ता सुधारकश्चासीत्। असौ राजकीयाधिकारी भवन्नपि धीरस्वभावः प्रेक्षको भूत्वा महासभामागच्छति स्म। तदभिज्ञता प्रति सर्वोऽपि तया व्यवस्थयैव यथास्य निर्णयं समस्तैरपि निर्विवादमङ्गीक्रियते स्म। एवं स्वगुरौ समवायिनीं बुद्धिशक्तिं हार्दिकगुणसंपत्तिं च वर्णयतो गोखलेमहाशयस्यानन्दो नात्मनि प्राभवत्॥

तत्काल गोखलेमहाशयस्तुरगरथमेकमस्थापयत्। तदश्वगमस्य कथमानयनं संवृत्त-मिति न मे विदितमासीत्। अस्मिन्विषये मदीयमसंतोषं तस्मै न्यवेदयम्। स मयाप्रच्छि। विद्युद्यानेन (ट्राम) भवद्भिः कुतो न गन्तव्य एव कृते नायकानां गौरवं किं परिहीयेतेति॥

इदं श्रुत्वा स मनाग्विषण्णः प्रत्यवादीत्—

भवानपि मे हृदयमवगन्तुं किं न शक्नोति। न्यायनिर्णायकमण्डलप्राप्तं यद्धनं तत्स्वार्थे न व्यययिष्यामि। विद्युद्यानेन गच्छतो युष्मानवलोकमानस्य ममामूया जायते। किन्तु स्वयमपि तथा कर्तुं न शक्नोमि। अहमिव भवानपि यदि सार्वजनिककार्येषु तीव्रकुतूहली स्यात् तदा भवतोऽपि विद्युद्यानेन प्रयाणं न संभाव्येत। पर्यन्ते कष्टमप्यनुभवितव्यम्। नायकैर्यदङ्गीक्रियते तत्सर्वं तत्सुखार्थमेवेति भावना निराधारा। भवदीयमार्जवं मन्मनः प्रीणयति। यावच्छक्यमहमपि सरलतां पालयामि। परमस्मादृशानां बहवो व्यया अनिवार्या भवन्तीति। एवं मदसमाधानका-रणमेकं स न्यवर्णयत्। परमन्यत्तापनेतुं नाशकत्॥

अथाहमपृच्छम्—

"ननु विहारार्थमपि भवन्तो न गच्छन्ति। एवं स्थिते भवतामस्वास्थ्यप्राप्ता विमाथर्यम्, देहारोग्यस्यप्राप्ता भवता व्यायामार्थमप्यवकाशः किं दुर्लभ इति॥"

विहाय स्वचक्षुषोऽहं किं भवता कदापि दृष्ट इत्युत्तरमागतम् ॥

गोखलेमहाशयं प्रति ममादरो गौरवं च तथाभूते यथास्य प्रत्युत्तरं मया न दीयते स्म। उपरिनिर्दिष्टेन तस्य वाक्येन यद्यपि न मे मनः समाधीयत तथाप्यहं तूष्णीमभवम्। कार्यबाहुल्ये सत्यपि यथा वयं भोक्तुमवकाशं लभ्यामहे तथैव व्यायन्तुमप्यवकाशोऽस्माभिरन्वेषणीय इत्यहममंसि। अधुनापि तथा मन्ये। एतेन हि कार्यशक्तिरभिवर्धते। न पुनरपक्षीयत इति ममाशयः ॥

षष्ठदशोऽध्यायः

# गोखलेमहाशयेन सहैकमासः (२)

गोखलेगृहमधिवसता मया सर्वोऽपि कालो गृहान्तरेव न यापितः। प्रतिज्ञानपूर्वं हि मया दक्षिणाफ्रिकानिवासिभ्यः क्रैस्तमतेभ्यो यदहं हिन्दुस्थानवर्तिभिः क्रिस्तमतावलम्बिभिर्मिलित्वा तत्तदीयस्थितिगतीः परिचेष्यामीति। श्रुतपूर्वं च मया कालुकालीचरणबॅनरजीमहोदयस्य नाम। स मे परं गौरवास्पदमासीत्। स किल महासभायां मुख्यपात्रं वहति स्म। सामान्यतो हिन्दुस्थानवर्तिनः क्रैस्तमतीया महासभामप्रविशन्तो हिन्दुमुसल्मानजनान् दूरीकुर्वन्ति स्म। तस्मादमीषु यथा मे भयमाशयास्तथा श्रीकालीचरणमहाशयेनासीत्। तमेनं द्रष्टुमिच्छामीति गोखलेमहाशयमवेदयम्। स चाकथयत्—'तदुपसर्पणेन किमिव हि प्रयोजनम्'। नूनमसौ साधुजनः। तथापि त्वामयं न परितोषयेदिति मन्ये। तमहं सम्यग्जाने। असौ सर्वथा द्रष्टव्य एव चेद्द्रष्टव्य इत्यनुमिनोमि ॥

बॅनरजीमहाशयस्य दर्शनार्थे विज्ञप्तिर्मया प्रेषिता। सद्य एव तेनापि तत्प्रतिपन्नम्। तत्पार्श्वमुपगते मयि तद्भार्या मुमूर्षुःशयिनेत्यवेदिषम्। तस्य मन्दिरं निराडम्बरमासीत्। महासभायां स कवचप्रपदीनधारी दृष्टस्तमेवाद्य गृहे वङ्गीयवसनान्यङ्गीकारं साक्षात्कृत्य प्रमुदितोऽभवम्। यद्यपि तदानीमहं पारसीककवचप्रपदीनधारी तथापि तदीयं सरलजीवनं मे नितान्तमरोचत। कमप्युपोद्घातमन्तरेणैव मम क्लेशानवर्णयम्। स मामपृच्छत्—दुरितमारभ्येत एव वयं जन्म गृह्णीम इति भवद्भिः किं श्रद्धीयते। अहं श्रद्धध इत्यवोचम्। अथ सोऽब्रवीत्। एवं तर्हि तस्यास्य मूलपापस्य निवृत्तिर्हिन्दुधर्मे न दृश्यते। क्रैस्तधर्मे तु तन्निवृत्तिमार्गो दर्शितः। पापस्य प्रायश्चित्तं मरणम्। तथाहि याज्ञवल्क्यवचनम्—क्रिस्तप्रपत्तिरेकैव मुक्तेर्मार्ग इति ॥

श्रीभगवद्गीतासु प्रतिपादितं भक्तिमार्गमहं न्यरूपयम् । परमिदं निष्प्रयोजनमासीत् । तस्य सौजन्याय तमहमवन्दिषि । यद्यपि सर्वात्मनाहं न परितुष्टस्तथापि तद्दर्शनान्मम लाभ एवासीत् ॥

आमासान्तमहं कल्कत्तानगरे वीथ्यां वीथ्यामचारिषम् । संचारो भूयसा पादचारेणैव निरवर्त्यत । एतत्कालमेव जस्टिसमित्रमहाशयस्य सद्गुरुदासबॅनरजीमहाशयस्य च दर्शनं मयाकारि । दक्षिणाफ्रिकादेशकार्यस्य कृते तयोः साहाय्यकं ममावश्यकमासीत् । अस्मिन्नेव समये सरप्यारीमोहनमुकरजीमहाशयं चाहमदर्शम् ॥

कालीचरणबॅनरजीमहाशयः कालिकादेवालयमधिकृत्य पुरा कथालापमकार्षीत् । तद्देवालयदिदृक्षा मम तीव्राभवत् । तद्विषयको वृत्तान्तः पुस्तकेषु मया पठितपूर्व आसीत् । तस्मादहमेकदा तत्रागमम् । न्यायमूर्तिमित्रमहाशयस्य मन्दिरं तस्यामेव वीथिकायामवर्तत । अतोऽहं तद्दर्शनदिवस एव कालिकादेवालयमुपागच्छम् । कालिकाया उपहारीकर्तुं वृन्दशो नीयमानानवीनवालोकयम् । देवस्थानवीथ्यां वनीपकव्यूहः पङ्क्तिं बद्ध्वा व्यतिष्ठत । तत्र धार्मिकभिक्षुका विरागिजनप्रभृतयोऽप्यविद्यन्त । तदा हृष्टपुष्टानां याचकानां भिक्षाप्रदानं सर्वथा दोष एवेति तदानीमप्यहममंसि । एषामेकः संघातो मामन्वागच्छत् । तन्मध्यादेकः प्रधानभिक्षुस्तत्रोपविष्टो दृष्टः । अये क्वस क गन्तासीति स मामपृच्छत् । अहमुत्तरमदाम् । सहचरद्वितीयं मामसावुपविश्यतामित्यगादीत् । वयं तथैवाकुर्महि ॥

अस्याविकवृंदस्योपहारीकरणं किं धर्म्यं मन्यन्ते भवन्तः इत्यहमप्राक्षम् । प्राणिनां हिंसनं धर्म इति को वा मन्यत इति । स प्रत्यवोचत् ।

" यदि तावदधर्मोऽयमिति कस्माद्भवद्भिर्लोका न बोध्यन्ते ।

" तदेतदस्मत्कार्यं न भवति । भगवद्भजनं खलु नः कार्यम् । "

" भगवद्भजनाय स्थानमन्यत्किं न विद्यते । "

" अस्माकं सर्वेऽपि प्रदेशाः समानाः । लोकास्तावदविवृन्दसदृशाः यत्र महद्भिः कृष्यन्ते तत्र ते प्रसर्पन्ति । न खलु तत्कार्यमस्माकं साधूनाम् ॥

अस्याथर्चाया विरम्य देवस्थानमव्रजाम । अस्मत्पुरस्ताच्छोणितनिर्झरः प्रवहति स्म । नाहं तत्र स्थातुमशक्नवम् । क्षुभ्यमानचेतसो मम चित्तभ्रांतिरजनि । तद्दर्शनमिदं नाद्यापि विस्मृतम् ॥

सायं तस्मिन्नेवदिने यज्ञेश्वरबंगमित्रैः सह भोजनायाहं निमन्त्रितः । तत्राहमेकेन सहृदा नृशंसमिदं पूजाविधानमधिकृत्याऽलपम् । स चाचकथत् । तत्र किल भेर्यः प्रहण्यन्ते । दंध्वन्यमानेषु तेषु न हि वेदनामयः शब्दित इति ॥

मठो मदीयमानसमप्रीणयत् । स्वामिनामरस्यनया तद्दर्शनस्य दुर्लभत्व तथाऽमेया स्वर्गीय कलकत्तामन्दिरे चावस्थानमाकर्ण्य मम दु खमाशाभङ्गश्च जायेताम् ।।

तदनु श्रीमत्या भगिनीनिवेदिताया मन्दिरमन्विष्य ता चोरवीशिष्या धर्मविदित्यमनने साक्षादकरवम् ॥ समन्तात्तदीयनैभ्रमालोक्य मम विस्मयोऽभूत् । आवयो कथालापेषूभय-सामान्यो भाग स्वल्प एवासीत् । वृत्तैतप्रस्ताव गोखलेमहाशयो मामवादीत् यदस्याश्चत्र प्रकृतेस्तव च सामान्यत्वाभावो नाम न मे विस्मयावह इति ॥

ताम्हह पुन श्रीपेस्तनजी-पादशाहस्य भवनेऽपश्यम् । यावत् सा पादशाहस्य वर्षी यस्या जनन्या सहालपितुमुद्यता तावदह तत्रोपस्थित । ततोऽहमनयोर्द्विभाषित्वमशिश्रियम् । यद्यपि तदभिप्राया मम नानुमोदनीया आसस्तथापि ता हिन्दुधर्मे प्रेमवृष्टिमापातयन्तीमवश सन्नतौषम् ।।

प्रतिदिनमह दक्षिणाफ्रिकादेशव्यतिकरमुद्दिश्य कलकत्तानगरस्य प्रमुखान् दर्श दर्श तत्रत्या धार्मिकसार्वजनिकसस्था परीक्ष्य तद्वृत्तान्तान् ज्ञाय ज्ञाय कालमक्षपयाहयम् । एकदा डा मालिकमहाशयस्याध्यक्षतायामह हिन्दुस्थानीयशुश्रूषापादलेन बोअरयुद्धे कृता सेनामधिकृत्य व्याख्यानमेकमदाम् । अस्मिन्नवसरेऽपि मम 'इग्लिशमैन' पत्रिकया सह भूतपूर्व परिचय साहाय्यमकरोत् । सॉण्डर्समहाशयश्च रुग्णशयितोऽपि षण्णवत्युत्तराष्टशताधिकैकसहस्रतमे वत्सरे तेन यावत्साहाय्यमकारि तावत्साहाय्यमधाप्यकरोत् । गोखलेमहाशयस्तमेन मदीयमुपन्यासम श्लाघत । डा रायमहाशयेन च स्तूयमानमाकर्ण्य नितान्तममोदत ॥

इत्थ गोखलेभवनवासो मम कलकत्तानगरे निर्वर्तनीय कार्यं नितरा सुगममकार्षीत् । वगप्रमुखाना कुलै परिचयसपादनायावकाशमदात् । वगदेशेन सह मदीयनिकटसबधप्ररोहस्य बीजमवाप्सीत् ॥

स्मरणीयस्यास्य मासस्य बहव स्मृतयोऽत्र परित्यक्तव्या । अथाहमिदानीं त्वरयालेर्मम ब्रह्मदेशगमन तत्र पुगीसञ्ज्ञकाना भिक्षूणा दर्शन चोपवर्णयिष्यामि । तेषामलसत्वमालोकयन्नहमदूये । तत्र मया सुवर्णदेवालयो दृष्ट । तत्र प्रज्वलत सख्यातिगान्दीपान्विलोक्य न मे सतोष समजनि । गर्भागारे चक्रम्यमाणान्मूषकान्विलोकमानस्य मोरवीक्षेत्रे दयानन्दस्वामिनामनुभवो मे स्मृतिमागत । ब्रह्मदेशे स्त्रीणा स्वातन्त्र्यमा चटुलता च मा मुग्धमकुरुताम् । जनानामल समार पश्यतो मे खेद समजनि । अल्पकालमपि तत्रावस्थया मयेद प्रत्यक्षीकृत यथया हिन्दुस्थान मोहमयी ( मुबई ) नगर नानुकरोति तथा ब्रह्मदेशोऽपि रगूननगरीमिति । यथा च हिन्दुस्थाने वयमांग्लेयवणिग्भिर्मध्यस्था कृतास्तथा ब्रह्मदेशे साङ्ग्लैरस्माभिश्चीनीया मध्यस्था कृता इति ॥

ब्रह्मदेशात्प्रतिनिवृत्तोऽहं गोखलेमहाशयस्यानुज्ञां प्राप्य ततो निरगच्छम्। तेन वियोगो दुःसहोऽभवत्। तथापि नगेषु (अथवा कलकत्तानगरे) मदीयकार्यस्याभावात्तत्र पुनरवस्थानं निर्हेतुकमासीत्॥

क्वचिदेकत्र स्थितेः प्राक् पूर्वं हिंदुस्थानस्य लोहपथनचारिणीषु धूमशकटीषु तृतीयश्रेण्या प्रयाणमङ्गीकृत्य तच्छ्रेणीगतानां परिस्थितानां क्लेशा अवगन्तव्या इत्यालोचयम्। तथा च गोखलेमहाशये तत्प्रस्तावमकरवम्। स तान्सर्वानुपाहसत्। अथ मदीयमुद्देश्यं मया सविस्तरमुपवर्णितमवगम्य सप्रमोदमन्वमोदत। अहमादौ काशीं गत्वा तत्र रुग्णशायिनां श्रीमतीं बेसन्टमहाशयां दृष्ट्वा कृतप्रणामः परापतिष्यामीति निरचैषि॥

तृतीयश्रेण्या प्रयियासुना मया प्रत्यग्रमेव परिकरः सज्जीकरणीय आसीत्। गोखलेमहाशयो मोदकपूरिकादिभिः सम्भृतामेकां लोहीं पञ्चाहारमञ्जूषां मह्यमददात्। अहं द्वादशाणकमूल्यमितं काष्ठकोशमेकमक्रैषम्। छागोर्णामयीं (छागेति पोरवदरस्थानगतमौर्णवासोभिः प्रसिद्धं स्थलम्) मेकामायतामृगिकामक्रीणाम्। एकामृगिकां, एकमुत्तरीयं, एकं चतुष्कावरं, एकमान्तरकलं च इत्येभिर्वस्तुभिः कोश: समरणीय आसीत्। एका जलस्थाली, प्राशनाय कवलमेकं, मल्लिकट एवास्ताम्। एवं परिकरं सज्जीकृत्य प्रस्थानोन्मुखोऽभवम्। गोखलेमहाशयो डॉ रॉयमहाशयश्च मामाप्रष्टुमयोव्यनिकेतनमागमताम्। आगमपरिश्रमो भवद्भिर्न वोढव्य इत्यावेदितावपि तौ सामिनिवेशमागतावेव। किं च गोखलेमहाशयः प्राह स्म। भवद्भिः प्रथमश्रेण्या यदि प्रयाणमकरिष्यत तदा नैवाहमत्रागमिष्यामीति॥

निकेतनं प्रविशन्तं तं गोखलेमहाशयं न कोऽपि न्यरुणत्। स किंतु तदानीं शिरसि उष्णीषं कवचमुत्तरीयं चापोपयत्। डॉ रॉयमहाशयस्तु वंगीयनेपथ्यधारी स्थितः। तमेनं प्रयाणानुज्ञापनपत्रपरीक्षकोऽधिकारी न्यरुधत्। किं त्वयं मे मित्रमिति गोखलेमहाशयेन बोधितस्तं निरमुचत्॥

## त्रिंशोऽध्यायः

# काव्याम्

एतत्प्रयाणं कलकत्तानगराद्राजकोटं यावद्व्याघ्रणीयमासीत्। आग्रा काशी-जयपुर पालनपुर इत्येतेषु स्थानेषु स्थित्वा राजकोटं निगमिषुरासम्। इतोऽपि भूयांसि स्थलानि वीक्षितुं मम नावकाशोऽविद्यत। एतेषु स्थलेष्वेकैकं दिनमहमनैषम्। अन्ते पालनपुरादन्यत्र सामान्ययात्रिक-

वदह धर्मशालायामर्चकगृहेषु वावातरम् । यथाहमिदानीं स्मरामि तथा मम प्रयाणव्ययो धूमशकटीव्यय मिलित्वा एकत्रिंशद्रूप्यकेभ्योऽधिको नासीत् ॥

तृतीयश्रेण्या प्रयानप्यह प्रायेण पत्रवाहिनी (मेइल) शकटीं वर्जयित्वा सामान्यशकट्या प्रायासिषम् । विदित हि मया यपत्रवाहकधूमशकटी पर जनमकुला भवतीति । कि चास्या भाटकाधिक्य चान्य प्रतिबन्ध ॥

तृतीयश्रेणीशकट्यामशुचित्व मलागारेषु कज्जलत्व च यथापूर्वमेव तिष्ठति । प्रायशोऽधुना मनाग्विशेषो दृश्येत । परन्तु तृतीयश्रेणीपथिकाना प्रथमश्रेणीपथिकाना च कृते यद्य सौकर्य परिकल्पित तदन्तर तत्तच्छ्रेणीपथिकै प्रदेयभाटकान्तरापेक्षयात्यधिक भवति । तृतीयश्रेणी-पथिका पशुवद्गण्यन्ते । तदर्थमुपकल्पितानि सौकर्याणि च पशुमात्रयोग्यानि । युरोपखण्डे प्रयाणमह सर्वदा तृतीयश्रेण्यामेवाकार्षम् । अनुभवेप्सया सकृदेव प्रथमश्रेण्या प्रायासिषम् । किन्तु प्रथमतृतीयश्रेण्योर्नाहमेतादृशमन्तरमलक्षयम् । आफ्रिकादेशे तृतीयश्रेणीपथिकस्तोमो 'निग्रो'जन भूयिष्ठो भवति । तथापि तत्र तृतीयश्रेणीशकटीषु जनानामानुकूल्यमसबाधाश्रयश्च पर लभ्येते । तत्र कचित्प्रदेशेषु तृतीयश्रेणीपथिकाना शयनार्थमपि व्यवस्था दृश्यते । आसनानि सोपबर्हाणि भवन्ति । प्रतिशकट नियतसख्याधिकाना जनाना प्रवेशो नियमतो निरुध्यते । अस्मिन्देशे पुन तत्सख्यानियमातिक्रम एव प्रायिको दृश्यते ॥

तृतीयश्रेणीप्रयाणिकानामानुकूल्योपकल्पनविषये लोहाध्वसचालकानामौदासीन्य पथिकाना श्वपचाचारस्तेषामन्योन्यश्रद्धा चेति सर्वाणीमानि सभूय शौचसपन्नजनाना तृतीयश्रेणीप्रयाण नाम प्रायश्चित्तरूपो दण्ड इव प्रतिभाति । अभितो वर्तिना सुखदु खे लेशतोऽप्यविगणय्य शकटे वचारराशिप्रक्षेप देशकालावनादृत्य स्वरमेव धूमवर्तिसेवन तमाखुताम्बूलादिक चर्वयित्वा सर्वत शकटे निष्ठीवन क्रोशन चाक्रन्दन दुरुक्तिभाषणमित्यादीनि सामान्यत पथिकाना दुर-भ्यासा भवन्ति । इयविनवशतोत्तरसहस्रतमे वत्सरे मम यादृशोऽनुभवस्तत्रश्च पचशतोत्तर-नवशताधिकसहस्रतमाब्दमध्येकोनविंशत्युत्तरनवशताधिकसहस्रतमपर्यन्तमविच्छिन्न मया श्रुता-स्तृतीयश्रेणीप्रयाणादृशोऽनुभवस्तयोरन्योन्यमन्तरम् किमपि मया न दृष्टम् ॥

मन्ये तु सहपरीस्थितेरीदृशाया भैषज्यमेकमेवास्तीति । तथाहि । सुशिक्षितैर्जनैस्तृतीय-श्रेण्यामेव प्रयाणमङ्गीकर्तव्यम् । दुष्टा प्रयाणिकाना पद्धतय समीकर्तव्या । सति सभवे लोहमार्गाधिकारिणो बोधे योर वक्तव्यैर्यथा तैर्न स्थीयते तथा सविधातव्यम् । स्वानुकूल्य-सपादनार्थमुत्कोचप्रदानेन केनापि प्रवर्तितव्या । कि च शासनातिक्रमात् सर्वोऽपि वर्जनीय । एतेन सुमहती व्यवस्था भविष्यतीत्यह स्वानुभवादाचक्षीय ॥

अष्टादशोनविंशशताधिकसहस्रतमे मया स्वयमतिसारसप्रभृति गृहीतरोगो प्रवास हानस्त्यागविनात । एतेन मम मनसा पीडा विशदथ जायते । तत्रापि

देवालयोपकण्ठमुपसर्पन् द्वाराग्रे पोपूयमानरथिन दुर्गन्धिकुसुममाला राशिमत्रागेऽपश्यम्। अतरेका सुन्दरामृतशिला रतीर्णाभवत्। किन्तु सा केनापि कलागन्धशून्येनाश्रद्धोपेतेन भक्तेन रूप्यकाम्यैरैथिर्न प्रायुक्तासीत्। तानि रूप्यकचित्राणि मरस्य परमाश्रयभूतान्यासन्॥

अथाहं ज्ञानवापीपार्श्वमगच्छम्। अत्र मया भगवतोऽन्वेषणमकारि। स पुनर्न दृष्टः। अनेन मदन्तरात्मा ज्वलति स्म। ज्ञानवापीमभितः कच्चरमपश्यम्। दक्षिणाप्रदान सर्वथा मे नारोचत। तस्मादहमेका काकिणीं तत्र न्यक्षिपम्। तत्रत्य पण्डमिश्रस्य गोगो नामनि प्राभवत्। पादानवसुद्धृत्य स त व्यपाक्षिपत्। अथ मामाकृष्य त्वया मे कृतोऽयमपमानस्त्वामजसा नरकनिपातं प्रापयतीत्यभ्यधात्॥

अहं शान्त एव स्थितः। तदनु मयाभ्यधायि 'स्वामिन् मम यद्भाव्यं तद्भविष्यत्येव। किं तु भवादृशाना मुखाद्दीदृग्वाचो विसर्गो न हि शोभते। सति संतोषे गृह्यतामियं काकिणी। नो चेत्तामपि भवन्तो हापयिष्यन्तीति॥

स चाकथयत्—अपेहि रे अपेहि। न कार्यं मयत काकिण्या इति। तदनु सौ ममोपर्याक्रोशवचनानि पर्जन्यवर्षमपातयत्॥

अथाहं तां काकिणीमादाय तदनङ्गीकारेण पण्डमिश्रस्य सवृत्ता हानिं मम सवृत्तं लाभ च गणयन् यथागत प्रास्थिषि। परन्तु पण्डमिश्रो नाहिको भवितु नारोचयत्। स मा पुनराहूय प्राह स्म। भवतु। काकिणीमत्र निक्षिप्य याहि। तव शीलमनुकर्तुं नाहमिच्छामि। मयास्या काकिण्या अपरिग्रहे तवैवारिष्ट भवितेति॥

तूष्णीमहं तस्मै काकिणीं प्रदाय दीर्घं निश्वासमुत्सृज्य तस्मादपासरम्॥

तदनु द्विवारं काशीमहं गतोऽस्मि। परन्त्वेतन्मम महात्मताख्याति प्राप्तेरनन्तरम्। सत्तादृशास्य कथं वा ममेदृशोऽनुभव सुप्राप स्यात्। मद्दर्शनार्थमागच्छन्तो जना कथं मे भगवद्दर्शनस्यावकाश दद्यु। महात्मनो तु खानि महात्मनो नाम मादृशस्यैव वेद्यानि। इम विशेषमन्तरेण तत्र कच्चरावकरादिक यथापूर्वमेवासीत्॥

परमेश्वरस्यापारकरुणा प्रति ये केचित्संशयालव सन्ति त ईदृशानि तीर्थक्षेत्राणि गत्वा प्रेक्षन्ताम्। अथ महायोगी स्वनामापदेशेन प्रचलन्ति कियन्ति कपटानि कियतो डम्भाचारान् कियतश्चाधर्मान्सहेत। अथाप्ययमुदासीन पश्चादवतिष्ठते। तथाहि—गीतायां तदुक्तिः—

ये यथा मा प्रपद्यन्ते।
तांस्तथैव भजाम्यहम्॥ इति॥

[ये मा यथा रीत्या प्राप्तु यतन्ते तेषामहं तथैव रीत्या स्वागतं दास्यामि।]

यद्बीजमुप्त तद्बीजसदृश फलमश्नुते॥

कर्मण फलमन्यथा कर्तुं को हि शक्नुयात्। तस्मादत्र भगवत प्रवेशेन किं कार्यम्। अत एवाय लोकयात्रानियमान् विधाय स्वयमपसृत्य तूष्णीमुदास्त इति ॥

एव दृष्टदेवाल्योऽह वेसटमहाभागा द्रष्टुमगमम्। सा किल तत्कालमेवोद्घाता प्राप्य स्थिता। मन्नामाङ्कित पत्रखण्डमन्त प्राहिणवम्। तत्क्षणमेव सा समुपागात्। तद्दर्शनमात्र मया लिखितमासीत्। तस्मादहमवोचम्—अस्वस्था भवतीत्यह जाने पर श्रीमत्या दर्शन चिरोर्त्सुकोऽस्मि। अस्वस्थयापि भवत्या यदात्मा मम दर्शनपथ नीत तदह कृतज्ञोऽस्मि। नाहमितोऽधिक श्रीमतीमुपरोद्धुमिच्छामीति। एवमुक्त्वा तत्सकाशादहमपासरम् ॥

एकविंशोऽध्यायः

# मोहमयीनगरे स्थितिग्रहणम्

आसीत्किल प्रबलोऽभिलाष श्रीमतो गोखलेमहाशयस्य यन्मया मोहमयीनगर्यामेव स्थिति मता न्यायवादिवृत्त्युपजीविना सार्वजनिकसेवायामात्मन सहकारिणा भाव्यमिति। तदानीं सार्वजनिकसेना नाम महासभाया सेवैवासीत्। तेन प्रतिष्ठापिताया सस्थायास्तदेव मुख्य कार्यं यदस्या महासभाया कार्यस्य प्रचालन नाम ॥

गोखलेमहाशयस्य सूचनामहमरोचयम्। परतु न्यायवादिवृत्ति सूपजीव्या भविष्यतीति मम नासीद्विश्वास। पूर्वानुभूतमद्यापि न किल विस्मृतमासीत्। किं चात्मश्लाघनया कार्यि काणामार्पण नाम विषवज्जुगुप्स्य मम प्रत्यभासीत् ॥

तदहमादौ राजकोट एव कार्यमुपक्रमणीयमिति निश्चयमकार्षम्। तत्र मम हितैषी विदेश प्रति मम गमनहेतुभूत केवलराममावजीदवेमहाशय स्थित। स मह्य त्रीन् व्यवहारा समपादयत्। तेषा द्वौ काठियावाडदेशस्य ‘जुडिशियल असिस्टट’ इत्यधिकारिणो न्यायसभायामवेक्षणीयौ प्रतिविमर्शौ (अपील) रूपावास्ताम्। तृतीयस्तु जामनगरे प्रवर्तमान एको मूलव्यवहार। एषा प्रचालनेऽह शक्त स्या न वेति सशयाकुल मा केवलरामदवे महाशयोऽवादीत्—अल पराजयशङ्कया। यावच्छक्य भवद्भि प्रयत्यताम्। अहमिह स्थितोऽस्मि

साक्ष्यसत्राधिशासनस्य नियमावलिं कण्ठे धृतासीत । तदेतदमुं जयशीलमकरोदिति । इदं मनसिकृत्य समुद्रयानेऽहं 'इण्डियन एविडेन्स ऐक्ट' पुस्तकं सव्याख्यानं सम्यगपठिषम् । अपि च दक्षिणाफ्रिकादेशे न्यायवादिवृत्तिरशाल्मपादितोऽनुभवश्च ममासीत् ॥

जितो मया व्यवहारः । एतेन मम कियानप्यात्मविस्रम्भः समजनि । प्रतिनिमर्शव्यवहारद्वयं प्रत्यादितं प्रभृत्यहं निश्चिन्त एवासम् । तदपि मया जितम् । सर्वमेतद्विभावयतो मम मोहमयीनगर्यां स्थितिग्रहणेनापि चिन्ताया न कोऽपि स्यादवकाश इत्याशा समुदेति स्म ॥

किन्तु मोहमयीनगरं प्रति गन्तव्यनिश्चयो यथा मयाङ्गीकृत इत्यस्य वर्णनात्पूर्वमांग्लाधिकारिणमविचारमज्ञानं चाधिकृत्य मदीयमनुभवं वर्णयिष्ये । जुडिशियल 'ऐसिस्टट' इति व्यवहारद्रष्टाधिकारी कदापि नैकत्रातिष्ठत् । किन्तु सर्वदा सञ्चरमाण एव स्थितः । यत्र यत्र तेन वसतिरग्राहि तत्र तत्र न्यायवादिनः कार्यिकाश्च तमन्वसरन् । न्यायवादिनः परस्थलगमनप्रसंगे स्वकीयस्थले गृह्यमाणादभ्यधिकं पारितोषिकद्रव्यमजिघृक्षन्त । एतेन कार्यिणां द्विगुणो व्ययः समापतत् । क्लेशोऽयं प्राड्विवाकप्रभोर्हृदयं नैवास्पृशत् ॥

प्रसक्त एष व्यवहारो वेरावल-ग्रामे द्रष्टव्योऽभवत् । तत्काले तत्र ग्रन्थिज्वरो भयंकरं प्रसरति स्म । पञ्चशतोत्तरपंचसहस्रप्रजासंख्याके तस्मिन् ग्रामे प्रतिदिनं पञ्चाशज्जना व्याधिना स्पृश्यन्तेति इतिरस्ति । ग्राम — सर्वोऽपि शून्यप्राय आसीत् । ग्रामस्याहमदूरवर्तिन्यामेकस्यां निर्जनायां धर्मशालायां वसतिमग्रहीषम् । व्यवहारिजनैस्तु कुत्र वस्तव्यम् ? ते पुनरनाथाश्चेत्तेषां परमात्मैव गतिः ॥

वेरावले ग्रन्थिज्वरप्रसारात्तत्स्थलं परित्यज्य क्वापि स्थलान्तरे व्यवहारदर्शनाय प्राड्विवाकः प्रार्थयितव्य इति मदीयः कश्चनसुहृत् स्वयं व्यवहारवान् मां प्रति तन्त्रीसंदेशं प्राहिणोत् । मम प्रार्थनापत्रमवलोक्य प्राड्विवाको मामप्राक्षीत् — किं भवान् भीरुकः इति ॥

मया प्रत्यवाचि — अहं भीरुको वा न वेति न खलु प्रकृतः प्रश्नः । अहं तावद्यथाकथं वा निर्वहेयम् । परन्तु व्यवहारिणामेषां का गतिरिति ॥

प्राड्विवाकः प्राह — ग्रन्थिज्वरोऽयं भारतवर्षे निजमन्दिरीकृत्य विजृम्भते किमर्थमिदानीं ततो भेतव्यम् । इह निरूप्यतां यादृशो वायुगुण इति यथा च स्पृहणीयो भवतीति ( अयं प्राड्विवाकः ग्रामाद्विप्रकृष्टे समुद्रतीरोपरिष्टे राजमन्दिरप्रख्ये वस्त्रशिबिरे गृहीतवसतिरासीत् )। एवं हि जना ग्रामवाद्ये निराकुलप्रदेशे निवस्तुं शिक्षयितव्या इति ॥

अस्य वेदान्तस्य किमुत्तरं मया दातव्यम् । प्राड्विवाकः स्वकीय नियोज्यप्रधानमावार्य तमवादीत्— गान्धिमहाशयैरुक्तं मनसि निधाय न्यायवादिनः कार्यिका वा यदि क्लेशबाहुल्यमस्तुयुस्तदाहमत्र बोधनीय इति ॥

प्राड्विवाकस्तावन्निर्वचनया स्वबुद्ध्या यन्न्यायतया गृहीत तदकरोत्। पर वस्तुतो दीनभारतवर्ष-क्लेशास्तस्य कथ वा वेद्या स्यु । दीनजनानामस्माकमात्रस्य कृताभ्यासो विचित्रतापद्धतयश्रेया-दिक कथ स जानीयात्। सर्वदा सुवर्णमुद्राभिर्व्यवहरन्मनुष्य कथमेकपदे ताम्रकाकिणीभिर्गणना कर्तुमुत्सहेत। यथा हस्ती पिपीलिका नानुचिन्तयेत्तथा हस्तिकल्पमहोन्नतसौभाग्यगृह्णाङ्ग्लेयस्तथा पिपीलिकेवात्यल्पमिच्छु भारतीय नानुचिन्तयति न च तद्विषयकाणि शासनानि कर्तुं प्रभवति ॥

इद तावदास्ताम्। अथास्मदीयकथा प्रति निवर्त्स्याम । उपरि निरूपितरीत्या प्राप्तज-येनापि मया दिनकतिपयान् राजकोट एव स्थातव्यमिति व्यचिन्ति। अत्रान्तर एकस्मिन्दिने केवलरामो मत्पार्श्वमुपेत्याबोचत् । भवतो भवन्तमिह सुखा स्थातु नानुमन्यामहे । भवता मोहमयीनगर्यामेव निवास समाश्रयणीय इति ।

अह तमप्रच्छम्—तत्र मा को वावेक्षते। मदीयव्यय किं भवता प्रदीयत इति ॥

“ अवश्यमेव भवतो व्ययमह दास्यामि। कस्यापि व्यवहारस्य हेतोर्मैव तमुत्तरवादिना प्रवरमिहानेष्यामहे। व्यवहारपत्रिकादीना लेखनाय व्यवहारान् भवत्सकाशमेव प्रेषयिष्याम । उत्तरवादिनामुच्चरारोपणमवस्तादवतारण च न्यायवादिष्ववस्वायत्ते। जामनगरे वेरावले च भवता प्रदर्शिता योग्यतामवलोक्य भवद्विषये नाहमीषदपि चिन्ता वहामि । सार्वजनिककार्यं निर्वोढुमेव भवान् गृहीततमा भवति। काठियावाडदेश एवामान प्रयासयितु भवन्त नानुमन्यामहे। अथ ब्रवीतु भवान् कदा मोहमयीनगरमुपगन्तेति ॥

“ नातालदेशाद् द्रव्यागम प्रतीक्षमाण स्थितोऽस्मि। तत्प्राप्तिसमनन्तरमेव प्रयास्यामि ॥ ”

सप्ताहद्वयान्तरे तद् द्रव्यमागमत्। अह मोहमयीनगरमगच्छम्। तत्र ‘पेईन, गिल्बर्ट ॲण्ड सयानी’इत्येषा कार्यालये कोष्ठमेक भाटकेनाग्रहीषम्। अथेदानीं मदीयजीवन स्थिरीभूतमिव मे प्रत्यभात् ॥

द्वाविंशोऽध्याय:

## धर्मसंकटम्

मोहमयीनगरस्य दुर्गोत्यविभागे वल्पितकार्यालयोऽह गिरगावप्रदेशे कश्चिदेक गृहमन्विष्य तत्र वसतिमग्रहीषम्। किंतु भगवान् तत्र निवस्तु मा नान्वगृह्णात्। गृहमागतस्य मम चत्वारि दिनानि यावन्न व्यतीतानि तावन्मे द्वितीयकुमारो मणिलाल उल्बणव्याधिना शयनपतितो-ऽभवत्। विषमशीतज्वरेणाक्रान्तस्य तस्य श्वासकोशो दूषिताविभूताम्। रात्रिवेलाया सन्निपात-

वशात् विभ्रमोऽप्यजायत। स किल कतिपयवत्सरेभ्य पूर्वं स्फोटकोपद्रवेन गाढमुपसृष्ट पश्चा-त्स्वास्थ्यमाप्नो बाल ॥

अथ भिषग्वरमानैषम्। सोऽवादीत्— इदानीमौषधेनास्य न किमपि प्रयोजन भवति। सम्प्रयय कुक्कुटशावकसारमण्ड चावश्यमेव प्राशयितव्य। तदेतदुपकरिष्यतीति ॥

मणिलालस्तदानीं दशवर्षदेशीय स्वस्येच्छा प्रति नायमनुयोगार्ह आसीत्। तद्रक्षणस्य ममोपर्येव तन्निर्णयभारोऽपतत्। भिषग्वर परमसाधु कश्चन पारसीदेशीय। तमेनमपृच्छम्— भिषग्वर, इमे वय शाकाहारिण। अनयोर्वस्तुनोर्नैकतरमपि बालायास्यै प्रदेय भवति। य कश्चिदन्य आहारो भवता निर्दिश्यतामिति ॥

भिषग्वोचत्—

इदानीं व कुमार प्राणसशये वर्तते। सोदक दुग्ध यद्यपि सेवनीय तथापि तेनास्य प्रकामपुष्टिर्न जायते। बहुषु हिन्दुकुटुम्बेषु चिकित्सामह करिष्यामीत्येतद्भवता विदितमेव। ते जना यत्किमप्यौषध मया दत्त स्वीकुर्वते। तस्माद्वर मन्ये भवद्भि पुत्रविषये हठोऽयमनास्थेय इति ॥

सत्यमाह भवान्। भिषजा सतेत्थमेव खलु भवता वक्तव्यम्। पर ममानुयोज्यता महती वर्तते। यद्यय प्रबुद्धवया अभविष्यत्तदा तदिच्छानुसारेण प्रवृत्तिराश्रयणीया भविष्यत्। किन्त्विदानीं मया स्वयमालोच्य निर्णेतव्य भवति। मन्ये पुरुषस्य या धर्मश्रद्धा सा किलावसरेष्वीदृशेषु वस्तुत परीक्ष्यते। मनुष्येण मांसाहारादिक न भोक्तव्यमिति य सिद्धान्त स तावत्सगतो वा न वा भवतु मया पुन स्वधर्मस्याङ्गतया गृहीत। प्राणत्राणकराणि साधनान्यपि परिच्छेद्या न्येव भवन्ति। प्राणसशयेऽपि कियन्ति चित् कार्याणि परिवर्ज्यान्येव भवन्ति। एव गते यथाह जानामि तदा मदर्थे वा मदीयाना कृते वा मांसादिकस्य प्रयोगो न मे धर्म्य प्रतिभाति। तस्मा-द्भवता शङ्क्यमानमपायमनुभवितु मया सज्जेन भवितव्यम्। किन्तु भवत्सकाशे त्विशतिमेका करिष्ये। भवतोपदिष्टमौषधोपचार कर्तुमशक्तोऽह मया ज्ञाता जलचिकित्सा कर्तुमिच्छामि। किं तु बालस्यास्य नाडीहृदयश्वासकोशादीनि परीक्षितु नाह जाने। यदि भवानिह सकृत्सकृदागत्य तदीयपदार्थपरिस्थिर्ति परीक्ष्य मह्यमावेदयेत्तदा कृतज्ञो भविष्यामीति ॥

सज्जनोऽय भिषग्वदीयकष्ट सद्यो विज्ञाय मत्प्रार्थनानुरूप मणिलालस्य परीक्षणाय गतागत कर्तुमवमन्यत। निजाभिप्रायप्रकाशने तन्मात्मनभिज्ञाय मणिलालाय भिषजा सह मद्वृत्त यथावदपमापय तदीयमतमपृच्छम्। स चावोचत— जलचिकित्सा प्रारभ्यताम्। नाहमण्ड कुक्कुटयोनसार च भक्षयिष्यामीति ॥

तत्पदार्थद्वये मया प्रदत्ते सति नैष तद्भक्षयेदेवेति यद्यपि मे विदित तथापि प्रतिवचनं तस्य निशम्य हृष्टोऽभवम् ॥

क्युनीभिषग्वरस्योपचारक्रममहमवेदिषम्। तदनुसारेणोपचारो मया कृतपूर्वश्च। ज्ञातं च मया यद् रोगनिवर्तकस्नानेष्वपप्रयासश्च लाभकर इति। क्युनीमहाशयस्योपचारपद्धतिमनुसृत्य मणिलालं कटिस्नानं कारयितुमुपाक्रमे। त्रिमिषत्रयादूर्ध्वमसौ स्नानभाण्डे न निवेश्यते स्म। त्रीणि दिनानि तस्मै नारङ्गफलरसं सोदकं प्रायच्छम्। एतदतिरिक्तो न कोऽप्याहारस्तस्मै प्रादायि॥

किन्तु ज्वरो न शान्तः। चतुरधिकशतांशपर्यन्तमौष्ण्यमारोहति स्म। रात्रिवेलायां सन्निपातविभ्रमः प्रादुरभूत्। अहमुद्भ्रान्त इवाभवम्। लोकः किं मां प्रवदेत्। मदग्रजः किं ब्रूयात्। अन्यो भिषक् किमिति नानीयते। आयुर्वेदवैद्यानामानयनं किमशक्यम्। स्वोन्मादाना कृते निजापत्यानि बलीकर्तुं मातापित्रोः को वाधिकारः। एवंविधा विकल्पा मदीयं मनः प्राविशन्। किंत्वेतान्प्रतिरुध्य हृदयस्यान्तरादियं वाणी श्रूयते स्म। यथा हे जीव त्वयं तत्समानदशां गतेन त्वया यथा मोपचर्येत तथैव बालकमप्युपचरिष्यन् तव भगवान्प्रसीदत्येव। यथा तव जलचिकित्सायां विश्वासः तथा वचस्यौषधे स नास्ति। वच प्राणरक्षणं न हि प्रतिजानीते। तेन हि प्रयत्नमात्रं क्रियते। जीवसूत्रं परमात्मनो हस्ते तिष्ठति। भगवति भारं निक्षिप्य तत्स्मरणपूर्वकं श्रद्धामास्थाय यथाशक्ति शुश्रूषा कुतः खलु न कर्तव्येति॥

एवमनेकविकल्पजालेन परस्परविरोधिना माथ्यमानहृदयः सुतरामशान्तिमगमम्। अथ रात्रिरागता। अहं मणिलालस्य शय्यायां तस्य पार्श्वे एव शयितोऽभवम्। आर्द्रवाससा तं वेष्टयितुं निश्चयमकरवम्। तदनु समुत्थाय निशाटकमार्द्रीकृत्य जलं निष्पीड्य तेन मणिलालं कण्ठादङ्गुष्ठपर्यन्तमावेष्ट्य तदुपरि शिरोमात्रदृश्यमेन कम्बलद्वयेन प्रावारयम्। आर्द्रवासःखण्डेन तस्य शीर्षमवबध्नम्। तस्य शरीरं चुल्लिकोपरिस्थकन्दुरिव तप्यते स्म। सर्वं शुष्कमासीत्। अस्तमिता स्वेदप्रवृत्तिः॥

अहमतिश्रान्तोऽभवम्। मणिलालं तस्य मातुर्वशे विसृज्य होरार्धकालं विशिश्रमिषुः श्रीपाटीपार्श्वमभ्यगमम्। रात्रौ तदानीं प्रायो दशवादनवेला। जनसञ्चारो विरल आसीत्। परं कुतो मे स्मृतिर्विचारसागरे सन्निमग्नस्य। भगवन् मदीयमानरक्षणं त्वदायत्तमित्यात्मानमाश्वासयम्। मम मुखाद्रामनाम निरन्तरं निःसरति स्म। कियत्कालं कृतपरिक्रमो धकधकायमानहृदयः सदनमुपागमम्॥

गृहान्तः प्रविष्टमात्रमेव मणिलालोऽप्राक्षीत्। 'बापु' प्रत्यागतोऽसीति। आगतोऽस्मि वत्स। "अहमिदानीं ननु बहिरुद्धर्तव्यः। अहो दह्ये दह्ये।"

"वत्स मणिलाल, किमङ्ग स्विद्यसे।"

"अहो स्वेदस्नातोऽस्मि। ननु प्रावरणं झटित्यपनीयताम्॥"

अहं मणिलालं पाणिस्पर्शेनाचूषयम्। तत्र सचमौ मौक्तिकानामिव स्वेदबिन्दवः स्थिताः। ज्वरः प्रशाम्यति स्म। (ज्वरोऽवरोहति स्म)। दीर्घमहं निश्वस्य भगवते धन्यवादं समार्पयम्॥

मणिलाल इतः परं तव ज्वरः पलायत इत्यवेहि। इतोऽपि किंचित्प्रवृत्ते प्रस्वेदे तवाच्छादनमपनेष्यामि। मैवं 'बापु' अधुना मां चुल्लिकोदरादुद्धरत। अन्यदा पुनः परीक्षामहे॥

एवं कथाप्रसंगेन कंचित्कालमयापयम्। यथास्थितस्यास्य ललाटप्रान्तात् स्वेदधारा प्रावहत्। निशारकमपनीय तस्याङ्गं प्रामार्जयम्। अथावां पितापुत्रौ एकशयनेऽस्वपिव॥

उभाभ्यामपि गाढनिद्रासुखमन्वभावि। प्रातर्मणिलालस्य ज्वरो भूयसा प्रशान्त इवासीत्। सोदकं दुग्धं फलरसं इत्येताभ्यामेव चत्वारिंशद्दिनानि स वृत्तिमकरोत्। ततो मे भयं निःशेषमपासरत्। ज्वरः स्थायित्वेऽपि चिकित्सावशं प्रपन्नः॥

साम्प्रतं मम पुत्रेषु मणिलाल एव सर्वाधिकदाढ्यसंपन्नो भवति। एवमुत्कर्षताप्राप्तिः श्रीरामप्रसादात्, उत जलचिकित्साल्पाहारेस्विपथ्यशुश्रूषाभ्यामिति वक्तुं को नाम शक्नुयात्। निजनिजश्रद्धानुरूपं सर्वोऽपि निर्णेतुमर्हति। अहं तावज्जगदीश्वरेण मम मानो रक्षित इति दृढं व्यवसितम्। अद्यापि तथैव विश्वासः॥

त्रयोविंशोऽध्यायः

## दक्षिणाफ्रिकादेशं प्रति पुनर्गमनम्

मणिलालस्तावदुल्लाघः संवृत्तः। किन्तु गिरगावस्थले गृहं वासयोग्यं न भवतीति मया ज्ञातम्। तद्गृहं न केवलमनूपप्रदेशे निविष्टमपि तु भूयसा निषिद्धसूर्यप्रकाशमासीत्। तस्मादहं रेवाशंकरजगजीवनमहाशयस्य सूचनामङ्गीकृत्य मोहमयीनगरस्य बाह्यवसतिप्रदेशे हर्म्यमेकं भाटकेन प्रहीतुं निरचयम्। 'बान्द्रा—साताक्रूज' इत्यनयोः नगरविभागयोः वसत्यर्थमन्वेषणमकार्षम्। बान्द्रास्थले गोघ्नशौण्डिकापणस्य विद्यमानत्वात्तत्र नो वसतिग्रहणं नारोचत। घाटकोपरप्रभृतिस्थानानि समुद्रादतिदूरवर्तीनि मे प्रत्यभात्। पर्यन्ते साताक्रूजविभागे रमणीयमेकं हर्म्यमलभ्यत। आरोग्यदृष्ट्या तदयुक्तं मन्वानो भाटकेनाग्रहीषम्॥

साताक्रूजस्थचर्चगेटरेलस्थानकं गन्तुं प्रथमश्रेणीप्रात्याहिकप्रयाणानुज्ञापत्रमक्रैषम्। अनेकशो धूमशकट्या प्रथमश्रेण्यामहमेक एव स्थित इति मम कोऽप्यभिमानो जायते स्मेति स्मरामि। बान्द्राप्रदेशाच्चर्चगेटनिकेतनं प्रति निःसरन्तमभिचलन्त्या धूमशकट्या प्रयातुमिच्छुरनेकशः साताक्रूजस्थरेलस्थानकं पादचारेणागमम्॥

मम व्यवहारवृत्त्युपजीवनं निरीक्षितादप्यधिकतरसमृद्ध्युपेतमासीत् । दक्षिणाफ्रिकादेश्या मदीयव्यवहारिणो बहूनि कार्याणि मत्सविधे प्रैषयन् । एतानि मम जीविकासिद्धये पर्याप्नुवन् ॥

प्रधानन्यायसभायां चालनीयं कार्यमद्यापि मे नामिलत् । तथापि तत्र प्रचलता चर्चनीयविषयोपन्यासानां श्रवणाय मया गम्यते स्म । तत्र गोष्ठ्यां प्रवेष्टुं न मे धैर्यमासीत् । तत्र जमियतरामनानाभाईमहाशयः प्रमुखपात्रं वहति स्मेति मम ज्ञप्तिरस्ति । यथान्य उत्तरवादिनस्तथाहमपि व्यवहारगतिं दिदृक्षुर्न्यायसभामगमम् ॥

तत्र मया ज्ञानमर्जितुं न गम्यते स्म । परन्तु सागरादुपस्यन्दमानस्य सुखमनुत्पादयतो मन्दमारुतस्य सेवनेनानन्दमनुभवितुमिति वक्तव्यम् । ईदृक्सुखमनुभुञ्जानोऽहमेक एवैवंविधो वर्तमानो मम न लज्जा समजनि । एवं घूर्णमानेन तत्रोपवेशः कश्चिद्विलासो न तु लज्जाकर इत्यहमचिन्तयम् ॥

प्रधानन्यायस्थानस्य पुस्तकालयमुपयोक्तुमहं प्रवृत्तः इतरैर्बहुभिः परिचयं समपादयम् । अचिरेणैव प्रधानन्यायसभायां व्यवहारं चालयेयमित्याशा मे समजनि ॥

इत्थमेकतो न्यायवादिवृत्तिं प्रति निश्चिन्ते मय्यन्यतो गोखलेमहाशयस्य दृष्टिर्मयि जागर्ति स्म । स किल निरन्तरमाकाङ्क्षया यन्मया कर्तव्यं तस्यानुसन्धानपरोऽभवत् । प्रतिसप्ताहं द्विस्त्रिर्वा मम कार्यालयमागत्य मदीययोगक्षेमं पृच्छति स्म । कदाचिन्मित्रं सहागम्य तत्परिचयं मामकारयत् । स्वस्य कार्यनिर्वहणरीतिं च मामुपादिशत् ॥

किन्तु भविष्यं प्रति मया मनस्याकल्पितानां मनोरथानामेकस्यापि सिद्धिं मां भगवान् प्रापयेदिति वचनमयथार्थं न भवेत् । ते किल सर्वेऽपि तदिच्छानुरूपमेव पर्यणमन्त ॥

यावदहं तत्रैव स्थिरतया निश्चित्य स्वास्थ्यमनुभवन्नातिष्ठं तावद्दक्षिणाफ्रिकादेशादतर्कितमेवागमत्तन्त्रीसन्देशो यथा—"इह 'चेम्बरलेन' मन्त्री समागन्ता । एतत्क्षणमेव प्रस्थाय भवद्भिरागन्तव्यमिति" कृत्वा प्रतिज्ञामहं व्यस्मार्षम् । तथा च तन्त्रीप्रतिवचनं मया प्राहायि । यावत्पणं मां प्रापयिष्यथ तावदिति प्रस्थातुं सज्जस्थितोऽस्मीति । तत्क्षणमेव ते पणं प्राहैषुः । अथाहं कार्यालयं बद्धकवाटं निधाय दक्षिणाफ्रिकादेशमगमम् ॥

मदीयकार्यमन्यूनमेकवत्सरमपेक्षत इति मया गृह्यमकल्पयन् भार्यापत्यादिकुटुम्बं तत्रैवास्थापयम् ॥ ये तु स्वदेशेऽनासीनयोग्यवृत्तयः साहसिका युवकास्ते विदेशाः समाश्रयणीया इति तदानीं मदीयमतमासीत् । इदानीमप्यसौ तथैव वर्तते । तत्र पूर्वपद्धतिं विहाय विदेशगमने धीरमनसो ये युवकास्तेषामन्वेषणे ममासीदभिप्रायः । मम पित्रा बहवो राजकार्ययोगे प्रार्थ्यन्त । ते सर्वेऽप्येवंविधासेवावृत्तिरूपायाः मायायाः मोचयितव्या इति ममाशयोऽभूत् । वृत्त्यन्तरं प्रापयितुं मम सामर्थ्यमासीदिति न खलु मे विवक्षा । अथ स्वयमपि भर्तारं तदेवमते रोचते स्म । तं स्वावलम्बिभिर्भाव्यमिति हि ममाभिप्रायः ॥

यथा यथा ममादर्शाः सिद्धिपथमागतास्तथा तथाहमेतान् युगपन्नानामादर्शानपि यथाव-त्परिवर्तयितुमयतिषि । एतेषां भगवल्लब्धगाधौ मम यत्नो भूयसा साफल्यमगात् ॥

भार्यापत्यानां परित्यागं व्यवस्थितकुटुम्बस्य निमज्जनं निश्चितावस्थितिं विहायानिश्चितायामवस्थायां प्रवेश इत्येतत्सर्वं मां क्षणमात्रमव्यथयत् । किन्त्वहमनिश्चितजीवनाभ्यासे परिक्षुण्णोऽभवम् । अस्मिन् जगति तमेकं विना—स तावदीश्वर इति वा सत्यमिति वा व्यपदिश्यताम्—निश्चितस्वरूपं न किंचिदस्ति । इह निश्चितत्वप्रेप्सापि दोष एवेति मन्ये । अस्मास्वभितः परिदृश्यमानं प्रवर्तमानं च सर्वमप्यनिश्चितमनित्यं च । किन्तु सर्वान्तर्यामितया गूढं परमतत्वमेकं निश्चितरूपेण तिष्ठति । तत्प्रकाशस्य मयूखः एकस्मिन्नस्मदुपरि पतिते सति तत्रास्मदात्मनः समर्पणं कृत्वा जीवितसार्थक्यमाप्स्यामः । तस्य सत्यस्यान्वेषणमेव परमः पुरुषार्थः ॥

लण्डननगरमहं नियतकालादेकाहपूर्वमपि नासादयम् । तत्र यावदहं गतस्तावन्मां कार्यं प्रतीक्षते स्म । हिन्दुजनप्रतिनिधिभिर्श्चेम्बरलेनमहाशयस्य दर्शनाय दिवसात्प्रागेव स्थापितं तदग्रे यद्वाचयितव्यं तत्प्रार्थनापत्रं सज्जीकृत्य मया दर्शनार्थिभिः प्रतिनिधिभिः सह गन्तव्यमासीत् ॥

इति श्रीगान्धिमहात्मनः
सत्यशोधनाख्यायामात्मकथायां
तृतीयो भागः
समाप्तः

# कृतं सर्वं वृथां जातम्

चेम्बरलेनमहाशयो दक्षिणाफ्रिकादेशात्सुवर्णमुद्राणां सार्धकोटित्रयस्य दानं प्रतिगृह्य गन्तुमागतोऽभूत्। किं चाङ्ग्लेयानां सति समत्वे 'बोअर' जनानां च मनःसवननमपि तस्योद्देश्यमासीत्। अत एव हिन्दुजनप्रतिनिधयस्तस्माच्छुष्कमेव प्रतिवचनमलभन्त ॥

तेन किलैवं प्रत्यवाचि—

विदितमेव खल्विदं वो यत्स्वतन्त्रस्वास्थ्यानामुपरि साम्राज्याधिकृतानामधिकारो नाम नाममात्रत एवेति। युष्मदीयानि सङ्कटानि तावत्पारमार्थिकानि प्रतिभान्ति। यावच्छक्यमहं करिष्ये। किन्तु यूयं गौराङ्गानां मध्ये तिष्ठासवश्चेद्युष्माभिरमी यत्नतः परितोषणीया—इति ॥

प्रत्युत्तरमिदं सच प्रतिनिधीनां मुखेषु शीतोदकप्रक्षेप इवाचरत्। अहमपि निराशोऽभवम्। अनेनास्मत्तोऽबधो मोचितोऽभवत्। लक्षितं च मया यदादितः प्रभृति कार्यमिदं प्रारम्भणीयमिति ॥

चेम्बरलेनमहाशयस्य प्रतिवचने वा को दोषः। तेन हि यथास्थितमेव वस्तु वर्णितम्। तच्च न शोभनमेव वस्तु संवृत्तम्। बाहुबलमेव न्यायस्य मूलम्। अथवा दण्डकाष्ठस्य प्रयोग एव सर्वार्थसाधक इतीदं तत्त्वमसौ मधुरोक्तिभिरस्मद्बुद्धिगोचरमानयत् ॥

किंत्वस्माकं दण्डकाष्ठस्य लाभः कुतः सम्भवी। दण्डप्रहारसहनशक्तिरप्यस्माकं नासीत् ॥

दक्षिणाफ्रिकादेशे सप्ताहमात्रमेव स्थातव्यमिति चेम्बरलेनमहाशयेन निश्चितमासीत्। दक्षिणाफ्रिकादेशो नाम न खल्वल्पमितः प्रदेशः। स एको महान् विषयः। श्रीनगरात्कन्याकुमार्यां यथैकोनविंशतिपाषाणदूरं तर्हि 'डरबन' नगरात् 'केपटाउन' पत्तनमप्येकादशपाषाणदूरे वर्तते। तन्मध्यगतो विस्तारः सर्वोऽपि चेम्बरलेनमहाशयेन वायुवेगतः सञ्चरितव्य आसीत् ॥

असौ नातालदेशात् ट्रान्सवालदेशं प्रति प्रातिष्ठत। तत्काले मयापि तत्र गत्वा तत्रत्यानां भारतीयानां कृते तस्याग्रे भाषणं कर्तव्यमासीत्। किन्तु प्रिटोरियानगरं मया कथमासादनीयम्। तत्र सकालमुपस्थातुमावश्यकी या व्यवस्था तां निर्वोढुमशक्ता आसन्नस्मदीया जनाः। युद्धोत्तरकाले ट्रान्सवालदेशो निर्जनारण्यमिवादृश्यत। अशनवसनार्था सामग्री तत्र दुर्लभासीत्। युद्धकाले शून्यीकृतापिहितद्वारा वा निषद्यास्ता पुनरुद्घाटनीया आसन्। तदेतत्कार्यं तु कालक्रमेण निर्वर्तनीयं न पुनरेकदैव साध्यमासीत्। गृहादिकं परित्यज्य पलायितानामपि स्वस्वगृहप्रापणं तदापणेषु सम्भारप्रापणोत्तरमेव कर्तव्यमासीत्। अत एव ट्रान्सवालवासिना सर्वेणापि प्रतिस्वमेकैकमनुज्ञापत्रं सम्पादनीयमासीत्। तच्च गौराङ्गाः क्लेशं विनैवालभन्त। भारतीयानां तु तदतीव दुर्लभमासीत् ॥

यदेतेऽधिकारिण चेंबरलेनमहाशयेन मम संसर्ग निवारयितुमैच्छन्निति। विषादकार्यपि निर्वेदावहेयं कथा प्रकरणान्तरे निरूपणीया भवति॥

## द्वितीयोऽध्यायः

# एशियाखंडादागता निरङ्कुशाधिकारिणः

नवागतास्ता मुख्याधिकारिण कथमहं ट्रान्सवालदेशं प्रविष्ट इत्यस्य मर्म नावेदिषु। व्यवनि-धिमुपसर्पतो भारतीयानप्यपृच्छन्। किन्तु तत्सकाशाद्वारतयो वृत्तान्तस्तैर्नाधिगत। अतस्ते व्यतर्कयन्त – अनेन पूर्वपरिचयबलादनुज्ञापत्रमन्तरेणैव ट्रान्सवालदेशं प्रविष्टेन भाव्यमिति। उक्तस्यास्य सत्यत्वे सति नूनमहं व्यतिक्रमस्य कृते निरोद्धव्य स्याम्॥

महायुद्धावसानोत्तरं नियन्त्रमपि कालं राज्याधिकृतानामधिकारविशेषप्रदानप्रथा सर्वत्र प्रचरति। दक्षिणाफ्रिकादेशेऽप्येवमेव प्रवृत्तम्। शान्तिप्रतिष्ठापनाय राज्याधिकारेण कश्चिन्नियम प्रचारितोऽभूत्। तन्नियमानुरोधेन ट्रान्सवालदेशे येऽनुज्ञातप्रवेशास्तेऽवरुध्य बन्दिन क्रियेरन्। तथा चाहमासेद्धव्य इति चर्चा प्रवृत्ता। किन्त्वनुज्ञापत्रं दर्शयेति मां प्रष्टुं न कोऽपि धैर्यमकरोत्॥

अधिकारिभिस्तन्नामदेशं पूर्वमेव डरबननगरं प्रति प्रेषितम् आसीत्। किन्तु छद्मनाऽहम् एवाहमिति ज्ञात्वा भग्नाशा बभूवु। तथापि तानेव पराजयमङ्गीकर्तुं न तेऽरोचयन्त। यद्यप्यहं ट्रान्सवालदेशप्रदेशे जयमाप तथापि चेंबरलेनमहाशयस्य दर्शनान्मां वारयित्वा पराजितं कर्तुं शक्नुयुरिति॥

अत एव प्रतिनिधिमण्डलीकृत्य चेंबरलेनमहाशयस्य सविधे निगमिषूणां नामानि ते पूर्वमेवापृच्छन्। वर्णद्वेषो दक्षिणाफ्रिकादेशे यद्यपि सर्वत्र प्रत्यक्षीभवति स्म तथापि हिन्दुस्थानस्य कार्याधिकारिवर्गो नीचो गुप्तगतिमवलम्ब्य प्रवर्तत इति नाहमावेदयम्। दक्षिणाफ्रिकादेशे कार्यशाखा प्रजाक्षेमाय प्रतिष्ठापिताभूवन्। किं च लोकसत्तेन नेतृत्वामन्। अत एव तत्रत्यानामधिकारिणां वर्गे कापि सभ्यवृत्तिर्नम्रता च दृश्येते स्म। अनेन न केवलं गौराङ्गा अपि त्वन्येऽपि जना यथार्हतो लाभमापुः। एशियाखण्डागतैरधिकारिभिः सहैव तेषां निरङ्कुशाधिकारो निरङ्कुश प्रवृत्तश्चात्रापि पदमकुर्वन्। दक्षिणाफ्रिकादेशे प्रजाप्रतिनिधिप्रमुखाधिनिवेश कश्चिदासीत्। परन्त्वेशियाखण्डादागताधिकारिणां नम्रता केवलं निरङ्कुशप्रभुत्वम्। यदेशियावर्तिषु जनेषु नहि प्रजाप्रतिनिधिप्रभुत्वमासीत्। ते किल निर्दिष्टायां दृश्यन्ते स्म।

हिन्दुस्थानात् 'लङ्का'द्वीपाच्च युद्धाय दक्षिणाफ्रिकामागता अधिकारिणः सैनिकाश्च बहवोऽतिष्ठन्त। तेषु यश्च यश्च तत्रैव निवासग्रहणमरोचयत्तस्य तस्य तत्रैव निवासायाङ्ग्लाधिकारिभिः समुचिता व्यवस्था कर्तव्याभवत्। अधिकारिणां नवीनमण्डलमेकं तदानीमवश्यमेव प्रतिष्ठापयितव्यमासीत्। तदर्थमेषामनुभवशालिनामधिकारिणां सन्निधिः परमुपकारक एव सवृत्तः। तैश्च तीव्रबुद्धिबलेनैका नूतना कार्यनिर्वाहशाखैव निरमीयत। इदं तदीयचातुर्यमपि प्राकाशयत्। आसीत्किल 'नीग्रो'जनार्थं पूर्वमेवैका कार्यनिर्वाहशाखा। तस्मादेशियाखण्डवासिनामर्थेऽप्येतादृशेनकेन विभागेन कुतो न भाव्यम्। तर्कस्यास्य नासीत्कोऽपि प्रत्यवस्थाता। यावदहं तत्र प्राप्तस्तावदयं विभागो निर्मितः स्थितः। किं चायं स्वनाखुराः शनैः प्रकाशयति स्म। देशभ्रष्टेभ्यः पुनः स्वदेशे प्रवेशमिच्छद्भ्यो यैरधिकारिभिरनुज्ञा दीयते स्म तैरेव सर्वेभ्योऽपि निर्विशेषमनुज्ञाप्रदानं सुकरमासीत्। परन्तु नव्यशाखाया माध्यस्थ्यमन्तरेण कथमेते 'एशिया'वासिभ्योऽनुज्ञां दातुं शक्नुयुः। नव्यशाखया कृतस्य प्रशस्तिवचनस्य बलादनुज्ञा यदि दीयेत तदा स्वेषामनुयोज्यता स्वल्पी भवेत्। कार्यं च लघु संपद्येतेति हि तैर्निर्णीतम्। भूतार्थस्त्वयम्। नव्यशाखायाः किल यत्किमपि कार्यमावश्यकम्। तच्छाखाप्रविष्टानामपि द्रव्यमावश्यकम्। कार्याभावे तु निरर्थकोऽयं विभाग इत्यामविनाशः संभवेत्। अत एव तच्छाखीयाः स्वकार्यं स्वयमेवैतेषमकल्पयन्॥

अनुज्ञाप्राप्तये भारतीयैः सैवा शाखा प्रार्थनीयाभवत्। प्रार्थनापत्रस्य तु बहोः कालादुत्तरमायाति स्म। ट्रान्सवालदेशं प्रति जिगमिषूणां संख्या महत्यासीत्। अतो माध्यस्थ्यकारिणां संघ एकः समुद्भूयाधिकारिवर्गमनुप्रविश्य दीनभारतीयेभ्यः परःसहस्ररूप्यकान् लुण्ठयन्ति स्म। प्रशस्तिं विनानुज्ञापत्रस्य दुर्लभत्वं कदाचित्सत्यामपि प्रशस्तौ परःशतानां सुवर्णमुद्राणामवश्यप्रदेयत्वं च मामचकथन्। एवं स्थिते कार्यगतिः सर्वतः प्रतिबद्धालक्ष्यत॥

अथाहं मदीयपूर्वमित्रं रक्षिजनपर्यवेक्षकमुपसृत्य व्यजिज्ञपम्—अनुज्ञाप्रदातॄणामधिकारिणां परिचयं मे संपाद्य मह्यमेकमनुज्ञापत्रं दापयितुमर्हन्ति भवन्तः। विदितमेव भवता यदहं ट्रान्सवालदेशे स्थितपूर्वो जन इति। तत्क्षणमेवासौ शिरसि शीर्षकं निधाय मया सह प्रस्थितो मह्यमनुज्ञापत्रमदापयत्। धूमशकटीप्रस्थानात्पूर्वमेकहोरावकाशोऽपि नालभ्यत। किंचाहं प्राक्स्थानिकः पूर्वमेव सज्जीकृत्य स्थितः। अथाहं रक्षिपर्यवेक्षकाय मदीयकृतज्ञतां निवेद्य प्रिटोरियानगरं प्रास्थिषि॥

अचिरान्नमासिकः क्लेशास्तदानीं मे स्पष्टतया बुद्धिगोचरमवतीर्णाः प्रिटोरियानगरं प्राप्य प्रार्थनापत्रमेकमलेखिषम्। चार्ल्सटाउननगरे भारतीयैः स्वप्रतिनिधीनां नामानि पूर्वमेव निवेदयितव्यानीति विद्यमानं कमपि नियमं नाहं स्मरामि। तथाप्यत्र नवीनशाखा स्वकार्यं निवहन्ती पूर्वमेव प्रतिनिधीनां नामानि व्यचारयत्। प्रिटोरियावर्तिनां भारतीयानां प्रागेव विदितमासीत

यदेतेऽधिकारिण चेंबरलेनमहाशयेन मम सर्गं निवारयितुमैच्छन्निति। विषादकार्यपि विनोदावहेय कथा प्रकरणान्तरे निरूपणीया भवति॥

द्वितीयोऽध्यायः

## एशियाखंडादागता निरङ्कुशाधिकारिणः

नवशाखाया मुख्याधिकारिण कथमहं ट्रान्सवालदेशं प्रविष्ट इत्यस्य मर्म नाविदिषु। स्वसन्निधिमुपसर्पतो भारतीयानप्यपृच्छन्। किन्तु तत्सकाशाद्वास्तवो वृत्तान्तस्तैर्नागत। अतस्ते व्यतर्कयन्त—अनेन पूर्वपरिचयबलादनुज्ञापत्रमन्तरेणैव ट्रान्सवालदेशं प्रविष्टेन भाव्यमिति। उहस्याम्य सत्यत्वे सति नूनमहं व्यतिक्रमस्य कृते निरोद्धव्य स्याम्॥

महायुद्धावसानोत्तर कियन्तमपि काल राज्याधिकृतानाम् अधिकारविशेषप्रदानसंप्रदाय सर्वत्र प्रचरति। दक्षिणाफ्रिकादेशेऽप्येवमेव सवृत्तम्। शान्तिप्रतिष्ठापनाय राज्याधिकारेण कश्चिन्नियम प्रचारितोऽभूत्। तन्नियमानुरोधेन ट्रान्सवालदेशे येऽननुज्ञातप्रवेशास्तेऽवष्टभ्य बंदिन क्रियेरन्। तथा चाहमासेद्धव्य इति चर्चा प्रवृत्ता। किन्त्वनुज्ञापत्र दर्शयेति मां प्रष्टुं न कोऽपि धैर्यमकरोत्॥

अधिकारिभिस्तन्त्रीसदेशं पूर्वमेव डरबननगरं प्रति प्रेषित आसीत्। किन्तु ढरबानुज्ञ एवाहमिति ज्ञात्वा भग्नाशा बभूवु। तथापि तावतैव पराजयमङ्गीकर्तुं न तेऽरोचयन्त। यद्यप्यहं ट्रान्सवालदेशप्रदेशे जयमाप तथापि चेंबरलेनमहाशयस्य दर्शनात् मां वारयित्वा पराजितं कर्तुं शक्नुयु किल॥

अत एव प्रतिनिधित्वमङ्गीकृत्य चेंबरलेनमहाशयस्य सन्निधिं जिगमिषूणां नामानि ते पूर्वमेवापृच्छन्। वर्णद्वेषो दक्षिणाफ्रिकादेशे यद्यपि सर्वत प्रत्यक्षीभवति स्म तथापि हिन्दुस्थाने इवात्राप्यधिकारिवर्गो नीचां गुप्तवृत्तिमवलम्ब्य प्रवर्तेत इति नाहमाकलयम्। दक्षिणाफ्रिकादेशे कार्यशाखा प्रजाक्षेमाय प्रतिष्ठापिताभूवन्। किं च लोकमतेन नेतव्यासन्। अत एव तत्रत्यानामधिकारिणां वर्गे कापि सभ्यवृत्तिर्नम्रता च दृश्येते स्म। अनेन न केवल गौरांगा अपि त्वन्येऽपि जना यथार्हतो लाभमापुवन्। एशियाखंडादागतैरधिकारिभि सहैव तेषां निरङ्कुशाधिकारो विशृङ्खल प्रवृत्तयश्चात्रापि पदमकुर्वन्। दक्षिणाफ्रिकादेशे प्रजाप्रतिनिधिप्रभुत्वविशेष कश्चिदासीत्। परन्त्वेशियाखण्डादर्मीमिलाजीन नमार केवल निरङ्कुशप्रभुत्वमेव। यदेशियावर्तिषु जनेषु नहि प्रजाप्रतिनिधिप्रभुत्वमासीत्। ते किल विदेशीयैः शास्यन्ते स्म।

दक्षिणाफ्रिकावर्तिनो ये गौराङ्गास्ते देशान्तरादागत्य तत्र बद्धस्थितयोजना । ते च तस्य देशस्य प्रजा भूत्वा राजकीयानधिकारिणो नियमयन्ति स्म । यदा पुनरेशियाखण्डान्निरङ्कुशप्रभव आगत्य स्वागमनेन देशमन्वगृह्णस्तदाप्रभृति भारतीयाना स्थितिरेकतो भूसर्पस्यान्यतो जलनरस्य च मध्ये क्लिश्यतो मद्भागस्योभयसङ्कटग्रस्ततामनुहरति ॥

अस्य निरङ्कुशवर्तनस्य प्रभावो यथाश मामप्याक्रमीत् । मया पूर्वं तच्छाखामुख्याधिकारी (अय लङ्काद्वीपादागत ) द्रष्टव्य इत्याज्ञा प्रावर्तत । आज्ञेति यत्पद मया प्रयुक्त तदुप्रेक्षात्वेन मा स्म ग्राहीति प्रकृतमर्थ इतोऽपि स्पष्टतरमभिधास्ये । आज्ञा तावत्पत्रमारोप्य न मे प्रेपिताभूत् । भारतीयप्रमुखैरेतच्छाखाधिकारिणा दर्शनमसकृत् क्रियते स्म । तेषु तैयब-हाजी खानमहमद-शेठ महाशयोऽप्येक । मामुद्दिश्य शाखामुख्याधिकारी तमपृच्छत्—कोऽयम् । किं निमित्त मिहागत इति ॥

तैयबशेठ प्राह—अयमस्मदीयो मन्त्रालोचक । अस्माभिराहूतत्वादिहागतो भवतीति ॥

अथ पुन स प्रभुरपृच्छत् । यद्येव तर्हि किमर्थमेते वयमत्र स्थिता । ननु युष्मद्रक्षणायैव वय नियोजिता स्म । अत्रत्या स्थितिगतीर्गान्धि किं वा जानीयादिति ॥

तैयबशेठमहाशयश्चास्याक्षेपस्य यथावत्समाधायक प्रत्युत्तरमदाद्यथा —भवन्तस्तावन्नूनमत्र-स्थिता । तथापि गान्धिरस्मदीय । जानात्ययमस्मदीया भाषाम् । जानात्यस्मदीय मन । भवन्त स्तावदधिकारवर्गे प्रतिष्ठा इति । आनीयतामयमस्मत्समक्षमित्यधिकारी तैयबशेठमहाशयमाज्ञापयत् । तैयबशेठमहाशयेनेतरैश्च साकमह तत्समीपमगमम् । उपविश्यतामित्यपि नास्मानयमवादीत् । वय सर्वेऽपि स्थिता एव ॥

इह ▪ किमर्थमागतोऽसीति स प्रभुर्मामपृच्छत् । तदाहमवोचम्—मदीयैर्भारतीयै सहोदरैराहूत सन् तेभ्य धर्म्यमतिप्रदर्शनपूर्वक साहाय्य चिकीर्षुरिहागतोऽस्मीति ॥

अथासौ मामकथयत्—ननु त्वमिहाग तुमनधिकारीति किं न वेत्सि । तव प्रदत्त मनुज्ञापत्रमदेयमपि बुद्धिदोषात्प्रदत्त भवति । त्वमत्रत्यो भारतीय इति गणयितु न शक्यते । त्वया परावर्तितव्यम् । त्वया चैम्बरलेनमहोदयो न द्रष्टव्य । भारतीयाना रक्षणार्थमेवैशियाशाखात्र प्रतिष्ठापिता भवति । स्वस्ति गम्यता तर्हीति । एव ब्रुवाण प्रत्युत्तरस्याप्यनवकाशमदत्त्वा मा व्यसर्जयत् । मत्सहगन्तास्तु स्थापयित्वा वचनतानुपालम्भ्य सर्वथा परावर्त्यतामयमित्यबोधयत् ॥

अथोमुखास्ते प्रतिन्यवृत्तन् । इत्थमस्मानतर्कितैका घटना समुपानमत् ॥

## तृतीयोऽध्यायः

# अपमाननिगिरणम्

अनेनापमानेन परमहं दुःखितोऽभवम्। किन्तु तादृशापमानस्य पूर्वमसकृदन्यथा निर्गीर्णत्वात्सहनमिदानीमभ्यासवशात्सुकरमासीत्। अतस्तदनेनं निर्गीर्य प्रसङ्गेऽस्मिन्नपक्ष-पातरूपया नृपस्थाने कर्तव्यमार्गमनुसरेयमिति निश्चयमकार्षम् ॥

पूर्वोक्तसन्निवारणः सकाशादेकं पत्रमभ्यागमत्। तत्रैवं लिखितमासीद्यथा—आर्येण गांधिना पूर्वमेव डर्बननगरे दृष्टः सनः प्रतिनिधीनां श्रेण्यास्तत्समयेऽप्यवश्यं निष्कासनीयं मन्यामह इति ॥

पत्रमिदं मदीयसहचराणां दुःसहमासीत्। प्रतिनिधयो नैव प्रेषणीया इत्यमी स्वाभिप्राय-मवदन्। तदनु मयास्मदीयजनानां कष्टं परिस्थितेस्तेभ्य उपावर्णि। अथ च प्रावोचम्—यदि यूयं चेम्बरलेनमहाशयं न द्रक्ष्यथ तदात्र युष्माकं न किमपि कष्टं विद्यत इत्यसौ मन्येत। अपि च यावद्विवक्षितं तावल्लिखित्वैव प्रदातव्यम्। तच्च सज्जास्थितमेव। तदेतन्मया किं पठितव्यमन्येन वेत्ययं विचारो न मुख्यः। चेम्बरलेनमहाशयस्तावद्विषयमिमं सहास्माभिर्न चर्चयिष्यते। मद्विषयोऽपमानः सोढव्योऽस्माभिरिति मे प्रतिभातीति ॥

असमाप्तवचन एव मयि तैयबजीमहाशयोऽब्रवीत्। ननु भवद्विषयोऽपमानः सर्वेषां नः समान एव। भवानस्मत्प्रतिनिधिरिति कथं वा विस्मरणीयमिति ॥

अहमवोचम्—भवद्भिरुक्तं संगतमेव। किन्तु तादृशोऽपमानोऽस्मत्पक्षीयैरपि निगरीतव्यः। नन्वत्र किमुपायान्तरमस्तीति ॥

अथ तैयबशेठमहाशयोऽपृच्छत्। यद्भवतु बोधं बोधं कुतोऽस्माभिः स्वयमेवाभ्यपमानो भूयः पातयितव्यः। अस्मदीया परिस्थितिरन्यथापेक्षया निकृष्टतरा न खलु संपद्येत। अधिकारस्तावत्को वास्माकमिदानीं विद्यते यस्यापहारं वयं शङ्केमहीति ॥

आवेशपूरितमिदमुत्तरं मे संमतमासीत्। किन्त्वेतदकिंचित्करमिदानीमिति च मया सम्यग्ज्ञातम्। अस्मदीयपक्षस्य योग्यतापरिमितिः किल मे सम्यगनुभवसिद्धा। अतोऽहं सुहृदः समाधाय मदीयस्थाने जॉर्जगॉडफ्रेमहाशयो नेतव्य इत्यसूचयम्। जॉर्जगॉडफ्रेमहा-शयस्तावदेको भारतीयब्यारिस्टरमहाशयः ॥

गॉडफ्रेमहाशयः प्रतिनिधीनामग्रेसरो भूत्वा चेम्बरलेनमहाशयस्य संनिधिमगमत्। प्रति-वचनप्रसंगे चेम्बरलेनमहाशयो मद्विषयकं प्रवेशनिषेधमधिकृत्य एवं किल बभाषे—वारंवारं एकस्यैव प्रतिनिधेः परिग्रहापेक्षया नवनवैर्जनैः समागमः प्रशस्तः किलेति। एवमादिभिर्गीर्भिर्मद्-दपमानक्षतसंतापं शमयितुमसौ यत्नमकरोत्। किन्त्वेतेनास्मत्समाजस्य मम च कार्यं न तावत्समाप्तं परमितोऽप्यधिकमजनि। यतः पुनरादितः प्रारंभणीयमासीत् ॥

भवदाज्ञानुरोधेनैव अस्मदीयजना युद्धे साहाय्यं चक्रुः। इदानीं परीक्ष्यमाणे तस्य परिणामोऽयं किल जातः। एवं रीत्या मां कतिपये निनिन्दुः। परन्तु मामेतन्नैवास्पृशत्। तत्कृते नाहमिदानीं विषीदामि। युद्धे मेलनाद्वयं साधु कृत्यमकार्ष्मेत्यधापि साधयामि। तेनास्माभिरस्मत्कर्तव्यं कृतं न किञ्चिदन्यत्। अस्मत्कार्यफललाभेन खलु प्रत्याशा धारणीया। किन्तु सत्कार्यस्य फलं सदैव जायत इत्यस्ति मे दृढः प्रत्ययः। अपि च व्यतीतविषयाणामालोचनापेक्षया भाविकर्तव्यं किमित्यालोचयितुमावश्यकं भवति। तस्मादागम्यताम्। एतद्विचारमेवालोचयाम इत्यहमब्रोचम्॥

अस्य सर्वेऽपि स्वसंमतिं ददुः। अहं पुनरुक्तवान् यथा—सम्यक्परिदृश्यमाने यत्कार्यमुपदिश्य यूयं मामिहाहूतवन्तः तत्कार्यमिदानीमवसितमित्येव वक्तव्यम्। किन्तु यूयं ममाज्ञादायिनोऽपि यावच्छक्यमहं ट्रान्सवालपत्तनं परित्यज्य न गन्तव्यमिति विश्वसिमि। इतः परं मया मदीयकार्यं नातालपेक्षयेत एव चालनीयम्। हिन्दुस्थानं प्रति वर्षाभ्यन्तरे निवर्तनविचारं परित्यज्यात्रैव न्यायवादिकार्यं वर्तुमनुज्ञापत्रमधिगन्तुं प्रयतितव्यम्। एतां नवीनसंस्थां प्रतिभटीकर्तुं श्रद्धा ममास्त्येव। यद्यस्माभिर्न प्रत्यवस्थीयेत तदास्मदीयजनानितो निष्कासयेतापि च लुंठयेत। प्रतिदिनमस्मदीयसमाजस्यजनानां नवं नवमपमानं प्राप्य तत्परिस्थितिरितोऽपि हीयते। चेंबरलेनमहाशयस्य मा द्रष्टुं निराकृतिस्तदधिकारिणा कृतो ममापमान एतत्संबन्धे भाविनोऽपमानस्याग्रतः। गौरांगानामिच्छानुरोधेन श्वानं हेयजीवनं सोढुमशक्यमिति॥

इत्यनहं कथाकारं वर्तुं प्रारभ्य प्रिटोरिया-जोहानिसबर्गप्रदेशयोर्मुख्यमुख्यभारतीयैः सह चर्चयित्वा पर्यन्ते जोहानिसबर्गनगरे कार्यालयं प्रतिष्ठापयितुं निश्चयमकार्षम्॥

ट्रान्सवालदेशे न्यायवादिकार्यार्थेऽनुज्ञापत्रप्राप्तिः संशयिताभूत्। किन्तु तत्रत्या न्यायवादिमंडली मम प्रार्थनपत्रिकां न प्रत्यवातिष्ठत। तत्रत्यं मुख्यन्यायस्थानं ममानुज्ञां ददौ। भारतीयस्य कार्यालयस्थापनार्थे साधुप्रदेशे मंदिराधिगमोऽपि दुर्लभ आसीत्। श्री. रीचमहाशयस्तत्र वणिग्वर्तमानो मम सम्यक् परिचित आसीत्। तस्य परिचितस्य वस्तुविक्रयव्यापकस्य साहाय्येन मध्यप्रदेशे मन्दिरमेकं मम कार्यालयार्थे संप्राप्य न्यायवादिकार्यं मया प्रारब्धमासीत्॥

एतावत्पर्यन्त मय्यमितव्यय मनीर्ण आसीत्। यत्किंचिद्भविष्यलाभे दृष्टिं रक्षित्वा सोऽभिलाषो मन्दीकृतोऽभूत्। परमार्थेन सह स्वार्थोऽपि मिलितोऽभूत्। मोहमयीनगरे यदाह कार्यालय प्रतिष्ठाय स्थितवान् तदामेरिकादेशात् सौम्यदृष्टि साधुजिह्वश्चैक 'इन्श्युरन्स एजन्ट' पुरुष समागतोऽभूत्। पुराण सुहृदिव मया सह मामिनं योगक्षेम विचारितवान्। अमेरिका-निवासिनो भवादृशा सर्वे जीवितरक्षार्थं यत्नमकार्षु। भवानपि भविष्यदृष्ट्या रक्षा कर्तुं युज्यते खलु। विनश्वरमिद जीवितम्। अमेरिकादेश सर्वोऽपि भविष्यरक्षा स्वधर्मं मन्यते। भवानप्येक-मल्प रक्षापत्र ग्रहीतु योग्य एव॥

अद्यपर्यन्त दक्षिणाफ्रिकाहिन्दुस्थानयोर्ये 'इन्श्युरन्स एजेंट' नामका मया दृष्टास्तेष्वह-मुदासीनप्राय समभवम्। यत 'इन्श्युरेन्स' नाम मम भगवदविश्वास इत्यमसि। किन्तु साम्प्रत अमेरिका 'एजन्ट'स्य प्रेरणया वशीकृत पर्यालोचय यथा—मम मानस्या दृष्टौ भार्या-पुत्राणा चित्र प्रादुरासीत्। आत्मानमवोचम्—मानवभार्याया सर्वाणि भूषणानि विक्रीतवानसि। यदि निश्चित्त समवेतस्या पुत्राणा च सरक्षणभारस्तव भ्रातुरुपरि पतिष्यति। स गच्छ पितृ-स्थानमास्थाय स्थित। मयस्त्र कथमेतत्तयोपरि स्यात्। एभिरामानुवादप्रवादैरात्मान समाश्वास्य दशसाहस्ररूप्यकाणा पत्रमेकमग्रहीषम्॥

बल ददौ। रीचमहाशय स्वय भागवत आसीत्। स खलु मा जोहनिसबर्गप्रदेशीयभागवत-सघेन परिचितिमकारयत्। किन्तु तत्राह साधिको नाभव यतो ममाभिप्राया भिन्नभिन्ना आसन्। परन्तु मे प्राय समस्तभागवतजनै सपर्को लब्ध। प्रतिदिन तै सह धर्मविषय प्रति विचारो मे प्रवृत्त। भागवता स्वग्रन्था-पठन्ति स्म। कदाचिन्ममापि सभाया भाषण कर्तुमवसर समजनि। परस्परभ्रातृभावमास्थाय तस्य सवृद्धिकरणमेव भागवतधर्मस्य मुख्यो विषय। एतदुद्देश्य बहवो विचारा कृता। साधिकाना मन स्वधर्मप्रतिकूलमदृश्यत यदा तदाह साधिकाना दोषानुदधाव्यम्। एतच सफलमासीत्। यन स्वामविचारे तन्मन समाचकर्षत्॥

पञ्चमोऽध्यायः

# आत्मविचारफलम्

त्रिनवत्यधिकाष्टादशशतमिते (१८९३) वत्सरे क्रिस्तमतानुयायिना सुहृज्जनेन सह परमसख्योपसपर्को यदागतस्तदाह केवलनूतन आसम्। ते सर्वेऽपि क्रैस्तमतमवलवयितु मा बहुधा प्रायतन्त। मया तावत्सर्व विनीततया गौरवेण च विश्रुतमासीत्। तस्मिन्काले यावच्छक्य हिन्दुमत परिशीलयन्नितरेषा धर्मानवगन्तु यत्नमकार्षम्॥

त्र्यधिकोत्तरोनविंशतिशतमिते (१९०३) वत्सरे परिस्थितिर्भिन्नाभूत्। भागवतमित्राणि निश्चित मा स्वमतान्तराक्रष्टुमयतन्त। किन्तु हिन्दुमतस्थान्मत्सकाशाद्यत्किंचित्सपादयितु तथाकुर्वन्। भागवतधर्मसाहित्ये हिन्दुधर्मविषया सपूर्णा सन्ति। अत एवैतेऽमन्यन्तोपयुक्तोऽह भवेयमेतेषामिति। अह स्पष्टमवोचम्—सस्कृताभ्यासो ममाल्प। हिन्दुमूलग्रन्थानह नापठिषम्। तेषा भाषान्तरावलोकनमप्यल्पिष्टमिति। पूर्वसस्कारेषु पुनर्जन्मनि च श्रद्धालवस्ते। यत्किंचित्सा-हाय्य मत्तो भवेदिति तेषा विश्वास। अल्पमत्याना मध्येऽहमेक सामुद्रिको देवोऽस्मीत्यभावयम्। एभिर्मित्रै सह स्वामिविवेकानन्दस्य राजयोग पठितु 'एम. एम. द्विवेदि' महाशयस्य राजयोगमन्यै सह पठितु च प्रारब्धवान्। पातञ्जलयोगसूत्रमेकेन भगवद्गीता चान्यै सह पठितुमुद्युक्तवान्॥

वयमन्वेषकसमिर्ति विधाय तत्र पठनानि क्रमेणाकार्ष्म। गीताग्रन्थ पूर्वमेक समाकर्षति स्म। आसीदत्र मे महती श्रद्धा। इदानीं तत्र निमज्जनमावश्यकमिति मे विदितमासीत्। मन्निकटे एकद्विभाषान्तराण्यासन्। यान्याश्रित्य मूलसस्कृतार्थमवगन्तुमैच्छम्। प्रयत्नेन द्वौ वा श्लोकावन्कण्ठे वर्तुमुद्युक्तवान्। एतदर्थ प्रात स्नानादिकस्य वेलामुपयोजित-

वान् । दंतधावनाय पंचदशनिमेषाः स्नानाय विंशतिरिति पंचत्रिंशन्निमेषकाल अस्त्यागारे नियतात् । पूर्वोत्तरं कार्यं पाश्चात्यरीत्या स्थित्वा कृतम् । अग्रेतनायां भित्तौ गीताश्लोका लिखिता आसन् । मम ज्ञापकमतिमुत्तेजयितुं तानपठम् । प्रात्याहिकं शिक्षाविभाग बुद्धिनाऽन्य शिक्षितश्लोकानामावर्तयितुमेतावान्कालः पर्याप्तोऽभूत् । इत्थं त्रयोदशाध्यायाः कण्ठे कृता इति स्मरामि ॥

किन्तु कार्यान्तरेण गीताशिक्षा व्यत्याप्यासीत् । सत्याग्रहनिर्माणं तत्पोषणं च सर्वकाल-मग्रहीन्मम प्रवृत्तिम् । द्वितीयमद्यापि चलत्येव ॥

किं फलमेव गीतापाठो मित्रगणमदादिति त एव वक्तुं समर्थाः । मम तावदेषा गीता निर्दोषनीतिमार्गशिक्षणी प्रात्याहिकशब्दकोशश्च । यथा यथाऽज्ञानशब्दानामर्थविज्ञानायाङ्ग्लशब्दकोशं पश्यामि तथा तथा सर्वक्लेशसंकटानां परिहारायेमां नीतिमार्गप्रदर्शिनीमवलोकये ॥

अपरिग्रहसमभावरूपाः शब्दाः मे मनसि निरूढिमागताः । कथमीदृशः समभावोऽनु-सरणीयः । कथं च रक्षणीय इति प्रश्नः प्रत्युत्तरणीयः । कथं निन्दकाः शोचका धनप्रदीनारश्च पुरा सहकारिणो भूत्वेदानीं पुनर्निरर्थकप्रतिरोधकर्तारश्च सर्वदा साधवः पुरुषाश्चैते सर्वेऽपि कथं समभावेन गणनीयाः । कथं वा सर्वस्वपरित्यागः क्रियेत । न किं देह एवात्मनः स्वं भवति । भार्या पुत्राश्च न किं स्वं भवन्ति । मत्समीपस्थितपुस्तककोष्ठागाराणि किं सर्वाणि विनाशनीयानि । मदीयमखिलं परित्यज्य स भगवाननुगन्तव्यः । अस्य प्रत्युत्तरमेवं तदा स्फुरति । मम सर्वस्यापि परित्यागं विना तमनुसर्तुं शक्यम् । आङ्ग्लन्यायशास्त्राभ्यासो मम साहाय्यमदात् । स्नेलमहाशयस्य न्यायचर्चा मम मानसमागता । 'ट्रस्टी'पदस्यार्थं गीतावचनैः प्रकाशितं पूर्वापेक्षया स्पष्टतरमज्ञासिषम् । आङ्ग्लन्यायशास्त्रे मम गौरवं प्रवृद्धम् । तस्मिन् निज धर्मतत्त्वमलोकयम् । गीतास्थापरिग्रहो नाम 'ट्रस्टी'वद्वर्तनम् । मोक्षकामिनस्तथा भवेयुः । यद्यपि 'ट्रस्टी' सर्वपदार्थान्स्ववशे स्थापयति तथा च नियमाननुसृत्य पालयति किं तु तत्र न किंचिदपि स्वकीयं मन्यते । अपरिग्रहसमभावौ हृदयपरिवर्तनं मनःपरिशोधनं च पूर्ववर्तिनौ स्त इति दिनप्रकाश इव मे स्पष्टमासीत् । रेवाशंकरमहाशयाय प्रत्यलिखं यज्जीवितरक्षापत्रमस्त्वनु । यत्किंचिदपि प्राप्यं यदि लभ्यतां नो चेत्तद्दत्तं धनं नष्टं मन्येमहि यतो मदीयभार्यापुत्रान्योऽसृजत् स एवाभ्यरक्षणं करिष्यतीति । पितृस्थानस्थितं भ्रातरं प्रत्यलिखं यावदन्तिमक्षणपर्यन्तं संपादितमभूत् तावन्मया सर्वं तवार्पितम् । इतः परं किंचिदपि प्रदेयं नैव स्यात् । यतो भविष्यत्काले यदि तावद्भवेयुस्तानि जनताकार्याय प्रदेयानि । भ्रातरं प्रति मेऽभिप्रायं दृढीकर्तुं नाशकम् । स किल परुषया वाचा स्वं प्रति मम कर्तव्यमबोधयत् । यथास्मत्पितुरपेक्षया बुद्धिमत्तरमात्मानं नैव मन्येत । मंत्र... स्वं कुर्याः । यथास्मत्पिता करोति स्म तथैवाहं कुटुंबरक्षणं

करिष्यामि । कुटुम्बशब्दस्यार्थविस्तर कर्तव्य । तदा मया कृतस्य कर्मणा बुद्धिमत्त्व स्पष्टीभविष्यति ॥

भ्राता मा पर्यन्यजत् । पत्रव्यवहारानवर्जयत् । अह निनरा निषण्णोऽभवम् । किन्चिद मे कर्तव्यमिति निश्चित्य प्रवर्ते । तत्परित्यागाद्द्विगुणतर विषादमकरिष्यत् । किन्त्वह तावत्स्वल्पतरमङ्गीकृतवान् । तथापि मे भक्तिस्तस्मिन्निर्मिता सातिशया च दिधना । तस्य सकटस्य मयि तस्य महती प्रीतिरेव मूलम् । मम धने तावदसा नैच्छत् । किन्तु कुटुम्बस्य ममाचारेण साधुना भवितव्यमित्येतावदेव । तस्य जीवितान्ते ममाभिप्राय युक्त मन्यानो मृतप्राय शयानो मयाकृतमेव समुचितमिति विदित्वा करुणापूर्णमेक मम लेखमलिखत् । पिता चेत्पुत्र क्षमा मार्गेत् मार्गतु । तथाप्यय स्वपुत्रान्मत्सरक्षणीयान्कृत्वा यथा मे रोचेत तथा तान् शिक्षयितुमिच्छामीत्युक्त्वातिशीघ्रमेव मा द्रष्टुमिच्छामीत्यवदत् । दक्षिणाफ्रिकादेशमागन्तुमिच्छामीत्य लिखत् । आगम्यतामित्यह प्रतिवचनमदाम् । तथाप्येतन्न हि सम्भवि स्यात् । तस्य पुत्रविषयिणीच्छापि पूर्ति नागच्छत् । यतस्तेषा व्यवहारा पुराणास्तेषा जीवनक्रमो विलक्षणश्च । तानह मत्पार्श्वमाक्रष्टु नाशकम् । नाय तदीयो दोष । स्वकीयप्रकृतेरुद्गम प्रति एतावदेव दूर नात परमिति को वा वक्तु शक्नुयात् । जन्मन्यागतान्पूर्वसंस्कारान्विलोपितु क समर्थ । एकपुरुषस्य पुत्रा इतरे रक्षणीयाश्च तस्य पुरुषस्य मार्गानवश्यमनलबत इति को वा निरीक्षेत ॥

एतत्खलु प्रदर्शयति क्रियानियमपरतन्त्र पितृस्थानमिति ॥

षष्ठोऽध्यायः

# शाकीययत्नः

यथा यथा यज्ञप्रसाद सरल्ता च मम प्रात्याहिकजीवने स्वानुभवमागता यथा च धार्मिकी बुद्धिरुत्तेजिताभूत् तथा तथा सर्वजनोपयोगी शाकाभिलाषो वर्धमान आसीत् । जानाम्यहमे-वग्रामेव केवल ज्ञानोत्पादनरीतिं स्वयमेव वा ज्ञानान्वेषणै सह वा ॥

जोहानिसबर्गप्रदेशे शाकाहारिणा भोजनालय वयुनीमहाशयस्य जलचिकित्साया बद्धश्रद्धेन वेनचिज्जर्मनपुरुषेण सचाल्यते स्म । भोजनालयमहमेव गत्वा कैश्चिदाङ्ग्लमित्रै सह साहाय्यमकार्षम् । किन्त्विद मे विदितमासीद्यदय सर्वदा द्रव्यसकटे पतितश्चिर न जीवेदिति । यावदह तस्य साहाय्ना प्रतिपाद्य किंचिद्धनमपि तदर्थं व्ययीकृतवान् । किंतु पर्यन्ते स विनष्टव्यापार सजात ॥

भागवता 'थियोसोफिस्ट'मतानुयायिन सर्वे प्राय शाकाहारिण । तत्सधीया महोत्साहशालिनी काचित् स्त्री शाकाहारिणा भोजनालयमस्थापयत् । तस्या कलाप्रीतिरासीत् । सातिव्ययकारिणी आयव्ययनियमेषु मुग्धा । सा प्रारम्भे स्वल्पेपणा स्थिता । पश्चात्प्रकोष्ठान्महतो गृहीत्वा वहुलीकर्तुमिच्छन्ती साहाय्यार्थं मामपृच्छत् । समीपमागताया आयव्ययविचार न किंचिदहमज्ञासिषम् । तदीयगणना प्राय समीचीना भवेदिति विभाव्य तस्या साहाय्य कर्तुमुद्युक्त इवासम् । मम व्यावहारिका मे समीपे द्रव्यराशीन्निक्षिपन्ति स्म । तेषामेकस्य समतिं लब्ध्वा एकसहस्रपौण्डमित द्रव्य तदीयत्वेन प्रादाम् । सोऽय मे व्यवहारो महोदार श्रद्धालुश्च । दक्षिणाफ्रिकादेशं पुरा कर्मकरो भूत्वागत । तेनोक्त दीयता धनम् । एतद्विषये न किंचिदह जानामीति । जानाम्यह भवन्तमेकमेव । तन्नाम 'वद्री'ति । पश्चादय सयाग्रहे मुख्य भागमूढ्वा कारागारेष्ववसत् । अतोऽहमेवमहस्तदान एवा समति पर्याप्तमिति मत्वा प्रादाम् ॥

द्वित्रमासाभ्यन्तरे ज्ञातमासीद्दत्त धन पुनर्नागच्छतीति । एतावन्नष्ट सोढुमह न शक्त । एतद्धन व्ययीकर्तुमाम महला उद्देशा । उद्धारद्रव्य नैव पुनरागतम् । कथ श्रद्धालुर्वद्रीमहाशयो नष्ट सहेत । मामेकमेव जानाति । अतस्तस्मा अहमेव दत्तवान् । एतद्व्यवहारमुद्दिश्य निवेदित कश्चन सुहृन्मम मूर्खतामनिन्दत् । प्राह च—भ्रात (महात्मेति पितेति वा नाह तदा दक्षिणाफ्रिकादेशे ख्यात ) एतन्न ते कर्तव्यम् । अनेकविषयेषु भवत्परतन्त्रा वयम् । धन पुनर्नागमिष्यति । वद्रीमहाशयो न हि दु खे पतिष्यति । तस्म तस्य धन त्वमेव दास्यसि । तव विश्वासिसाधनाय व्यवहारिणा धनमेव चेद्व्ययीक्रियेत तर्हि ते वराका नष्टा भवेयु । त्व च शीघ्रमेव याचको भविष्यसि । परन्तु त्वमितरपरतन्त्रो भिक्षुको यदि स्या सार्वजनिककार्यमशेष विरतिं यास्यति ॥

कृतज्ञोऽस्मि खल्वेव ब्रुवाण सुहृद्यापि जीवति । दक्षिणाफ्रिकादेशे वान्यत्र क्वापि वा परिशुद्धिमत्तरो जनो नाद्यापि मया प्रत्यक्षीकृत । यदि स कोऽपि ना सशयपात्र भवेत् स च सशयो निराधारो यदि स्यात्तदा क्षमा याचित्वा मान परितोषयति । सख्यप्रीत्या मामबोधयदिति मया दृष्टम् । वद्रीमहाशयस्य नष्ट यद्यपि पर्यहार्षं तथापि समानधनविनाशो तदा धर्तुमशक्यत्वात् ऋणी अभविष्यम् । ऋणी त्वह मम जीवितकाले कदापि नाभवम् । तत्र मे जुगुप्सा महती ॥

विश्रान्तिसाधनायापि मनुष्य स्वार्थं नातिवामेत् । परकीयधनप्रदान न गीतासु निरूपितम् । मुख्योद्देशोऽपि नानुरुद्ध । फलाभिमानं विना समभावेन कर्म कुर्यादित्युपदिश्यते । इयमसन्तृप्ति सद्बोधयोतिरासीन्मे ॥

एव रीत्या शाकाहारप्रचाराय मया दत्ताहुतिस्ताविकरविपमानवत्याससंभूता न पुनरदेशपूर्वकमासीन्न च सा मयाभिलषिता ॥

## सप्तमोऽध्यायः

# मृत्तिकाजलचिकित्साप्रयोगः

निरामिषजीवनेन सह भैषजेषु निःस्पृहा वृद्धिमागता । यदा हि मया डरबनपत्तने ‘वकील’कार्यं क्रियते स्म तदा मे कश्चित्कालं निःशक्तितो वायुप्रकोपक्लेशितोऽभवम् । डॉ मेहतामहाशयो मां द्रष्टुमागतः । चिकित्सितस्तेन नीरोगः संवृत्तः । ततः पश्चाद्यावद्भारतभूमिं गतस्तावन्न किंचिदस्वास्थ्यं नाम मया सोढमासीत् । किन्तु जोहानिसबर्गप्रदेशे मलबन्धेन पदे पदे शिरःशूलेन च वेदनां गतः । अवसरेऽवसरे प्रवृत्त्यौषधग्रहणेन समयोचिताहारसेवनेन प्रकृतिस्थोऽहं स्थितः । किंत्वनामयोऽस्मीति वक्तुं न शक्तः । एषां प्रवृत्त्यौषधानां योगेन कदा निर्मुक्तो भवेयमित्याश्चर्यभरितोऽस्मि ॥

अस्मिन्नेव काले प्रायः मांचेस्टरपत्तने प्रातराहाराभावसंघस्थापनासमाचारपठितम् । तस्य सञ्चालकानामाशयो यथा—आङ्ग्लजनो बहुकृत्वोऽतिमात्रं चाभुक्त । तदीय ‘डॉक्टर’महाशयानां व्ययनिरूपकपत्राणि गुरुण्यासन् । यतोऽर्धरात्रपर्यन्तमभुञ्जत । आधुनिकपरिस्थितौ समीकर्तुं प्रातराहारो वर्जनीय इति । एतान्सर्वं यद्यपि ममान्वयं नागात्तथापि कश्चिद्भागे ममाप्यन्वयमभजत् । यतो मे त्रिवारं भोजनं पुनर्मध्याह्ने ‘चा’पानादिकं च । खादनेऽहं न मन्दः । सूपमाहाराणां वण्टपूर्वं दलकर्जं भुज्यते स्म । षट्सप्तवादनात्पूर्वं नाहं शयनादुदतिष्ठम् । ततः प्रातराशं यदि त्यजेयं शिरःशूलमुक्तो भवेयमिति । कतिपयदिवसमयं तं दुष्करतया प्रयत्नमकार्षम् । शिरःशूलानि सर्वाण्यपि निश्च्य गतानि । तदेव निदर्शनमासीद्यदहं यावदावश्यकं तदतिक्रम्य भुञ्जान आसमिति ॥

एतत्परित्यागेनापि मलबन्धक्लेशादहं न मुक्तः । क्युनीमहाशयस्य कटिस्नानमकार्षम् । तेन किञ्चित्स्वास्थ्यमासीत् । सम्पूर्णपरिहारो नाभूत् । एतदन्तरे शाकाहारिभोजनालयस्य गोप्ता जर्मनमहाशयो वा सुहृत्तरो वा निरस्तामि ‘जुस्ट’कर्तृकं ‘प्रकृतिं प्रति निवृत्तिः’ इति ग्रन्थमेव मम हस्ते प्रादात् । अस्मिन्पुस्तके मृत्तिकाचिकित्सा निरूपिता । यया चिकित्सया फलितमाश्चर्यम् । चिकित्साविधानमित्थम्—जठरस्योपरि शुद्धमृत्तिका शीतलोदकेन सिक्ता मलमलवस्त्रपट्टे प्रसारिता भवतु । अहं शयनात्पूर्वं निशायां रात्रौ बध्वा प्रातर्यदा जागरूको तदा निःसारयते स्म । एतेन रोगो निर्मूलितः । स्वस्योपरि मित्राणामुपरि चेद् परीक्षितम् । न किन्तु निशादिनं कारणं दृष्टम् । हिन्दुस्थाने श्रद्धयेमां चिकित्सां विधातुं न शक्नोमि । यत एकस्मिन्स्थानेऽवस्थाय परीक्षा न शक्या । किन्तु मृत्तिकाचिकित्सायां मे श्रद्धा वर्तते । अद्यापि मृत्तिकाचिकित्साप्रयोगं च करोम्यपि । सहकारिणां रोगसमये च तत्प्रयोगं करोमि ॥

यद्यपि द्विवारमहं रोगाक्रान्तस्तथापि [illegible] । सहस-
[illegible] मृत्तिकाचिकित्सया तथाऽन्यदृश्यपथ्ययोगेन च सुप

संक्षिप्तं भवति । यस्तु यस्तु स्वास्थ्यकृते 'डॉक्टर-वैद्यो हकीम' इति परिधावति नैकविधशाकं औषधान्तरं च भुङ्क्ते स नितरां निजमलं हस्तीकरोति देहस्योपरि स्वामित्वं दूरीकृत्य दासभावमङ्गीकृत्यात्मनिग्रहं त्यक्त्वा पुरुष एव न भवति ॥

एतान्विषयान् कोऽप्यन्यथा मन्यतां यदनस्वरोगिणा लिखिता इति । मम रोगाणां कारणमहं जानामि । अहमेव एवात्र हेतुभूत इति जानामि । तज्ज्ञानादेव रक्षितो मया । वस्तुतो भगवत्यहं कृतज्ञः । तानि खलु शिक्षणानि मे । नैकविधान्यौषधानि सेवितुं प्रेरणामनङ्गीकृत्य स्थितः । मदीया हठप्रवृत्तिरसकृत् डॉक्टरमहाशयं खेदयतीति जानाम्यहम् । किन्त्वेते ता कृपया सहमाना मां न त्यजन्ति ॥

परन्तु इदानीन्तनास्थितेः सविस्तरं वर्णनमनावश्यकम् । अतः किञ्चिद्दस्य विंशतितमवर्षस्य चतुर्थं पञ्चमं वा वर्षं पश्यामः । पुस्तकान्तर्गतप्रसङ्गं पाठकस्य बोधनमेकं प्रयोजनम् । एतद्ध्यानपथाये ये लेखकमहाशयस्य पुस्तकं क्रेतुमिच्छन्ति तैस्तद्गतं सर्वं वेदोक्तमिति न मन्तव्यम् । लेखकः सर्वदैकमुखं प्रदर्शयति । समविधानि प्रदर्शनानि भवेयुः । प्रत्येकं सर्वमपि समीचीनम् । किन्त्वेकस्मिन्काले विषये च समीचीनो न भवेत् । अथानेकानि पुस्तकानि ग्राहकांल्लब्धुं कीर्तिं च संपादयितुं लिख्यन्ते । तत इदृशानां पुस्तकानां पाठका विवेकमनुसृत्य परन्तु । अनुभवशालिनः कस्यापि बुद्धिवादं गृहीत्वा ततः प्रतिपादितविधानान् बुद्ध्वा स्वयं पुस्तकानि सहनेन पठित्वा जीर्णीकृत्य पश्चाद्यथायोग्यं विदध्यात् ॥

### अष्टमोऽध्यायः

## प्रबोधः

**अग्रिमाध्यायं** यावद्विषयान्तरप्रस्तावः कार्य एवेति मन्ये । मृत्तिकाचिकित्साविषयकपरीक्षणैः सहाहारविषयाण्यपि क्रियन्ते स्म । द्वितीयेनेन प्रकृत्य कानिचित्कथनीयांशाः सन्ति । पश्चादपि तमेव विषयमुद्दिश्योच्यते ॥

आहारपरीक्षणविषयमत्र वा पश्चाद्वा विस्तरेण न कथयामि । यतो गुर्जरभाषायामेतन्निबन्धानां वस्तुतो बहुवत्सरेभ्यः पूर्वमेव 'इण्डियन ओपिनियन' पत्रिकायामलिख्यन्त । त एव पश्चात्पुस्तकरूपेण 'गाइड आफ़ हेल्थ' अथवा 'आरोग्यमार्गदर्शिनी' मुद्रिताः । जगत-पूर्वपश्चिमभागयोर्मम लघुग्रन्थानां मध्येऽयमेव बहुविशिष्टतया जनैः पठ्यते । न खलु कारणं शक्नोमीह विज्ञातुम् । 'इण्डियन ओपिनियन' पत्रिकावाचकानामनुरोधायालयं पुरितश्चायं जगत-पूर्वे पश्चिमेऽप्यस्य 'इण्डियन ओपिनियन' जनानामपि मनांसि बहुतरं परिष्कृतिमजीजनत् । यतो

विषयमुद्दिश्य पत्रव्यवहारं मया सह ते कुर्वन्ति। एषु पुस्तिका प्रति किंचिद्वक्तव्यमापतितम्। यतो विषयपरिवर्तने यद्यपि कारणं नास्ति तथापि समाचारपरिवर्तनमस्तीति सर्वे पाठका न जानन्ति। ततस्ते तन्निवेदयितुमर्हा इति मन्यामहे ॥

मम सर्वाणि लेखनान्तराणीव धार्मिकप्रत्ययं मनसि कृत्वेयमपि पुस्तिका लिखिताभवत्। प्रत्येकमपि मदीयं कर्म तादृशप्रत्ययस्फुरितमेव वर्तते। अत एव मे परमो विषादो यदप्रत्ययगतानि समाख्यानान्यनुरोद्धुमहं न शक्त इति ॥

मानवाहारेषु दुग्धं नवश्यकं शंसते यत् स्तन्यरूपेण गृह्यते तदन्तरेण तस्याहारस्तु केवलमातपतप्तफलानि शलाटवश्च। द्राक्षासदृशैः फलैर्बदामसदृशशलाटुभिश्च त्वचा नाराध्या च पर्याप्ता पुष्टिः लभ्येत। श्रीव्यामोहस्येत्यस्नामाना च निग्रहस्तादृशाहारभोजिनः सुलभो भवति। मदीयसहकारिभिर्मया चानुभवादृष्टं या हिन्दुलोकोक्तिर्यथा भुङ्क्ते तथा भवतीति सा सत्यभूता। एते आशयाः पुस्तके विस्तरेण निरूपिता भवन्ति। किन्तु भारते इदमेव दौर्भाग्यं यदाचर्यमाणेषु व्यवहारेषु कतिपये मयैवोक्ता न पारमार्थिका भवन्तीति वक्तव्यमुचितम्। 'खेडा'प्रदेशे जनसंग्रहकार्यप्रयुक्तोऽहं यदा तदाहारे कृतमेकं स्खलितं मां नीचैरपातयत्। मां मृत्युद्वारमनयत्। दुग्धं विना भग्नशरीरं पुनर्निर्मातुं यो यत्नः कृतः स व्यर्थोऽभवत्। अहं डॉक्टर'महाशयानां वैद्यानां वैज्ञानिकानां च साहाय्यममार्गं दुग्धस्थाने किंचिद-न्यद्बुध्यतामिति। कतिचिन्मुगजलं सूचयामासुः। पुनः कतिपये मोरातैलम्। केचिद्बादा दुग्धम्। अहमेतत् परीक्ष्यमाणोऽपि रोगिशयनं विमोक्तुं मे न किंचित्साहाय्यमकरोत्। वैद्याश्चरकग्रन्थं प्रमाणीकृत्य धार्मिकबुद्धिविकल्पानामाहारविषयस्यापि न कोऽपि सम्बन्ध इति श्लोकान्पेठुः। एतेन दुग्धं विना जीवितुं साहाय्यकरणे ते नहि शक्ताः। कथमन्ये वृषभमांस स्यन्चा' सुरा च विकल्पं विना ग्राह्यतया प्राशंसन्ते दुग्धशून्यमाहारं गृहीत्वा वर्तने मम साह्यं कुर्युः ॥

कृतेनैकेन शपथेन बद्धोऽहं गोर्वा महिष्या वा दुग्धसेवने प्रतिषिद्धः। एतद्व्रतं तावत्सर्वदुग्धानां परित्यागाय। किन्तु व्रतग्रहणकाले मनसि गौरिति महिषीति द्वयमेव धृतमासीत्। जीवितुमिच्छावानहं व्रतस्याक्षरशो दृढीकरणाय कथमप्यात्मानं धर्षयित्वाजादुग्धं प्रतीतव्यमिति निश्चितवान्। अजादुग्धसेवनकाले नितरामहं जागरूक आसम्। यतः हृदय भङ्गोऽभवदिति जानन् ॥

'रौलेट ऐक्ट'प्रतिकूलवर्तनं मनसि निरूद्धमासीत्। तेन जीवितुमभिलाषोऽवर्धत। अत एव मम जीविते महत्परीक्षणमेव विरतिमागतम् ॥

जानाम्यहं मनुष्यः खादति पिबति च। किन्तु तस्यात्मा तु न खादति न च पिबति वा। बाह्यतो यदन्तर्निक्षिपसि तत्र किंचित्। अन्तर्भागतो बहिः प्रकाश्यते तन्मुख्यम्। किन्तु तस्य

परीक्षणं विहाय एतावताहं मनुष्यामि यावता दृष्टं भूमौ यद्गव्यदीयान्येकस्य साक्षादेव पश्यन् आहारे नियमं प्रमाणे गुणे चालोचनाभावमयोरेव मुख्यं ॥

यत्र मद्वन्निरेव स्खलिता वर्तन्ते तत्र विषयो नैव निवेदनीयः । किन्तु तदनुयोगो न कर्तव्य इति विशिष्य सङ्कोचेन कर्तव्यम् । मदीयोक्तित्वात् यैर्दुग्धपानं परित्यक्तं तत्रापरीक्षणं न कर्तव्यं तदुपयोगो दृश्यते अथवानुभवशालिना वचसा वुद्धिवादस्तथापि स्यात् । एतावत्पर्यन्तं ममानुभवे येषां दुर्बलो जीर्णकोशो ये च शयनपतितास्तेषां दुग्धसदृशो वस्तु पुष्टिकरश्चाहारो न विद्यते ॥

यदि कश्चिदेतमध्यायं पठित्वा स्वानुभवेन न तु पठनेन शाकाहारपुष्टिकरं जीर्णज्वरि च दुग्धस्थाने प्रतिनिधिं मे सूचयेत्तदाहं तस्य बहूपकृतं स्यामिति ॥

नवमोऽध्यायः

## अधिकारिभिः कलहः

**अथैशियासंस्थोपरि** दृष्टिं निक्षिपाम ॥

जोहानिसबर्गपत्तनमेशियाधिकारिणां वडीयं स्थानमासीत् । एतं अधिकारिणं भारतीयचीन-देशीयादीनथाश्च तत्रारक्षन्विपरीतं पिबन्ति स्म । प्रतिदिनं मत्पार्श्वमागच्छन्ति स्म नियोगानां वचनानि एतादृशि । येषामस्याधिकारस्तेन प्रवेश्यन्ते । येषां तादृशाम्नि तेभ्यः एकशत-'पौंड'-स्वीकृत्य रहसि प्रवेश्यन्ते । यदि भवान् नास्मीदृक् न निवारयेदन्यः को न करोतीति । अहमपि तन्मना अभवम् । यद्यहमेतदनिष्टं न विनाशयेयं तर्हि ट्रान्सवालदेशे मम वर्तनं व्यर्थमेव स्यात् ॥

ततोऽहं साक्ष्यं संग्रहीतुमुपक्रम्य यदैकोऽस्मिन् पर्याप्तप्राये 'पोलीसकमिश्नर' अधि-कारिणं द्रष्टुमगाम् । असौ पारमार्थिकः पुरुष इवादृश्यत । औदासीन्यं दूरीकृत्य सर्वमशृणोत् । भवतः साक्ष्यसंग्रहं प्रदर्शयेति पृष्टः यावदासीत्तावत्समीपे तावद्दत्तवान् । साक्षिणः स्वयमेव परीक्ष्य तुष्ट आसीत् । किन्तु दक्षिणाफ्रिकादेशे सवर्णेतरानामपराधिनामभियोगेषु गौरवर्णनरासीने गौर-पञ्चायतिनस्य पुरस्तात् दण्डयितुं दुष्करमिति यथा मया तथा तेनापि ज्ञातम् । ततस्तु प्रतिमाति यत्पञ्चायतिनस्तानपराधान्विमोचयिष्यन्तीति विभाव्य नैषां मोचयितुम् । तान्ग्राहयितुं प्रयतिष्य एव ॥

तादृशी दशा नेतिनोपस्थितास्यासीत् । बहूनामधिकारिणामुपरि सन्देहो ममासीत् । किन्तु तेषां सर्वेषामुपरि प्रामाणिकं साक्ष्यं नासीत् । अतो ययोरपराधे प्रति न मे सन्देहलेशोऽप्या-सीत्तयोर्द्वयोरेव ग्रहणाय ग्रहणाज्ञापत्राणि प्रेषितानि ॥

ममेतरतत परिक्रमो रहोऽज्ञातनिक्षेपु न शक्य आसीत्। वहवोऽज्ञासिपुर्यदहम् 'पोलीसकमिशनर'स्य पार्श्वं गच्छामीति। गृहीतौ द्वावधिकारिणौ गृढान्वेषकौ समर्पिताया वास्ताम्। इमे मदीयकार्यालय सचर्य स्वाधिकारिणा मम चलनानि निवेदयन। एतावधि कारिणौ तथा दुष्टात्मा यथानयोर्गूढान्वेषका बहवो न मिलन्ति स्म। यदि भारतीय चीनदेशीयजना मम साहाय्य नाकरिष्यन् तदा तयोरन्वेषो न शक्योऽभविष्यत्। अनयोरेव पलायित। देशान्तराद्गृहीत्वानयनाय ग्रहणाज्ञा दत्वा शुन्सयाल्पप्रदेश प्रापित। न्यायस्थाने विचारणाया स्वप्रतिकूलसाक्ष्य यद्यपि बहुलमासीदपि च यद्यपि पचायितजन पलायितस्यैकस्य साक्ष्य प्राप्तवान् तथाप्युभावपि निर्दोषिणाविति विमुक्तावभूताम्॥

अह तावन्निराश सवृत्त। 'पोलीसकमिशनर' अपि विषण्णोऽभूत्। न्यायस्थानकार्येषु जुगुप्सा समजनि। बुद्धिरेव विपादकरी यदेषापराध निगृहितु साधन जाता॥

अनयोरुभयोरधिकारिणोरपराध सार्वजनीन आसीत। यद्यपि न्यायस्थाने विमोचिता तथापि 'गवर्नमेंट' एवैतयोराश्रय न ददौ। उभावप्युद्योगान्निवर्तितौ। 'एशियाटिक' सस्था च परिशुद्धप्राया भूत्वा भारतीयसमाजो मनसि दृढीकृत आसीत्॥

एतत्कार्यं मम गौरवमवर्धयत्। न्यायस्थानकार्याणि बहून्यभवन्। प्रतिमास व्ययीक्रियमाण शतानि। 'पौंड'द्रव्यस्य रक्षितान्यासन्। आमनश्चौर्यात्। सर्वं न रक्षितु साध्यमासीत्। यतोऽसत्यवर्तिन स्वव्यापारमद्यापि कुर्वन्ति स्म। किंतु सत्यवर्तिनो जनस्य सत्य रक्षितु शक्यमासीत्॥

इद तावदुक्तव्य यदेतावधिकारिणौ दुष्टावपि तयोरुपरि मे न किंचिदासीत् स्वत। इद तयोरपि विदितमासीत्। सकष्टपतितौ मत्समीपमागतौ च। अह च साह्यमकरवम्। जोहानिसबर्ग 'म्युनिसिपालिटि'सस्थायामुद्योग लब्धुमनकाशोऽभवत। यद्यह तयोर्न प्रतिकूल। अस्मिन्सदर्भे तयो सुहृदेको मा द्रष्टुमागत। नाह प्रतिकूलो भविष्यामीत्यवोचम्। तौ विजय प्रापतु॥

येषामुद्योगिना सपर्को मे जातस्तै सह मदीयवृत्ति सुखकरी बभूव। अपि च यद्यपि वार वार तत्सस्थाविषये परपोलिप्रयोग कृत्वा यत्साह्यितुमुक्तस्तथापि मया सह सौहार्देनावर्तन्त। सोऽह मम स्वाभाविकोऽस्ति इति तदा मे न ज्ञातम्। स्वय सत्याग्रहस्यावश्यको भाग। अहिंसायाश्च स्वरूपमिति पश्चाद्वेदिषम्॥

पुरुषस्तत्कृत्य च भिन्नवस्तुनी। सत्कार्यं सम्मतिमसत्कार्यमवमतिं च भजति। कार्यकर्ता तु साधुर्वा दुष्टो वा सदा मर्यादा धारण्य वा यथार्हत प्राप्नोति। पापे द्वेषो न पुन पापकारिणि। इय लोकोक्ति सुगमा विज्ञातुम्। तदभ्यासस्तु विरल। अत एव द्वेषप्र विष प्रसर्पे प्रसरति॥

इयमहिंसा सत्यान्वेषणस्याधार । इदानीमहं प्रतिदिनं जानामि सत्यान्वेषणं व्यर्थमहिंसाधारं विना । जगदभियोक्तुं प्रतिविधातुं च युक्ततरमेव कर्ता चेन्न शक्नोति तदा मानमेव प्रतिविधत्तेऽभियुङ्क्ते च ॥

एकस्यापराध इतरस्यापि वर्तते । वयं सर्वेऽपि एकस्यैव स्रष्टुरपत्यानि । दिव्यशक्तयोऽस्मदन्तरनन्ता । मानवप्राणिन एकस्यापि तिरस्कारस्तासां शक्तीनामेव तिरस्कार । न केवलं प्रहृत स प्राणिन किन्तु सर्वस्यापि जगतीम् ॥

दशमोऽध्यायः

# पवित्रस्मृतिः प्रायश्चित्तं च

**मम** जीवितेऽनेकविधा व्यवहारा बहुधर्मस्थानां बहुजनमानानां च पुरुषैः सर्वानिष्पन्नम-कार्षीत् । तेषां परिचयेन इदं वक्तुमिदं शक्यं यदधुना दूरस्थानां च मध्ये देशीयानां विदेशीयानां च गौराङ्गाणां सवर्णानां च हिन्दूनां भारतीयजनानामितरमतस्थानां च 'मुसल्मानपारसीक्रिश्चियन' अथवा 'ज्यू'जनोऽस्त्वेतेषां मध्ये च न भेदं पश्यामि । तादृग्भेदप्रत्ययो मे मनसि न जायते । अयमेको गुणविशेष इत्यपि न वक्तुं युज्यते । तदेतन्मम स्वभावे निरूढं न पुनर्मम प्रयत्नकृत फलम् । परन्त्वहिंसाब्रह्मचर्यापरिग्रहेषु तेषामभ्यासं कर्तुं प्रयतमानोऽस्मीति सम्पूर्णज्ञानं मे वर्तते ॥

डरबनपत्तने न्यायस्थानकर्माणि यदाहमकार्षं तदा मम कार्यालयस्य लेखका मया सह बहुश स्थिता । तेषां मध्ये 'हिन्दुक्रिश्चियन'जनाश्चापरा देशतो वर्तन्ते गुर्जरीयास्तामिलजनाश्च-तानहं बन्धुमित्राणीव गणयन्नासमन्यथा तान् जानामि । ते सर्वे मम कुटुम्बस्य जन इति सर्वदा मे गणना । भार्या मे मार्गे निरुध्य स्थिता चेन् समीचीनमासीत् । लेखकजनानामेक 'क्रिश्चियना'सीत् । स च पञ्चमदम्पत्यो पुत्र ॥

गृहं पाश्चात्यरीत्या निर्मितमासीत् । प्रकोष्ठेभ्योऽशुद्धजलं निष्कासयितुं नाभूदवकाश । प्रतिप्रकोष्ठं मूत्रपात्राण्यासन् । भृत्यादिभि तत्कार्यकरणापेक्षया भार्या वाहं वा स्वयमकार्ष्म । स्वमन्दिर इव वसन्तो लेखका स्वपात्राण्यशोधयन् । किन्तु 'क्रिश्चियन' लेखको नूतनागत । तस्मै शयनागारमालोचयितुमस्मत्कर्तव्यमासीत् । भार्यान्येषां पात्राणि निरवाहयत् । पञ्चमस्य पात्राणि स्वच्छीकर्तुं तस्या सहनशक्तिमतिक्रान्तमासीत् । अतो द्वयोर्नौ कलह प्राप्त । सा पात्राणि शोधयन्ती दृष्ट्वा सहितुं न शक्ता भार्या स्वयं वा कर्तुं नारोचयत । स्मरामि तिरश्चपि यथा सा निन्दन्ती रोषेण रक्तनेत्रा कपोलयोरुपरि स्वेदबिन्दून् पातयन्ती पात्रहस्ता निश्रेणिका-मारोहन्ती दृश्यते स्मेति । परन्त्वहं क्रूरतया मदुः पतिर्भूत्वा सा निरुपायेति मत्वाप्रेम्णा तामभ्रेषयम् ॥

केवल पात्रमवद्दिति न मे तृप्तिरासीत् । प्रीया यार्य वरणीयमिति मे मति । अतोऽहमत्योच्चैः शब्द कृत्वा मम गृहे एतादृशा मन्दबुद्धिता नाह सहिष्य इति ॥

वाक्यमिद ता बाणवद्विध्यत् । सा पुनररुदत् । तव गृह तवैव स्थापयाह गच्छेयमिति । अहमात्मान व्यस्मरम् । प्रेमरस शुष्कोऽभूत् । हस्ते ता धृत्वा गृहीत्वा नि श्रेणिसमीपवर्ति बहिर्द्वारमुद्घाटयितुमिच्छन् ता च बहिर्निष्कासयितुमाकृष्य पुरो गत । नेत्राश्रुप्रवाहस्तस्या कपोलयोरुपरिष्टाद्धावति स्म । अपि च सा चवद यद्यपि ते लज्जालेशोऽपि न विद्यते । तथापि तावद्दूर किं विस्मरणीय । भगवानहो वर्तताम् । बहिर्द्वारस्य पिधान कुरु । मा तावदितरेऽस्मच्चेष्टितानि जानीयुरिति ॥

अह धीरमुख स्थित । परन्तु लज्जित एव भूत्वा द्वारपिधानमकार्षम् । भार्या मा यदि त्यक्तु न शक्ता तर्ह्यह च न त्यजेयम् । आवयोर्मध्ये दुश्चेष्टा सन्ति नि सख्या परन्तु पर्यन्ते शान्तिरावयो स्थिता । भार्या तावदद्वितीयसहनशक्ति सर्वदा जयशालिनी भवति ॥

अथाहमसक्त एव प्रस्तुतमभिधातु शक्नोमि । कालोऽयमन्य । अस्माद्बहिरागतोऽह स्थित । नाहमद्याप्यन्धो मत्त पति । नाहमत्र भार्यया अपि शिक्षक । 'कस्तूरबा' यदि सा तथा इच्छेत्तर्हि मय्यसम्यग्वर्तिनी स्याद्यथा तस्यामह पूर्वमासम् । आवा परीक्षितौ सुहृदौ परस्परकामोपभोगायेति न मन्यामहे । रोगावस्थाकालेषु प्रतिफलमनपेक्ष्य सा पोषिकाभवत् ॥

प्रस्तुतो विषयोऽष्टनवत्युत्तराष्टादशसहस्राधिकमिते (१८९८) वत्सरे समभवत् । तदा हि मे ब्रह्मचर्यप्रत्ययो नासीत् । तदा हि ममालोचनाया भार्यापत्यु कामभाजनमित्यासीत् । पत्युराज्ञाकारिणी न पुनस्तस्य साहाय्यकारिणी सखी न तस्य हर्षदु खेषु भागिनीति स्थितम् ।

एकोनविंशे सहस्रमिते वर्षे इमा भावना परिवर्तन जग्मु । षडुत्तरैकोनसहस्रमितवर्षे (१९०६) ता राशिरूप मेयु । किन्तु तद्विषये तस्योचितस्थाने वक्ष्यामि । एतावदुक्त पर्याप्त यत्कामावेशस्य क्रमशोऽदर्शनगमनात् । तावन्मम गृहस्थजीवन शान्त मधुर सुखकर च दिने दिनेऽधिकाधिक भवति ॥

पतिव्रता कथया न कोऽप्येव निश्चिनुयाद्यथावा प्रामाणिकदम्पती स्म । अथवाऽऽवयोर्मध्ये विषयाणा सम्पूर्ण समभावोऽस्तीति । 'कस्तूरबा'एव प्रायशो जानाति मत्तो भिन्ना विषया स्वस्य सन्ति वा न वेति । अद्यापि मया क्रियमाणाना सम्मतिर्नास्तीति प्रायो दृश्यते । आवा तद्विषये चर्चा न कुर्म । चर्चाया च न विद्यते शुभम् । न पितृभ्या न च मया सा युक्तवेलाया विद्याभ्यास कारिता । किन्तु महानेको गुणोऽस्या हि दुर्भार्याजनस्यापि किंचिद्वर्तते बहुधा स्वस्या । तदेतद्यथा मन पूर्वक वा न वा जानती वा न वा प्रयतमाना नियममार्गे न कदापि प्रतिकूल स्थिता । मम पादस्थानेवानुसरन्ती च स्थिता । यद्यप्यावयोर्बुद्धिविशेषे महानन्तरालो भवेत्तथापि सर्वदेव मे भासते यदावयोर्जीवने सन्तुष्टि सुखमभ्युदयश्च विद्यत इति ॥

एकादशोऽध्यायः

# 'ऐरोप्यैः' सह गाढः परिचयः

**अनेनाध्यायेनानीतोऽस्मि** येनेदं वाचकाय वक्तुमावश्यकं भवति यथेयं कथा सप्ताहं सप्ताहं लिख्यते ॥

यदाहं तां लेखितुमारब्धवान् तदा लेखनमार्गो न निश्चितः । दैनन्दिनपुस्तकं लेखनपुस्तकं वेतरपत्राणि वा मत्कथालेखनस्याधारो न निश्चितः । लेखनकाले यथा भगवान् प्रेरयेत्तथा लिखामि । ममात्मचिन्तनानि कार्याणि च भगवता प्रेरितानि भवन्तीति मन्ये । परन्तु मम जीवनकाले मया बहुधा कृतेषु परीक्ष्यमाणेषु तथा स्वल्पास्वपि क्रियासु परीक्ष्यमाणासु सर्वाण्यपि भगवतैव प्रेरितानीति वक्तुं नानुचितं भवेत् ॥

मयासौ न प्रत्यक्षीकृतः न चाहं तं जानामि । या भगवति जगतो भक्तिः सैव मया स्वकीया कृता । सा चारोपयितुं न शक्येत्यस्मान्मयानुभवोऽयमिति मन्ये । मम भक्तिरेवानुभव इति वचनं सर्वमनर्थं करोतीति चेद् भगवति भक्तिं निरूपयितुं शब्द एव नास्तीति वक्तव्यम् ॥

ज्ञातुमिदानीं सुलभं यथा भगवत्प्रेरणयैव कथां लेखिष्यामीति । यदाहं गताध्यायमलेखिषं तदास्याध्यायस्य शिरोवर्णनमेव प्रादाम् । किन्तु लेखनसमये ममास्फुरद्यथा 'युरोपीय'जनैः सह ममानुभवस्तस्य पीठिका किञ्चिल्लेखितुमुचितमिति । अत एव तस्य परिवर्तनेन शिरोवचनमन्यथाकृतम् ॥

एतमध्यायमारभमाणस्य नव्यो विषयोऽस्थितः । आत्मकथालेखने किं वक्तव्यं किं मोक्तव्यमितीव चिन्तनीयम् । सत्या विषया यदि परित्यज्यन्ते तर्हि सत्यं मन्दीभवति । अस्याः कथाया लेखने सत्यतां प्रति यदा मे न दृढः प्रत्ययस्तदा सत्यतायाः प्रस्तुतेऽपि निश्चेतुं दुष्करम् ॥

चिरात्पूर्वं मया यदात्मकथायाः श्रवणादप्यपर्याप्तता तदिदानीं स्पष्टं विजानामि । यावदहं स्मरामि तत्सर्वमस्यां कथायां न लिखामि । मम चिन्तया मया कियद्देयं वियत्यक्तव्यमिति वक्तुं दुष्करम् । मम जीवने परोक्षवृत्तानां कतिचिद्विषयाणामपूर्णमनाश्रितस्य व्याख्याने किं मूल्यं स्यात् । डिक्किपूर्वमध्यायनविहृत्य परकीयवृत्तविचारकः कोऽपि यदि मां परीक्षेत तदा बहुभ्रमजालपूर्णं प्रकाशनायानि ॥

यदि मे विरोधी कश्चित् न्यायपरीक्षको परीक्षेत तदा मम नयप्रमाणानामज्ञता प्रकाशयन् स्तुतिमात्रता प्रदर्शयेत् ॥

अतोऽस्माध्र्यं विचिन्तयामि । एतदध्यायानां लेखनमेव पुनो न करिष्यामि ।

किंवाम्यन्तरनादेन निषेधो यावन्न स्यात् तावल्लेखनं चलतु । यावन्न स्यान्नीतिनिरुद्धा तावन्न परित्यजेदिति कल्याणी लोकोक्तिरनुसरणीया ॥

परकीयकृत्यशिल्पिनं सन्तोषयितुमहमात्मकथां न लिखामि । तल्लेखनमेव सत्येनानुभवः । मम सहकारिणा किंचिदानुकूल्यं स्मरणायाहारं च प्रदातुं निश्चितमेवोद्देशानामेव । तेषाम् भिक्षायानुसारेणैवाहं लेखकः प्रवृत्त । जेरामदास--स्वामीआनदश्च यदि सूचनां न दद्युस्तर्हीयं नैव लिखितामविष्यत् । आत्मकथालेखने ताभ्यां दोषभागिभ्यां भवितव्यम् ॥

परन्तु शिरोवचनानुसारं विषयं वदामि । मम कुटुम्बस्य जन इव यथा भारतीयजनो मया सह न्यवसत्तथाऽऽङ्लसुहृदोऽपि । मया सह निवसद्भ्योऽखिलेभ्यो नेदमरोचत । परन्तेन निक्षेपु निर्बन्ध आसीत् । नाहं प्रतिविषयं बुद्धिमानासम् । आसन्मे विषया अनुभवा । परन्त्वेते भारतीया 'युरोपियन' चोभये । अननुभवाना नाहं विषीदामि । यद्यप्येवं स्थितेषु यद्यप्यनानुकूल्यं क्लेशश्चोत्पादितं सुहृद्भ्यो मच्चरितमहं नान्यथाकृतवानपि च सुहृदः सोढवन्तो मया । आगन्तुकाना सपर्कों यदि दुःखकरस्तर्हि तान्दूषयितुं नैव संशय आसीत् । अन्ये यथा स्वेषु स्वेषु भगवन्तं पश्यन्तोऽन्येष्वपि तथा पश्यन्तः सर्वेषां मध्ये प्रत्येकं निवस्तुमर्हन्ति । अपि चैव निवस्तुं या शक्तिः साभ्यसनीया । न हि सपर्कनिवारणेनापि तु सेवाधर्मेण स्वयं तैरपरिहारिता ॥

'बोअर'युद्धं यदाभवत् तदा मम गृहं सपूर्णमासीत् । जोहानिसबर्गप्रदेशादागतौ द्वावांग्लौ प्राप्तौ । उभये च भागवतौ ( Theosophists ) तयोरेकः किचन्महाशय । तं पुरस्ताद्विज्ञातुमवसरो वर्तते । एतौ सुहृदौ मम भार्याया नयनाश्रुजनकौ । दूरदृष्टवशात्मकारणादनेन मत्सान्यनुभूताम् । अयमेव प्रथमोऽवसर आङ्लसुहृदः कुटुम्बजन इवावसत् । यदाहं 'इंग्लैंडदेशे' न्यवसं तदा तेषु दिवसेषु आङ्लगृहेष्वाराम । परन्तु तत्र तत्कालीननागरिकान्वसरद्धविद्वोजनान्यवास इवासीत् । अत्र तु तदन्यथाभूत् । आङ्लसुहृदः कुटुम्बवर्ती जन आसन् । अनेकविषयेषु तौ भारतीयरीतिमाश्रितौ बहुषु विषयेषु । गृहस्य बहि सूचनां पाश्चात्यरीत्यैव । आभ्यन्तरे तु प्राय सर्वं भारतीयपद्धत्या । कुटुम्बजनमिव तौ निधातुं किंचित्कष्टमासीत् । परन्तु गृहाभ्यन्तरे सुखेन तौ निवेशयितुं नैव किंचिदपि क्लेश आसीत् । जोहानिसबर्गप्रदेशस्थे परत्वया राजधानीतने भूयाम आसन् ॥

द्वादशोऽध्यायः

# 'युरोप'जनेन संपर्कः

एकदा जोहानिसबर्गपत्तने चत्वार भारतीयलेखका मत्पार्श्वे स्थिताः । न ते लेखका किन्तु मदीयपुत्रा एव । परन्त्वेते मत्कार्याय न पर्याप्ता आसन् । 'टाईपरायटिंग' विना कार्यं न चलति स्म । एतन्मध्ये तद्विदहमेक एव । द्वा लेखकावहं तदशिक्षयम् । परन्तु तावाङ्ग्लभाषानभिज्ञतया पर्याप्तशक्तियुक्तौ नाभूताम् । एतेष्वेकमायव्ययज्ञं कर्तुमैच्छम् । नातालप्रदेशान्न कोऽपि मिलति स्म । अनुज्ञापकपत्रं विना ट्रान्सवालप्रदेशं न कोऽपि प्रवेष्टुमर्ह आसीत् । मम स्वतानुकूल्यायानुज्ञाप्रदमधिकारिणं तदनुग्रहाय प्रार्थयितुं न सज्ज आसम् ॥

अहं किंकर्तव्यतामूढः स्थितः । कार्यरोपः समारोहति स्म । स्वतः कार्यं सार्वजनकं च कार्यमुभयं च कर्तुमशक्यमिव प्रत्यभात् । मम प्रयत्नेनाङ्ग्लेऽपि 'युरोपियन' 'लेखक'मेकं नियोक्तुमैच्छम् । किन्तु मामिव सवर्गं पुरुषं सेवितुं गौराङ्गः गौराङ्गी वा लप्स्ये इति निश्चयो नासीत् । मम विदितपूर्वस्य 'टाइपरायटर'स्य नियोक्तारमेकं गत्वाहमपृच्छम् । 'स्टेनोग्राफर' मत्पार्श्वमानयेति । कन्या मिलन्ति स्म । तदेकामानेष्यामीति वाग्दानमकरोत् । 'स्कॉटलेण्ड'निवासिनीं 'मिस डिक' नाम्नी तेन दृष्टा । सा धनीजनं कर्तुं नास्त्याक्षेप इति सोक्तवती । तस्याश्चावश्यकतासीत् । तामानीय नियोक्ता मम प्रादात् । तत्क्षणं सा मामन्वरञ्जयत् । अहं तामपृच्छम् — भारतीयपार्श्वे सेवां कर्तुं किमाक्षेपोऽस्ति ? नहीति दृढं प्रत्युत्तरमागतम् ॥

कियद्वेतनं वाञ्छसि ।

सार्धमेकसप्तदशपौंडं नातीवेति मन्यसे ।

मया वाञ्छितं कार्यं करोषि चेन्नातीव । कदा कार्यायागमिष्यसि ।

भवदिच्छायामेतत्क्षणमेव ॥

अहमतीव सतुष्टः । तत्क्षणमेव लेखान्वाचयित्वा लिख्यतामित्यवोचम् ॥

अचिरादेव सा न केवलं वर्णनकरलेखिका ( stenotypist ) परन्तु मम दुहिता भगिनी वा प्रवृत्ता । तस्याः कार्ये स्खलितं त्वणुमात्रमपि सा प्रादात् । असहस्रा सहस्राधिक-पौंडमितद्रव्यस्योपयोगे नियुक्तायव्ययपुस्तकानि च न्यक्षिपत् । सा मम सम्पूर्णविश्वासपात्रीबभूव । अधिकं च वक्तव्यम् । यदेषा स्वान्तर्गतचिन्ता भावनाश्च मयि विश्वस्य कथयति स्म । पत्युरन्वेषणमपि मामपृच्छत् । विवाहे तस्याः प्रतिपालकत्वेन ममैवासीत् । 'मिस डिक' यदा

मॅक्डोनल्डपाणिग्रहणमकरोत्तदा मा पर्ययजत् । अथापि विवाहानन्तरं कार्यवशादागत्य प्रतिवचनमदादेव ॥

किन्त्विदानीं तस्याः स्थानेऽपरा 'स्टेनोटाइपिस्ट' अपेक्ष्यते स्म । अदृष्टवशादन्या च लब्धा । सा च 'मिस श्लेसिन' नामक परिचायिता कॅलनबेकमहाशयेन । इम महाशयं वाचकः क्रमेण ज्ञास्यति । सेदानीं ट्रान्सवालप्रदेशस्थकन्याविद्यालयानामेकस्मिन्नध्यापिकाऽभूत् । यदा सा मत्पार्श्वमागता तदा सप्तदशवर्षदेशीयासीत् । कतिचित्तस्या विलक्षणभावा कॅलनबेकमहाशयस्य मम च कदाचिदु सह्या आसन् । वर्णसंकेतलेखिकाकार्यं कर्तुं सा नागता किन्त्वनुभवं लब्धुम् । असितागतवर्णाभेति वर्णन असूया तस्याः स्वभावस्यातिदूरे । तस्या वयो वाऽनुभवो वा न किंचिन्मनस्यासीत् । न कचिदाक्षेपेषु वा यस्य कस्यापि मुखत एतादृश-स्त्वमिति वक्तुमपि निश्चितवत्यासीत् । तस्या आतुरोऽविवेको मा बहुवारं सङ्कटेऽपातयत् । किन्तु तस्याः शुद्धनिर्दोषस्वभावस्तानि सङ्कटानुपक्रमाणि दूरमपास्यत् । तस्याः 'टाइप'कृतपत्राणि पुनरालोकनं विना स्वाक्षरीकृतवानस्मि । यतस्तस्या आत्मभावो मदीयः निर्दुष्टासीदित्यहममंसि । तस्या भक्तौ मम सपूर्णविश्वास आसीत् ॥

सा बहुत्यागमन्वभूत् । चिरकालं मासे मासे षट् पौंडमितं द्रव्यं गृह्णाति स्म । प्रतिमासं दशपौंडमिताद्धनादधिकं ग्रहीतुं नेति वक्ति । अधिकं गृहाणेत्युक्ता मामधिक्षिप्य भणति यथा वेतनार्थमहमत्र न स्थास्यामि । यतोऽहं भवता सह कार्याणि कर्तुं स्थितास्मि । इष्टो मे तवोपदेशः ॥

एकदा सा मत्सकाशात्चत्वारिंशत्पौंडद्रव्यमृणीकृत्य गृहीतवती । व्यतीते वत्सरे पूर्णं धनं मे प्रादात् । तस्या धैर्यं तदीययागकृते समानमासीत् । इयमेका स्त्री मया दृष्टा यस्याश्चारित्रं मुक्ताफलमिव निर्दुष्टं यस्याश्च धैर्यं भयस्यापि त्रपाकारिणम् । इदानीमेव वयस्था युवतिर्मया सह यदा स्थिता तत्काले तन्मनसो वृत्तिर्यथासीत्तथेदानीमपि वर्तते न वेति न जाने । परन्त्वेतया सह परिचयो मे पवित्रा स्मृतिर्भवति । सत्यादहं भ्रष्टो भवेयं यदि जानन्नपि तद्विषयान्निगूहेयम् ॥

आंदोलनपक्षस्य कृते सा रात्रिं दिवं प्रयस्यति । रात्रावन्धकारे कार्यवशादटति स्म । सहयायिनमेकं नयेति मुचितः क्रोधेन सूचनां निराकरोति । सहस्राधिको बलिष्ठभारतीयजनस्तामेव मार्गदर्शिकामपश्यत् । सत्याग्रहदिवसेषु प्राय सर्वे नायकाः कारागृहे स्थिताः । तदेकाकिना सा समूहमचालयत् । लोकानां सहस्राणि तस्या वशे आसन् । पत्रव्यवहारो बाहुल्येन तद्वशेऽभूवन् । 'इण्डियन ओपिनियन' समाचारपत्रं तदीयहस्तगतमासीत् । किन्तु सा न कदाप्यायासमभजत ॥

निरन्तरमहं 'स्लेशन' विषये लिखेयम्। गोखलेमहाशयस्य गणना निरूपयन्नियमध्याय-मन्त गमिष्यामि। मम सहकारिणः सर्वान् गोखलेमहाशयो व्यजानात्। तेषां बहुभिरयं सन्तुष्टः। असकृत्तत्कृते स्वाभिप्रायमदात्। सर्वेषां भारतीय'युरोपियन्' जनानां मध्ये स्लेशिनमहाशयायै प्रथमस्थानमदात्। तेन निर्दिष्टाः यथा इत्यमस्यास्ते परिश्रमाः धैर्यशालित्वं कुशलता च मया अन्येषु जनेषु दृश्यन्ते। भवतु सहकारिणां मध्ये 'मिस स्लेशिन' महाशया-प्रस्थानमाश्रयतीति ॥

त्रयोदशोऽध्यायः

# 'इंडियन–ओपिनियन'

अन्यैः परिचितयुरोपियनजनसम्पर्कं पुरोगमनात्प्राक् द्वितीया प्रधानविषया निरूपणीया। तत्परिणामेतरस्तात्क्षणेऽस्मिन्नेव वक्तव्यः। 'मिस डिक' महाशयाया नियोगो ममोद्देशस्य पर्याप्तो नासीत्। अधिकसाहाय्यमावश्यकमासीत्। 'रीच' महाशयं पूर्वाध्यायेषु वर्णितं मित्रं अहमेनं सम्यगवेदिषम्। कस्मिंश्चिद्व्यापारस्थाने कार्यकर्ताधिकारी आसीत्। तमधिकारिणं परित्यज्य मत्पार्श्वे उद्योगकरणायागन्तुं सूचितः आगतोऽभूत्। एतेन मम भारोऽतीवलघूकृतः ॥

प्रायेणैतत्काले मदनजितमहाशय आगत्य 'इंडियन ओपिनियन' पत्रिकासञ्चालने ममाशयमपृच्छत्। पूर्वमेव मुद्रणयन्त्रं चालयति स्म। अहं तस्याभिप्रायमन्वमन्ये। चतुरुत्तरनवशताधिकसहस्रमिते वत्सरे (१९०४) पत्रिका प्रचलितुमारब्धा। 'मनसुखलाल-नाजर' महाशयः प्रथमपत्रिकास्वामी बभूव। परन्तु सत्यकाले पत्रिकास्वाधीनता प्राप्य तस्य भारं वोढुमुद्युक्तोऽभवम्। मनसुखलालमहाशयस्तं वोढुमशक्त इति न। यदायं भारतदेशे स्थितस्तदा वृत्तान्तसम्पादनकार्यं बहुलं करोति स्म। किंतु दक्षिणाफ्रिकादेशे यावदहं स्थितः तावत्तत्र यत्पत्रविषयेषु अग्रेऽप्तुं न धैर्यमकरोत्। मम विवेकदृष्टौ महती यस्य श्रद्धासीत्। अत एव पत्रिकाविषयलेखनेषु प्रतिनिधित्वदायित्वं ममोपर्यर्पयत्। पत्रिकयापि साप्ताहिकी भवति। गुजराती-हिन्दी तामिल-आङ्ग्लभाषासु चलति। तामिल हिन्दीविभागौ वञ्चनामयौ। यदुद्देशेन तावागतौ तदुद्देशं नैवापूरयताम्। अत एव तौ विरामं प्रापितौ। तयो परिस्थितौ वञ्चनोऽहमास्याः॥

पत्रिकाया यत्किंचिदपि प्रयोजनं स्यादिति न मे चिन्तासीत्। परन्तु शीघ्रमेव दृष्टं यन्मम द्रव्यसाहाय्यं विना चालयितुं न शक्यमिति। अपि च भवतां 'युरोपियन जनानां विदितमासीद्यद्यपि नाहं पत्रिकास्वामी तथापि तस्य सञ्चालनं मदायत्तमिति। पत्रिका नैव नाम

## चतुर्दशोऽध्यायः

# 'कुली'स्थानानि अथवा 'घेटो'

अतिमहता लोकसेवामस्मान् कुर्वत कतिचिद्गणा अस्माभिर्हिन्दुजनैरस्पृश्यत्वेन पत्तनस्य ग्रामस्य वा दूरे 'ढेडवाडो' इति गुजरातीभाषायामुक्तास्तन्नामधेये च दुर्वासनामयामन् तिष्ठति। इत्थमेव 'क्रिश्चियन युरोप' प्रदेशे एकदा 'यहूदी' जना अस्पृश्या इत्युक्त्वा 'घेटो' इति दुर्नामधेयेनाहूता। तथैव वयमपि दक्षिणाफ्रिकादेशे अस्पृश्या सभूता। ऐन्ड्रूजमहाशयेन कृतो यत्नोऽपि च शास्त्रे गृहीतं भूलयत्नमस्मान्पूर्वेरयान प्रापयिष्यन॥

पुराण' यहूदी 'जन आमानमेव भगवतानुगृहीत मन्यते स्म। इतरान् सर्वानप्यन्यथाभूतान् मेने। अत एव तद्वशजा सर्वेऽपि न केवलमाश्चर्यकरमपि त्वन्याय्य प्रतीकार मेनिरे। तथैव हिन्दुजना अप्यमानमार्यान्नागरिकान् मन्यन्ते। स्वेषामेवाङ्गभूताञ्जनान् प्राकृतानार्येयादिकमानाल्यन्ति। अत एव ते तस्यान्यायस्य फलमनुचितविचित्रप्रकारेण दक्षिणाफ्रिकादेशे अनुभवन्ति। एव च समानदेशस्था समानवर्णयुक्ताश्च 'मुसलमान पारसी' जना अपि तादृश फलभाजभूता इति मे मति॥

वाचकस्येदानीं विदित स्यादर्वेऽध्यायस्य शिरोरचने कुलीस्थानानीति प्रोक्तस्य। दक्षिणाफ्रिकादेशेऽस्माकं कुलीति नामधेयम्। भारतदेशे कुलीयस्य द्वारपाले भाटकगृहीत कर्मकर इत्यर्थ स्यात्। अपि तु दक्षिणाफ्रिकादेशे तस्य तिरस्कारणीयो भावो वर्तते। यथास्माकं अर्थोऽस्पृश्यो भवति तथा। तेषां नियुक्तस्वतिस्थानाना कुलीस्थानमिति निर्देश। 'जोहानिसबर्ग' प्रदेशे तादृगेकं स्थानमासीत्। किन्तु कुलीस्थानयुक्तेष्वन्यप्रदेशेषु भारतीयजनाना निवासाधिकार आसीत्। जोहानिसबर्गकुलिस्थाने भारतीय जना एकोनशतवर्षपर्यन्त निवसनुमनुज्ञा गृहीत्वा स्थिता। तत्स्थान जनबहुलमासीत्। जनसंख्या वर्धते स्म। स्थानविस्तारस्तु यथापूर्वमेवकरीत्या स्थित। 'नगरपालिका मलमूत्रनिःसरणस्थानान्यासरिमकरीया स्वच्छीकरोति स्म। आरोग्यसंविधानानि न किंचिदकरोत्। मार्गव्यवस्था दीपसंयोजना च नास्त्येव। निवासिना योगक्षेम विचारयितुमुदासीनतायां तस्यारोग्यरक्षण करोतीति को विश्वास। न खल्वेते जानन्ति गृहारोग्यविधान शरीरारोग्यरक्षण च नगरपालिकासाहाय्य तपरीक्षण च विना। तत्र गता सर्वेऽपि भारतीया यदि 'रॉबिन्सन् क्रूसो'ऽभविष्यत्तदा तेषां वयान्यैवाभविष्यत्। जगत्यस्मिन् 'रॉबिन्सन् क्रूसो'–स्थापितमेकमपि स्वास्थ्य न जानीम। सामान्यतो जना द्रव्यार्जनार्थे बहिर्गच्छन्ति। परतु दक्षिणाफ्रिकादेश गतेषु भारतीयेषु प्रायो भूयिष्ठा मूर्खा निर्धनिकाश्च कृषिका बभूवु। आदरपूर्वक रक्षण सर्वमपि तेषामावश्यकमासीत्। बहुसख्या व्यापारिण

सुशिक्षिताश्च भारतीयास्ताननुसृता आसन् । पौरसभाया 'विभिन्न' जनागारव्यवस्था कृतवती। भारतीयजनानां गृहाणां च स्थानमारोग्यशून्यं कर्तुं व्यवस्था। पौरसभामुत्तमनिवासार्थं विमुक्त्वा महत्तमनारोग्यमेव कारणीकृत्य स्थाने विनाशयितुं प्रयेते । तदुद्देशेनैव निवासिनः स्वार्थं शून्यम् कर्तुं अधिकारिभ्योऽनुज्ञा प्राप । एषा किलासीदनिर्यदा जोहनिसबर्गस्थाने कृतनिवासोऽभूवम् ॥

स्वस्वभूमिष्वधिकारयुक्ता निवासिनो नष्टप्रतीकारद्रव्यमाप्तुमधिकारिणो बभूवुः । भूग्रहणविषयान् परीक्षणीयान्परीक्षितुं विशिष्टन्यायस्थानमेकं स्थापितमासीत् । यदि गृही पौरसभया प्रदेयं नाङ्गीकर्तुमिच्छत्तदा न्यायस्थानं गच्छेत् । अथ न्यायस्थानस्य निर्णये पौरसभा देयाधिकं दत्तं चेत् पौरसभा तावद् व्ययद्रव्यं सहेत ॥

अथ सर्वे गृहिणो मामेव स्वेषां 'वकीलं' चक्रुः । एतान्परीक्षणीयान्विषयान्गृहीत्वा द्रव्यमर्जयितुं न मेऽभिलाषासीत् । न्यायस्थाने यावत्प्रदेयद्रव्यमाज्ञापयत्तावत्ता मनुष्ये यदमी निजयिनः स्युः । कृतिगृहीतासु भूमिषु प्रतिमुद्रशपौंडमितं धनं मे देयं स्यात् । यदि तथा कथाचिद्भवतु नाम । अहं तान् पुनरवोच युष्माभिर्दत्तद्रव्येष्वर्धभागं निष्किंचनानामुपयोगाय वैद्यशाला वेतरसस्था वा प्रतिष्ठापयितुं प्रयुञ्ज्महे इति । एतत्तान् सर्वानानन्दयत् ॥

सप्तति परीक्षणीयविषयाः । तेष्वेकमेव निष्फलमासीत् । अतो मे प्रतिग्रहद्रव्यस्य महती सङ्ख्या प्राप्ता । किन्तु तत्रासीद् 'इंडियन ओपीनियन' पत्रिका तदर्थं ममोपरि रूप्यकाणां षोडशसहस्राणि व्ययं समर्तते स्म । एतावत्परीक्षणीयविषयार्थे मया महान् क्लेशोऽनुभूतः । व्यवहारिणः सर्वदा मत्समन्तात् स्थिताः । प्रायेण सर्वेऽपि ते समतिबद्धाः कर्मकरा विहारतपरि-सरप्रदेशाद्दक्षिणभारतप्रदेशाच्चागताः । तेषां विलक्षणक्लेशपरिहाराय स्वीयः सङ्घ एकः कल्पितः । स च वणिजां क्रयविक्रयिणां च स्वतन्त्रसङ्घादन्यः । तेषां कतिचित् सहृदयाः उदारपुरुषाः उच्चचरित्रसम्पन्नाश्च । तेषां नायकः सङ्घाध्यक्षो 'जयरामसिंग्' इत्येकः सभाध्यक्ष-समानो बद्रीमहाशयः । इदानीमुभयेऽपि मृतौ । तौ ममातीव साहाय्यकारिणावास्ताम् । बद्रीमहाशयो मम समीपसम्पर्कं गतः सत्याग्रहे प्रधानभागमुवाह । एषामितरेषां च सुहृदां सम्पर्केणोत्तरदक्षिण-भारतादागतैर्निःसङ्ख्यैर्भारतीयनिवासिभिः समीपसम्पर्कं गतोऽहम् । न केवलं 'वकील' परन्तु भ्रातेव स्थितस्तेषां स्वकीयसार्वजनिककार्येषु दुःखसङ्कटेषु च भागी अभवम् ॥

भारतीयजनाः कथं मामाह्वयन्निति ज्ञातुं समीचीनमस्ति । अब्दुल्लाशेठमहाशयो मां गान्धिरित्याह्वातुं निराकरोत् । अदृष्टवशात्कोऽपि मां 'साहेब' इत्यभिधानेनाप्यनिन्दत् । अब्दुल्लाशेठमहाशयो रमणीयनामधेयं 'भाई' इति भ्रातरिति वा जगाद । यावद्दक्षिणाफ्रिका-देशमत्यजं तावत्तथान्येतरेऽप्याह्वयाञ्चक्रुः ॥

भारतीयजनैः समतिबद्धैः कर्मकरसम्पुटैः नामधेये कश्चिन्मधुरो रस इवास्तीत्यभात् ॥

पंचदशोऽध्यायः

# असितप्लेगोपद्रवः ( १ )

पौरसभायाः स्वीयनाप्तेरचिरादेव भारतीयजन स्थानान्नापनीत । गृहेभ्यो बहिष्कारगायूर्वं तत्रायोग्यतसती प्राप्तुमात्र्यकमासीत् । किन्तु पौरसभाया सौलभ्येनेद कर्तुमशक्य-मासीत् । अत एव भारतीयजना पूर्वस्मिन्नशुचिस्थान एव वर्तितुमनुज्ञाता । तस्य फलेन च तदवस्था पूर्वापेक्षया हीनतराभूत् । स्वामिन्यादिरप्येदानींमधिवासिनोऽभूवन् । अत परिवेष्टक-प्रदेशा अनारोग्यमया बभूवु । तादृगनारोग्यस्थितिदृष्टपूर्वा । यदा ते स्वामिन स्थिनास्तदा शासनभयादपि यत्किंचिच्छुचिरक्षण कर्तुं व्यवसिता आसन् । पौरसभायास्तादृश भय नासीत । गृहस्थायिना सख्या वृद्धिमागात् । एतेनाशुचित्व क्रमश्च ववृधे ॥

यदा भारतीयजना एतादृक् स्थानानुभवेन व्यथिता आसन् तदाकस्मादसितप्लेगुपद्रव समभूत । तमेन 'न्यूमोनिक' प्लेगेत्यपि वदन्ति । इद 'बूबोनिक' अपेक्षया भयकर मृति-कारक च ॥

एतद्रोगोत्पत्ते कारण लोहानिसर्गपरिसरे सुवर्णखनिरेका ॥ अस्मिन्नाकरे कर्म कुर्वन्तो जना प्राय सर्वे निग्रोपदवाच्या । एषा शुचित्वरक्षणाय गाराणा नियोगिन सर्वथा प्रयुत्तर-दायिन आसन् । कतिचिद् भारतीयजना अपि खनिनरवे कर्म कुर्वन्ति स्म । तेषा त्रयोविंशतिरे-तद्रोगेनाकस्मात् परिग्रस्ता सायकाले स्वनसतीराजग्मु । तत्काले मदनजितमहाशय 'इडियन ओपिनियन' पत्रिकार्थं ग्राहकानन्वेषयति स्म । कृतकार्य स्थानेऽस्मिन् क्षण स्थित । स किल निर्भय प्रसिद्धपुरुष । तस्य हृदयमेनान् रोगग्रस्तान् वीक्ष्य ऋदति स्म मत्सकाश लिखिताक्षर लेखमेक प्रेषयत् । यथाकस्मादसितप्लेगोपद्रव प्राप्त । एतत्क्षणमेनागम्य शीघ्र यथायुक्त सविधान कर्तव्यम् । नो चेदय भयकरान्परिणामान् द्रष्टुमर्हाम । एतत्क्षणमेनागन्त-व्यमिति ॥

धीरो मदनजितमहाशय शून्यगृहस्यैकस्य बलन भित्त्वा रोगिण सर्वान् तत्र स्थापयामास । अह स्थान प्रति पादनोपयानेन गत्वा पत्तनलेखकस्य न्यवेदय गृह स्वाधीनीकृतमन्वदर्भान् ॥

डॉ विल्यम–गॉडफ्रेमहाशय समाचारमाकर्णितमात्र एव स्वकार्यालयादागत्य वैद्यस्य कर्म धात्रीकर्म चोभय निर्वहति स्म । किन्तु त्रयोविंशतिरोगिणा परीक्षणाय वय त्रयो नालमभूम ॥

अस्तीय मे श्रद्धा स्वानुभवमाश्रिना यदेकस्य हृदय स्वच्छ स्याद्यदि नभसन्नुपद्रव सदैव तत्प्रतिशोधनाय पुरुषानुपायाश्चानयति । मम कार्यालये तदा चत्वार भारतीयजना आसन् । ते च

धार्मिकभारतीयकार्यालयात् कतिचिच्छतान्यपि चान्यान्यावश्यकानि तथाच तान्काष्ठनिर्मितानि वधशालामकल्पयाम । पौरस्त्या लेका सेविका प्रेषयत । द्वौ गौटमैनमहाशयस्याधीनतायां वैद्यशाला स्थिता ॥

सेविका दयालुः स्त्री । रोगिणः पदपर्यन्तं सान्द्रां ममतां ददाति । परन्तु तान्स्प्रष्टुमपि नानुज्ञाता । मा तावत् स्वयं रोगेण कृतनमाभूदिति ॥

रोगिणां पदे पदे सर्वोपनमाय प्रदातुमस्मानस्मनुज्ञासीत । सेविका जागरयास्तानपि प्रहर्तुमस्मरीत । स्वयं सा तथा करोति स्म । अस्मासु न कोऽपि तत् स्पृशति स्म । रोगिणामत्युपयोगोऽनेन भविष्यतीति मे श्रद्धा नासीत् । गौटमैनमहाशयस्यानुज्ञानादाय मयनिष्क्रान्तौ रोगिणो मृत्तिकाचिकित्सामग्राहयम् । आर्द्रमृत्तिकावरणानि तेषां हृदयेषु शिरस्सु च निक्षेप्स्यानि । एव द्वौ रक्षितौ । अन्ये निद्रानिर्गमनप्रदशायामेव मृता बभूवुः ॥

एतदन्तरे पौरस्त्यानि कार्याणि करोति स्म । जोहनिसबर्गनगरात् विशेषदूरे सार्कं निद्रारोगचिकित्सार्थं चर्मरोगशालेयं स्थिता । सजीवौ द्वौ रोगिणौ चर्मरोगशालायाः समीपे पटमण्डपेषु स्थापितौ । तत्र नूतनरोगिणः प्रेषयितुं नाभिमतानि विषमागान्यासन् । वयमिदमस्मत्कार्यान्मुक्ता अभूम ॥

केषुचिद्दिवसेषु गतेषु साध्वी सेविका रोगग्रस्ता मृता च । कस्मात् तौ द्वौ रोगिणौ रक्षितौ कथं विमुक्ता इति वक्तुमशक्यम् । परन्त्वनुमतो मृत्तिकाचिकित्साया मे श्रद्धामवर्धयत् । सर्वमीवत्कल्पेण वास्तु । तदुपयुक्ततायां संशयो मे स्थितः । इयं श्रद्धा सत्यं संशयो वा पर्याप्तकारणाधारौ न स्त इत्यहं जानामि । किन्तु तदानीन्तनगता भावनाचारि रक्षितेयत्र तद्वक्तुमावश्यकमित्यमस्मि ॥

आगते ग्रेगोपक्रमे मुद्रायन्त्रं प्रमाणय तस्यैक नडनहेतुमनमसार्वम् । यथास्थान पौरस्त्यानां वशमागतम् । ततः परं शान्तकालाभूत् । तस्मिन्नायकस्थाने उपकरणभरस्य कार्याभूतोऽयं प्रयुक्तवानीति । अथ तेन हेनरीमोलासमहाशयं समपादयत् । तत्सुतेन माननीयमोसेस्टोन-महाशयस्य मैत्री प्राप्ता ॥

उक्तं मया पूर्वस्मिन्नध्याये यच्छ्रावणमासे भोजनालये सदा भुङ्क्ते स्मेति । अत्र श्री आल्बर्ट—वेस्टमहाशयेनाह सङ्गतवान् । अग्निभोजनाख्ये प्रतिभोजनागच्छते स्म । भोजनानन्तरं बहिः सह चरन्तौ स्व । वेस्टमहाशयः कस्मिंश्चिन्मुद्रणशालायां भागीदारः । स च मुद्रणितं चक्रे । ग्रेगोपक्रमस्थापक अत्र मां दृष्ट्वा भोजनालये मिलनरोगेण्य द निवेदित ॥

उपक्रमादनन्तरं महाविपोट च भोजनहामस्तीहरुतल्ल । सायंकाले लघुभोजनं नियमेन क्रियते स्म । अत दर्शनेषु दिवसेषु सायंभोजनं परियत्नवान् ॥

अस्माहार चेतरभोजनालयस्वलनापूर्वमेव स्थापयन् । भोजनालयस्य स्वामी मे मन्त्र

परिचित । प्लेगरोगिणां चिकित्सायां निरतोऽहं मित्राणां सम्पर्कं यावच्छक्यं दूरीकर्तुमिच्छामीति मयासौ निवेदितपूर्वोऽभूत् ॥

भोजनालये दिनद्वयान्मामदृष्ट्वा वेस्टमहाशयः प्रातर्नाऽभेद्। नहि परिक्रमाय गन्तुं सज्जस्थिते मयि कपाटं कुट्टितवान् । द्वारमुदघाट्यम् । भोजनालये भवन्तं नाद्राक्षम् । अतोऽहं वस्तुतो भीतो भवतः किंचिदप्यापतितं स्यादिति । अतः समागय भवान् प्रातः गृहे स्यास्यतीति श्रद्धयागतोऽस्मि । बाढम् । अत्राहं स्थितः । भवद्दशे रोगिणः प्रतिपालयितुं साहाय्यदाने सज्जस्थितोऽस्मि । मदायत्तः कोऽपि नास्तीति भवान् जानाति ॥

कृतज्ञोऽस्मीत्युक्त्वा निमेषार्धमप्यालोचयितुमगृहीत्वा मया प्रयुक्तं यथा—धात्रीकृत्यस्य त्वामहं न गृह्णीयाम् । एकद्विदिनेषु वयमितो विमुक्ता भविष्यामो नाधिका रोगग्रस्ताः सम्भवन्ति चेत् । किंत्वेकोऽस्ति विषयः ॥

को न्वयम् ? डरबनपत्तने 'इंडियन ओपिनियन' मुद्रायन्त्रं भवद्दशे स्थापयितुं किं मन्यसे । मदनजितमहाशयस्यात्रैव कार्यं विद्यते । डरबनपत्तनेऽक आवश्यकः । यदि गच्छेद्भवांस्तदर्थमहं विमुक्तो भविष्यामि ॥

मद्दशे मुद्रायन्त्रमेकमस्तीति भवान् वेत्ति । प्रायो गन्तुमहं शक्नोमि । परन्तु प्रत्युत्तरं सायं दास्यामि । सायंकालपरिक्रमे सम्भाषावहे ॥

परितुष्टोऽहमभूवम् । सम्भाषणं वृत्तम् । गन्तुं सम्मतिमदात् । वेतनं तस्य न गणनीयमासीत् । वेतनार्जनं तस्य नोद्देश आसीत् । प्रतिमासं दशपौण्डवेतनम् । अपि च लाभे सति तदेको भागः इति व्यवस्थापितम् । परेऽहन्येव वेस्टमहाशयः सायंकालीन'मेल'शकट्या डरबनपत्तनाय प्रतस्थे । तस्याधमर्णोरितरंदेयं मया प्रत्युपलब्धव्यम् । यदाहं दक्षिणाफ्रिकासमुद्रतीरमत्यजं तावत्पर्यन्तमयं मम सुखदुःखेषु भागी स्थितः ॥

वेस्टमहाशयो लाउथपत्तने कृषीवलकुटुम्बे जातः । सामान्यविद्याभ्यासः प्राप्तः । परन्त्वहं ममानुभवशालायामात्मसाहाय्यमात्रमुपलभ्य स्थितः । जानामि तं परिशुद्धं गभीरवृत्तिं भगवद्भीरुं परोपकारशीलं च ॥

तद्विषयेऽधिकतरं च तस्य कुटुम्बं चागाम्यध्यायेषु ज्ञास्याम ॥

# घस्मरं कूलीस्थानम्

**यद्यपि** मे सहकारिणोऽहं च रोगिणां रक्षणाद्विमुक्तास्तथाप्यसितप्लेगोपद्रवसबद्धा बहवो विषया स्थिता । कूलीस्थानविषये पौरसभाया अनवधानता प्रत्युक्तपूर्वा मया । परन्तु सा गौरागनिवासिनामारोग्यविषयेऽतीवजागरूकासीत् । तेषामारोग्यरक्षणाय बहुधन व्ययीकृत्येदानीं प्लेगविध्वसनाय बलाभिषेकमिव धनाभिषेक चकार । भारतीयजनस्योपरि पौरसभया कृतेषु बहुषु लोपदोषेषु प्रदर्शितेषु गौरागनिवासिना कृते तदौन्मुख्य दृश्यते । तस्या प्रशासनीयप्रक्रमेषु यावच्छक्यमह साहाय्यमकरवम् । मम सहकारिता त्यक्ता भविष्यच्चेत्तस्या कार्यं साधयितु कष्टतरमभविष्यत्। सा सेनाप्रयोगमप्यकरिष्यदित्यस्ति मे भावना ॥

परन्तु सर्वमेतत्परिहृतम्। पौरसभाधिकारिणो भारतीयजनस्य चारित्र्येण सतुष्टा । प्लेगविषयकस्य भविष्यत्कार्यस्यानुष्ठान सुकर जातम् । पौरसभाया आकाक्षामनुसृत्य वर्तनीयमिति भारतीयजनेषु यावती मे शक्तिस्तावती प्रयुक्तवान् साधयितुम्। भारतीयजन सर्वमपि कार्यं कर्तुमशक्तोऽपि ममाज्ञामुल्लघ्य नैवावर्तत । इदमह स्मरामि ॥

कूलीस्थान प्रबलरक्षामुखे स्थापितम् । अतर्बहिश्च गमनागमनाय यथा न शक्यमासीत् । मम सहकारिणा च निर्मुक्तानुज्ञापत्राण्यासन् । आसीन्निश्चय निर्णय स्थानस्य सर्वे निवासिन स्थान परित्यज्यान्यत्र गच्छेयु । जोहानिसबर्गप्रदेशात् सप्तक्रोशदूरे समभूमिस्थले स्थूलपटमडपेषु त्रीन् सप्ताहान् वसेयु । ततश्च स्थानमग्निदग्ध कुर्यात्। पटमडपेषु सभारानन्यदावश्यकद्रव्य चानीय निक्षेप्तु पर्याप्त काल आवश्यक आसीत्। एतदन्तरे कश्चिद्रक्षकश्चावश्यकस्तिष्ठेत् ॥

निवासिनो भयत्रत्रासयुक्ता आसन् । परन्तु मम सार्वदिकी स्थिति किंचिद् समाधानमकरोत्। अकिचना बहवो जना स्वरक्षित स्वल्पमपि भूमेरन्तर्निक्षिपन्नेनदुत्खाय द्रष्टव्यमापतितम् । तेषा द्रव्यस्थापनकोशो नासीत् । ते न कचिदजानन् । अह तेषा ( बैंकर ) कोशस्थापितद्रव्यग्रहीताभवम् । द्रव्यप्रवाहा मम कार्यालये निपेतु । तादृशकार्यनिर्वाहक्षणे मम प्रयासस्य शुल्कमादातु न शक्यमासीत् । कथचिन्मम कार्यं निरवाहयम् । कोशाध्यक्षो मे सम्यग्विदित । एतानि धनानि भवत्पार्श्वे निक्षेप्तु भवति प्रमग । बहूनि ताम्र-रजतनाणकानि स्वीकर्तुं न चिंतामाकरूयन् । प्लेगोपद्रवस्थानेभ्य आगतानि धनानि स्प्रष्टु तिरस्कुर्वन्तीति भयमासीत् । कोशाधिकारी मम सर्वरीत्या समाधानमकल्पयत् । कोशं प्रति धनप्रेषणात्पूर्वं रोगदोषपरिहार कर्तव्य इति निश्चितम् । मम स्मृतौ षष्टिसहस्र' पौंड 'मितद्रव्य कोशे न्यस्तमासीत् । येषा

यशो पर्याप्तं धनमासीत्तानहमवोच न्यस्यतामिदं धनं प्रतिष्ठितन्यासरूपेणेति । ते तथा चक्रुः । यत्फलमेतदासीत्तेषां कतिपये त्रिचत्वरेष्वपि त्रिधाविन्यासस्य सम्प्रदायं भेजिरे ॥

स्थाननिवासिनो विशिष्टशकटीद्वारा जोहानिसबर्गसमीपे 'क्लिपस्प्रूट'क्षेत्रं प्रति सचालिताः । तत्र ते पौरसभया सार्वजनिकद्रव्यव्ययेन सभारान् दापिताः । पटमण्डपीयमेतत्पत्तनं सैनिकशिबिरमिवादृश्यत । अनभ्यस्तशिबिरजीवना क्लेशप्राप्ता परपाटिमत्लोकयाश्चर्यभरिता बभूवुः । परन्तु किमप्यनानुकूल्यं तन्नैं सोढम् । प्रत्यहं मया पादेनोपचक्रमणेन गम्यते स्म । चतुर्विंशतिहोराभ्यन्तरे सक्लेशं ते व्यस्मरन् । आनन्देन च जीवितुं प्रवृत्ताः । यदा यदाहं तत्रागमं तदा तान् गीतेन हासेन चानुभवतोऽद्राक्षम् । सप्ताहत्रयपर्यन्तमनावृतप्रदेशे स्थिया स्पष्टमासीदारोग्यप्रकर्षः ॥

मम स्मृतौ निवासिनामागमनात्परेऽह्न्येव स्थानमग्निदग्धमभूत् । पौरसभा दहनज्वालाया किमपि रक्षितुमीषदपि लोभं नादर्शयत् । इममेव वेला तेनैव कारणेन क्रयनिक्रयस्थाने स्थितं दारु सर्वं ददाह । दशसाहस्र'पौंड'मितद्रव्यं नष्टमन्वभूत् । पण्यस्थाने मृतमूषका यतिचिद् दृष्टा इत्येतदेव कारणं शीघ्रकरणाय ॥

पौरसभा बहुव्ययमसहत । परं तद्द्रव्यस्य वृद्धिमवारयत् । पत्तनं पुनः सुखेन श्वासोच्छ्वा समकरोत् ॥

अष्टादशोऽध्यायः

## एकपुस्तकस्यैन्द्रजालप्रभावः

अमितप्रेगोपद्रवो निष्किञ्चनभारतीयजनेषु मम प्रभावमवर्धयत् । मम कार्यं पर्यनुयोज्यता च महत्त्वञ्चकार । 'युरोपियन'जनैः कतिचिन्मपरिचितास्तथा समीपपरिचिता यथा मे नैतिक्या यक्तिन्यताया प्राचुर्यं चक्रुः ॥

यथा वेस्टमहाशयस्य तथा पोलाकमहाशयस्यापि परिचयः शाकाहारभोजनालयेऽभवत् । मामसौ सद्यः स्वल्पदूरे निषण्णस्तरुणो मां द्रष्टुमिच्छामीति पत्रमेकं प्रैषयत । मम भोजनमञ्चपार्श्वमेत्य यथोचम् । स तथाकरोत् ॥

तेनोक्तं यथा--अहं 'क्रिटिक' पत्रिकाया उपप्रकाशकः । मुद्रायन्त्रे प्लेगविषये भवतो लेखपत्रमपठिषम । भवान् द्रष्टव्य इति ममेच्छा जाता । इदानीं तमवसरं प्राप्त इति मनुष्यामीति ॥

पोलाकमहाशयस्योदारभावो माममुचदर्पः । तत्रैव यावज्ज्ञाता परस्परं ज्ञातुं प्रवृत्तौ । जीवनस्य मुख्यविषयेष्वपयोरपि समानोऽभिप्राय आसीत । अकृत्रिमं जीवनं तस्येष्टम् ।

तस्यासीदाश्चर्यकरी शक्तिर्बुद्धिमागतस्यानुभवमार्गमानेतुम् । स्वजीवने कृतानि कतिपयपरिवर्तनानि मूलतस्त्वरितवृत्तानि बभूवु । 'इंडियन् ओपिनियन्' पत्रिका प्रत्यहमधिकव्ययवती भवति स्म। वेस्टमहाशयादागता प्रथमविज्ञापना भयकर्यासीत् । तेन हि लिखितं यथारम्भव्यापारतो यथा भवानालोचयत तथा लाभो न भावीति। नष्टमपि स्यादित्यहं भीतोऽस्मि। पुस्तकानि क्रमवन्ति न भवन्ति। प्रत्युपलम्भनीयो ऋणशेषो महान् विद्यते। तस्य शिरोलागूलं न जानीम । इतस्ततो बहुशः समारोपणीयं भवति। परन्त्वेतत्सर्वं भवन्तं न त्रासयितुमलम्। यावच्छक्यं विषयान्सम्यक् स्थापयितुं प्रयतिष्ये। लाभोऽस्तु वा न वाहं पुनः स्थास्यामीति ॥

वेस्टमहाशयो लाभो न भवतीति प्रत्यक्षीकृत्य परित्यक्तवान् भवेत्। नाहं तस्य दोषं ब्रूयाम्। वस्तुतो व्यापारो लाभकरीति प्रमाणं विना मद्वचनं श्रुत्वा मामभिशप्तुमधिकारवान् भवेत् । परन्त्वयमेकमपि प्रवादशब्दं नोक्तवान्। अस्तीयं मे भावना यदेतद्विलोक्य वेस्टमहाशयो मां श्रद्धालुं मन्येत। मदनजितमहाशयस्य परिमल्याल परीक्षणं विना समादाय लाभकारीति वेस्टमहाशयमवोचम् ॥

इदानीमहं सिद्धमतिरस्मि। यत्सार्वजनीनं सहकारी स्वयमनिश्चितो भाषणं न कुर्यादिति। सत्यव्रतो वस्तुतो महती जागरूकता भवेत्। प्रमाणेन सम्यक् शोधनं विना भाषणं सत्याभासं । इदं स्वीकर्तुमहं दुःखितोऽस्मि यदेतद् ज्ञात्वापि श्रद्धालुतास्वभावो न निजितो मयेति। शक्यादधिकं कर्तुमाशैव कारणम्। इयमाशा बहुधा मम सहकारिणामेव क्लेशहेतुः । न तावन्मम ॥

वेस्टमहाशयस्य लेखं प्राप्य नातालदेशं प्रति प्रस्थितः । पोलाकमहाशयो मम केवलं विश्वासपात्रमासीत् । अग्निरथसंचालितमानारोहमग्निरथविरामस्थानं गतस्य प्रस्थानमालोक्य प्रयाणं कुर्वता भवता पुस्तकमिदं पठनीयमित्युक्त्वा इदं ते रोचत इति प्रयेमीयमददत् । तत्पुस्तकं रस्किनमहाशयरचितं 'अन्टु दिस लास्ट' इति ॥

एकदा पठितुमारब्धस्य विरामं स्थापयितुमशक्यमासीत्। जोहनिसबर्गस्थानात् डरबनपर्यन्तं चतुर्विंशतिहोराकालमितं प्रयाणम्। बाष्पसंचालितयानं तत्र सायं प्रापत्। तस्यां रात्रौ नाहं निद्रां कर्तुमशकम्। प्रस्तुतानुसारेण मम जीवनं परिवर्तयितुं निरचैषम् ॥

इदमेव प्रथमं पुस्तकं रस्किनमहाशयप्रणीतं मया पठितम् । मम विद्याभ्यासदिवसेषु नियमितपुस्तकानि विना न किंचिदन्यमया पठितम्। यदाहं कर्मोद्युक्तस्तदा स्वल्पकालवशात्र पठितुमशकम्। पुस्तकोत्पन्नं ज्ञानं मे बहुलं नास्ति। बलान्नियमनेन न मे नष्टमासीत्। प्रत्युत परिमितपठनेन यत्पठितं तत्सम्पूर्णमेव जीर्णीकृतम् । पठितपुस्तकेषु तात्कालिकपरिवर्तनं सत्वरमुत्पादितवत्पुस्तकम् एकं 'अन्टु दिस लास्ट' इति। तस्य भाषान्तरेण पश्चात्कृतं गुर्जरभाषाया सर्वोदयनाम्नि लेखने ॥

रस्किनमहाशयरचितेऽस्मिन्महाग्रन्थे ममागाधहृदयगतनिश्चयानवालोकयमिति विश्वसिमि। अत मामाचकर्ष जीवन च परिवर्तयामास ॥

मानुषस्य हृदये गूढ यसमीचीन वर्तते तदाकृष्य प्रदर्शयितु शक्त कवि । कवय सर्वानेकरीत्या न प्रवर्तयन्ति । यत प्रतिमनुष्य समानपरिमाणेन न प्रसारित ॥

' अन्टु धिस लास्ट ' अस्य योऽर्थ इत्यमह जानामि —

( १ ) प्रत्येकसमानस्य यसाधु तत्सर्वेषा साधु वर्तते ।

( २ ) ' वकील ' कार्यस्य मूल्य नापितकार्यस्य मूल्य च समान यत सर्वेऽपि स्वस्वकार्याज्जीवन सपादयितुमधिकारिण ।

( ३ ) भूमे कर्षकस्य वर्मकारस्य च जीवनानि सुजीवनानि ।

एतेषा प्रथममहमज्ञासिषम् । द्वितीय मे बुद्धौ मन्द मन्द स्थितम् । तृतीय न मे कदाप्यस्फुरत् ॥

' अन्टु धिस लास्ट ' दिनवत्प्रकाशीकृतवान् यथा द्वितीय च तृतीय च प्रथमगतानीति । प्रत्यूषेऽहमुत्थित एतानि कारणान्यनुभवमार्गमानेतु सज्जस्थित ॥

## एकोनत्रिंशोऽध्यायः

# 'फीनिक्स' –आश्रमः

वेस्टमहाशयेन सह सर्वोऽपि विषय समापित । ' अन्टु धिस लास्ट ' पुस्तक मम मानसोपर्युत्पादित फलमवर्णनीयम् । ' इंडियन ओपिनियन ' कृषिक्षेत्र प्रत्यानेतव्य तद्विषये प्रत्येकेनापि परिश्रमितव्य पूर्ण जीवनवेतनमेव ग्रहीतव्यमवकाशे प्राप्ते मुद्रायन्त्रकार्यमपि द्रष्टव्यम् । इत्येव कर्तव्यसूचनामकरवम् । वेस्टमहाशय सम्मतिं ददौ । प्रतिमासस्य प्रत्येक वेतन वर्णदेशाभिमानी निरपेक्ष्य ' पौंड ' त्रयमिति निश्चितम् ॥

परन्तु प्रश्न एक स्थित । मुद्रायन्त्रे कार्यकारिणो दश वा तदधिका वा दूरक्षेत्रं गत्वा येनकेनप्रकारेण किं सतुष्टा भविष्यन्तीति । एतदुपायस्वीकारे न योग्या ये भवन्ति ते पूर्ववेतनं गृह्णन्तु क्रमश क्रमश आश्रमस्याभिमुखाय प्रयतितव्यम् ॥

कर्तव्यसूचनामुद्दिश्य कर्मकारिभि सह भाषण कृतवान् । मदनजितमहाशयायेद नाभेष्ट । अस्माकमसमर्थता ममेव रसस्य मांसस्य विनियोगोऽपि विनष्टो भवेत् । कर्मकारिण मौढ्य प्रापयेत् । ' इंडियन ओपिनियन ' व्यापारो विरमति । मुद्रायन्त्र चानुपयोगात स्थापितं भवेत ॥

मुद्रायन्त्रे कर्म कुर्वतां मध्ये मम ज्ञातीनामेकतम आनन्दलाल-गान्धिमहाशय एक आसीत् । यत्कर्तव्यसूचना वेस्टमहाशयस्य यदाकरवं तदेवास्यापि कृतवान् । भार्यापत्यानि च तस्यासन् । परन्तु शैशवात्प्रभृति मयैव शिक्षितो मद्गृहे स्थित । मयि तस्य श्रद्धा सम्पूर्णासीत् । अतो विवाद विनोक्तोपायस्य सम्मति दत्त्वाथासीत् मत्समीपमेवास्ते । यन्त्रकार गोविंदस्वामीमहाशयोऽपि सम्मूचनामङ्गीचकार । इतरे तु नैनोपाय स्वीचक्रु । परन्तु मुद्रायन्त्र यत्र गच्छेत्तत्र गन्तु समेनिरे ॥

इमान् विषयानेतैर्मनुष्यैर्व्यवस्थापयितु दिनद्वयादधिक काल नापेक्षितम् । अतोऽह विलम्ब विना डरबनपत्तने वाष्पचालितयाननिरामस्थानसमीपस्थितभूमिरेकापेक्षितेति समाचारपत्रेणाप्रकाशयम् । प्रतिगृह्णनामिति फीनिक्सस्योपहार आगत । भूमिं परीक्षितुमह वेस्टमहाशयश्च गतौ । सप्ताहाभ्यन्तरे विंशति'एकर'परिमिता भूमिरस्माभि क्रीता । तत्र समीचीन स्वल्पो निर्झर कतिपये नारङ्गचूतवृक्षाश्चासन् । तत्समीप एवाशीति 'एकर'परिमिता भूमिरासीत् । तत्र च बहव फलवृक्षा जीर्णकुटीरश्चैक आसन् । इद च क्रीतमस्माभि । समग्रव्यय एकसहस्रपौण्डमितद्रव्यम् ॥

दिवगतो रुस्तमजीमहाशय एतादृशोद्यमेषु मम हस्तावलम्ब यच्छति स्म । उपायोऽय तस्येष्ट आसीत् । महान्तमाररगृहस्य प्रयुक्तपूर्वलोहफलकान् गृहनिर्माणवस्तूनि चास्मद्वशे निचिक्षेप । अस्माभिश्च कार्यमारब्धम् । कतिपयभारतीयतक्षका प्रस्तरन्यासकाश्च 'बोअर' युद्धे मया सह कार्यकर्तारो मुद्रायन्त्राय मण्डपिका निर्मातु साहाय्यमकुर्वन् । एतद्भवन परिमाणे पञ्चसप्तति 'फीट' दीर्घ पञ्चाशत् 'फीट' विस्तीर्णमेकमासाभ्यन्तरेण सज्जस्थितमभूत् । वेस्टमहाशय इतरैजनाश्च तक्षकै शिलाशिल्पिभिश्च सहायेऽपि निर्भीका स्थिता । निवाम शून्यस्तृणैरतिप्ररूढ सर्पैराक्रान्तो नितरां भयङ्कर आसीत् । प्रथमत सर्वेऽपि पटमण्डपे उषिता प्राय सर्वाणि वस्तूनि शकटेषु 'फिनिक्स' प्रदेश प्रति नीतानि । डरबनपत्तनात् चतुर्दशक्रोशदूरे 'फीनिक्स' स्थान वाष्पचालितयाननिरामस्थानात् सार्धद्विक्रोशदूरे स्थितम् ॥

'मरक्युरि' मुद्रायन्त्रे 'इंडियन ओपिनियन' पत्रिकैकवारमेव बहिर्मुद्रापिताभूत् ॥

अहमिदानीं 'फीनिक्स' पत्तन प्रति भारतदेशात् मया सह स्वादृष्टपरीक्षार्थमागतान् तत्तत्कार्येषु प्रसक्तानाकष्टु प्रायतिषि । धनान्वेषणाय ते आगता । तस्मात्तानानेतु कष्टमासीत् । परतु कतिपये समेनिरे एतेषु मगनलालगान्धिमहाशयस्य नामधेयमेक स्मरामि । अन्ये कार्याय प्रतिनिवृत्ता मगनलालगान्धिमहाशय स्वकार्यमेकान्तत परित्यज्य मया सह स्थित शक्त्याभिनिग्रहे श्रद्धाया च मम नैतिकपरीक्षासु मम पूर्वोक्तसहकारिणं मध्ये प्रथमस्तिष्ठति । स्वयशिक्षित-शिल्पविदस्य तस्य तन्मध्ये स्थितिर्विलक्षणा भवति ॥

एव 'फीनिक्स'व्यवस्थापन चतुरुत्तरैकोनसहस्राधिकाब्दे समारब्धम् । तत्रापि 'इंडियन ओपिनियन' पत्रिका बहुक्लेशान्ते पतिनापि मुद्रण प्राप्स्यति ॥

परेत्वारम्भमर्दा कृतानि परिवर्तनान्याशा नैराश्य चान्यस्याध्यायमपेक्षन्ते ॥

विंशतितमोऽध्यायः

# प्रथमा रात्रिः

'**इंडियन-ओपिनियन**' प्रथमसंख्या 'फीनिक्स'ग्रामाद्विनिर्गमयितु नासीत्सुलभो विषय। द्विप्रकारेण पूर्वावधान नाकरिष्य यदि प्रथमा सचिका त्यक्ता वा विलम्बिता वाभविष्यत्। यन्त्रेण मुद्रायन्त्रप्रसारण मम बुद्धिं नारूढम्। यत्र कृषिकार्यं हस्तेन क्रियते तत्र हस्तशक्तिरेव योग्येति मे मनस्यासीत्। परन्तु मनोगत न शक्यमित्यस्माभिस्तैलयन्त्र प्रतिष्ठापितम्। यन्त्रहानौ यथा कयाचित् लघुक्रियया यन्त्रहाने परिहार स्यात्तथा भवितव्यमिति वेस्टमहाशयस्य सूचना दत्तवान्। अतोऽसौ हस्तेन भ्रमणयोग्य चक्रमेक व्यवापयत्। विदूरस्थ' फीनिक्स 'सदृशस्थलस्य पत्रस्य परिमाण दैनदिनपत्रिकावत्र योग्य मतमासीत्। 'फुलस्केप' परिमाणाय तथा नयनीकृतमासीद्यथा पादनोद्ययन्त्रेण प्रतिलिपयो निर्मिता स्यु ॥

आदौ मुद्रापणदिवसात्पूर्वं कालातीत सर्वे वय कार्यप्रसक्ता अभूम। प्रत्येको युवा वृद्धो वा पत्रिकापुटीकरणेन साहाय्य कुर्यात्। दशहोरार्धरात्र्योर्मध्ये प्रायशोऽस्मत्कार्यं समाप्तिमगमत्। परन्तु प्रथमावृत्ति सस्मरणीया भवति। फलकास्तालयन्त्रबद्धा स्थिता। परन्तु यन्त्र न चचाल। यन्त्रशिल्पिनमेक डरबनपत्तनाद्ग्रमानीय यन्त्रचालनाय स्थापितवन्त। सोऽय वेस्टमहाशयश्च बहुक्लेशेन वृथा प्रायतिषाताम्। प्रत्येक पुरुषोऽपि बहू सुक आसीत्। वेस्टमहाशयो निराशो भूत्वा नेत्राम्बुपूर्ण समागत्योवाच यथा—यन्त्र न चलति। समये पत्रिका सचालयितुमशक्यमिति ॥

यद्येवमेव किं कुर्म। अल नेत्रजल मुञ्च। पुनःप्रयत्नसाध्य यत्किंचिदन्यदेव कुर्म। हस्तचक्र निल स्यात्। इति समाधानेनावोचम् ॥

तेन प्रयुक्त यथा कार्यकरणायास्मद्दशे जना कुत्र सन्ति। कार्यं कर्तुं वय न पर्याप्ता। प्रत्येक चत्वार आवश्यका। अस्मज्जना सर्वेऽप्यायस्ता भवन्तीति ॥

गृहनिर्माणकार्यमद्यापि न समाप्तम्। अत एव तक्षका अस्मद्दशे तिष्ठन्ति। मुद्रायन्त्रभूमितले निद्राणा स्थिता। इमानेवोपयोक्तु किं न शक्यम्। सर्वां रात्रिं कार्यं कुर्म। अयमुपायोऽस्माक सन्निस्थितो भवति ॥

तक्षकानुत्थापयितुं गतोऽस्मि। अस्मज्जनो नूनमतीवायस्त। उक्त मया यथा—अय व्यवहारो ममाप्तामिति ॥

वेस्टमहाशय प्रत्युवाच। तर्हि कार्यानुष्ठान शक्यमेव ॥

'फीनिक्स' गृहीतोऽनिरीक्षितपर्यायोऽनिरीक्षितमभवाश्च नैव लाभिकरा अभूवन्। परन्तु पूर्वनिरीक्षितादुत्तममिति वक्तमशक्यम् ॥

हस्तप्रयासेन प्रत्येक जीविना लब्धु मुद्रायन्त्रपरिसरवर्तिनीं भूमिं खण्डशो विभज्य दत्ते प्रत्येक 'एकर' त्रयमागतम्। तेषामेको मम भाग । एषा स्थलानामुपर्यनपेक्षायामपि ओहमयाना गृहाणा निर्माणमकार्यम् । आसीदस्मदभिलाषो यत्तृणच्छन्नानि मृत्तिकाकुटीराण्यथवा सामान्यकृषी-वलोचितानीष्टकामदिराणि निर्मातुम्। परन्तु न शक्यमासीत् । तेषा व्ययोऽधिको भविष्यति । कालेऽप्यधिकोऽपेक्ष्यते स्म । प्रत्येकोऽपि यावच्छक्य शीघ्रमेवात्रस्थातुमुत्सुकोऽभूत् ॥

पत्रप्रकाशकोऽद्यापि मनसुखलालनाजरमहाशय एवासीत् । नवीनोपायस्तेन नाङ्गीकृत । पत्रिका डरबनपत्तनात् सचाळयति स्म । तत्र 'इंडियन ओपिनियन' पत्रिकाया शाखाकार्यालय आसीत् । यद्यपि दत्तवेतना मुद्राक्षरविन्यासकृत स्थितास्तथाप्याश्रमस्य प्रत्येक पुरुषो मुद्राक्षर-स्थापन मुद्रायन्त्रचालनक्रमेषु प्रयास कमपि सुलभतर शिक्षितुमुद्युक्त आसीत्। अज्ञातपूर्वकर्माणि शिक्षन्ते स्म । अह तावदधर्मन्त मूर्ख एव स्थित । मगनलालगान्धिमहाशयो न सर्वानभ्यति शयितवा मुद्रायन्त्रकार्यालये यद्यपि नैव कार्यमकरोत्तथाप्यतिनिपुणो मुद्राक्षरविन्यासकारी बभूव । न केवल शीघ्रता प्रापदपि तु मुद्रायन्त्रस्य सर्वास्वपि शाखासु शिक्षणीयमशिक्षतेति ममातीवाश्चर्यम्। स निजगामीयशक्ति प्रति नैव सचेतन आसीदिति मे सार्वदिको वितर्क ॥

वय पुनरिदानीमवस्थिता गृहाणि च सज्जस्थितानि तावदेव नूतननिर्मितानि । इमानि परित्यज्य जोहानिसबर्गप्रदेश गन्तव्यमापतितम्। तत्र कार्यमवधान विना चिरकालपर्यन्त त्यक्त्वा स्थातव्यपरिस्थिति न प्राप्त ॥

जोहनिसबर्गप्रदेश प्रतिनिवृत्तो मया कृतानि मुख्यपरिवर्तनानि पोळकमहाशयमवोचम् । पुस्तकदान तावत् फलकार्यासीदिति परानन्दमभजत्। सोऽपृच्छद्यथा नूतनकार्ये भाग वोढु किं मे शक्य स्यादिति । व्यवस्थापन समीक्ष्यसि वेच्छक्यमेवेत्यहमवोचम् । तेन प्रत्युक्त यथा – अह सज्जस्थित प्रवेशनीयश्चेदिति ॥

तस्य निश्चयबुद्धिर्मां वशीचकार । मुख्याध्यक्षस्य पूर्वसूचना दत्वा 'क्रिटिक' पत्रिकाया रामुत्तारित क्रमेण 'फीनिक्स'स्थल प्राप । स्वस्य लौकिकयुक्तिभि सर्वेषा हृदय निर्जित्य शीघ्रमेव कुटुम्बजनो बभूव । स्वस्वभावतया सरलो यथा 'फीनिक्स'स्थले जीवन विचित्र यन्तर वा न मेने । हसाय जलमिव तस्मै तदरोचत । परन्तेन तत्र चिराय स्थापयितुमशक्य मासीत् । रीचमहाशय 'इङ्लेण्ड' देशे 'लॉ' अभ्यास समापयितु निरचैषीत् । अत्र मयैकेन कार्याभार सोढुमशक्यमासीत् । पोलाकमहाशयस्याहममूचय यद्वत्ता कार्यालये समायुक्त प्रतिपुरुषस्य योग्यो भवितुमर्हसीति । पर्यन्ते उभावपि कार्यनिवृत्य 'फीनिक्स' स्थलेऽवस्थिती भवनेत्यावाभ्यामाळोचितम्। तत्तु तथा न सवृत्तम् । पोलाक महाशयस्तथा श्रद्धालुस्वभाव यथा

मित्रे विश्वासं करोति चेत्तेन सह समन्यते न ▮ चर्चां करोति । 'फीनिक्स' स्थलात्तेन लिखितं यथा–यद्यपि तत्रत्यजीविकया प्रीतस्तथाप्यद्यसुखितोऽस्मि । आश्रममूर्जितं कर्तुं मे आशा विद्यते । तथापि परित्यज्य कार्यालयमागन्तुमस्मि सज्जस्थितः । यदि प्रतिपुरुषीभवनेन योग्यता सपाद्यते यदि चास्मदुपायस्य सिद्धिर्भविष्यति शीघ्रतरमेवेति । तस्य पत्रं मनःपूर्वकमभिनन्दितम् । पोलाकमहाशये 'फीनिक्स' स्थलं परित्यज्य जोहानिसबर्गपत्तनमागत्य मया सह नियमपत्रं स्वहस्ताक्षरी चकार ॥

तस्मिन्नेव काले 'स्कॉटलैंड' देशीयो भागवतः पोलाकमहाशयमुदाहृत्य समाहूतो लेखकविशेषो भूत्वा स्थितः । तस्य नामधेयं मेकिनटायरमहाशय इति ॥

एवं 'फीनिक्स' स्थले उपायसिद्धाः प्रशासनीयोद्देशेनागाधमगाधं गन्ता । प्रतिकूलप्रवाहे पतितः सरलजीवननामधेयेन प्रसारितया वागुरया बद्धोऽभविष्यं यदि भगवता नान्यथामतमासीत् ॥

कतिपयाध्यायानतिक्रम्य वर्णयितुं प्रवर्तेय कथमहं ममोपायान् रक्षितवान् यथा केनाप्यभ्युदयितुमशक्यमिति रीत्या ॥

द्वाविंशोऽध्यायः

# देवः कं रक्षति

**इदानीं** मयाशा परित्यक्ता भारतदेशं पुनर्गन्तुम् । वर्षाभ्यन्तरे गृहं प्रयास्यामीति भार्यायै वाक्यमदायि । प्रतिवृत्त्याशा विना एकवर्षमत्यक्रामत् । पुत्रसमेतां तामानेतुं निरणैषम् ॥

दक्षिणाफ्रिकागामिन्यां नौकायां मम तृतीयपुत्रो रामदासो नौकाध्यक्षेण सह खेलाप्रसक्तः स्वबाहुं बभञ्ज । नौकाध्यक्षस्तं पालयति स्म । नौकावैद्योऽप्यवैक्षत । रामदासः प्रक्षेपणीसमेतस्तीरमवतीर्णः । गृहप्राप्तेरनन्तरमेव केनचिदल्पमूल्येनैव क्षतं वर्धयितव्यमिति नौकावैद्येनोक्तम् । अस्मिन्नेव काले मृत्तिकाचिकित्साया मम पूर्णश्रद्धासीत् । मम दुश्चिकित्साया श्रद्धादृढं मम व्यवहारिणश्च मृत्तिकोदकमौषधं सेवितुमरोचन् ॥

रामदासस्य किमिदानीं कर्तव्यम् । स किलाष्टवर्षदेशीयः । क्षतं तवाहं चिकित्सयामि किमित्यपृच्छम् । नैव चिन्ता मे इति स मन्दहासमवोचत् । तस्मिन्वयस्याऽमनः किमुत्तममिति विभावयितुं निश्चेतुं वा शक्यमासीत् । परन्तु दुश्चिकित्साया समुचितवैद्यचिकित्सायाश्च भेदं सम्यगजानात् । मम गृहचिकित्सायाश्च स्वभावो विदितः । मयि दृढप्रत्ययं कर्तुं श्रदधात । भीतभीतः कम्पमानश्च बन्धनमुद्धृत्य क्षतं प्रक्षाल्य मृत्तिकालेपं दत्वा बाहुमुदबन्धम् । एवंविध

परिवेष्टनमेव मासपर्यन्तमकार । व्रणः सम्पूर्णमेव प्रशान्तः । सामान्यरीत्या यावान् कालोऽपेक्ष्यते तावता कालेनैव प्रशाम्यतीति नौकार्यवोक्तप्रकारेणान्तरायं विना तावता कालेनैव शान्तिमागात् ॥

एतदन्यानि च परीक्षणानि गृहौषधेषु मम श्रद्धामवर्धयत । अधिकेनात्मविश्वासेन तानि समचालयम् । मृत्तिकोदकलङ्घनचिकित्सा क्षतेषु ज्वरेष्वजीर्णपाण्डुरोगेष्वपि चान्येष्वामयेषु विशालीकृत्य पर्यैक्षिषि । सर्वदा विजयवानभूवम् ॥

दक्षिणाफ्रिकादेशे यावान् विश्वास आसीत्तावानद्य नास्ति । अनुभवेन च प्रदर्शितं यथेमानि परीक्षणानि सुस्पष्टमपाययुक्तानीति ॥

अत्र सूचनमेषां परीक्षणानां विजयप्रतिपादनाय नाभिप्रेतम् । नास्ति मेऽधिकारः सम्पूर्णविजयस्य परीक्षणे । वैद्या अपि स्वपरीक्षणानां विजयस्य नाधिकुर्वते । यस्तु नूतनं परीक्षणं करोति स स्वकीयमेवारमेत । एतेन शीघ्रतरमेव सत्यं प्रकाशते । देवः सदा न्यायवर्तिनं परीक्षकं रक्षति ॥

'युरोपियन' जनेन समीपसम्पर्काभ्यासेऽपाया प्रकृतिचिकित्सायामिव गुरुतरा विघ्ना । तेऽपायास्त्वन्यविधा आसन् । परन्तु तत्सम्पर्काभ्यासेऽपायविषयो न मे मनस्यस्फुरत् ॥

आगत्य मया सह स्थातुं पोलाकमहाशयो मयाहूतः । एकोदरभ्रातर इवास्माभिर्निवस्तुमारब्धम् । पोलाकमहाशयस्य भाविनी भार्या कतिपयवर्षेभ्यो विवाहाय बद्धादरा परन्तु विवाहोऽनुकूलकालं यावद्विलम्बितम् । विवाहितजीवनाय व्यवस्थानतः पूर्वं धनसङ्ग्रहं कर्तुमैच्छदिति मे भावना । मदपेक्षया साधुतरं रस्किनमहाशयस्य तत्त्वान्यजानात् । परन्तु पाश्चात्यमतेन रस्किनमहाशयस्य शिक्षणमभ्यासमार्गमानेतुम् अन्तरायोऽभवत् । परन्त्वहं तेनोपन्यासमकरवं युष्मा युवयोरिव हृदयैक्ये सति धनविषयं पर्यालोच्य विवाहं विलम्बयितुं न साधु । दारिद्र्यमन्तरायश्चेद्दरिद्रा अविवाहिता एव तिष्ठन्ति । मया सह स्थीयते त्वया । गृहव्ययो न प्रष्टव्यः । शीघ्रतरं विवाहः करणीय इति । गताध्याये उक्तरीत्या पोलाकमहाशयेन सह द्विवारं नैव भाष्यते । तत्क्षणमेव वध्वा सह पत्रव्यवहारमकरोत् । तदानीं सा 'इङ्लण्ड' देशे स्थिता । लेखनेनातिसन्तुष्टाभवत् । कतिपयमासेषु जोहानिसबर्गपत्तनं प्राप्ता । विवाहाय व्ययो न प्रष्टव्यो वेषभूषादिकस्य विचार एव नास्ति । ताभ्यां धार्मिका विधया नापेक्षिता । विवाहबन्धनस्य मुद्रा नापेक्षिता । वधूस्तत्र क्रिस्तानुयायिन्यासीज्जनमन । पोलाकः यहूदीजनः । तयोः सामान्यधर्मो नैतिकः ॥

एतद्विवाहविषये विनोदांशो वक्तव्यः । 'युरोपियन' जनविवाहेषु लेख्यारोपक ('रजिस्ट्रार') असितवर्णयुक्तानां विवाहं नैव लेख्यप्राप्तं करोति । 'युरोपियन' मित्रं दुर्लभं इति न । परन्तु पोलाकमहाशयः सूचनां न सेहे । अतो वयं त्रयो विवाहलेख्यारोपक

प्रति गता । कथं ज्ञायेत यत्राह ‘साक्षिपुरुष’ विवाहे पक्षयोर्गौराणां स्युः । विचाराय प्रवृत्तः लेख्यप्रामं निर्ग्रथयितुमियेष । परेद्युः भानुवार आसीत् । अनन्तरदिवसो नूतनवत्सरदिनम् । अयं च सर्वविश्रामदिवसः । सुघटितविवाहदिनं निःसार्थानवशादन्यथाकर्तुं मनुष्यमात्रस्य दुःसहमासीत् । लेख्यारोपणविधानस्याध्यक्षं प्रधानप्राड्विवाकमहमवेदिषम् । अतस्तस्य पुरस्ताद्विवाहयुगलेन सह गत्वा स्थितः । दृष्ट्वा जहास । लेख्यारोपकस्य पत्रमदात् । विवाहो लेख्यारूढ आसीत् ॥

अथ यावदस्माभिः सहोषिता ‘युरोपियन’जनाः पूर्वमेव मम विदिता बभूवुः । परन्त्विदानीमपूर्वज्ञाताङ्गलस्त्री कुटुम्बे प्रविष्टा । नवोढयुगलेन सह मम क्लेशप्राप्तिं न स्मरामि । यद्यपि पोलाकमहाशयस्य भार्या मम प्रीतिर्हीने भवेतां तथापि सुव्यवस्थितसमानकुटुम्बेषु तत्सम्भवति । इदं तु स्मरणीयं यन्मदीयकुटुम्बं वस्तुतो विजातीयमिति । तत्र हि नानाविधस्वभावाः सर्वविधा जना निर्यन्त्रणं प्रवेशं लेभिरे । चिन्त्यमाने सजातीयविजातीययोर्भेदो मम नास्ति एव । सर्वे वयमेककुटुम्बस्थाः ॥

अस्मिन्नेवाध्याये वेस्टमहाशयस्य विवाहमपि वर्णयिष्यामि । मम जीवितस्यास्यामेवावस्थायां ब्रह्मचर्यविषयका भावना न पक्वा सञ्जाता । अत एवाहं सर्वान् मम ब्रह्मचारिसुहृदो विवाहितान् कर्तुमुत्साहं ग्रहीष्यामि । यदा वेस्टमहाशयो विविधशास्त्रपितृगमनयो किन्तु ‘लाऊथ’ पत्तनं प्रति यात्रां चकार तदा यदि शक्यं स्यात्तदा विवाहितः प्रत्यागमिष्यतीति बुद्धिवादमदाम् । ‘फीनिक्स’स्थलं सर्वसाधारणं गृहम् । सर्वे वयं कृषीवलाः सञ्जाता इति भाविताः । अतो विवाहात्तस्य परिणामाच्च न भीताः । वेस्टमहाशयो भार्यया सहागतः । लेसेस्टरपत्तनाद्भार्या सुन्दरी युवतिश्चागता । सा नापितकुटुम्बे समुत्पन्ना । तत्र शिल्पगृहे कर्म करोति स्म । सा सुन्दरीति मया भाषिता । तस्याः सौन्दर्यं च नैतिकं यस्मा चकर्ष । पारमार्थिकं सौन्दर्यं हृदयशुद्धौ वर्तते । वेस्टमहाशयेन सह तस्य श्वश्रूरप्यागता । सा वृद्धा स्त्री । अद्यापि जीवति । तस्या हृद्यवसायं मानन्दोत्साहवान् स्वभावो लज्जितानस्मान् चकार ॥

यथा ‘युरोपियन’सुहृदो विवाहं प्रोत्साहितवांस्तथा भारतीयसुहृदश्च स्वगृहेभ्यः स्वकुटुम्बान्यानेतुं धैर्योक्तिभिः प्रेरितवान् । इत्थं ‘फीनिक्स’ ग्रामसदृशमभूत् । षट् कुटुम्बान्यागत्यावस्थितानि । तत्र तानि ववृधिरे ॥

## त्रयोविंशोऽध्यायः

# गृहकृत्यस्यैकं दृश्यम्

दृष्टपूर्वं हि यथा गृहव्यया गुरुतरा । लघूकरणं तेषां डरबनपत्तने प्रारभत । परन्तु जोहनिसबर्गगृहे रस्किनमहाशयस्य शिक्षामनुसृत्य कठिनतरो निमर्शः प्राप्त ॥

उत्तरवादिनो ( बारिस्टर ) गृहे यावल्लाघवं शक्यं तावल्लघुत्वं निवेशितम् । कतिचिदुपस्कारान् विना वर्तितुमशक्यमासीत् । परिवर्तनमाभ्यन्तरिकं न पुनर्बाह्यम् । स्वतो दैहिकप्रयासान् कर्तुमिच्छा ववृधे । अत एव पुत्रानपि तदभ्यास एव परिश्रान्तान् कर्तुमारब्धवान् ॥

आपूपिकाद्पूपक्रयणं परित्यज्य 'क्युने' महाशयस्य निर्देशानुसारेण गृहे आकिण्वापूपं कर्तुमारब्धं । सामान्यतो यन्त्रपिष्टमस्य न किंचित्प्रयोजनम् । पर्यालोचितं च यद्धस्तपिष्टेनाधिकं सारल्यमारोग्यं मितव्ययश्च लभ्यन्त इति । अतो हस्तयन्त्रमेकं सप्त'पौंड'मितद्रव्येण क्रीतवान् । तदेवैकेनैव पुरुषेण धारयितुमशक्यं द्वाभ्यां सुकरम् । पोलाकमहाशयोऽहं च पुत्राश्च प्रायेण कुर्वन्ति स्म । मम भार्या च हस्तं योजयति स्म । तस्याः कालः पाकशालाकर्मारम्भात्पूर्वम् । पोलाकमहाशयस्तस्यागमनादनन्तरमस्माभिर्मिलित । पेषणमपत्यानां बहूपयुक्तो व्यायाम आसीत् । एतद्वान्यद्वा कर्म तदुपरि न्यस्तम् । परन्तु तेषामिदं क्रीडनमिवासीत् । आयस्ताश्चेत् परित्यज्य गन्तुं स्वतन्त्राः । परन्तपयान्यग्रे वक्तव्यानि न कदापि मां तत्यजुः । विरुद्धकारिणो न स्थिता इति न । परन्तु प्रायः सर्वेऽपि सोत्साहं कर्म चक्रुः । विरला खलु युवानस्तत्काले कर्मन्यानका आयासकातरो वा ॥

गृहरक्षणाय सेवक एको नियुक्त आसीत् । कुटुम्बजन इवास्मासु सहोषितवांस्तस्य कर्मण्यपत्यानि तस्य साहाय्यं कुर्वन्ति स्म । नगरपालिकासमार्जकः रात्रिविसृष्टान्यमेध्यानि शोधयामास । परन्तु वयं भृत्यमनुक्त्वा कुटुम्बे स्वयमेव मार्जयामासिम । अत एव मम पुत्राणां मध्ये नैकोऽपि समार्जकस्य कर्म कर्तुं प्रतिकूल आसीत् । अपि च ते सामान्यारोग्यविषये दृढीकृतनुदयो बभूवुः ॥

जोहानिसबर्गपत्तने नैकोऽपि रुग्णः स्थितः । आमये सति रोगिणः पुत्रा मम पूर्वं चिकित्सयमापुः । तेषां विद्याभ्यासविषयेऽहमुदासीनः स्थित इति नाहं ब्रूयाम् । परन्तु तत्परित्याजयितुं नाभीमे विकल्पः । आस्ते पुत्राणां ममोपर्याक्षेपकारणम् । तत्तदवसरेषु तैरादव्याकुलमेव । अहमपराधीनि किंचिन्मन्ये मे । विद्याभ्यासः कारयितव्य इति ममास्यासीत् । मयैव विद्यां शिक्षयितुं प्रयत्नितम् । परन्तु प्रतिकार य कश्चिद्विघ्नतया स्थितः । मया सह प्रवर्ष परिजनाय वर्तितानां कार्यालयं प्रति गमनं तत प्रतिनिवर्तनमिति योजनद्वयदूरं गतागतं कारिता ।

गृहे शिक्षणाय न कोऽपि नियुक्त आसीत् । अनेन परिक्रमणेनास्माक व्यायामाधिक्य जातम् । परिक्रमणेष्वनन्यभावे मभापणेन शिक्षा प्रदीयते स्म । भारतदेशस्थित ज्येष्ठपुत्र हरिलालमहाशय विनेतरे सर्वेऽपि जोहानिसबर्गफिनक्सेऽनया रीया शिक्षिता । तेषा विद्याभ्यासार्थैकहोरापर्यन्त सावकाशो यदि क्रमेण तेषामह सपूर्णाभ्यास कारितवान् स्यामिति मन्ये । परन्तु पर्याप्त शिक्षण नैव दत्तमिति तेऽह च विषण्णा । ज्येष्ठपुत्रो बहुधा ममाग्रे सर्वजनप्रकाश च मुद्रायन्त्रेष्वात्मन क्लेश न्यरूपयत् । अन्ये पुत्रा अपरिहार्यमकारणमित्युदासभावेन स्थिता । एतद्विषये नाह भग्नाश परन्तु विषादोऽय नाहमभ्यर्हित पितेति । अय मे दृढ प्रत्ययो लोकसेवार्थं बालशिक्षा परित्यक्ता यद्यपि मे श्रद्धोचिता वानुचिता वा । स्पष्टमिद वच्मि यथा न मयोपेक्षित तदीयचारित्र-रक्षणम् । सर्वस्यापि पितुरिदमवश्यकर्तव्यमिति मन्ये । मया प्रयत्ने कृतेऽपि पुत्रा प्रतिकूल दृष्टाश्चेदस्ति मे दृढ प्रत्ययस्तदेतन्मम जागरूकताया अभाव दर्शयति परन्त्वयो पित्रो-र्दोषान् व्यनक्तीति ॥

अपत्यानि न केवल पित्रो शारीरिकलक्षणान्यपि तु तयोर्गुणानपि प्राप्नुवन्ति । इतस्तत सदृश्या परिस्थितिरपि प्राधान्य वहति । यन्मूलधन प्राप्य शिशुरारभते तत्पूर्वजैरागत मन्तव्यम् । दृष्टा हि मया शिशवो ये पैतृकरिक्थस्य दुष्टपरिणामादुत्तीर्णा । परिशुद्धिरात्मन सहजो गुण ॥

पोलाकमहाशयोऽह च शिशूनामाङ्ग्लविद्याभ्यास स्पृहणीय किं वा न वेति बहुवार चर्चाया सक्तौ स्म । अस्त्यय मे दृढ प्रत्ययो यच्छैशवात्प्रभृति शिशूनामाङ्गलभाषाया वक्तु चिंत यितु च ये शिक्षयन्ति ते शिशुभ्यो देशाय च द्रुह्यन्ति । राष्ट्रस्य दैविक सार्वजनीन दायमपहरन्ति । तावन्मात्रेण लोकसेवार्थमयोग्यान्कुर्वन्ति । एतन्निश्चय मनसि कृत्वा मम शिशुभि सह सर्वदा गुजरातीभाषाया व्यवहरामि । इद पोलाकमहाशयस्य नेष्टमासीत् । तेन चिन्तित तेषा भाविजीवनमेव दूष्यत इति । यावन्तावस्य प्रीतिनिश्वासो तावद्भ्या तेनोक्त यथा – आङ्ग्लभाषा सार्वलौकिकी वाणी बाल्यात्प्रभृत्यभ्यस्ताश्चेदन्येषामुपरि जीवनमार्गे उत्कर्ष प्राप्नुयु शिशव । मा समाचातुमशक्तोऽभूत् । न स्मरामि यन्मम भावस्य याथार्थ्यं तदेव स्वीचकारायवा केवलहठवा-दीति मा तत्याजेति । एतद्विंशतिवत्सरेभ्य पूर्वं सवभूव । मम निश्चया अनुभवेन साक दृढतरा सजाता । यद्यपि मे पुत्रा विद्याभ्यास विना नष्टापन्नास्तथापि ते प्राप्त मातृभाषाया ज्ञान तेषा देशस्य च लाभाय बभूव । नो चेद्विदेशीया अभविष्यन् । ते स्वभावतो भाषाद्वयवेदिन आङ्ग्लसुहृदा प्रात्याहिकसम्पर्कादाङ्गलभाषा भाषमाणा लिखन्तश्च । अपि च देश आङ्ग्लभाषा मुख्यव्यावहारिकभाषासीत् । इति हि द्वैभाषिका आसन् ॥

# 'झूलु' प्रकृतिक्षोभः

जोहानिसवर्गपत्तनेऽवस्थितोऽहमिति यदा मया चिन्तितं तदा नाहमवस्थितो वस्तुतः । ज्ञातोऽहमिदानीं निश्वसिमीति यदा मया चिन्तितं तदानीमेवानिरीक्षितो विषयः कोऽपि समुपस्थितः । समाचारपत्रिकासु नातालदेशे झूलुजनः राजद्रोहे समुद्युक्त इति वार्तागता । झूलुजनस्योपरि न मया मत्सरो व्यूढः । नापायस्तैः कृतः भारतीयजनस्योपरि । राजद्रोहविषयेऽपि संशयित आसम् । परन्तु 'ब्रिटिश' सार्वभौमता जगतो योगक्षेमायेति मे विश्वासः आसीत् । स्वामिभक्तिश्च तस्यानिष्टमपि भावयितुमवारयत् । राजद्रोहवार्ता तस्मान्मम निर्णयं नान्यथा कर्तुमशक्नोत् । नातालपत्तनेऽप्याचिनरक्षादलमेकमासीत् । अधिकं जनं सैन्ये प्रवेशयितुं स्वातन्त्र्यमभूत् । मया क्वचित् पठितं यदेतद्दलमेव राजद्रोहं शमयितुं संचलनप्रवृत्तमिति ॥

मम नातालपत्तनस्य समीपसम्पर्कत्वात्तन्नगरस्याहं नागरिक इति चिन्तितम् । देशस्याधिपतिं प्रत्यलेखिषम् यद् भारतीयसेनादलमेकं रचयितुं सज्जस्थितोऽस्म्यावश्यके सतीति । अस्त्विति तत्क्षणमेव प्रत्युक्तिरागता । तादृशः शीघ्रोऽङ्गीकारो मया न निरीक्षितः । अदृष्टस्तस्य लेखनात्पूर्वमेवावश्यकानि सर्वाणि सविधानानि मया कृतानि । मम प्रतिज्ञा स्वीकृता चेज्जोहानिसवर्गमन्दिरं विभिद्यतामिति निश्चितोऽहम् । पोलाकमहाशयस्य गृहमल्पतरं कल्पितम् । मम भार्यया तु 'फीनिक्स'स्थलं गत्वा स्थातव्यम् । अस्य निश्चयस्य तदीया पूर्णा सम्मतिः प्राप्ता । एतादृशसन्दर्भेषु सा न कदापि प्रतिकूला स्थिता । देशाधिपतेः प्रतिवचनं यदा लब्धं तदा गृहपतेरेकमासात्पूर्वं गृहत्यागसूचनां कृत्वा कतिपयसम्भारान् 'फीनिक्स' स्थलं प्रति प्राहिणवम् । कतिपये पोलाककरे मुक्ताः ॥

डरबनपत्तनं गत्वा पुरुषानन्विष्टवान् । महद्दलं नावश्यकमासीत् । वयं चतुर्विंशतिरासम; मया सहिताश्चत्वारो गुजरातीजनाः अन्ये दक्षिणभारतादागताः कर्मनिबद्धाः पुरुषाः स्वतन्त्र 'पठाण'-जनमेकं विना ॥

मम गौरवस्थानं दत्त्वा कर्म च सुकरं कर्तुं वर्तमानसमयानुसारेण प्रधानवैद्याधिकारी 'सार्जेंट मेजर' पदे मां नियुक्तवान् । तदधीनान् पुरुषान् 'सार्जेंट'पदेऽन्यं 'कोरपोरल' पदे च चयित्वा नियुक्तवान् । आधिकारिका मैन्यवेषाश्च प्राप्ताः । अस्मद्दलं प्रायः षट्सप्ताहपर्यन्तं सेवायां स्थितम् । राजद्रोहस्थानं गते मयि राजद्रोहनामापि समाधातुं न किंचिन्मया तत्र दृष्टम् । प्रतिरोधकोऽपि नासीत् । सर्वाधिकारी 'स्मृट्स्'प्रधानपुरुषः स्वजनस्योपरि-यत्नं नूतनं राजकरं न प्रदेयमिति स्वाख्य नगरस्य परिसरे गमने सैनिकाध्यक्षं प्राहरत् । जनक्षोभं नाजान । अपमेव राजद्रोह

इति मत्तरोत्तम् । मम हृदय 'यूल' जनेष्वासीत्। अगम्यानमनेऽस्मत प्रमानदर्शं कृत्स्न 'ग्रूल'जनस्य पापोपगामिनि श्रुत्वा नातदोऽभवम्। ग्योप्रियकार्यलाव्याग्निरन। तेनोक्त यथा—गारागा क्षत'ग्रूल'जनस्य मत पूरक धर्माकर्म न चत् । क्षतानि पूतनि भवन्ति। किमत्र स्यामिति न जानामानि। अस्मदागमनेन दवप्रेरितेनेव मनुष्या निष्पापाश्च ते जना। स प्रादादस्मात् वचनानि निर्दिष्टीकरणानि । तत कस्मिन्श्चैत्याद्य प्रयस्माल्लिनाय। अस्मन् दृष्ट्वा 'युद्ध'जन मनुष्ट । गारागयोगा अस्मन्य प्रपञ्च स्थिता । छिन्नो न मूल्यर्मीक्षन्ते स्म। अपि च क्षतानीमान्यरथानि तुल्यमिनि प्रयत्तु प्रयेतिरे। अस्मत्रिवमानम् दृष्ट्वा तुपिता 'युद्ध'जनस्योपर्यग्राव्यहृयचनानि तुवन्ति स्म ॥

क्रमश क्रमश एतैर्योर्य सह ममापनस्तपर्कं प्राप । परस्याघातत दूरे तन्तु । नामकविसारणा मध्ये 'कर्नल स्पार्क्स' 'कर्नल गार्न्ल' च पणार्युत्तराद्यादमहत्मनि नमरे मामेक्रान्तन प्रत्ययस्थिता । मम मनोऽस्य दृश्यश्चर्यभारता विशेषतो मनाद्रुप कृतज्ञतामूच्चतु । 'जनरल मेकेन्जी'महाशयेन सह ते परिचयमकारयन्। स सानकयोगा इति मा नावधिन्तयतु । 'कर्नल वायली'महाशयो दरभगपत्तने प्रसिद्धो न्यायवादी। 'कर्नल स्पार्क्स महाशय रवनपुर एव मामनिकविग आरगस्य स्वामी। 'जनरल मेकेन्जी'महाशय नाताळदेशस्य प्रसिद्ध कृषीवळ । एते सर्वे महाशया स्वयमागता युद्ध शिक्षणमनुभव च प्राप्ता ॥

अस्मद्गणे स्थिता क्षता जना न दिउ युद्धे परिक्षतास्तेषा कतिपये नगरेन गृहीता नन्च । 'जनरल गान' नामानेन दर्शितवान्। तेन घनेन व्रणा समुत्पादिता । एतेऽरक्षिता पूयन्ते स्म। इतरे 'ग्रूल'मित्राणि न्यायेन आमन शत्रोर्विरोधयितु दत्तचित्ता योग प्रमादेन गुलिकप्रक्षेपेण ताडिता ॥

एतत् सर्व विना गारागयोवन्यो निर्दिष्टाघयानि मिश्रीकृत्य कल्पितानि प्रदेयानि मया। *'डाक्टर बूथ'महाशयस्यान्या या नवशान् तन्यामेन यर्यपर्यन्त शिक्षण ममसीत।* अत एतस्तु नरमासीत्। अनेन कार्येण अनेक'युरोपियन'जनैः सह ममापनपरो मे जात ॥

शीघ्रसचारगणस्य वय जद्धा । यत्र कुत्रापपाय मूचितश्चत्तत्र चन्द्रितव्यमित्याज्ञास्मद्गणस्य। एतप्रायोऽस्मागस्य पादातिक सैन्यम्। यावदस्मा उक्ति चन्द्रितुमारब्ध तावदस्मद्भाद्भूपार रोगिप्रग्रहण तिक्षिप्य पादक्रमेणानुसर्तव्यमासीत् । त्रिनाग प्रत्यह विंशतिक्रोशादूर गन्तव्यमापतितम् । देवस्य मर्म कर्तव्यमिति कृतज्ञोऽस्मि यत्र कुत्रापि गत । प्रमादत पादक्षतान् 'ग्रूल'स्नेहर्गोरान् रोगिप्रग्रहणेन स्वपोधारि बहद्भिर्योधैर तानुपचरद्भिर्दैवसर्यं निर्व्यूढम् ॥

पंचविंशोऽध्यायः

# हृदयमन्थनम्

'झूलु'राजद्रोहो नवनवानुभवपूर्णश्चिन्तयितु बहुलावकाश ददौ । युद्धस्य भयकम्पितानि यथा राजद्रोह स्पष्टतयानीलवास्तथा 'बोअर'युद्धेऽपि न सबभूव । एतन्न युद्धमपि तु मनुष्याणा मृगया । न केवलमय ममाभिप्राय पर कृतभाषणानामाङ्गलजनानामपि । प्रात प्रात योधाना गुलिकाप्रक्षेपणे महाशब्द शब्दस्फोटसदृश निर्दोषग्रामटिकासु शृण्वता तन्मध्ये निवासो दुष्कर । परतु मया तिक्तगुलिका निगीर्णा । यतो मम गणस्य कार्यं परिक्षत'झूलु' जनाना परिपोषणम् । अस्मदवधान विना 'झूलु'जनश्चिन्तायुक्तोऽभविष्यत् । अत एतत्कार्यं मन सुखमकरोत् ॥

मनुष्य चिन्ताकुल कर्तुमन्यद्बहुलमासीत् । अल्पैर्जनैरुपितो देशविभागोऽयमासीत् । शैलकन्दरेषु अव्याकृता अनागारिका 'झूलु'जनस्य विरला ग्रामटिका स्थिता । परिक्षतै सह वा विना वा चलन् बहुवारमगाधविचारसागरे मग्नोऽभूवम् ॥

ब्रह्मचर्यं प्रत्यालोचय तस्य पूर्वपरिणामै सह । मम निर्णया अगाधमूल भेजिरे । सहकारिभिश्च चर्चामकरवम् । तदा मया न ज्ञात कियदावश्यक तद्भवतीति । स्पष्टमहमद्राक्ष सर्वात्मना लोकसेवा कर्तुमुत्सुकस्तद्विना नैव स्थातुमर्हतीति । मया क्रियमाणसेवार्थमवकाशोऽधिका धिकमावश्यक । अपि च कुटुम्बजीवनस्य जननपोषणकल्पयो प्रसक्तश्चेदह कार्यनिर्वाहशून्यो भविष्यामीति मे प्रतिभाति ॥

एकेनैव शब्देन वच्मि यथा योगी च भोगी चोभयमेकदा भवितुमशक्यमिति । वर्तमानावसरे दृष्टान्तो यदि मे भार्या शिशुप्रसविनी स्यात्तदा कलहप्रसक्तिर्नाभविष्यत् । ब्रह्म-चर्यानुष्ठान विना कुटुम्बसेवा लोकसेवा च परस्परविरुद्धौ भवत । ब्रह्मचर्येण सह तौ समग्र मगतौ स्म ॥

इत्थ चिन्तयन्नन्तिमव्रतग्रहणाय किंचिदसहमान आसम् । व्रतस्य भाविनी दृष्टि ममप्या नद मानसमानिनाय । भावनापि स्वतन्त्रं प्राप । ततोऽपरिमितमार्गान् सेवाया उद्घाटयत् ॥

एवं यदाह गाढविचारे परिश्रमे च निरतोऽभव तदा प्रवृत्तिरागता राजद्रोहनिग्रहकार्यं समाप्तप्रायमस्ति । वय सर्वे विमोचिता भविष्याम इति । एकद्विदिवसान्तरे विमोचनमागत वयं च सर्वे गृहाणि प्राप्ता ॥

विनिवर्तनानन्तरं देशाधिपते महाराष्ट्रेण आमन्त्रित । गांधिब्रह्मचर्यस्य सेवया ता कृतमोऽस्मि ॥

'फीनिक्स'स्थले प्राप्त 'टगनलाल-मगनलाल वेस्टमहाशयैरितरैश्च ब्रह्मचर्यविषये प्रस्तावमकरवम्। मनोगतं तेभ्योऽरोचत। व्रतग्रहणस्यावश्यकतामङ्गीचक्रुः। परन्तु कार्यस्य दुष्करत्वमूचुः। कतिपये धैर्येण कर्तुमुद्युक्ताः। कतिपयेऽद्य जाने जयं प्राप्ताः॥

अहमपि निमग्नः यावज्जीवं ब्रह्मचर्यं साधयितुम्। अङ्गीकर्तव्यं यत्तदैवाहमस्य प्रमाणमपरिमितत्वं च नाज्ञासिषम्। तत्कष्टान्येतस्मिन्नपि दिवसे द्रष्टुं व्यक्तीभवन्ति। व्रतस्य प्राधान्यमधिकाधिकं मनसि रूढं भवति। ब्रह्मचर्यं विना जीवनं निःसारं पशुप्रायं च प्रतिभाति। पशुः स्वभावत आत्मनिग्रहं न जानाति। मनुष्योऽस्ति मनुष्यो यतः स निग्रहे शक्तः। अस्मद्धर्मशास्त्रेषु ब्रह्मचर्यस्तुतेरतिशयोक्तिरित्यभावयत्तदिदानीं मे दिने दिने स्पष्टतरं प्रतिभाति सर्वमप्यतयुक्तमनुभवसमर्थितं चेति॥

प्रत्यक्षीकृतं मया यदाश्चर्यकरप्रभावशालि ब्रह्मचर्यं न खलु सुलभो विषयो न चेदं शरीरमात्रसम्बन्धि। शारीरनिग्रहेणारम्भः परन्तु न तत्रैवान्तः। सिद्धिर्यदा भवेत्तदापवित्रा मानसीवृत्तिरपि न विद्यते। पारमार्थिको ब्रह्मचारी स्वप्नेऽपि न शारीरकामं शमयितुमिच्छति। एतदवस्थाप्राप्तिपर्यन्तं गन्तव्या पदवी महती वर्तते॥

मम शारीरब्रह्मचर्यमपि दुष्करं भवति। अस्मिन् दिने सुरक्षितोऽस्मीयद्द ब्रूयाम्। अपि त्वथापि मनो जेतव्यम्। मनोजय आवश्यकः। निश्चयबुद्धिः प्रयत्नो वा नास्तीति न। अनिष्टा मनोवृत्तयः कथंकारं गुप्ततयाक्रमणं कुर्वन्तीति चिन्तनीयम्। एतेन पृथक् पृथक् सर्वं द्रष्टव्यम्। सिद्धैः ऋषिभिश्च स्वानुभवो निर्दिष्टः। परन्तु कैर्नैश्चित्तं सार्वजनीनं निर्देशो व्यधायि। सिद्धिर्निर्दोषता वा दैवानुग्रहेणायाति। भगवदन्वेषकैर्मन्त्रा निर्दिष्टाः। यथा रामायणं तपःशुद्धिसमन्वितम्। भगवत्शरणागतिं विना मानसोपरि सम्पूर्णस्वातन्त्र्यमशक्यम्। अयं धर्मशास्त्रस्य महानुपदेशः। ब्रह्मचर्यसाधनाय प्रयतमानोऽस्य याथार्थ्यं प्रतिक्षणं भावयामि। परन्तु कैरायासैश्रमाणः चीरतस्य भागेऽत्रसमाप्यतेषु लिख्यते। धर्मभवनयाथं यथ यय यथ धर्मितमत्स्य-मित्युक्त्वा समापयामि। उत्साहस्य प्रथमभागे सुकरं कर्तुमित्यचिन्तयम्। जीवनरीतौ प्रथमं परिवर्तनं भार्यया सहैकशय्याशयनमथवा तया सहैकान्तस्थितिः॥

एवं ब्रह्मचर्यमेकोनविंशत्याहसमिताब्दे यद्वा तद्वानुशीयमानं पर्यन्तैकोनविंशतिमिते वत्सरे व्रतनियमेन बद्धोऽभूवम्॥

षड्विंशोऽध्यायः

## सत्याग्रहोदयः

जोहानिसबर्गपत्तने तथावृत्ता घटना यथेयं मे आत्मशुद्धिः सत्याग्रहात्पूर्वतराभूत्। इदानीं किल दृश्यते महात्मनो जीवनस्य मुख्यसम्भवा ब्रह्मचर्यव्रतावसाना रहो मां तदर्थं मार्गे नयन्ति स्म। सत्याग्रहाख्यतत्त्वं नाम कल्पनात्पूर्वमेवागतम्। यदा तत्प्रसूतं तदाहं किमेतदिति वक्तुं नाशकम्। गुजरातीभाषायामाङ्ग्लनाम्ना मया 'सहनप्रतीकार' (Passive Resistance) इति वर्णयितुं रूढिरागता। 'सहनप्रतीकार' इत्यतीव सङ्कुचितोऽर्थः। निर्बलानां शस्त्रं द्वेषनामाश्रितं पर्यन्ते बलात्काररूपेण प्रादुर्भावः। अहमेतानि वचनानि शङ्कमानः शृण्वन् स्थितः। भारतीयसञ्चालनं प्रति व्याख्येयमासीत्। स्पष्टं भारतीयजनैः स्वकलहस्य नामधेयमेकं कल्पनीयम्॥

परन्त्वहं नवनामधेयं नाज्ञासिषम्। अत एव 'इंडियन ओपिनियन' पत्रिकाद्वारा पारितोषिकमुत्तममूह्नाय देयं कृतवान्। मगनलालगान्धिमहाशयेन शब्दः कल्पितः सदाग्रह इति। सतः सत्यस्य आग्रहः स्थैर्यमिति। अयं पारितोषिकं प्राप। इत्यपि स्पष्टतरं कर्तुं स एव शब्दः सत्याग्रह इति परिवर्तितः। गुजरातीभाषायां सत्याग्रह इति कलहस्य रूढिरागता॥

एतत्कलहस्य चरितं व्यवहारयोग्यसर्वोद्देशेन दक्षिणाफ्रिकादेशे मम जीवनशेषस्यापि च सत्यशोधनस्य चरितं भवति। 'येरवडा' कारागृहे एतच्चरितस्य भूयान् भागो लिखितः। ततो मम विमोचनानन्तरं समाप्तिं गमिता। नवजीवनपत्रिकायां प्रकाशितं तदनन्तरं पुस्तकरूपेण प्रचालितम्। वाल्जीगोविन्दजीदेसाईमहाशयः 'करन्ट थोट' पत्रिकायै आङ्ग्लभाषायां परिवर्तयति। परन्त्वहमाङ्ग्लभाषानुवादं पुस्तकरूपेण प्रकाशयितुं शीघ्रमेव प्रयतमानोऽस्मि। एतेन दक्षिणाफ्रिकादेशे मम मुख्यपरीक्षणान्यपेक्षायां सत्यां परिचाययेयुः। दक्षिणाफ्रिकायां मम सत्याग्रहचरितं ये न पठितवन्तस्तैरिदमवलोकनीयमिति बोधयामि। तत्र मया यदुपन्यस्तं तन्न पुनर्वर्णयामि। परन्त्वग्रे तु न कतिपयाध्यायेषु दक्षिणाफ्रिकायां निर्वृत्तामीयसमानीस्तं विषयं तेन निरवधिना उदाहरिष्यामि। एतेषु कृतेषु भारतदेशे विहितान् सूचयितुं लक्षणानि प्रदर्शये। ये पाठकास्तदनुसरणेनानि परीक्षणानि पर्यालोचयितुमिच्छन्ति स दक्षिणाफ्रिकासत्याग्रहचरितमपि स्थापयितुमर्हन्ति॥

सप्तविंशतितमोऽध्यायः

# आहारनियमात् प्रकृत्याधिकपरीक्षणानि

कायेन मनसा वाचा ब्रह्मचर्यं पालयितुमुत्सुकोऽभवम्। अविरतमपि कालं सत्याग्रहस्य विनियोग्य शौचमभ्यस्यन् तद्योग्यमात्मानं कर्तुमुत्सुकश्च संवृत्तः। अतोऽहमाहारविषयेऽन्यानि परिवर्तनानि कृत्वा भूयसे निग्रहायात्मानं स्वीकर्तुं मार्गमानीतः। पूर्वपरिवर्तनानामुद्देश आरोग्यविषयकः। परन्तु नवपरीक्षणानि धर्मविषयकाणि॥

मम जीवने उपवास आहारनियमश्च मुख्यतमौ। विषयवासना सामान्यतो जिह्वाचापल्येन सह वर्तते। मम विषये तथैवासीत्। मया बहवः क्लेशा अनुभूताः कामस्य निग्रहे। अद्यापि संपूर्णविजयस्तयोः कृत इति नैव ब्रूयाम्। अहं गुरुतरो भोक्तेति मया चिन्तितम्। यत्सुहृदो मे नियन्त्रणमिति मन्यन्ते तथा तन्मे न प्रतिभाति। यद्यहं नियन्त्रणमेतं नाभ्यस्तवांस्तदा पशुभ्योऽप्यधस्तात्पतित्वाचिरान्मे गतिं प्राप्तवान् स्याम्। परन्तु मम दोषानहमज्ञासिषम्। अत एव तान्निरासयितुं महाप्रयत्नमकार्षम्। सत्यं हि प्रयत्ना यत एतान् वत्सरान् शरीरं रक्षित्वा मम कार्यमार्गं निवेशितवान्। मम दौर्बल्यं विजानन् समानशीलानां संपर्कलाभ-रसाप्राप्तः फलाहारमेकादश्यां ग्रहीतुमथवोपवस्तुमारब्धः। अपि च जन्माष्टमीमितरकार्यविराम-दिवसांश्चाचरितुमुपक्रान्तवान्॥

फलाहारः समारब्धः। फलाहारधान्याहारयोर्मध्ये वर्णयितुं न किंचिदस्ति। आस्वादश्च पूर्वापरयोः शक्य इति दृश्यते। इतोऽप्यधिकमभ्यस्तं चेदुपवासोऽथवा कार्यविरामदिवसेषु दिनस्यैकवेलं भोजनमित्यनयोर्महत्तरं प्राधान्यमदाम्। प्रायश्चित्तादिकस्य समयो यदि स्यात्तदापि संतुष्योपवासमकरवम्॥

किन्तु लक्षितं मया शरीरं साकल्येन शोधितम्। अत आहार आस्वादनीयो जातः। बुभुक्षा च तीव्रतरा संवृत्ता। मनसि ममास्तु उपवास निग्रहणेन स्वल्पमेव, एवं किमेव। अनेके तादृशा अनुभवा ममेतरेषां च दृश्येरन्। अस्याश्चर्यकरस्य प्रामाण्येन मम शरीरं संस्कर्तुं शिक्षयितुं च ममेष्टमासीत्। किन्त्वधुना मम प्रधानोद्देशो निरन्तरं साधयितुं तादृक् च विजेतुम्। वृतो मया प्रथममेक आहारस्तदनन्तरमन्य इति। तस्मिन्नेव काले द्रव्यसंख्यादिनिर्धारितम्। किन्त्वास्वादो मामनुसृतः। एकं परित्यज्य द्वितीयं गृहीतं चेदेनमपरं नूतनं महत्तरं चास्वादमहमपूर्वं गृहीतवान्॥

यदा तीव्रतरोऽभूत्तदाहं तस्य स्थल एव तेनैव सहोषितवान्। आवामाहारविषये चर्चामकरवाव। पूर्वस्मात्परमेव हर्षप्रदमासीत्। एषः स्वभावः संभाषणं च तेषु दिवसेषु रमणीयमासीत्। इदमनुचितमिति मम नास्फुरत्। अनुभवेन शिक्षितोऽहं यदाहारस्वादस्य भाषणं वितथमिति। तालुप्रहर्षाय न भुंजीताहारम्। किन्तु शरीरपोषणाय। यथा प्रतीन्द्रियं शरीरं परिसेवते शरीरा- दात्मानं तस्य विशिष्टास्वादोऽदर्शनं याति। तदेव स्वभावोद्दिष्टप्रकारेण व्याप्नोति ॥

परीक्षणाना संख्यात्यल्पा महदपि महत्तरं बलिदानं स्वभक्तैर्नैकतामभिगन्तुम्। परन्तु दौर्भाग्यात्प्रवाहोऽपरदिशा बलवच्चलति। न लज्जिताः स्मो यन्नीविरतात् विनश्वरदेहमलंकर्तुं तस्य सत्तां कतिपयपलायमानक्षणपर्यन्तं स्थापयितुं चोपहारीकुर्मः। फलितं च यदात्मानं शरीरं च निनाशयामः। एकरोगचिकित्सायां शतमन्यानुत्थापयामः। विषयानन्दानुभवाय प्रयतमानाः पर्यन्तेऽनुभवशक्तिमपि विनाशयिष्यामः। एतत्सर्वं प्रत्यक्षमेव चलति। द्रष्टुमनिच्छन्तोऽन्धा भवन्ति ॥

तेषामुद्देशो तान्प्रतिनीततो भावनाप्रवाहानेवमुदाहृत्येदानीमाहारनियमान्वर्णयितुमिच्छामि ॥

अष्टाविंशोऽध्यायः

## कस्तुरबाईमहाशयाया धैर्यम्

**मम** भार्या त्रिवारं गुरुतरव्याधिपीडिता मरणं निस्तीर्णा। गृहौषधैरेव स्वस्था बभूव। प्रथमतो रोगाक्रमणकाले सत्याग्रहश्चलति स्मावारम्भमाण आसीत्। वारंवारं सा रक्तं स्रवति स्म। यश्चिद्वैद्यसुहृदस्त्रचिकित्सा कर्तव्येत्याह। सा किंचिदिव विकल्प्य संमतिं ददौ। सातीव कृशतराभूत्। वैद्यो निश्चेतन्यकरमौषधं विना शस्त्रोपचारं कृतवान्। कार्यं सिद्धमासीत्। किन्तु महती वेदना तयानुभूता। धैर्येणोत्तीर्णेत्याश्चर्यमेव। वैद्यस्तस्य भार्या च धात्री कर्मकार्य-तीरसमारपानामास्ताम्। एतत् डरबनपत्तने चलितम्। वैद्यो मे जोहानिसबर्गनगरं प्रति गन्तुमनुज्ञां ददौ। रोगिविषये मा किंचिदप्युत्सुको भूरित्यवदत् ॥

कतिपयदिनेषु गतेषु लेखः प्राप्तो यथा कस्तुरबाईमहाशयाधिकरोगिणी भवति। शय्यायामुपरेस्थुमपि असमर्था जाता। एकवारमचेतनासीदिति। वैद्यस्य विदितं मम संमतिं विना मद्यं मांसं वा न देयमिति। जोहानिसबर्गगृहं प्रयागतं ध्वनिपत्रद्वारा गोमांसं चापानं प्रदातुमनुज्ञा दीयतामिति। अनुज्ञां न ददामि। परन्तु सा चेत्स्वतन्त्रावस्थायामस्ति चेदपि च प्रष्टुं शक्यते यदि सा यथेष्टं कुर्यात्। उक्तं च वैद्येन यथा रोगिण इच्छां न पृच्छामि। मत्रेच्छानुसारमाहारं दातुं नानुजानीया यदि तव भार्याजीवितस्य नाहं प्रतिवचनकारी भवेयमिति।

दरबनपत्तनस्य शस्त्रीमारुह्य तद्दिनमेव वैद्यमद्राक्षम्। स च मंदं वृत्तांतमनादीयया ध्वनियंत्रद्वारा पृच्छापूर्वमेव तव भार्यायै गोमांसं चापानं च दत्तवानहमिति। पश्य वैद्य एषा किल वंचना। वंचना नैवायाति रोगिणि आहारनिर्देशे। वस्तुतो वयं वैद्या रोगिणो बंधून् वा वंचयितुमेवास्मद्धर्मं मन्यामहे यदि ते न प्राणरक्षणं कुर्मः—इति निश्चितमुवाच वैद्यः॥

अहमतीवदुःखितोऽपि अमंतम इवासम्। वैद्यः सत्पुरुषो मम साक्षान्मित्रम्। स तद्भार्या च कृतज्ञोऽहमस्मीति जानीतः। तयोर्व्विनिनार्थं सोढुमहं नैव सज्जस्थितोऽभवम्॥

वैद्य किमिदानीं कर्तुमिच्छसि। मम भार्यायाः मांसं गोमांसं वा दातुमनुज्ञा नैव दास्यामि मरणे संभवत्यपि। यदि सा प्रतीतुमिच्छेत्तथास्तु॥

तव तत्वज्ञानं तवैवाभिनंदनीयम्। यावत्ते भार्या मम चिकित्साधीना भवति तावन्ममेष्टानुसारेण दद्याम्। इद भवते न रोचते यदि सान्यत्र नीयतामिति वक्तुं विषीदामि। मम गृहे तन्मरणं न द्रष्टुमिच्छामि॥

एतत्क्षणमेवान्यत्र नीयतामिति तवेच्छा॥

अन्यत्र गच्छेति कदाहमवोचम्? त्वन्नया परिस्थितिमिच्छामि। तथा करोषि चेन्मम भार्याहं च तस्या यावच्छक्यं तावत्कुर्मः। अपि च तस्या चिकित्से सर्वचिन्तां परित्यज्य पुनः निवर्तितुमर्हसि। एतावन्मात्रं यदि त्वं न जानासि तर्हि मम स्थानादन्यत्र तां नयेति वक्तुं चलात्कृती भविष्यामि॥

मम पुत्राणामेको मया सह स्थित इति चिन्तयामि। स्वस्य मात्रे गोमांसं चापानं च न दातव्यमिति सोऽपि संमेने। ततोऽहं कस्तूरबाईमहाशयामेतदपृच्छम्। अस्मिन्विषये समालोचयितुं सातीव निर्बलासीत्। परन्तु तथा कर्तुं मम धर्म इत्यचिन्तयम्। मम वैद्यस्य च मध्ये यद्वृत्तं तदहमवोचम्। सा निश्च निश्चितं प्रत्याह यथा नाहं गोमांसं चापानं प्रतीप्स्यामि। मनुष्यजन्मलाभ एव विरलः। अहं ते बाहुमध्ये म्रियेय न पुनर्देहं गर्हितद्रव्यस्पर्शेन मलिनीकुर्याम्। तया सह वादप्रवादमकरवम्। अहमनुसर्तव्य इति नास्ति निर्बन्धः। हिन्दुसुहृदः परिचिताश्च यथाविकल्पं विना मांसं मद्यं चौषधरूपेण गृह्णन्तीत्यवोचम्। परन्तु सा कठोरनिश्चयैकक्षणमेवान्यत्र नीयतामित्यवोचत्॥

अहं संतुष्टः। किंचित् क्षोभं विना तामन्यत्र नेतुं निरचैषम्। तस्या निश्चयं वैद्यस्य न्यवेदयम्। स तु क्रुद्धो विचुक्रोश यथा कीदृशः कठिनहृदयो भवांस्तस्या वर्तमानदशायामिदं वक्तुं कुतस्त्वं न लज्जितः। ददामि त्वा तव भार्यान्यत्र नेतुमनर्हास्यामवस्थायाम्। किंचिच्चलनमपि सोढुमक्षमा सा। मार्गे यद्यपि म्रियेत तदपि नाश्चर्यम्। यदि त्वं निश्चितोऽसि तथास्तु। गोमांसं चापानं च न दास्यामि। अहं चैकमपि दिनं तां निवेशयितुं मम गृहाभ्यन्तरस्तात् मंस्येय॥

अतस्तत्क्षणमेव स्थलं परित्यक्तुं निरचैषम्। तदा शीतर्तुर्वर्तते स्म। शकटीस्थानं स्वल्पदूरे स्थितम्। डरबनपत्तनात् 'फीनिक्स'स्थलं गन्तव्यम्। ततोऽस्य स्थानं सार्धक्रोशदूर गामिना मार्गेण प्राप्यते। अमशयमेव महान्तमपायं ग्रहीतुं मार्गं स्थितः। मैत्रे विश्वस्य कार्यं मत्कार्यम्। 'फीनिक्स'स्थलं प्रति सन्देशमहं प्राहिणवम्। वेस्टमहाशयोऽस्मान् शकटीस्थाने प्रेक्षेत वस्तुभिरेतैरेव दोलिकैकं शीशकमुष्णदुग्धान्वितं उष्णोदकस्यैकं चेति। कस्तुरबाईमहाशयां दोलया वोढुं षट्पुरुषाश्च। एतान् गृहीत्वागन्तव्यमिति सन्दिष्टम्। अनन्तरं लोहमार्गेण तां नेतुं मनुष्यवाह्यशकटीमेकां प्राप्य तां तादृग् भयंकरदशाप्रायिणीं तदन्तर्निवेश्य प्रयातोऽहम्॥

कस्तुरबाईमहाशया प्रत्याश्वासं नापैक्षत। प्रत्युत मामानन्दयत् कथयन्ती न किंचिन्मम सम्भवति मा क्लेशितो भवेति॥

बहुदिवसेभ्यो युक्तपोषणं विना सा चर्मास्थिमात्रशेषा स्थिता। अवस्थानस्य वेदिका सुमहत्यासीत्। मनुष्ययानमन्तर्नेतुमशक्यम्। अतो लोहमार्गशकटीप्राप्तेः पूर्वं स्वल्पदूरं क्रमितुमावश्यकमासीत्। अतोऽहं बाहुभ्यां तामुद्धृत्य शकटीप्रकोष्ठे न्यवेशयम्। 'फीनिक्स'-स्थलात् दोलया वाह्यमाना तत्र जलचिकित्सया शनैः शनैर्बलं प्राप॥

'फीनिक्स'स्थलप्राप्तेर्द्वित्रदिनेभ्यः पश्चादेकः स्वाम्यस्मत्स्थानमागतः। वैद्यस्य बुद्धिवादो निश्चयेन तिरस्कृत इति श्रुत्वा कारुण्येनास्माभिः प्रमाणीकरणार्थमागतः। मम द्वितीयतृतीयपुत्रौ मणिलाल–रामदासौ स्वामी यदागतस्तदा तत्रोपस्थितौ। मांसाहारः शास्त्रानुज्ञात इति मनुस्मृतिस्तेन प्रमाणीकृता। मम भार्याया अग्रे वादकरणं मे नारोचत। प्रथमादहं तूष्णीमासम्। मनुस्मृतेः श्लोकानहमज्ञासिषम्। ते मम निर्णयाय नावश्यका आसन्। विदितं च मे केचिदिमान् श्लोकान् प्रक्षिप्तान् मेनिरे। तदभावेऽपि धर्मशास्त्रगणनां विना शाकाहारविषये मम स्वतन्त्राभिप्रायः स्थितः। कस्तूरबाईमहाशयायाः श्रद्धा निष्कम्पाभूत्। तस्याः शास्त्रीयमूल्यं तथा न विदिता। परन्तु साम्प्रदायिकधर्मः पूर्वजानां पर्याप्त आसीत्। शिशवः पितुः श्रद्धानुसारिणः। अतः स्वामिनः सभाषा तैर्मन्दीकृता। परन्तु कस्तूरबाई-महाशया संलापस्य पर्यन्तं तत्क्षणमेवागमयत्। उक्तं तया यथा भवद्भिर्यदा तदा समुच्यताम्। नाहं गोमांस-चापानेन स्वस्था भवितुमिच्छामि। इतोऽप्यधिकं न वयं क्लेशनीया। मम पत्या शिशुभिः सह चर्चा क्रियतां यद्यपेक्ष्यते। मम मानसं निश्चितं भवतीति॥

## एकोनत्रिंशोऽध्यायः

# आंतर्वैश्मिकः सत्याग्रहः

कारागृहस्य मम प्रथमानुभवोऽष्टोत्तरैकोनविंशतिसहस्रतमे संवत्सर आसीत्। बंदिभिरनुभूयमानान्यनुशासनानि ब्रह्मचारिणा संयममिच्छता बुद्धिपूर्वकं परिपालनीयानि। उदाह्रियते यथा — अंतिमं भोजनं सूर्यास्तमयात्पूर्वमेवेति। भारतीयाः किमपि 'चा' अथवा 'काफी' नामकं पानं पातुं नानुज्ञाताः। यदीष्टं तदा पक्वाहारस्य लवणं मिश्रयेत्। परंतु तान्या स्वरोचमानं न किंचिद् गृह्णीयात्। कारागृहस्य वद्योऽधिकारी शाकचूर्णं पृष्टोऽपि चाहारे पच्यमाने लवणनिक्षेपं च। स उवाच यथा — तालुसमारोचनाय यूयमत्र न स्थ। आरोग्यदृष्ट्या शाकचूर्णं नावश्यकं भवति। पचनात्पूर्वं वा पश्चाद्वा लवणमिश्रणे नास्ति व्यत्यास इति ॥

पर्यन्ते इमानि नियन्त्रणानि रूपान्तरं गतानि। तच्च न गुरुतरक्लेशं विना। परन्तु द्वावपि पथ्यकरौ। बहिष्ठो निवेशिताः संयमाः कदाचित् सिध्यन्ति। परन्तु यदा स्वयं निवेशितास्तदा हितकरा भवन्ति। कारागारान्मुक्तेनैव मया द्वावपि नियमावङ्गीकृतौ। तदा यावच्छक्यमासीत् तावत् कृत्वा पश्चाच्चापानं परित्यक्तम्। सूर्यास्तमयात्पूर्वमेव भोजनं समाप्तम्। उभयमपीदानीं करणे प्रयत्नं नापेक्षते ॥

लवणं च सर्वात्मना परित्यक्तुं समय आगतः। इदं नियन्त्रणं दशवर्षपर्यन्तं निरवाहयम्। पठितं मया कतिपयपुस्तकेषु यल्लवणं नावश्यक आहारो मनुष्यस्य प्रत्युत लवणं विना भोजनमारोग्यकरं लवणशून्याहारेण ब्रह्मचारिणः प्रयोजनमस्तीति। पठितं च दुर्बलशरीरः सातीलकं परिहरेदिति। तस्मिन्मेऽतीवाभिरुचिरासीत् ॥

शस्त्रोपचारादनन्तरं स्वल्पकालं स्वस्था कस्तूरबाईमहाशया पुनः रक्तस्रावितुं प्रवृत्ता। रोगश्च कठोरः प्रत्यभात्। जलचिकित्सा निष्प्रयोजनासीत्। ममौषधेषु तस्या नव श्रद्धा। प्रतिकूला नासीत्। बहिष्ठं साहाय्यं नापैक्षत। यदा मम सर्वौषधानि निष्प्रयोजनानि तदा तामपृच्छं लवणं सातीलकं च परित्यजेति। न सा समन्यत स्म यद्यपि प्रमाणान्युदाहृत्य प्रार्थितापि। भवानप्येतानि वस्तूनि न परित्यजेत् परित्यजेति नोदितोऽपि। इयमरोचत। अहं प्रीणितः संतुष्टश्च। संतुष्टस्तु प्राप्तोऽस्म्यवसरमिदानीं तदुपरि प्रीतिवर्षं वर्षयितुमिति। उक्तं च मया त्वं प्रमादिनी। यद्यहमस्वस्थो यदि च वैद्य इमानि वस्तूनि त्यजेति ब्रूयात् निर्विकल्पमहं तथा कुर्याम्। किन्तु वैद्यवचनं विना एकवर्षपर्यन्तं लवणं सातीलकं चाहं परित्यजामि यदि त्वं करोषि वा न वा ॥

सा सर्वांश्यं थपिता महता शोकेनोच्चैर्चुघोष । यथा मां क्षन्तुमर्हसि । विदितोऽसि मम । तथापि त्वां नो ऽयुक्तमकरवम् । एतानि वस्तूनि परित्यक्तुं प्रतिजाने । किन्तु अत्र परिदृश्यताम् । इदं ममोपर्यतिकठोर पततीति ॥

इमानि वस्तूनि परिहर्तुमत्यन्तमुत्तम तव । एतद्विना त्वं स्वस्थतरा भवसीति न मे ईषदपि सशय । अलाघवेन गृहीतव्रतं न निवर्तयामि । एतन्ममोपकरोति । नियन्त्रणायामपि यत्प्रेरयति तत्पथ्यतर मनुष्याणाम् । मामेकमप्यनुजानीष्व । तदेतन्मे परीक्षण भवति । तव निश्चय निर्वाहयितु तव नैतिकाधिकार ॥

अतो मा परित्यक्तवत्युक्त च तया यथा त्वं हठवादी कस्यापि त्व न शृणोषीत्युक्त्वा नेत्राम्बूनि ववर्ष ॥

इदमेक सत्याग्रहमिति गणयितुमिच्छामि । तदेतदतिमधुर जीवनस्मरणमिति मन्ये ॥

तदनन्तर कस्तूरबाईमहाशया अतिशीघ्र स्वस्थीभवितु प्रवृत्ता । लवणशून्यसातीलका-हारस्वीकारेण वा तदाहारेऽन्यपरिवर्तनेन वा जीवितनियमानुष्ठाने मम जागरेण वा कार्योत्पन्नमन प्रहर्षेण वा यत्नेन तदा कियत् प्रमाणमिति वक्तु न शक्यते । सा शीघ्रमेव स्वस्था बभूव । रक्तस्रावो निवृत्त । दुश्चिकित्सकोऽहमिति प्रथा वृद्धिमगात् ॥

नूतनप्रत्यादेशैरहं स्वस्थतरो जात । परित्यक्तवस्तूनि न मया पुनरपेक्षितानि । एकं वर्षं वेगतो जगाम । ममेन्द्रियाणि निर्जितान्यासन् । आत्मनियन्त्रणायेच्छा वृद्धिमागता । वस्तुन्य परिवर्जनमहाभारतदेशस्य पुन प्राप्तिपर्यन्तमकार्षम् । एकवारमेव द्वेऽपि वस्तुनी चतुर्दशैकोनविंशतितमे वत्सरे ‘लडन’पत्तने ग्रहीतु प्रावर्ते । परन्तु तत्समय कथमुभयमपि प्रतिग्रहीतुमित्यग्रेतनाध्याये वर्णयिष्यामि ॥

मम सहकारिणामनेकजनोपरि लवणशून्यसातीलकाहारपरीक्षण दक्षिणाफ्रिकादेशे कृतम् । वैद्यप्रपञ्चे एतदाहार प्रत्यभिप्रायद्वय स्यात् । परन्तु नैतिकरूपेणाह प्रतिजान आत्मापह्नव आत्मनेऽत्यन्तोत्तम भवति । आत्मनियन्त्रकस्याहार आनन्दासक्तमनुष्ये भिन्न । यथा तस्य जीवनमार्गा भिन्ना स्यु । ब्रह्मचर्यव्रताभिलाषुक आनन्दजीवितमार्गानवलम्ब्य स्वकीयोद्देशमेव निहन्ति ॥

## त्रिंशोऽध्यायः

# आत्मनियन्त्रणामुद्दिश्य

उक्तं मया व्यतीताध्याये यथा कस्तूरबाईमहाशयाया रुग्णता ममाहारपरिवर्तनं कर्तुं कारणभूतमासीत् । एतदुत्तरकालेऽधिकपरिवर्तनानि ब्रह्मचर्यावनार्थं प्रवेशितानि ॥

दुग्धपरित्यागः प्रथमस्तावदेषाम् । रायचंदभाईमहोदयेन प्रथमं मया विज्ञितं यद्दुग्धं पाशवं काममुद्दीपयतीति । शाकाहारग्रन्था भावनामिमां पर्यपुष्यन् । यावन्मया ब्रह्मचर्यव्रतं न गृहीतं तावद्दुग्धलोपो मे न संमतः । पूर्वमेव मे विदितं यद्दुग्धं शरीरपोषणाय नावश्यकमिति । परन्तु त्यक्तुमिदं दुष्करमासीत् । यथा यथा क्षीरपरिवर्जनावश्यकता मनोनिग्रहार्थे वर्धमानाभवत्तदानीं 'कलकत्ता'पत्तनात्किंचिद् वाङ्मयं मया लब्धं यत्र वर्णितमासीद्यथा गावो महिष्यश्च पालकैर्यातना गमिताः । मदुपर्येतेनाश्चर्यकरो भावः संजातः । कैलनबैकमहाशयेन सह चर्चामकरवम् ॥

यद्यप्यहं दक्षिणाफ्रिकासत्याग्रहचरिते कैलनबैकमहाशयस्य परिचयं वाचकानां कारितवान् व्यतीताध्याये चायं तथा सूचितस्तथापि किंचिदधिकं तद्विषये वक्तव्यमिति चिन्तयामि । आवयोरकस्मात्समागम आसीत् । 'खान'महाशयस्य सुहृदेषः । खान-महाशयोऽस्मिन्नन्तर्गतां वैराग्यवृत्तिमवालोकयत् । अतो मे तत्परिचयमकारयत् ॥

यदाहं तमपश्यं तदा तस्याभोगमतिमितव्ययं च दृष्ट्वाश्चर्यचकितोऽभवम् । परन्त्वावयो प्राथमिकसमागमे धर्मविषयकान्सूक्ष्मतरान् प्रश्नानपृच्छत् । अनायासो गौतमबुद्धस्य वैराग्यविषय उक्तः । आवयोः परिचयः सुहृत्त्वेन परिपाकमाप । यथैकप्रकारेण व्यचिन्तयाव । यानि परिवर्तनानि मम जीविते कृतानि तानि स्वयं करिष्यामीति जातनिश्चयोऽभूत् ॥

तस्मिन्काले स एकाकी प्रतिमासं द्वादशशतानि रूप्यकाणां व्ययं गृहभाटकं विना करोति स्म । इदानीं तथा सरलजीवने प्रवृत्तो यथा प्रतिमासं त्रिंशदुत्तरशतमेव व्यय आसीत् । मम गृहसंभारान्मम कारागृहात्प्रथममोचनानन्तरमावां सहवासिनौ । सहनिवासश्च कठिनतर आसीत् । दुग्धविषयकचर्चास्मिन्काले प्रवृत्ता । कैलनबैकमहाशयेनोक्तं यथा वयं दुग्धस्य सदा हिंसात्मकं रूपमुद्दिश्य संभाषामहे । कुतस्तन्न परित्यजामः । नावश्यकं हि तदिति । इमां सूचनामाकर्ण्य ययासुखमाश्चर्यभरितोऽभवम् । एतत्क्षणमेव दुग्धं त्यक्ष्यामीति प्रतिज्ञामकरवाव । इदं द्वादशोत्तरैकोनविंशतिशताब्दमिते वत्सरे 'टॉल्स्टॉय फार्म'स्थले संवृत्तम् ॥

एतत्प्रत्याख्यानं मां तर्पयितुं न पर्याप्तमासीत् । एतदनन्तरं फलाहारेण जीवितुं निरचिनुव । तदप्यल्पमूल्यमभवत् । अतिदरिद्रजन इव वर्तितुं मन्यमानौ ॥

फलाहारोऽनुकूल आसीत् । न हि पाचनं समभवत् । एतद्वान्नं प्रायश आहारो यत्र — भूचणकाः कदली द्राक्षा नारंगो जितवृक्षतैलमिति ॥

ब्रह्मचर्येऽनुमाना सदेश एको वक्तव्य । यद्यपि ब्रह्मचर्याहारयो समीपतरसम्बन्धो मयोत्तरस्तथापि मन एव प्रधानम्। मम मानसमशुद्धमिति ज्ञात्वा स्थितवत उपवासेन नैव शुद्धि । आहारे विपरिणामा नैव फलिष्यन्ति। मनस कामुकत्व निर्मीलयितु न शक्यम्। आत्मपरीक्षण देवस्य शरणागतिरन्ते च प्रसाद । एतान्यावश्यकानि । मन शरीरयो समीपसम्बन्धो वर्तते । कामुक मनो भोजनविशेष सौरस्यं च कामयते। ईदृक्परिणाम निवारयितु नियन्त्रणान्युपवासाश्चावश्यकानीति प्रतिभाति । कामुक मन इन्द्रियनिग्रह विना तेषा दासो भवति। अत शरीर सर्वदानुद्दीपकमाहार नित्यनैमित्तिकोपवास चापेक्षते ॥

ये त्वाहारनियन्त्रणान्युपवास च लघूकुर्वन्ति ते प्रमाद्यन्ति। सर्वस्व ये विनियुञ्जते तथैव भ्रान्ता भवन्ति। अनुभवेन शिक्षितोऽस्मि यचेया मनास्यात्मनिग्रहाय प्रयतन्ते तेषामाहारनियमा उपवासश्चातीव साहाय्यकरा । वस्तुतस्तेषा साहाय्य विना कामुकत्व सपूर्णतया मनसो निष्कासयितु न शक्यम् ॥

एकत्रिंशोऽध्यायः

## उपवासः

यदा मया दुग्ध धान्य च परित्यज्य फलाहार प्रारब्ध आत्मनिग्रहाय लघनमारब्धम्।

अस्मिन् कैलनबैकमहाशयो मया समायुक्त । यदा यदा मयारोग्यकारणेनोपवास क्रियते स्म। आत्मनिग्रहायोपवास आवश्यक इति कुलश्रिसुहृद सकाशान्मया शिक्षितम्॥

अह वैष्णवकुटुम्बे वध्यकाचरण कुर्वन्त्या मातु प्रसूत भारतदेश एकादशीतरोपवासाश्च मया क्रियन्ते स्म। परन्तु तन्मातरमनुकर्तुं पितॄन् सतोषयितु च ॥

तदानीमुपवासप्रयोजनं न मे विदितम्। न च मे श्रद्धाभूत्। परन्तु निरूपितपूर्व सुहृदाचरति स्म प्रयोजन च लभते स्म। इति दृष्ट्या ब्रह्मचर्यालम्बनाय तमनुकृत्यैकादश्या-मुपवासमचरम्। सामान्यतो हिन्दुजन फल च दुग्ध चोपवासदिन आहरति स्म। परन्तु तदधुपवासो मया प्रयत्न क्रियते स्म। अत इदानीमुदकमात्र गृहीत्वा मया सपूर्णोपवास स्वीकृत ॥

यदा परीक्षणमिदमारब्ध तदा हिन्दुश्रावणमास मुसल्मानसम्प्रदायानां 'रमजान'-मासश्चैकदैव प्रवृत्तौ। गान्धिमहोदयकुटुम्बे वैष्णवव्रतं शैवव्रतं चोभयमाचर्यते स्म। शिवदेवस्यालय विष्णुदेवस्यालये चोभयं गम्यते स्म। कुटुम्बस्थजना श्रावणमासे प्रदोषमाचरन्ति स्म (मध्यकालीनमुपवासं)। अस्माभि तथा कर्तुं प्रवृत्त ॥

इमानि मुख्यपरीक्षणानि यदा टॉल्स्टॉयस्थले स्थितास्तदा सञ्चालितानि कर्तुम्। तत्र हि कॅलनबॅकमहाशयेन मया च कतिपयसत्याग्रहिकुटुम्बैः सह स्थीयते स्म। तरुणाः शिशवश्च तत्रासन्। तदर्थं एका पाठशाला स्थिता। तन्मध्ये चतुःपञ्च मुसल्मानमहाशया आसन्। तेषां स्वधर्माचरणं कर्तुं मया प्रोत्साह्यन्ते स्म। प्रत्यहं 'निमाज' इति दैनिकप्रार्थना ते कारयन्ति स्म। 'ख्रिश्चनपारसी'जनोऽप्यासीत्। स नित्यं स्वधर्माचरणं करोति स्म। तथा कारयितुं मम धर्म एवेति व्यभाव्यम्॥

अतोऽस्मिन्मासे 'रमजान'मासप्रयुक्तोपवासं कर्तुं 'मुसल्मान'तरुणानुद्युक्तवान्। मया हि निश्चितं प्रदोषमाचरितुम्। 'हिन्दुपारसीख्रिश्चन' तरुणानेवमत्र मिलितुं प्रोत्साह्य सम्यगमनायेदमुत्तममित्यबोधयम्। सर्वे कृपालवो ममोक्तिमग्रहीषुः। 'हिन्दुपारसी'तरुणाः 'मुसल्मान'जनं प्रत्येकविषये न प्रत्याचरन्। तत्रावश्यकमासीत्। 'मुसल्मान'तरुणैः सायंकालपर्यन्तं प्रातर्भोजनाय प्रतीक्षितव्यम्। इतरे तु तथा न चक्रुः। 'मुसल्मान'मित्रेभ्यः स्वादिष्टं सज्जीकृत्य परिवेषयितुमनुकूलास्तरुणाः। हिन्दुजना अन्ये च तरुणाः 'मुसल्मान'सहवासं न चक्रुः। परेद्युः प्रातरुदयात्पूर्वं चरमभोजनं चक्रुः। वस्तुतो मुसल्मानजनं विनेतरे सर्वेऽपि उदकमाचक्रुः। एषा परीक्षणाना फलितं यथोपवासप्रभावं सर्वे जज्ञिरे। तन्मध्ये तेजोमयं प्रखरं ऐक्यताभावोऽरोहत्॥

टॉल्स्टॉयफार्मस्थले वयं सर्वेऽपि शाकाहारिण आसन्। कृतज्ञोऽस्मि यत् सर्वे सज्जनस्थिता मम चेतो मानयितुम्। 'मुसल्मान'तरुणानां 'रमजान' काले भोजनलोपं भवेच्च स्यात्। परन्तु न कोऽपि यथावृत्तमबोधयत्। सन्तुष्टास्तु ते। तेषां शाकाहारं सुस्वादं आसीत्। हिन्दुतरुणा बहुवारमाश्रमे सात्त्व्यानुसारेण शाकाहारविशिष्टं तेभ्यश्चक्रुः॥

उपवासविषयके एतदध्यायमध्ये मन पूर्वमेव विषयान्तरं गृहीतवान्। यत इमे हर्षप्रदाः स्मृतयो न क्वापि देया भवन्ति तत्त्वं विना मदीयगुणो वर्णितः। यथा मम सहचारिणो यत्र क्वाप्युत्तमे कर्मणि मया सह निवेदयामि। उपवासस्तेषां नवोऽभवत्। परन्तु कृतज्ञोऽस्मि प्रत्येकं 'रमजान'उपवासद्वारा सुलभोऽभूत्। आत्मनिग्रहस्य साधनत्वेनो-पवासप्रीतिमुत्पादयितुम्॥

••• एवमात्मनिग्रहान्वयात् आश्रमस्थाः उदयं प्रापुः। आश्रमसहवासिनः सर्वेऽप्यर्धपूर्णे पक्षेऽस्मात्समायोक्तुमारभन्त। निश्चितं तेषां हृदयमात्मनिग्रहोऽस्पृशदिति वक्तुमशक्यम्। स्वीकरोम्यहं यदनेन शरीरं नैतिकं मम बहुप्रयोजनमासीदिति। उपवासः स्वर्णनियमैश्च सर्वेषामेकमेव फलं न प्रसूत इत्याख्येयम्॥

उपवास आत्मनिग्रहार्थं क्रियते चेत् पशवः कामक्रमाद् सहाय्यं करोति। केचिदस्माकं सुहृदः पाशवं कामं निद्राचापल्यं चोपवासनामनिरपेक्ष्येन समुन्नीपि पश्यन्ति। उपवासो

व्यर्थो यद्यात्मनिग्रहाभिलाषेण निरन्तर सयुक्तो न स्यात्। भगवद्गीताया द्वितीयाध्यायगत-श्लोकोऽयमस्मिन्विषये लेखनीय —

विषया विनिवर्तन्ते निराहारस्य देहिन ।
रसवर्जं रसोऽप्यस्य पर दृष्ट्वा निवर्तते ॥

उपवासस्तत्सदृशो नियमश्चात्मनिग्रहस्यैक साधनम् । किन्तु सर्वमिदं न भवति। शरीरोपवास मानसिकोपवासेन सयुक्तो यदि न स्यात् पाखण्ड विपत्तिश्च जायेते ॥

## द्वात्रिंशोऽध्यायः

# पाठशालाध्यापकः

एष्वध्यायेष्वहं दक्षिणाफ्रिकासत्याग्रहचरिते क्षेपेणाख्यातान् विषयान् वर्णयामीति वाचक स्मर्तुमर्हति। यथेन कुर्यात्तदार्वाचीनाध्यायाना सबध सौकर्येण जानीयात्। यदाश्रमोऽभिवर्ध-मान आसीत्तदा बालाना बालिकाना च विद्याभ्यासाय नियमोपकल्पनमावश्यकमासीत्। तन्मध्ये 'हिन्दु मुसलमान पारसी क्रिस्टियन' बालका अपि च कतिपये हिन्दुबालिकाश्च स्थिता-स्तेषामध्यापकान् योजयितु नावश्यकमित्यहमालोचयम् । वस्तुतस्तत्साध्यमपि नासीत्। यतो योग्या भारतीयाध्यापका विरला । उपलभ्याश्चेत् सार्धदशक्रोशदूरवर्तिस्थानात् स्वल्पवेतनाय गन्तु नैव सज्जस्थिता भवन्ति। न चास्मान् धनप्रवाह आगच्छेत्। आश्रमस्य बहिर्भागादध्यापकानानेतु नाहमावश्यक मन्ये। वर्तमानविद्याभ्यासरीत्या न मे विश्वास। अनुभवपरीक्षणाभ्या यथार्थमार्ग मदीयमधिगन्तु मनस्यासीत्। एतावन्मे विदितमासीद्यथार्थ-विद्याभ्यास पितृभिरेवानुकूलसदर्भेषु कर्तव्य इति। तदानीं बहिष्ट साहाय्यमत्यल्पमेव ग्रहीतव्यम्। टॉल्स्टॉय–आश्रम एक कुटुबक यस्याहमेव पिता । तरुणाना शिक्षणाय यथाशक्य प्रतिवक्तृता वोढव्या ॥

भवन्ना तासाविर्दोषासीत्। शैशवात्प्रभृति सर्वे तरुणजना मया सह न स्थिता । भिन्नभिन्नप्रकारेण परिवेष्टनैश्च शिक्षिता । तेषा धार्मिक मत नैकमासीत्। तरुणजनाना न्यायत किं कुर्यां तदीयपितृस्थानमङ्गीकृत्यापि ॥

मानसशिक्षणस्यैव प्रथम स्थानमदाम् । चारित्रनिर्माण मुख्यतमम् । नैतिकशिक्षा सर्वेषामेकरूपेण दातु शक्यते यद्यपि तेषा वयांसि शिक्षण च भिद्यन्ते। चतुर्विंशतिहोराकाल तन्मध्ये निवासमङ्गीकृत्य पितेव स्थितोऽस्मि । चारित्रनिर्माणमेव तेषा विद्याभ्यासाय समुचितोऽस्ति भव । अस्ति भार स्वैनेन प्रतिष्ठापितो यदि शिक्षन स्वयमेव वा सुहृदा साहाय्येन वान्यसर्व शिक्षेत् ॥

परन्त्वधिक शारीरिकशिक्षणस्यावश्यकता विज्ञाता। अत 'कॅल्नबॅक–प्रागजी देसाई' इत्यनयो साहाय्येन कतिपयश्रेणीरदधाट्यम्। शरीरपोषण च मया न विस्मृतम्। इद ते प्रात्यहिककार्यक्रमेणैव प्रापु। यत आश्रमे सेवका नासन्। पाचनाप्रभृति समार्जनपर्यन्त सर्वमपि कार्यं सहवासिभिरेव कृतम्। बहव फलवृक्षा प्रतीक्षणीया आसन्। कॅल्नबॅकमहाशयस्योद्यान-कर्मणि प्रीतिरासीत्। अस्मिन्कर्मणि तस्यानुभवो 'गवर्नमेंट' आदर्शोद्याने तेन प्राप्त। सर्वेषामपि कर्तव्यमिद पाकशालायामुद्युक्तादृते यदुद्यानकर्मेति। शिशूनामधिकतमो भाग प्राप्त। स च गर्तोत्खातन दारुपातन भारोद्धरण च। एतेन तेषा पर्याप्तो व्यायाम आसीत्। अतस्तेषा कर्मणि तेषा सतोष आसीत्। अतस्तेषा कार्यान्तर खेलार्थ नावश्यकान्यासन्। नून तेषा कतिपये कदाचित्ते सर्वेऽप्यस्वास्थ्यव्याजेन वान्यथा वा छलेन कर्तव्यता तत्यजु। कदाचिन्मया तेषा कुचेष्टा उपेक्षिता। परन्तु बहुशाह जागरूक। कठोरत्व न तेषामिष्टमासीत्। परन्तु प्रतिकर्तुमधुनाऽप्य स्मरामि। यदाह कठोरस्तदा कार्यं क्रीडास्तुं न योग्यमित्यपरस्य तानाश्वासयाम। परिज्ञान स्वल्पकालजीवि भवति। यतोऽपरे क्षणे कार्यं परित्यज्य खेलितु गच्छन्ति। वय कथचित्प्रवृत्ता। ते समीचीन शरीर प्रापु। आश्रमे रुग्णता विरला। शोभनो वात समीचीन जल प्राप्तकाल भोजनमिमानि प्रतिवक्तव्यानि भवन्ति॥

कार्योद्योगशिक्षाविषये किंचिद्वक्तव्यम्। तरुणाना प्रत्येकमुपयुक्तहस्तनिर्वाह्यकार्य-मध्यापयितु ममेच्छासीत्। एतदुद्देशेन कॅल्नबॅकमहाशय 'टॅपिस्ट'मठ गत्वोपानत्करण शिक्षित्वा प्रत्यागत। तस्मादिदमहमशिक्षयम्। तद्ग्रहीतु ये सन्नस्थितास्तेषा शिल्पमशिक्षयम्। कॅल्नबॅकमहाशयस्य वर्धकि व्यापारानुभव आसीत्। अन्य कोऽपि सहवासी तदजानात्। अत एका स्वल्पश्रेणी तक्षण शिल्पेऽकार्षम्। पाचन सर्वे तरुणा अवेदिषु॥

सर्वमेतत्तेषा नूतनमासीत्। कश्चिद्दिवस एते विषया शिक्षितव्या इति स्वप्नेऽपि तेषा न विदितम्। यतो दक्षिणाफ्रिकाया भारतीयशिशुभिर्गृहीतमेकमेव शिक्षण '२'कारत्रयमेव – रीडिंग-रायटिंग एरिथमेटिक–पठन, लेखन अकगणित च – ॥

'टॉल्स्टॉया'श्रमे शासन कृत यदध्यापका न चक्रुस्तन तरुणा कर्तुं न वक्तव्या अतो यत्किंचित्कार्यं कर्तुमुक्ताश्चेदेकोऽध्यापक सर्वदा सहकारी। तै सह कार्यकर्ता च स्थित। अतस्तरुणैर्यत्किंचिच्छिक्षित सतोषेण शिक्षित स्यात्॥

अग्रेतनाध्यायेषु शास्त्रिकशिक्षा सौशील्यनपादन च निरूप्येते॥

त्रयस्त्रिंशोऽध्यायः

# अक्षरशिक्षणम्

इत्थं हि व्यतीताध्याये व्यायामशिक्षार्थं 'टॉल्स्टॉय' आश्रमे किं कृतमिति । प्रसङ्गादक्षरशिक्षायां च । यद्यप्येतन्न तृप्तिकरं तथापि विनयशीलमिदं वक्तव्यम् ॥

शारीरशिक्षणं तावदतिकष्टतरो विषयः । उपपत्तिर्विद्यमानमभारा या मनसि स्थिते नासन् । प्रस्तुतविषयावगाहनाय पर्याप्तः कालोऽपि नासीत् । मया क्रियमाणं शारीरं कर्म दिनान्ते मां साकल्येन परिक्षीणावस्थमकरोत् । अतो यदा विश्रान्तिरपेक्षिता तदानीमेव छात्रश्रेणीपुरस्ताद् अवस्थिता । यदा श्रेण्यामनिरस्ततेजसा स्थातव्यं तदा महता यत्नेन सुप्रतिष्ठेन वर्तनीयम् । प्रत्यहं प्रातःकाल आश्रमस्य कर्मणां कृते गृहकृत्यार्थं च विनियुज्यन्ते स्म । अतः शालाभागे मध्याह्न भोजनानन्तरं निर्देष्टव्यमासीत् । न काचिदन्या वेला पाठशालाकार्ययोग्या । शास्त्रशिक्षणार्थं त्रयः पर्यायाः परिकृप्ताः । 'हिन्दी' 'तामिल' 'गुजराती' 'उर्दू' एतत्सर्वं शिक्षितम् । बालकानां मातृभाषया शिक्षणं कृतम् । आङ्ग्लभाषापि शिक्षिता । गुजराती हिन्दुबालकेभ्यः किंचित् संस्कृतं सर्वेभ्यः शिशुभ्यो भूयिष्ठं चरितं भूगोलवर्णनं गणितं च शिक्षयितुमानस्यत्समासात् । 'तामिल उर्दू' भाषे शिक्षयितुं मया समारम्भः कृतः । अल्पं तामिलभाषाज्ञानं समुद्रयात्रासु कारागृहे च मया लब्धम् । 'पोप' महाशयस्य दिव्यं तामिलहस्तपुस्तकमतिक्रम्य न मया चलितम् । उर्दूलेखनस्य ज्ञानं एकस्मिन्नेव समुद्रयाने आगतम् । भाषाज्ञानं तु 'मुसल्मान' सुहृत् संपर्केणोपलब्धपरिचित 'फारसी अरबी' शब्दमात्रेणासीत् । संस्कृतमहं यावदुच्चविद्यालये शिक्षितस्तावन्मात्रमेव प्राप्तवान् । गुजरातीभाषापि यावत्पाठशालायामुपलब्धा तावत्येव ॥

ईदृशं मे मूलधनं येन कार्यं निर्वोढव्यम् । शास्त्रिकसमाराणामकिंचनत्वेऽपि मम सहवासिनः उन्नमगतिं प्रापुः । अस्मद्देशभाषासु प्रीतिरध्यापने मम श्रद्धा मम छात्राणां महान् च शोभनानस्थं मां चक्रुः ॥

तामिलबालकाः सर्वेऽपि दक्षिणाफ्रिकायां जाताः । अतः स्वल्पमेव तामिलभाषाज्ञानमेषाम् । न ज्ञातं तैस्तामिललेखनम् । अतो मया लेखनं व्याकरणप्रक्रियाश्चेति विषया शिक्षणीया आसन् । इदं तु सुकरमासीत् । तामिलसंभाषणे मां मम विद्यार्थिनः पराजयेरन् । स्थितिरेषा विदिता । आङ्ग्लभाषानभिज्ञस्तामिलियनजनो यदा मां द्रष्टुमागतस्तदा मद्भाषणं व्याचख्युः । अहं सानन्दमभवम् । यतो ममाज्ञानं विद्यार्थिभ्यो निगूहितुं न कदापि प्रयतितं मया । प्रत्येकस्मिन्नप्यपि यथास्थितोऽहं तथामानं तेषां प्रदर्शितवान् । अतो मम महामूर्खतायां सत्यामपि प्रीतिं गौरवं च नैवाहापयम् । 'मुसल्मान' बालकानामुर्दूशिक्षणं सुकरमासीत् । तेषां हि लेखनं विदितम् । पठने हस्तलेखने च प्रोत्साहनं मम कर्तव्यमासीत् ॥

इमे तरुणा बहुधा निरक्षरा शालागमनवर्जिताश्च । परन्तु दृष्टं मया कार्यवशाच स्वल्पमेव तेषां शिक्षणीयमासीत् । तेषामालस्यपरिहारो विद्याभ्यासस्योपरि दर्शनं चैतावदीक्षणीयम् । यतोऽहमनेन सतृप्तस्तद्भिन्नभिन्नवयसो बालका भिन्नभिन्नविषयान् शिक्षमाणा एकस्मिन्वर्गे स्थिता स्युः ॥

बहुभिः श्रुता मूलग्रन्थाः पाठ्यपुस्तकानि नापेक्षितानि । लभ्यपुस्तकानामुपयोजनं न स्मरामि । पुस्तकभारान् बालानामुपरि निधातुमावश्यकता मया न दृष्टा । विद्यार्थिनं प्रामाणिकं पाठ्यग्रन्थं स्वस्याध्यापकः । पुस्तकेभ्योऽध्यापका यन्मे शिक्षयामासुस्तदिदानीं नैव स्मरामि । परन्तु पुस्तकं विना यान् विषयानशिक्षयस्त इदानीं मम स्मृतौ वर्तन्ते ॥

कर्णापेक्षया नेत्रेभ्य एव शिशवो प्रहीष्यन्ति स्वल्पेनैव प्रयासेन । मम बालकेन सह यत् किंचिदपि पुस्तकं पत्रात्पत्रं पठितं नाहं स्मरामि । किन्त्वनेकपुस्तकेभ्यः पठितं जीर्णीकृत्य गृहीतं स्वकीयभाषया प्रादाम् । अद्यापि तैरदः स्मर्यते इति वक्तुं शक्यम् । पुस्तकेभ्यो यत्तैः शिक्षितं तत्स्मर्तुं कष्टतरमासीत् । किन्तु यदहं मुखतः प्रादां तत्ते सौलभ्येन महता उदीरयन्ति । पठनं तेषां कष्टतरमासीत् । श्रोतुं मा पुनरानन्द एव । मया शिक्षणीयविषयान्विरुत्साहकरान् कृत्वा स्थितश्चेदानन्दाभावः स्यात् । प्रश्नान् प्रष्टुं प्रेरितान् श्रुत्वा कियत्तैरुपलब्धमिति प्रमाणतो जानीयाम् ॥

चतुस्त्रिंशोऽध्यायः

## आध्यात्मिकशिक्षणम्

आध्यात्मिकशिक्षणं शारीरमानसिकशिक्षापेक्षयाधिकदुष्करम् । आत्मशिक्षणार्थे मया धार्मिकग्रन्था नैवावलम्बिताः । विद्यार्थी स्वकीयधर्मस्य मूलतत्त्वानि जानीयात् । स्वधर्मसत्थाना सामान्यज्ञानमावश्यकम् । अतो मया तादृशज्ञानायापि परिकल्पितम् । परत्वय बुद्धिशिक्षाभाग इति मे मतम् । 'टॉल्स्टॉय'आश्रमस्य तरुणानां विद्याभ्यासचिन्ता यदा गृहीता ततोऽपि दीर्घकालात्पूर्वमेव विदितं यदात्मशिक्षणं नाम तदेकान्ततः स्वस्वरूपमेवेति । आत्मप्रकाशो हि चारित्रनिर्माणमपि च भगवद्ज्ञानानुभवयो सपादनाय मार्गान्वेषणं च भवति । यूनां शिक्षणभागे इदं मुख्यम् । आत्मनः परिष्कारं विना सर्वमप्यात्मशिक्षणमनुपयुक्तम् । हिंसाकरमपि स्यात् ॥

आत्मसाक्षात्कारः सन्यासाश्रमे शक्यः परन्तु सर्वेऽपि जानन्ति यदेतदमूल्यानुभवमार्गान् निरूपमाणा न विरामसाक्षात्कारं भजन्त्यपि तु वार्धक्ये द्वितीयानुकम्पनीयदीनावस्था भूभर-

निवासप्राप्तिम् । आसन्निमे ममाभिप्राया यदाहं शिक्षकोऽभूवमेकोनविंशतिशतोत्तरैकोनविंशति-सहस्रमिते वत्सरे काले । परन्तु विभिन्नभाषया नोक्तं स्यात् ॥

कथमिदानीमात्मशिक्षणं दातव्यम् । बालका स्तोत्राणि यथा पठेयुः कुर्वन्ति तथाकार्षम् । नीतिशिक्षणविषयकपुस्तकेभ्यस्तदप्यपाठयम् । किन्त्वेतेन मे तोषोऽपि तृप्तिर्नासीत् । यदा तैः सह सम्बन्धो निकटतरोऽभूत् तदाहमज्ञासिषम् यदात्मिकशिक्षणं पुस्तकद्वारा न कर्तव्यमिति । यथा शारीरकशिक्षणं शारीरव्यायामतो मानसिकशिक्षणं मनोव्यवसायतः क्रियते तथाध्यात्मिकशिक्षणमप्याध्यात्मिकाभ्यासैरेव साध्यम् ॥

एतदारम्भव्यवसायस्य शिक्षकस्य जीवनरीतिस्तस्य शील चाचार । शिक्षको बालकानां मध्ये तिष्ठतु वा न वा स्वचारित्र्यस्य सूक्ष्मांशानां विषये सदा जागरूकेण भाव्यम् । परं शतकोशदूरवर्तिनो गुरोः स्वजीवनरीत्या स्वशिष्याणामात्मोपरि परिणामं जनयितुं शक्यम् । स्वयं मृषावादी भूत्वा स्वबालकानां सत्यवादित्वकरणे यत्नो व्यर्थः । भयशीलः शिक्षकः स्वशिष्यान् धैर्यशीलान् कर्तुमशक्तः । इन्द्रियनिग्रहस्य गन्धानभिज्ञः स्वविद्यार्थिभ्यः संयमस्य मौल्यं कथं शिक्षयेत् । अतो मया मत्पार्श्ववर्तिबालकबालिकानामादर्शः प्रायेण भवितव्यमिति ज्ञातम् । एवं मम शिष्या मम शिक्षका बभूवुः । तेषामुद्देशेन वा मया साधुनार्जवसम्पन्नेन च भाव्यमित्यहमशिक्षयम् । 'टॉलस्टॉय'आश्रमे शनैः शनैरहमधिकाधिकं निर्बन्धाधीनं संयमाधीनश्च यत्सञ्जातस्तदेतेभ्यो मम शिष्येभ्य एवेति वक्तव्यम् ॥

एषामेकोऽसभ्योऽनिर्बद्धः कलहकारी चासीत् । सोऽयमेकदात्यन्तं दुःशासनोऽभूत् । एतेनाहं क्षमातीतोऽभवम् । न कदापि बालकानहं दण्डयेयम् । किन्त्वतीवाहं क्रुद्धो जातः । तथापि तस्य बुद्धिवादं कर्तुं प्रयतितवान् । किन्त्वसौ न चलितः । न केवलमिदं वञ्चयितुमपि मामयतत । ततोऽहं निकटस्थितरेखादण्डमादाय तस्य बाहुं सकृदताडयम् । ताडनकालेऽहं कम्पमानः स्थितः । इदं प्रायस्तेन दृष्टम् । एतत्सर्वेषां तेषां नूतनोऽनुभव आसीत् । स बालकः रुदित्वा क्षमां प्रार्थितवान् । तस्य रोदनकारणं प्रहारवेदना न हि । सप्तदशवर्षदेशीयो दृढकायो युवकोऽसौ यदीच्छेत्तदा प्रतिकारं कुर्यात् । किन्त्वेतद्धिंसाया उपायोऽवलम्बनीय आपतित इति दुःखितं मां वीक्ष्य मनसा ज्ञातवान् । एतद्घटनानन्तरं कदाचिदप्ययं ममाविधेयो नासीत् । परन्तु तद्वेदनार्थेऽद्यापि मे पश्चात्तापो भवति । तदानीं तदग्रे यन्मया प्रदर्शितं न मे आत्मशक्तिरासीत्परं मे पाशविकवृत्तिः । इयमेव मे शङ्का ॥

अहमस्य सर्वदा देहदण्डनस्य विरोधी । ममापत्येष्वेकस्यैव देहदण्डनं कृतमिति स्मरामि । अतो रेखादण्डप्रयोगः साधुर्दुष्टो वेति निर्णेतुमद्यापि साध्यं न जातम् । प्रायशस्तदनुचितमासीत् । यतः क्रोधो दण्डनेच्छा च तस्य कारणमासीत् । यद्येतत्केवलं मम दुःखसूचनं तर्हि तदुचितमिति गण्यते स्म । किन्तु सन्दर्भेऽस्मिन्नुद्देशो मिश्र आसीत् ॥

एतत्प्रसङ्गो मां रोचनार्थोऽहं कृत्वा बालकानां समावानार्थेनदपेक्षयोत्तमं मार्गं प्रादर्शयत्। पूर्वोक्तसंदर्भे एतन्मार्गस्योपयोगः किम्सफलः स्यादिति न जाने। स युवकः प्रसङ्गान्तु केषुचिद्दिवसेषु व्यस्मरत्। अतोऽत्र यदि वर्तनं तस्योऽयं प्रदर्शितवानिति न जाने। विद्यार्थिनः प्रस्तुताध्यापकस्य कर्तव्यं पूर्वापेक्षया सम्यग्विदितमासीत्। एतदनन्तरं बालका बहुवारं प्रमादं चक्रुः। किन्त्वहं दण्डनीतिं नानुसृतवान्। मम पार्श्वस्थितानां बालकबालिकानामाध्यात्मिक-शिक्षणप्रयत्नेऽहमात्मवशिनोऽपि सम्यक्कृतवानवेदिषम् ॥

पंचत्रिंशोऽध्यायः

# गोधूममध्यवर्ती कक्षः

मयाज्ञातपूर्वो विषयः 'टॉलस्टॉय'आश्रमे कॅलनबॅकमहाशयेन निवेदितः। यथा मया पूर्वो-क्तमित्याश्रमवर्तिनः कतिपयबालका दुष्टा अदम्याश्चासन्। एषु कतिपये स्वच्छन्दवर्तिनोऽप्यभवन्। एतैः सह मम त्रयो बालकास्तत्सदृशा इतरे च स्थिताः। एतेन कॅलन-बॅकमहाशयश्चिन्ताक्रान्तः। किन्तु तस्य लक्ष्यविशेषतो मम बालका न तैर्निरंकुशबालकैः सह वर्तनस्यायुक्ततामुद्दिश्यासीत् ॥

एकदासौ कंठोक्त्या जगाद यथा युष्मदीयापत्यानि दुष्टबालकैः सह मिलन्तीति न मे रोचते। एतेनैक एव परिणामः साध्य एतेन दुःसहवासेन तेऽपि दुष्यन्तीति ॥

तदा ममायं प्रश्नः कठिनः प्रत्यभाद्वा न वा न स्मरामि। परन्तु तस्य मया एवमुक्तं स्मरामि यथा—मम पुत्राणामेषां स्वेच्छावर्तिनां बालकानां च भेदकल्पना कथम्। उभयेषामपि समाना मम प्रतिपालकत्वना। मयाहूता एते बालका अत्रागताः। इदानीं स्वल्पद्रव्यं प्रदाय त्यक्ताश्चेत्तत्क्षणमेव जोहानिसबर्गस्थलं प्रति धावित्वा स्वेषां पूर्वमार्गमाश्रयन्ति। अत्रागमनेन वयमुपकृता इति ते तत्पालकाश्च मन्यन्ते। अत्र तैर्बहून्यनुकूलानि सोढव्यानीति भवतो मम च विदितो विषयः। परन्तु मम कर्तव्यं स्पष्टं वर्तते। मया तेऽत्र स्थापनीया एव। अतो ममापत्यैश्चावश्यमेव तैः सह वर्तितव्यम्। अपि च भवानितरबालकापेक्षया मम बालका महत्तरा इतिव्यवप्रभृति तैर्ज्ञातव्यमिति यद्यभिप्रेयात्तन्मा भूत्। तेषां मनसि तादृशमहत्वस्य भावनाया उत्पादनेन तेऽनुचितमार्गं नीयन्ते इव। इतरबालकैः सह मेलनं तेषां साधु शिक्षणं स्यात्। यतस्ते स्वयमेव सदसद्विविच्य वर्तितुं शिक्षन्ते। वस्तुतस्तेषु साध्वंशो यदि स्यात्तत्प्रभावस्तेषां सहचारिषु प्रकाशत इति कस्मान्न विश्वसनीयम्। तथया 'वास्तां ते

बालका अत्रैव स्थापनीया । नास्त्युपायान्तरम् । तेन कश्चिदपायमभोऽस्माभिरनुभवितव्य इति ॥
कैलनबैंकमहाशय शिर कम्पयामास ॥

अस्य परिणामो दुष्टो बभूवेति न वक्तु शक्यते । वस्तुतस्तेषां कश्चिदपाम स नाम इति मम स्पष्ट भवति । तेषु स्वय महत्त्वा इति भावनाया छायापि चेद्भविष्यत्तर्हि गत्वा इतरबालकै सहवास शिक्षन्ते स्म । एतेन ते शीलशिक्षणस्य लक्ष्यीकृत्य परीक्षिता बभूवुरिव । साधुबालकान् दुष्टबालकाना सहवासे निवेश्य शिक्षाप्रदानेन तेषा न क्वापि परीक्षितिर्भविष्यतीति एतत्सदृशानुभवैर्मम गोचरमायातम् । परन्त्वेतादृशकर्मण्यङ्गीकृते बालकाना मातापितरै चेष्टाश्च तानतिजागरूकतया द्रष्टुमर्हन्ति ॥

एतेन कदलीफलराशिमध्ये प्ररूढा बालका मोहदूरा दोषरहिताश्च भवन्तीत्येतन्न नित्यसिद्धम् । परन्तु भिन्नभिन्नप्रकारेण प्रवर्तमाना बालकबालिकाश्च सहैव शिक्षण दीयमाना यदा भवन्ति तदा तन्मातापितर शिक्षकाश्चात्यन्तकठिनपरीक्षाया लक्ष्यीभूता भवन्तीति सत्यम् । तै सदा जागरूकैर्भवितव्यम् ॥

षट्त्रिंशोऽध्याय

## उपवासः प्रायश्चित्तरूपः

बालकान् शिशूश्च युक्तमार्गेण पुरस्तादानीय तेषा शिक्षाप्रदान नाम कियद्दुष्करमिति मम दिने दिने स्पष्टतर प्रत्यभात् । यद्यह वस्तुतस्तेषा शिक्षक पालकश्च भवेय यदि मया तेषा हृदय प्रवेष्टव्यम् । तेषा सुखदु खेषु भागिना भवितव्यम् । तेषा पुरोवर्तीनि कार्याणि विधातु साहाय्य प्रदातव्यम् । तदीययौवनस्याशाप्रवाह योग्यभूमौ नेतव्यम् ॥

यदा सत्याग्रहिणा कतिपये कारागृहाद् विमुक्तास्तदा 'टॉलस्टॉय' आश्रम प्रायशो निर्जन एवाभूत् । तत्रत्याना बहव 'फीनिक्स' आश्रमवर्तिन आसन् । अतस्तानह 'फीनिक्स' आश्रम प्रेषितवान् । अत्राहमुग्रपरीक्षातरागत । मया 'जोहानिसबर्ग–फीनिक्स' स्थलयोर्मध्ये गतागत क्रियमाणमापतितम् । एकदा जोहानिसबर्गवर्तिनो ममाश्रमवासिना द्वयोर्नीतिपतनस्य वृत्तान्त आगत । सत्याग्रहयुद्धे पराजय प्राप्त इव भवतीति वार्तायामपि नाह त्रस्तोऽभविष्यम् । परन्त्विद श्रुत्वा ममोपरि वज्रपातोऽभवदिव । तद्दिनमेवाह अग्नियानचलितयानेन फीनिक्स आश्रम प्रति प्रस्थित । कैलनबैकमहाशयो मया सहागमिष्यामीति साग्रहमुवाच । मयैकस्यैव गमन तस्मै नारोचत । यतो मम बुद्धिभ्रमणस्य कारणीभूतप्रवृत्तिमिमामानीतवान् स एव ॥

मार्गे मम कर्तव्यं मम स्पष्टमासीत् । अथवा स्पष्टमासीदिति मया चिन्तितम् । स्वस्य पोषणायामथवा कार्यनिरीक्षणे स्थितस्याध्यक्षस्य प्रमादस्यास्ति स्वस्य किंचिदपि प्रतिवक्तव्यता इति मम प्रत्यभात् । अतोऽस्मिन्सन्दर्भे मम वाच्यता मम स्फटिकमिव स्पष्टमासीत् । मम भार्या ममैतद्विषये पूर्वबोधं दत्तवती । किन्त्वहं विश्वसनीयस्वभावत्वात् गमनं नानिनाय । तस्मिन् प्रमादे ये भागिनस्ते मम खेदं स्वदोषस्यागाधतां च यदा मनसि चतुर्थ्येव प्रमादकृते प्रायश्चित्तमङ्गीकार एक एव मार्ग इति मे प्रत्यभात् । अतोऽहमेकसप्ताहमुपवासं तत परं सार्धं चतुर्मासानेकवारमेव भोजनं कर्तुं प्रतिज्ञामकरवम् । कैलनबैकमहाशयो मां निवारयितुं प्रायतत । किन्तु तत्सफलं नासीत् । पर्यन्ते सोऽप्येतत्प्रायश्चित्तस्य युक्ततां स्वीकृत्य स्वयमपि मया सह भागी भवितुं हठमकरोत् । तस्य सुविमलप्रेमबलं प्रति योद्धुं न शक्यमासीत् ॥

एतन्निश्चयेन मम मनोभारधिता च बहुमान्यीवभूवतु । कृतापराधानामुपरि यो मम क्रोध शान्तिमागत्य तेषां विषये निष्कलं करुणायाः स्थानमदात् । इत्थं बहुशः शान्तचित्तो भूत्वा 'फीनिक्स' आश्रममहं प्राप्त । पुनर्विमृश्य मया ज्ञातव्यविषयानितरानप्यज्ञासिषम् ॥

मम प्रायश्चित्तेन सर्वेऽपि दुःखिता इत्येतत्सत्यम् । किन्तु तत्रत्यवातावरणं निर्मलीचकार । पापकार्यानुष्ठानं नियद्भयकरो विषय इति प्रत्येकोऽपि जज्ञे । तत्र बालबालिकाभिः सह ममोपवेशनस्य सम्बन्धो नैजो निकटश्च बभूव ॥

अस्याः घटनायामेवानुवर्तमानगादहमित स्वल्पदिनानन्तरं चतुर्दशदिवसोपवासमङ्गीकार आपतितः । इतो भावी परिणामो मम निरीक्षमाणेनिकाम आसीत् ॥

यदा यदा स्वशिष्याः प्रमाद्यन्ति तदा तदोपवासकरणं शिक्षकस्य कर्तव्यमिति एताभिर्घटनाभिः सांप्रतं ममाशयो न भवति । किन्तु केषुचित् सन्दर्भेष्वयं कटु कषाय एव भेषजमिति ममाभिप्रायः । किन्त्वस्य दृष्टिसौक्ष्म्यमाध्यात्मिकयोग्यता च भवेतामेव । गुरुशिष्ययोर्नैज-प्रेमाभावे विद्यार्थिनः पापकृत्यं यदा शिक्षकस्यान्तःकरणं न प्रविशति शिष्यस्य गुरौ भक्त्यभावे चोपवासो न युक्तः । तादृक्सन्दर्भे तेन हानिरपि सम्भवेत् । यद्यप्येवमुपवासानां साफल्यविषये संशयस्यावकाशो भवति तथापि शिष्यस्य दोषाणां शिक्षकस्य प्रतिवक्तव्यता प्रति निर्देशोऽपि सन्देहो नास्ति ॥

प्रथमप्रायश्चित्तमस्मासु कस्यापि दुःसहं न प्रत्यभात् । मम दैनंदिनचर्यासु न किंचित्कार्यं प्रति रोद्धव्यमासीत् । एतत्प्रायश्चित्तस्यावसानपर्यन्तं मया केवलं फलान्येव सेव्यन्ते स्मेति वाचकानामवबोधः नेतुं शक्यम् । द्वितीयोपवासस्य चरमभागे कष्टतरमासीत् । तदानीं मया रामनाम्नो महिमा न ज्ञात । कष्टसहनशक्तिरपि स्वल्पैवासीत् । अपि च ममोपवास-कलाज्ञानमपि मम नासीत् । तत्रापि विशेषत उदकमसद्यमस्वादु यद्यपि स्यादधिकं पातव्यमिति मया न ज्ञातम् । अपि च प्रथमोपवासः सुलभो दृष्टः । अतो द्वितीयस्य विषयेऽनागरूक

आसम्। तद्यथा प्रथमोपवासे प्रतिदिनमहं 'क्युनि'क्रमप्रकारेण मया स्नानं क्रियते स्म। द्वितीयोपवासे त्रिचतुर्दिनेभ्यः परमहमेतत्स्नानं त्यक्तवान्। उदकपानं तदरुचिकरं वमनकारकं च दृष्ट्वा तदतीवाल्पमकरवम्। कण्ठः शुष्को जातोऽथ क्षीणो भूत्वा पर्यन्ते केवलं श्वासेन भाषितुमपि शक्त आसम्। तथापि लेखने आवश्यके सति लेखयित्वा मम कार्यं निर्वाहयितास्मम्। रामायणप्रभृतिपवित्रग्रन्थान् श्रुतानकरवम्। अत्यावश्यकविषयान्प्रति विचारं कृत्वाभिनन्दितुं पर्याप्तचैतन्यमपि मय्यासीत्॥

सप्तत्रिंशोऽध्यायः

# गोखलेदर्शनार्थम्

दक्षिणाफ्रिकासंबंधिन्यः स्मृतयो मया त्याज्या एव। चतुर्दशोत्तरैकोनविंशतिमिते वत्सरे सत्याग्रहयुद्धावसाने मया 'लंडन'द्वारा स्वदेशमागम्यतामिति आज्ञापत्रमागतम्। अतः कस्तुरबाईमहाशया कैलनबैकमहाशयोऽहं च 'जुलाई'मासे स्वदेशं प्रति प्रयाताः॥

सत्याग्रहयुद्धकालेऽहं तृतीयश्रेण्या प्रयातुमारब्धवान्। अतोऽहमेतत्प्रयाणस्यापि तृतीयश्रेणी प्रयाणानुज्ञापत्रं क्रीतवान्। परन्त्वेतत्सचारपथस्य नौकाया तृतीयश्रेणीयात्रिणां विहितसविधानस्य भारतदेशस्य समुद्रतीरे संचरनौकासु तत्र यत्राप्यसंचालितयानेषु चैतच्छ्रेणीप्रयाणिकानां लभ्यसौकर्यस्यापि विद्यते महान् भेदः। भारतवर्षे प्रयाणे तावदुपवेष्टुमपि पर्याप्तस्थलं न लभ्यते। शयनस्य [illegible] का कथा। शुचित्वं चाल्पम्। किन्तु यदा वयं लंडनं प्रति यातास्तदा पर्याप्तस्थलमासीत्। निर्मलं चासीत्। अपरं च नौकासंस्थाजनेन प्रत्येकमस्माकमनुकूलानि परिकल्पितानि। अस्मदर्थं प्रत्येकं शौचकूपं स्थितं। यतो वयं फलाहारिणस्ततो द्राक्षाप्रभृतिफलानि प्रदेयानीति नौकाकार्याधिपतिराज्ञप्त आसीत्। सामान्यतस्तृतीयश्रेणीप्रयाणिकानां फलप्रदानमपूर्वम्। एतैः सौकर्यैरेव नौकायामष्टादशदिनानि सुखमयापयाम॥

अस्मिन् प्रयाणे प्रवृत्ता काचिद्घटना लेखनीया। कैलनबैकमहाशयाय द्विनेत्रकाणि बहुरोचन्त। तन्निकटे मूल्यवती एकद्वि द्विनेत्रयन्त्रे आस्ताम्। अनयोरेकस्य विषये प्रत्यहं चर्चा क्रियते स्म। एतन्निक्षेपणमस्माभिः साधनीयमरलजीवनस्यादर्शप्रतिकूलमिति दर्शयितुं मया प्रयतितम्। अस्मद्वादप्रवादा एकस्मिन्दिने प्रस्थानमापुः। शालिकाया पार्श्वछिद्रसमीपे समुपस्थिता वयम्। इदमस्म मध्ये कलहकारणीभूतं स्यात्। अतः समुद्रे प्रक्षिप्य सर्वं समापयिष्याम—इत्युक्तं मया। निश्चितमेव पापिष्ठं वस्तु प्रक्षिप्यतामिति कैलनबैकमहाशयोऽ-

चोचत् । अथ मे निश्चितोऽभिप्राय इत्युक्तं मया । ममाप्येवमिति शीघ्रमेव प्रत्युत्तरमायात् । अह तत्क्षणमेव समुद्रे विक्षिप्तवान् । तस्य मूल्य प्राय सप्त 'पौंड 'मितम् । तस्य मूल्य नहि तस्य क्रये स्थितम् । किन्तु कॅल्नबॅंकमहाशयस्य तद्वस्तुनि मोहस्तादृश । वस्तु नष्टमिति तत पर स नैव विषसाद ॥

आवयोर्मध्ये सम्भवद्वृत्तान्तामयमेक ॥

प्रत्यहमेव किंचिन्नूनन दिक्षर्गयमासीत् । यत उभावपि सत्यमार्गे चलितु प्रयतमानावभूव । सत्यमार्गे चलित क्रोध स्वार्थपरतो द्वेष इत्यादिक स्वभावतो नश्यति । अन्यथा सत्यमुपलब्धुमशक्यमेव । कामोपहतो मनुष्य शोभनमनस्को भवेत् । वाचि सत्यवाश्च स्यात् । किन्तु न कदापि सत्य लभते । सफल सत्यान्वेषण रागद्वेषसुखदु खेत्यादिद्वन्द्वसमूहाद्विमुक्त भवेत् ॥

यदा प्रयाणमगीकृत तदा ममोपवाससमाप्तेश्चिरकालो नासीत् । ममाधापि मम सामान्यशक्तिर्नागता । व्यायामेन बुभुक्षोत्पादनाय नौकावेदिकाया परिक्रम कुर्वाण आसम् । किन्त्वय व्यायामोऽपि मम शक्तिमतिक्रान्त आसीत् । जघापिण्डे दु ख वर्तते स्म । 'लडन'पत्तन यदा प्राप्तस्तदेय वेदना नाल्पीयसी बभूव किन्त्वधिकैवासीत् । तत्र मे डॉ जीवराज-मेहता महाशयस्य परिचयोऽभूत् । तस्य मया कृतमुपवास जघावेदनोत्पत्तिं च न्यवेदयम् । भवता पूर्णविश्राति स्वीकार्या । नो चेत्तव जघा पूर्णमेव हीयेतेति सोऽवोचत् ॥

दीर्घोपवासादामन शक्तिं पुन सपादयितु नातुरो भवेत् । किन्तु बुभुक्षा नियन्त्रयेत् । अधिकजागरूकता प्रायोऽधिकनिग्रहश्चावश्यकावुपवासनिवृत्तौ उपवासकरणापेक्षया । 'मदीरा'-पत्तने श्रुतमस्माभिर्यत्क्षणमात्रेण महायुद्ध सम्भवेदिति । आग्लचल्मपी प्रविष्टे श्रुत सग्राम आरब्ध इति । वय किंचित्काल स्थापिता । कुल्याया सर्वत्र प्रसारित 'गुलिका'खनिस्पर्शं विना नौका नेतु दुष्करो व्यापार । साउथेम्प्टनपत्तनं प्राप्त प्रायो दिनद्वयमासीत् ॥

'ऑगस्ट'मासस्य चतुर्थदिने युद्धघोषणा सवृत्ता । 'लडन'पत्तन वय षष्ठदिवसे प्राप्ता ॥

अष्टत्रिंशोऽध्यायः

# संग्रामे मम भागित्वम्

'इंग्लॅंड 'देश प्राप्तस्य मे विदितमासीयद् गोखलेमहाशय आरोग्यलाभकारणात् 'पेरिस '-पत्तन गत्वा तत्रोत्कूलित स्थितो भवतीति । 'पेरिसलन्डन 'पत्तनयो ससर्गस्य

विच्छिन्नत्वात् कदा प्रतिनिवर्तेत इति ज्ञातुं न शक्यमासीत् । तमदृष्ट्वा गृहं गन्तुं न मयापेक्षितम् । परन्तु कदा प्राप्स्यतीति न कोऽपि निश्चितं वक्तुमशकत् ॥

अत्रान्तरे किं मया कर्तव्यम्? युद्धसम्बन्धे किं मया विधातव्यम्? कारागृहे मम सहवास्यपि च सत्याग्रही 'सोराबजी अडाजणीया'महाशयस्तदा 'लण्डन'पत्तने 'ब्यारिष्टर'-परीक्षार्थमधीते स्म । अत्युत्तमसत्याग्रहिष्वयमेक आसीत् । अथ दक्षिणाफ्रिकां प्रतिनिवर्तनानन्तरं मम स्थानमङ्गीकर्तुमुद्दिश्य 'ब्यारिष्टर्' भवितुं प्रेषितः । डॉं प्राणजीवनमहेतामहाशयोऽस्य सर्वव्ययं वहति स्म । 'इंग्लैंड'देशे विद्याभ्यासं कुर्वाणैः डॉ. जीवराजमहेतामहाशयप्रभृतिभिः सभाजनं कृतवान् । तेषां सर्वेषां सूचनामङ्गीकृत्य 'ब्रिटिश' द्वीपवर्तिनां भारतीयानां सभामेकां परिकल्प्य तस्यां सभायां ममाभिप्रायं न्यवेदयम् ॥

'इंग्लैंड'देशवर्तिनो भारतीया युद्धे स्वीयभागं वोढुमर्हन्तीति मम प्रतिभाति स्म । आङ्ग्लविद्यार्थिनः सैन्यं प्रवेष्टुं स्वयमेव पुरस्तादायान्ति स्म । भारतीयजनैस्तन्न्यूनं न करणीयमिति ममाभिप्राय आसीत् । एतादृशतर्कस्य बहव आक्षेपाः प्रत्यभिहिताः यथा भारतीयाः क्व । आङ्ग्लेयाः क्व । वयं दासास्ते स्वामिनः । स्वामिनः सङ्कटप्राप्तौ दासः कथं साहाय्यं कुर्यात्? स्वातन्त्र्यमपेक्षमाणो दासः स्वस्वामिनः सङ्कटकाले स्वबन्धविमोचनं कर्तुं न किमर्हति इति वादं चक्रुरमी । तदायं तर्को मम मनसे नारोचत । भारतीयस्याङ्ग्लेयस्य च महत्त्वे व्यत्यासो मया ज्ञातः । परन्तु तेऽस्मान् दास्यस्थितौ निहितवन्त इति न मे मतमासीत् । अस्याः परि-स्थितेः 'ब्रिटिश'राज्यपद्धतिमुक्त्वा कतिपया'ब्रिटिश'अधिकारिण एव कारणभूता इति तेऽस्माभिः प्रेम्णा परिवर्तनीया इति च मम प्रतिभाति स्म । 'ब्रिटिश'जनस्य सहायसहकारैर्वय-मस्मत्परिस्थितिमुत्तमां कर्तुमिच्छामश्चेत्तेषां कष्टकाले साहाय्यं कृत्वा तत्साहाय्यं लब्धुमस्माकं कर्तव्य-मिति ममाभिप्राय आसीत् । यद्यपि ब्रिटिशराज्यपद्धतिर्दोषयुता स्यात् यथा सेदानीं मे दृश्यते तथा मे सहनाधीना न दृष्टा परन्त्वधुना मे तत्पद्धतौ विश्वासो नष्टो भूत्वा मम ब्रिटिशराज्येन सह वर्तितुमनमन्नौ तदा न केनचिदस्यां पद्धतावपि त्वधिकारिष्वपि । विश्वासाभावं प्राप्ता ते सुहृदः कथं सहकारं कुर्युः ॥

प्रतिपक्षीयाः सुहृदो भारतीयेभ्यः प्रदेयानधिकारानुद्घोषयितुं भारतीयानां परिस्थितिमुत्तमां कर्तुं चायमेव शुभसमय इत्यभिप्रायं ददुः ॥

मया त्वचिन्तितं यथा 'इंग्लैंड'देशस्य प्रद्वारमार्गे लाभो मा भूत् । युद्धे प्रवर्तमानेऽस्मदधिकारेभ्यो 'ब्रिटिश'जने निर्बन्धं विना वर्तितमेव योग्यं दूरदृष्टिमदिति च । अतो मम सूचनानुसारेण सैन्यशिक्षार्थं स्वयंसेवकत्वेनाङ्गीकर्तुमाह्वानं मयाकारि । बहवो जना स्वनामानि ददुः । तत्र सर्वप्रान्तीयाः सर्वधर्मावलम्बिनश्चासन् । एवं विपक्षानपि परराष्ट्रप्रार्थना-

याश्च स्वीकारात्पूर्वमेवास्माभि शुश्रूषाक्रमे शिक्षणं लब्धव्यमिति निर्धारिते वय तथा शिक्षिता भवितु सज्जरिथता स्म इत्येतत्सर्वं निवेद्य 'लॉर्ड क्रू' महाशय प्रति लेखमलेखिषम् ॥

प्रयमतो निर्दिष्टा भूत्वा ततोऽस्मत्साहाय्यमङ्गीकृत्य साम्राज्ये सङ्कटप्राप्ते साहाय्य कर्तुं सज्जरिथतानामस्माक स्वकृतज्ञता व्यक्तीचक्रु । स्वयसेवका परिक्षताना चिकित्साभ्यास्याभ्यास प्रसिद्ध 'डॉ कैंटली' महाशयस्य सकाशाच्छिक्षितुमारभन्त । अस्मिन्नभ्यासे षट्सप्ताहमात्र-गामिन्यपि प्रथमचिकित्साया सर्वकार्याण्यपि अभ्यन्तरीकृत्य स्थित ॥

अस्मदीयश्रेण्या प्रायोऽशीतिर्जना आसन् । षट्सप्ताहेषु वय सर्वे परीक्षिता । एक विना सर्वेऽप्युत्तीर्णा । एवं राज्याधिकारेण शस्त्राभ्यासम् । इतरशिक्षणं च शिक्षयितु कल्पयामासु । एतस्मिन्कार्ये 'कर्नल बेकर' महाशयो नियमितोऽभूत् ॥

तदानीं लंडनपत्तनस्य दृश्यमतिदर्शनीयमासीत् । जनो नहि त्रस्त आसीत् । सर्वे यथाशक्ति साहाय्यकरणे युक्ता आसन् । दृढकाया युवका सैनिका भूत्वा युद्धविद्या शिक्षितु प्रस्थिता । किन्तु वृद्धैरशक्तै स्त्रीभिश्च किं करणीयम् । यदीच्छाभूत्तेषामपि पर्याप्तकार्यमासीदेव । अतस्ते वस्त्र विच्छिद्य वेषकल्पन कर्तुमारभन्त । क्षतस्य बन्धनानि कर्तुं चोद्युक्ता बभूवु ॥

'यि लाइसियम' नाम महिलासमाजेन यथाशक्ति कर्पटसीवनभारो वोढ । श्रीसरोजिनीदेवी तत्समाजस्य सदस्यासीत् । सा उत्साहपूर्वक तत्कार्यं कर्तुमारभत । अयमेव तया सह मे प्रथम परिचय । सादरमनुसृत्य छिन्नवस्त्रराशिं ममाग्रे स्थापयित्वा तत्सीवन कारयित्वानेतव्य इति मामवोचत् । इमामाज्ञामहमानन्देन शिरसोढ्वा मित्राणा साहाय्येन प्रथमचिकित्साशिक्षणमध्ये मम यावन्ति साध्यानि तावन्ति वस्त्राणि सीवयित्वा दत्तवान् ॥

एकोनचत्वारिंशोऽध्याय:

# धार्मिकसमस्या

दूरतरभारतीयैः सहाह युद्धे सेवा कर्तुं सिद्धोऽस्मीति राज्याधिकारस्य मम नाम दत्तमिति वार्ता दक्षिणाफ्रिकादेश यदैव प्राप्त तदा मम तत्रीसदेशद्वयमागातेष्वेक पोलकमहाशयेन प्रेषितो यथा भवता कृतमिद कार्यमहिंसातत्त्वस्य विरुद्ध न किमिति ॥

अयमाक्षेप प्रायो मया निरीक्षितमेव । यतो मयाय प्रश्नो मम 'हिन्दीयस्वराज्य' इति पुस्तके न केवल विमर्शित परमय विषयो दक्षिणाफ्रिकाया रात्रिंदिव मित्रै सह मया चर्चां नीयते स्म । युद्धमनीतिमयमासीदिति सर्वेषा न सम्मतिरासीत् । यद्यह मम प्रहर्तुरुपरि व्यवहर्तुं

न सज्जस्थितस्तदा युद्धे प्रवेष्टुं तथापि मम यथा विपक्षाणां धर्माधर्मविचारेषु मम सम्मतिः पर्याप्ता। अहं 'बोअर'युद्धे भागमगृह्णाम् इति मम मित्राणां विदितमासीत्। परन्तु मदीयो ममाभिप्रायः परिवर्तित इति मेनिरे ते॥

वस्तुतः 'बोअर'युद्धे प्रवेष्टुमहं यया विचारसरण्या प्रेरितः सैवास्मिन् सन्दर्भेऽपि मां समादधीत। युद्धे प्रवेशोऽहिंसाधर्मस्य प्रतिकूल एवेति ममाय तत्स्पष्टमासीत्। किन्तु स्वकर्तव्यं सदैवातत् स्पष्टतया मनुष्यस्य प्रज्ञाया न विदितम्। सत्योपासकेन बहुशोऽन्धकारे मार्गं परामर्शनीयो भवति॥

अहिंसातत्त्वमनन्तव्यापनयुक्तं भवति। वयं हिंसाया प्रज्वलने निपतिता निःशक्ताः अनित्यजीविनः। जीवस्य जीवः आहार इत्युक्तिरयार्था भवति। मनुष्यो ज्ञात्वा वाऽज्ञात्वा वा बाह्यहिंसामकुर्वन् क्षणमात्रं न जीवेत्। तस्य जीवितमेव—भोजनं पानं चलनं च हिंसात्मकं भवति। अत्यल्पे सत्यपि प्राणहानिकरं भवति। अतो यदहिंसोपासकस्य सर्वापि क्रियानुकम्पात्मिका स्यात्। सोऽयमल्पजन्तोः प्राणहानिं प्रति कारणभूतो यदि स्यात्तथा वर्तितुं यावच्छक्यं प्रयतते चेद्यदि तद्रक्षितुं यत्नं कुर्यात्तथैव निरन्तरं हिंसाया यमपाशेन मुक्तो भवितुं परिश्राम्यति चेदयं स्वधर्मं रक्षति। स नित्यं सदामनिग्रहे कारुण्यवृत्तौ च प्रवर्तते। परन्त्वयं बाह्यहिंसाया सम्पूर्णमेव विमुक्तो न स्यात्॥

अपरं चाहिंसातत्त्वस्य मूले सकलजीवस्यैक्यता यस्मात् स्थिता तस्मादेकस्य दोषः सर्वानपि स्पृशेदेव। अतो मनुष्यो हिंसासम्पर्कं विनैव न खलु स्यात्। स यावत्सामाजिकवृत्ति-र्भवेत्तावत्समाजस्यास्तित्वस्यैव प्राप्तहिंसाया भागी न भवितुमशक्तः। यदा जनागद्वयं युध्यते तदाहिंसोपासकस्य कर्तव्यं युद्धस्य गतिस्तम्भः। एतत्कर्तव्यमपालयन्युद्धे न प्रतियुध्यते। युद्धे प्रतियोद्धुं योग्यताहीनः। युद्धे भागी स्यात्तथापि स्वं स्वीयं जनागं लोकं च युद्धाद्विमुक्तान् कर्तुं मनःपूर्वकं प्रयतेत॥

अहं 'ब्रिटिश'चक्राधिपत्यद्वारा मम मम देशस्य च परिस्थितिं भद्रतरीकर्तुमाशासायुक्तः आसम्। यदाहं 'इग्लेंड' देशे स्थितस्तदा 'ब्रिटिश'नौकाबलस्य संरक्षणाधीन आसम्। यतोऽहमस्यायुधबलस्याश्रये स्थितस्ततस्तत्र निगूढहिंसावृत्तौ स्वतो भाग्येवासम्। अतोऽहं चक्राधिपत्यस्य सकलमपरित्यज्य तस्य छत्रच्छायाया वर्तितुमिच्छेयं यद्येवमस्मिन्मार्गेऽन्य एको वरणीय आसीत्। युद्धं वदघोषेण प्रतिरुध्य यावच्चक्राधिपत्यं युद्धनीतिं त्यजेत्तावत्सत्याग्रहनियमानुसारेण चक्राधिपत्यस्य बहिष्करणम्। अथवा शासनानि सविनयं भङ्क्त्वा कारागृहाश्रयणम्। अथवा चक्राधिपत्यपक्षे युद्धे प्रविश्य तद्द्वारा युद्धस्य हिंसाप्रतिरोधनयोग्यताया सिद्धतायाश्च प्राप्तिः। मय्येतद्योग्यताया अभावाद्युद्धे प्रवेशं विना नास्त्यन्यो मार्ग इति मया चिन्तितम्॥

योद्धृणामयोद्धृणा मध्ये ममाहिंसादृष्ट्या न कोऽपि भेदः प्रतिभाति। यदा स्तेना आत्मनश्चौर्यं कुर्वन्ति तदा चोरत्वातस्य रथसेवका मे वहन्ति रक्षन्ति च यदा चोराः स्वकार्यनिरता धात्रीकार्यं कुर्वन्ति च ते चोरा इव स्वयमपराधिनः। तथैव युद्धे परिक्षतान्ये निरीक्षन्ते तेऽपि युद्धापराधतो न विमुक्ता भवेयुः ॥

पोलाकमहाशयस्य तन्त्रीसंदेशात्पूर्वमहं स्वयमेवैतन्ममैव विचारितवान्। तत्रापि स्वल्पकालेनैव ममैमानभिप्रायान् कतिपयमित्रैः सह चर्चां कृत्वा युद्धे प्रवेष्टुमग्रतो गमनमेव मम धर्म इति निर्णयम्। अद्यापि विचारसरणौ कमपि दोषं न पश्यामि। सामान्यविषये यतोऽहं तदभिप्रायवानास्म तत कृतस्य पश्चात्तापं न वहामि ॥

ममाभिप्रायो निर्दुष्ट इति तदानीमपि मम सुहृदः समानयितुं नाहं शक्तोऽभवमिति जानामि। सातिसूक्ष्मा समस्या। अत्र मतभेदायाल्पावकाशः। अतोऽहिंसाया श्रद्धाढ्ना तद्धर्मं जीवनस्य प्रत्येकभागेऽप्यनुसर्तुं श्रद्धायुक्तं प्रयत्नं कुर्वाणानां च मयैव मनोविचारं यथा साध्यस्पष्टमुक्तवानस्मि। सत्योपासकः सामान्यतः रूढ़ेर्वा विनम्य न किंचित्कार्यं करोति। स्वप्रमादं समीक्षितुं सदा सज्जो भूत्वा दोषे ज्ञाते सति यद्वा तद्वा मत्वाविति नमस्य तस्य प्रायश्चित्तं तेन करणीयम् ॥

—

चत्वारिंशोऽध्यायः

## सत्याग्रहस्य सूक्ष्मचित्रम्

**यद्यप्यहं** धर्मदृष्ट्या युद्धे प्रविष्टोऽदृष्टवशादहं तत्र स्वयं भागी नाभूवम्। किन्तु सत्याग्रहस्य सूक्ष्मचित्रं तदात्वकालेऽप्यर्पयितुमाहूत इव ॥

उक्तपूर्वं हि मया यदस्मन्नामानि दृष्ट्वा सम्यगाकृते सर्वेषामस्माकं शास्त्रशिक्षां शिक्षयितुमधिकारी कश्चिन्नियमित इति। केवलयुद्धशिक्षणस्य मत्सविचारेषु मात्रं सोऽधिकार्यस्मत्स्वामीत्यवशिष्टविचारेष्वहमेवास्मद्दलस्य नायक इति चान्तर्नियमाना सर्वदलस्या मम प्रतिसत्या इति दलेनाधिकारी व्यवहारः मन्मूल्कः निर्वाहयेदिति वयं सर्वे विदितवन्तः। किन्तु सोऽधिकारी प्रथमत एव तादृग्भ्रमस्यावकाशं न ददौ ॥

सेरावती-अडानगीयामहाशयश्चतुरः आसीत्। स इत्थं मां प्रत्येयमस। यथा एतन्मनुष्यस्य विचारे जागरूका भवत। अयमस्मदुपर्यधिकारं चालयितुमिच्छतीति प्रतिभाति।

अस्याज्ञा वयं नापेक्षामहे । अयमस्मदीयशिक्षक इति भावयितुं वयं सिद्धा स्म । किन्त्वस्मान् शस्त्रशिक्षां बोधयितुं नियमिता युवका अपि स्वयमस्मदीयस्वामिन इति जानन्तीति ॥

एते युवका 'ऑक्सफर्ड'विश्वविद्यानिलयस्य विद्यार्थिनो बभूवुः । ते न शिक्षणं दातुमागताः । मुख्याधिकारी तानस्मद्दलविभागानां नायकान्नियमितवान् ॥

ममाप्यधिकारिणमिति मतिश्चातो दर्पो न दृष्टः । किन्तु सोराबजीमहाशयमलं चिंतयेति समाधातुमयते । किन्त्वसौ सौलभ्येन समन्यमानो मनुष्यो नासीत् ॥

तेन समन्दहासमुक्तं यथा — भवानतिविश्वासशीलः । एते मनुष्या दुष्टवचसा भवन्नेत्रयोर्मृत्तिकां क्षिपन्ति । पर्यन्ते भवानुन्मीलितनेत्रः सन् गम्यतां सत्याग्रहं कुर्म इत्युक्त्वा न केवलं भवानपि तु वयं च क्लेशिता भवाम इति ॥ "मम सहवासे पतितस्य क्लेशं विना किमन्यत्लिरीक्ष्येत । सत्याग्रहिणा जन्मैव नेत्रयोर्मृत्तिकाक्षेपलाभाय । अधिकार्यस्मान्वञ्चयतु । वञ्चकः पर्यन्ते स्वात्मानमेव वञ्चयतीति परं सहस्रवारं किं मया नोक्तम् ॥"

इदं श्रुत्वा सोराबजीमहाशय उच्चैर्जहास । बाढं बाढं नेत्रयोर्मृत्तिकाक्षेपश्चलतु । एकस्मिन्दिने भवान् सत्याग्रहे मरणं प्राप्यास्मादृशानिर्भाग्यान् भवत्सहैवाकृष्य प्रयाति -इत्यवोचत् ॥

एतानि वचनानि लिखता 'मिस एमिली हॉबहाउस'महाशया यन्मेऽलिखत्तन्मम स्मृतिमानयन्ति यथा सत्यस्यार्थेऽद्य वा श्वो वा वधस्थाने लुप्तशिरो भवान् भवति चेन्नाश्चर्यं भवेत् । भगवान् भवतः सत्पथं प्रदर्श्य भवन्तं पायादिति ॥

सोराबजीमहाशयेन सहायं संवादोऽधिकारिणो नियामकत्वात् स्वल्पकाल एव संवृत्तः । कतिपयदिवसेष्वेवाधिकारिणा सहास्मत्संबधः सहनातीतः परिणतः । चतुर्दशदिनोपवासात्परं मम शरीरकल्पस्य यथास्थितिसंपत्ते पूर्वमेव मया शस्त्रविद्याभ्यास आरब्धः । एतदर्थेऽनेकशो गृहान्नियतस्थानं प्रति प्रायो क्रोशद्वूरं पादचारेण गम्यते स्म । अनेन मम पार्श्वशूलमुत्पद्य शयने पतितोऽभवम् । एतादृशस्थितिमापन्नेन सप्ताहस्य पर्यन्ते प्रवासशिक्षणार्थं गम्यते स्म । अत्रैव सत्याग्रहसंदर्भ आप्तः ॥

अधिकारी स्वस्याटोपस्य मितिमतिक्रम्य कर्तुमारभत । न केवलं युद्धस्य विचारसंबधिविषयेष्वपि तु क्रियान्तरेऽपि स्वयं याजमान्यं निश्चित्य तथा च निवेद्य स्वाधिकारस्य रुचिं दर्शयामास । सोराबजीमहाशयो मम पार्श्वमभिद्रुत्यागतः । तस्येदं निरङ्कुशप्रवर्तनमसह्यमासीत् । तेनोक्तं यथा—सर्वं अप्यास्ता, मा प्रति युष्मद्द्वारैवागन्तुमर्हति । वयमद्यापि शिक्षणस्य शिखरे वर्तामहे । तथापि सर्वविधा अर्थशून्या आज्ञा कुर्वन्ति । अस्मान्नपि चास्मदीयशिक्षणार्थं नियमितानां युवकानां मध्येऽनुचितभेदान् कल्पयन्ति । अस्मिन्विषये वयमधिकारिणा सह निश्चितं भवितुमिच्छामः । नो चेत् कार्यं न घटति । अस्माभिः सहास्मदीयदलस्था भारतीयविद्यार्थिनोऽन्ये

चार्यशून्यानाशां नाङ्गीकुर्वन्ति। न च क्षमापयन्त्याचार्गौरवात स्वीकृते कार्ये मतच्युतिर्मर्मवेत्रैव सहामह इति:॥

अहमधिकारिणः पार्श्वमुपेत्य मम विदितानाक्षेपांस्तस्य लक्ष्यमानैषम्। तान् लिखित्वा निवेदयेति मम लेखमलिखत्। आक्षेपकैरिदानीं नियमितस्वदलविभागस्य नायकद्वारा तेषां निवेदनं युक्तो मार्गः। नायककाले शिक्षकाणां मुखेन मम निवेदयिष्यन्तीति तान् ब्रूहीति लिखितवान्॥

अस्य मया लिखितं यथा—कोऽयमधिकारो मदीय इति नाहं जानामि। सैनिकानां दृष्ट्याहं सामान्ययोद्धास्मि किन्तु यतोऽहं स्वयमेवदलस्याध्यक्षस्ततोऽहमतधिकारी तदीयप्रतिनिधिरित्यनुमेयो भवामीति। प्रत्युक्तं मया। तस्मिन्नेवाहं मम लक्ष्यमानीतान् शोकान् प्रार्थनाश्च तथा च दलस्थानामभिप्रायानगणयित्वा दलविभागेषु नायकानां नियमनं वर्तते कारणमासीदिति च तान् पश्चादाहूय दलेन नूतननायकान् वरयितुमनुज्ञा देया किन्त्वेतद्भवतामधिकारिणोऽनुमतिं विना न भवितव्यमित्यलेखिषम्॥

इदमधिकारिणे नारोचत। दलविभागस्य नायकानां दलस्थैरेव वरणीयता सेनानियमभावस्यैव विरुद्धम्। नियमितनायकानां पश्चादाह्वानेन दलस्य बन्धः शिथिलीभविष्यतीति स प्रत्यवोचत्॥

अतो वयं सभायां मिलित्वा तत्र पश्चादागन्तव्यमिति निरधारयाम। अहं तत्रत्यानां सत्याग्रहस्य गंभीरपरिणामानवेदयम्। तथाप्यधिकारिणा निश्चितदलविभागानां नायकान् पश्चादाहूय दलस्थानामेव स्वनायकानां वरणावकाशदानाभावे दलस्था इतः परं शस्त्राभ्यासे न कुर्वन्ति समाहस्य पर्यन्ते प्रवासशिक्षणाय न यान्ति। एतत् कर्तव्यमिति निर्णयो बहुमतेन स्वीकृतोऽभूत्॥

अतोऽहमधिकारिणे मम सूचनां निराकृत्य तेन लिखितलेखेन मम किमपाशाभंगोऽभवदिति निवेद्य लेखमेकमलेखिषम्। अधिकारं कर्तुं न मे काम्यास्ति वर्तते। सेवां वर्तमानेनैव मम प्रवर्त्तेष्टास्तीति ब्रोनिमवोचम्। व्यतीतवचनामेव तस्य लक्ष्यमानैषम्। बोअरयुद्धकाले दक्षिणाफ्रिकायां भारतीयानां शुश्रूषादले यद्यपि मे न कोऽप्यधिकार आसीत्तथापि मम मुख्याधिकारिणः 'कर्नल गेल्वे'महाशयस्य मध्ये सकृदप्यतनावनस्य कारणं नासीत्। दलस्य मनो वेदितुं मामविचार्यासौ किमपि कार्यं न करोति स्मेति तमवोचम्। एतलेखेन सह पूर्वदिनमध्याय कृतनिर्णयस्य प्रतिलिपिमेकं च निक्षिप्य प्राहैषम्॥

एतेनाधिकारिण उपरि सत्परिणाम कोऽपि नाभूत्। सभा च निर्णयश्च महाविनयभंग इति तस्य प्रत्यभात्॥

ततोऽहं भारतवर्षस्योपरितनविचारस्य सचिवस्य सन्निधिमयम्। विशदीकृत्य निर्णयस्य प्रतिलिपिमेकां निक्षिप्य लेखमलेखिषम्। स चोत्तरदायया दक्षिणाफ्रिकायाः परिस्थितिर्भिन्नासीत्।

दलविभागाना नायकान् सेनानियमप्रकारेण मुख्याधिकारी नियमयेत् । नित्यमेतेषां निर्णयकाले मुख्याधिकारी स्वसंदेशस्याप्यवधास्यत इति ॥

इत परमावयोरितो बहुल पत्रव्यवहार प्रवृत्त । किन्तु ममेमा विवादप्रसक्तिं दीर्घं वर्णयितुं नेष्यते । भारतवर्षेऽस्माक प्रात्यहिकानुभवसदृशमेवैतदप्यासीदित्युक्तेऽलमिति त्रासेन कौशलेन चाधिकार्यस्मद्दले भेदमुदपादयत् । निर्णयस्याभिमतदायकेषु कतिपयेऽधिकारिणो भयेन वा तद्वाक्यमन्दा भूत्वा वा स्ववाचोभङ्ग चक्रु ॥

येऽधिकारिण समतास्ते 'नेटली' रुग्णालय जग्मु । शेषा न यास्याम इत्यूचु । अह शयने निपतित आसम् । तथाप्यस्मद्दलस्थै सह मया व्यवह्रियते स्म । उपसचिव 'श्रीरोबर्ट्स'-महाशयो मा द्रष्टुमागमनेन मम गौरवमकरोत् । इतरेऽपि कार्याय गन्तु मया प्रेरणीया इति मां निरबध्नन् । एते सर्वेऽपि मिलित्वा दलातर भवितव्यम् । 'नेटली'वैद्यशालाया ते तत्रत्यमुख्याधिकारिण केवल प्रतिवक्तव्या भवेयु । अनेना मगौरवस्य हानि सभव एव नास्ति । एतेन राज्यस्य न केवल समाधान भविष्यत्यपि तु वैद्यशालाया पर शताना परिक्षताना साहाय्यकरणोपकार स्यादिति सूचयामासु । अय बुद्धिवादो मम सहवर्तिना ममापि समीचीन इति प्रत्यभात् । अस्य फलित च पश्चादवस्थिता अपि 'नेटली'रुग्णालय जग्मु ॥

किन्त्वहमेक एव पश्चादवस्थित शयनपतितो यद्यपि तस्या दु स्थितौ वर्तमानोऽपि हसन्मुखीभवितु प्रयस्यन् स्थित ॥

एकचत्वारिंशोऽध्यायः

# गोखलेमहाशयस्यौदार्यम्

मम 'इग्लेंड 'देशे हृदयशल्यमागतमिति पूर्वमेव निवेदितम् । इत स्वल्पदिनेषु गोखलेमहाशय 'इग्लेंड'देशमागत । कॅलनबॅकमहाशयोऽपि तत्पार्श्वे नियतमेव गच्छति स्म । अस्मत्सभाषालाप प्रायेण युद्धसबधी बभूव । केॅलनबॅकमहाशय जर्मनीदेशस्य भूपट सम्यग्जानात् । स च 'युरोप'खडेऽधिक प्रयाणमकरोत् । अत एव युद्धसबधीनि स्थानानि पृथक्पृथग् भूपटे दर्शयति स्म । यदा मे पार्श्वशूल्यमागत तदानीं तत्प्रत्यह चर्चासामग्री बभूव । तदानीमप्यहमाहारविषयक-प्रयोगानचालयम् । भूचणक कदलीफल जबीर 'जीतुन 'तैल 'टमाटा'फलमपि च द्राक्षा मया भुज्यन्ते स्म । दुग्ध धान्य दल्प्रभृतीश्चाह सपूर्णमेव पर्यत्यजम् ॥

डॉ. जीवराजमेहतामहाशयो मम वैद्य आसीत् । मया दुग्धं धान्यं च भोक्तव्यमिति स निरवन्धात् । परन्त्वहं न चलित. । इयं वाक् गोखलेमहाशयस्य श्रोत्रमागात् । फलानामाहार उत्तम इति यो मे वादस्तस्याधिकं गौरवं न दीयते स्म । वैद्यो मदीयारोग्यस्य कृत उक्तं सर्वमपि गृह्णीयादित्यैच्छत् ॥

गोखलेमहाशयस्य बलात्कारे सत्यस्तरणिः सुलभा नासीत् । न करिष्य इति न वक्तव्यमिति साग्रहमुक्त एतद्विषयमालोचयितुं चतुर्विंशतिहोरावकाशं प्रार्थितवान् । तस्मिन्दिने सायं 'कॅलनबॅकमहाशयोऽहं च गृहं प्रतिनिवर्तमानौ एतद्विषये मम कर्तव्यं किमित्यचर्चयाव । अस्मिन्प्रयोगे स मत्पर आसीत् । इदं स मेने । तथापि ममारोग्यस्य कृतेऽवश्य चेदस्य प्रयोगस्य परित्याग एव युक्त इत्यस्याभिमतमासीदिति मया दृष्टम् । अतो मयैकेनैव ममान्तरात्मन आज्ञानुसारेण निर्णयोऽयं निर्धार्यासीत् ॥

इमं विचारमालोचयन्नेव सर्वां रात्रिमयापयम् । प्रयोगस्यतत्यक्षेत्तत्संबंधे ममाभिप्रायाणां सर्वेषामपि तिलतर्पणं प्रदेयमासीत् । परन्तु तेषु मे दोषः कोऽपि न दृष्टः ॥

गोखलेमहाशयस्य प्रेमनिर्बन्धस्य कियद्दूरं वश्यो भवेयम् । आरोग्यकारणवशादय प्रयोग. परिवर्तनीय इत्येव एव तदानीन्तनः प्रश्न आसीत् । पर्यन्तेऽहं प्रयोगस्योद्देशो मुख्यशो यावद्धार्मिको भवति तावत्तदनुष्टेयं नोचेन्मिश्रभावनायां वैद्यस्य बुद्धिवादो ग्राह्य इति निरचैषम् । दुग्धस्य त्यागो धार्मिकदृष्टिरेव प्रधानाभवत् । कलकत्तापत्तनस्य गोपाला गोमहिषीभ्यो दुग्धबिंदुमप्याकृष्य दोहनं कुर्वन्तीत्येषा : दुष्टविधानानि मम नेत्रयो. स्थितानीव दृश्यन्ते स्म । अपरं च मांसं यथा मनुष्यस्याहारो न भवति गोदुग्धमपि तथेति मम प्रतिभाति स्म । अतो दुग्धत्यागसंकल्पे मया दृढेन भवितव्यमिति निश्चित्य प्रातः शयनादुत्थितोऽभवम् । एतेन मम मानसं लघुतरमासीत् । गोखलेमहाशयस्य पार्श्वं गन्तु मम भीतिर्भवति स्म । परन्त्वयं मम संकल्पं क्षमत इति मे विश्वास आसीत् ॥

सायमहं कॅलनबॅकमहाशयश्च गोखलेदर्शनाय 'नॅशनल-लिबरल-क्लब'प्रति गतौ । वैद्यस्य बुद्धिवादः स्वीकार्य इति निर्धारित चेत्यमेव प्रथम. प्रश्न आसीत् ॥

मया नम्रतया तथापि निश्चयपूर्वकमुक्तं यथा—अहमेकं विचारं विनाशेयमपि मंमन्तुं सिद्धोऽस्मि । केवलमस्मिन्विषये नाहं निर्बन्धनीय इति प्रार्थये । दुग्धं दधि नवनीतं मांसं वा न स्पृशामि । एषामग्रहणान्मम मरणे संभवत्यपि मरणमेव सार्थ्यीयः प्रतिभातीति । किमयं भवतोऽन्तिमो निर्णय इति गोखले पप्रच्छ । प्रत्युक्त यथा—ममान्यो निर्णय साध्य एव न भवतीति प्रतिभाति । एतेन भवतां दु.खं भविष्यतीति ज्ञातं मया । परन्तु किं कुर्याम् । प्रार्थये भवदीयक्षमामिति ॥

किंचिद्दुःखितस्तथाप्यत्यन्तप्रेम्णा गोखलेमहाशयो भवन्निर्धारणं मे न संमतमिति मामुक्त्वा डॉ. जीवराजमहेतामहाशयमभिमुखीभूय ‘गांधि’रितो न क्लेशनीयस्तेन निर्धारितमित्यनतिक्रम्येष्टमौषधपथ्यं विधीयतामिति। वैद्यः स्वस्यासंमतिं व्यक्तीचकार। किन्त्वयं निरुपायः स्थितः। हिंगुमिश्रितो मुद्गसूपो गृह्यतामिति बुद्धिवादमदात्। संमन्य एकद्विदिनपर्यन्तं गृहीतवान्। किन्त्वनेन मम वेदना ववृधे। इत्थमिदं न युक्तमासीदिति पुनः फलाहारमारब्धवान्। वैद्यस्तावद्बाह्यचिकित्सां चालयति स्म। एतेन मम वेदना स्वल्पीयसी बभूव। किन्तु मम नियमेन तस्य हस्तो बद्ध इवासीत्॥

एतदंतरे गोखलेमहाशयो ‘ऑक्टोबर’मासे ‘लंडन’पत्तने हिमपातं सोढुमशक्तो भारतवर्षं प्रति न्यवर्तत॥

## द्विचत्वारिंशोऽध्यायः

# पार्श्वशूलस्य चिकित्सा

यतः पार्श्वशूलं न शांतं ततः स्वल्पचिंतायाः कारणमासीत्। किंत्वौषधपातेन तन्न शाम्यति। पथ्यबाह्योपचारा एवास्य चिकित्सेति मे विदितमासीत्। शाकाहारसंबंधे प्रसिद्धो डॉ. ‘एलिन्सन’महाशयश्चिकित्सयितुमाहूतः। स किलाहारसुधारणया जाड्यं शमयति स्म। तस्य परिचयो मेऽशीत्यधिकाष्टशतोत्तरैकसाहस्रे संवत्सरे आसीत्। तमहं चिकित्सां कर्तुमाह्वापयम्। स मे शरीरं सूक्ष्मतया पर्यैक्षत। मया गृहीतदुग्धनिषेधव्रतं तस्य सविस्तरमाख्यातवान्। मां धीरयित्वा मा भवान् दुग्धं गृह्णातु। भवता कतिपयदिवसपर्यन्तं मेदोमयपदार्थं नैव ग्रहीतव्यमित्येव ममाभिप्राय इति सोऽब्रवीत्। अपरं चेत्परं शुद्धकपिलापूपान् भुंक्ष्व। एतैः सह पालंगशाकमूलकपलाण्डु-बीट-हरितनेत्याद्यपक्वशाकं ग्रहीतव्यम्। नूतनफलं च विशेषतो नारंगफलानि च भोक्तव्यानि। शाकं न पाचयितव्यम्। मम चर्वितुमशक्यं चेच्चूर्णीकरणीयम्॥

दिनत्रयमिदं मयाङ्गीकृतम्। परं त्वपक्वशाकं न मे योग्यमासीत्। मम परिक्षीणशरीरं सोढुं नाशक्नोत्। अपक्वशाकग्रहणेऽहं सकंप आसम्॥

डॉ. एलिन्सनमहाशयेन पुनरुक्तं यथा प्रकोष्ठस्य सर्वान् गवाक्षान् विवृतान्कुर्वीत। चतुर्दिशं निशायामपि। मंदोष्णजले स्नातव्यम्। आतुरभागानामुपरि तैलेन संवाहनं कर्तव्यम्। पंचदश वा त्रिंशत् निमेषान् पवने परिभ्रमितव्यमिति। एताः सूचनाः सर्वा अपि मेऽरोचन्त॥

मम प्रकोष्ठस्य वृष्टिग्राहिणो गवाक्षा आसन्। 'फ्रेंच' आदर्शो गवाक्षो नाम उच्चैर्गवाक्ष। अस्य कवाटानि पुटीकर्तुं शक्यन्ते। बहिर्गन्तुमन्तरागन्तु चोपयुज्यन्ते। पूर्णतया विवृत चेद् वृष्टिरन्तरपतिष्यद्। उपरितनो व्यजनगवाक्षो विवरीतु नायाति। अतोऽहं तस्य पवनमन्तश्चलितुमवकाश दत्वा कार्यं व्यच्छिदम्। यथा वृष्टिधारा नान्त पतन्ति तथा गवाक्षानविवृतानस्थम्॥

सर्वेणैतेन यद्यपि मम शरीरस्थिति स्वल्पमुत्तमादृश्यत तथापि रोग पूर्णतया न शात। 'लेडी सिसिलिया रॅबर्ट्स' महाशया कदाचिन्मा द्रष्टुमागच्छति स्म। अस्मन्मध्ये मैत्री ववृधे। अहं दुग्धपानमङ्गीकर्तुं प्रेरणीय इति तस्या प्रबलेच्छा बभूव। पूर्णं मदस्मर्ति दृष्ट्वा दुग्धसदृशानन्यपदार्थान् परिज्ञातु प्रयेते। तदीयमित्रमेकं दुग्धचूर्णं सूचयित्वात्रदुग्धाश कोऽपि नास्ति तथापि दुग्धस्य सकलगुणविशिष्टो रासायनिक पदार्थ इति विश्वासयितुमयतत। किन्तु तद्विचारस्तस्या न विदित। लेडीसिसिलियामहाशयाया धार्मिकनियमेषु विश्वास आसीदिति मया ज्ञातम्। अतोऽहं तद्वाक्ये सपूर्णश्रद्धा न्यवेशयम्। चूर्णे जले मिलित्वा मुखे क्षिप्ते सति तस्य स्वादो दुग्धस्येव दृष्ट। शीसकस्योपरि चीटिका पठित्वाय दुग्धपरिकल्पित पदार्थ इति ज्ञातम्। इत्थ जलपानानन्तर जलप्रदातु का जातिरिति प्रश्न इवासीत्। मया चूर्णस्योपयोग परित्यक्त॥

इम विचार लेडीसिसिलियामहाशयायै निवेद्य एतदर्थे नैव चिन्तनीयमित्यहमलिखम्। सा तत्क्षणमेवागत्य स्वीयदु ख व्यक्तीचकार। तदीयमित्रे शीसकस्योपरितनलेखन नैव पठितमासीत्। एतद्विषये न चिन्तनीयमित्याशस्य महता कष्टेनानीय दत्त पदार्थं नाहमुपयोजितवानिति मम विषाद न्यवेदयम्। अपि च यतो दुग्धमज्ञात्वा पीतमासीत्ततो मे प्रमादकारिणी बुद्धिर्न प्रत्यभादिति विश्वासवचनमवोचम्॥

लेडीसिसिलियामहाशयया सह मम परिचयस्यैतत्मधुरस्मरणानि मया वक्तव्यानि। सङ्कटानामाशाभगाना च मध्ये मम समाधायकानि मित्राणि बहव स्मृतिमायान्ति। श्रद्धालव एतेषु स्मरणेषु यदीश्वर दु खमयानि कष्टकीयधानि यथा ददाति तथा सौहार्दरूपेण मिष्टानुपानानि ददात्येव पश्यन्ति॥

डॉ॰ एलिंसनमहाशयो यदा पुनरागतस्तदा नियमान् शिथिलीकृत्य भूचणक वा नवनीत वा 'जीतुन'तैलं वा भक्षितु मनापेक्षया शाकमन्नेन सह पाचयित्वा भोक्तु चानुज्ञा ददौ। यद्यप्येतानि परिवर्तनानि महामरोचन्त तथाप्येतैर्मम रोग सपूर्णमेव प्रशात इति वक्तुमशक्यम्। बहुनागरूकतया शुश्रूषाप्यपेक्ष्यते स्म। मया शयन विसृज्यागन्तु न शक्यमासीत्॥

डॉ॰ मेहतामहाशयो मा तदा द्रष्टुमागच्छति स्म। मद्वचन यदि शृणोषि तदा त्वा स्वस्थ करिष्यामीति मा ब्रवीति स्म। इत्थमेकदा श्रीरॉबर्ट्समहाशयो मा द्रष्टुमागत। मया स्वदेश प्रति निवर्तिष्यमिति तामहमुवाच। वर्तमानस्थितौ भवान् नेटली–रुग्णालय प्रति गन्तुं न शक्त।

शैत्यमिति परमितोऽप्यधिकं वर्धते। भवता भारतवर्षं प्रति गन्तव्यमेवेति दृढं ब्रवीमि। यतस्तत्रैव भवान्सम्पूर्णमेव स्वस्थीभवितुं शक्ष्यति। यद्यतोऽप्यस्मादनन्तरमपि युद्धं प्रचलेत्तदा साह्यं कर्तुं पर्याप्तोऽवकाशो लप्स्यते। अद्य यावद्भवता कृतं तदप्यगण्यमिति नाहं कदापि गणयामि॥

अहं तस्य बुद्धिवादं श्रुत्वा भारतवर्षं गन्तुं सज्जीकर्तुमारभे॥

त्रयश्चत्वारिंशोऽध्यायः

# स्वदेशं प्रतिगमनम्

कॅलनबॅकमहाशयो भारतवर्षं प्रति गमनाय मया सह 'इंग्लंडदेश'मागतः। आवामुभावेकत्रावतीर्णौ। एकदा नौकया गन्तुमावयोरिष्टमासीत्। किन्तु राज्याधिकारी 'जर्मन'जनेषु दृष्ट्या बहुजागरूकतया पश्यति स्म। अतः कॅलनबॅकमहाशयस्यानुज्ञापत्रप्राप्तिविषये आवयोः सन्देह आसीत्। तदर्थमहं यावच्छक्ति प्रयत्नमकरवम्। अनुज्ञापत्रं तस्मै दापयितव्यमिति 'रॉबर्ट्स'-महाशयस्याप्यभिप्राय आसीत्। अतोऽयं तदर्थं तन्त्रीसन्देशं राजप्रतिनिधये प्राहैषीत्। परन्तु तत्क्षणमेव लॉर्डहार्डिंजमहाशयसकाशादुत्तरमागतं यथा— एतादृक्प्रतिनकल्पतां वोढुं भारतवर्षस्य राज्याधिकारी नैव सज्जो भवतीति विषीदाम इति। अस्योत्तरस्य परिणामं वयं सर्वेऽपि जानन्तः॥

कॅलनबॅकमहाशयात् पृथग्भवितुं मम बहुदुःखकरमासीत्। तस्य तावदितोऽप्यधिकं मयाऽत्यभूदिति मम प्रत्यभात्। तस्य भारतवर्षं प्रति गमनं यदि साध्यमासीत् तदासौ तत्र भव्यतया पर्यटनजीवनं एतादृशसरलजीवनं करोति स्म। अधुना दक्षिणाफ्रिकायां स्वयं पुरा यथ पर्यगति स्म तथैव जीवनं कुर्वन् शिल्पकार्येण हस्तपूर्णं कर्म करोति॥

वयं तृतीयश्रेण्या प्रयातुं कृतसङ्कल्पा अभूम। किन्तु 'पी. ॲन्ड. ओ.'नौकासु तृतीयश्रेणीप्रयाणानुज्ञापत्रं न प्राप्यते स्म। अतो द्वितीयवर्गे गन्तव्यमासीत्॥

नौकाया नूतनकक्षेषु उत्कृष्टेष्वपि शुष्कफलं नाधिगन्तव्यमासीत्। अतो दक्षिणाफ्रिकाया आनीतं फलं मह नीत्वा गता॥

डॉ. जीवराजमहेतामहाशयो मम पार्श्वस्य 'मीडिया प्लास्टर्' इति चूर्णस्य पट्टी बद्ध्वा रामगमनपर्यन्तं नोदमोचनीयमित्यवोचत्। मया दिनद्वयस्य क्लेशं सोढं किन्तु पश्चान्न शक्तमासीत्। पट्टिमुन्मुच्य हस्तादि परिमृज्य शुद्धस्नानादिकर्मणानन्तरं शोथादिकं दूरमगमत्॥

मम न्यायवादिन उद्योगे मया नानृत कदाप्याश्रितम् । अस्मिन् कार्ये बहुलो भाग सार्वजनिकसबद्ध आसीत् । एतदर्थे मया पारमार्थिक व्ययद्रव्यमात्र गृहीतमासीत् । कदाचिन्मयैतदपि स्वहस्तदेयमासीत् । यावदह स्मरामि तावत्सर्वं मया तदानीमेव निवेदितम् । एतावत्कथनेन न्यायवादिवृत्ते सम्बद्धमावश्यक सर्वमभिहितमिति ज्ञात मया । परन्त्विनोऽप्यधिक निवेदनीयमिति मित्राण्यपेक्षन्ते । सत्यमार्गं विहाय प्रत्याख्याता सदर्भा — तेषा स्थूलमस्तु वा वर्णनम् — तादृशन्यायवादिना लाभो भवेदिति तैर्गणितमिति प्रतिभाति ॥

यदाह विद्यार्थी स्थितस्तदा न्यायवादीति चेदनृतवादीति तस्योद्योगोऽयमिति श्रुत मया । परन्तु मिथ्योक्तिभि पण वा पदवी वाधिगन्तु नासीत्प्रवृत्तिरतो ममोपरि न कोऽपि परिणाम सजात ॥

अथ मे सिद्धान्तो बहुश परीक्षणीय सवृत्त । असकृदेतन्मम विदित यत्प्रतिपक्षेण स्वसाक्षिणो मिथ्या वदितु शिक्षिता । यद्यहमस्मदीयसाक्षिणा व्यवहारिणा वा मृषा वक्तुमुत्तेजन दत्तवान् तदा व्यवहारो जयतीति मम ज्ञातमासीत् । परन्त्वह यथा वागुरायामस्या न पतेय तथा जागरूक स्थित । मम व्यवहारी कश्चिन्मामवचयदिति सशयो व्यवहारजयादनन्तर मम मनसि सजात सदर्भमेकमात्र स्मरामि । यदि मे कक्षिगारस्य व्यवहार सत्यो भवेत्तदा जयमाकाक्षन् मम हृदयान्तरे स्थित । व्यवहारे जिते एतावद्द्रव्य प्रदेयमिति शुल्कनिष्कर्षं कृत न स्मरामि । मम कक्षिगारो जयतु वा पराजितोऽस्तु वा निश्चित शुल्क निरीक्ष्यते स्म । नाधिक वा न चोन वा । मया मिथ्याव्यवहारो गृह्यते कक्षिगाराणा मिथ्यासाक्ष्य शिक्षयिष्यतीति नैव निरीक्षणीयमिति प्रत्येकनूतनव्यवहारिण पुरस्तादेव प्रबोधयामि । अस्य फलित च मम नाम गृहीत चेन्न कोऽप्यसत्यो व्यवहारो मदीयकार्यालयमागच्छति स्म । तावत्कृत । मम कक्षिगारेषु कतिपये सत्यभूतान् स्वव्यवहारान् पृथक् स्थापयित्वा मदर्थे ददाति । इतरानितरपार्श्वं गमयति स्म ॥

एको व्यवहारो गृहीतो मा कठिनपरीक्षाया लक्ष्यीचकार । ममात्युत्तम कक्षिगार कश्चिदेतन्मम पार्श्वमानिनाय । अय सकरीकृत आयव्ययसबन्धी अनेकदिनानि चलति स्म । अस्य कतिपयो भागस्तु यथान्यायस्थानाना पुरस्तात्प्रत्यक्षीकृत पर्यन्ते तमायव्ययभागो न्यायस्थानेन निर्णयायायव्ययेषु प्रवीणस्य 'पचायन'स्य वशेऽदायि । तस्य निर्णय सपूर्णमेव मम कक्षिगारस्य पक्षे स्थित । परन्तु स 'पचायन' आयव्ययविधानेऽजागरूकतया प्रमादमेव चकार । स च यद्यपि परिणामे स्वल्पस्तथापि स्वमात्रे गुरुतर आसीत् । अतोऽय व्यये लेखनीय आयेऽलिखत् । प्रतिपक्ष पचायनस्य निर्णय कारणान्तरेण प्रत्यवस्थित । अहमस्मत्कक्षिगारस्य उपन्यायवाद्यासम् । ज्येष्ठन्यायवादिन उपर्युक्तप्रमादे ज्ञाते सति सोऽस्मदीयकक्षिगारस्तत्समर्थयितुमह न बद्ध इत्यभिप्राय ददौ । न कोऽपि न्यायवादी स्वकक्षिगारस्य हितविरुद्ध निर्णयं समर्थयेतेति तस्य मतमासीत् । अह प्रमादस्यानाऽसमर्थनीयमिति मन्ये ... अह प्रमादस्वीकारोऽस्मत्कर्तव्यमित्यमन्ये ॥

परन्तु ज्येष्ठन्यायवादिनोक्तं यथा—तथा वा तं चेन्न्यायस्थानं 'पंचायत' निर्णयं संपूर्णमेव निराकर्तुं संभवो बहुलः। प्रज्ञावान्न्यायवादी स्वकक्षिगारस्य व्यवहारं तादृगपाये न स्वीकुर्यात्। आस्तामिदं तावत्। तादृशप्रतिवक्तव्यतां बोढुमहं न कदापि संमन्ये। व्यवहारः प्रथमतो विचारणां कर्तुं प्रहीयते यदस्मत्कक्षिगारस्य कियान् व्ययो भविष्यतीति वक्तुं न शक्यमिति॥

यदायं संवादः प्रवृत्तस्तदा व्यावहारिकोऽपि तत्रैव स्थितः॥

अहमपृच्छं यथा—अस्मद्व्यावहारिका वयं चैनेन संवर्तमानापायस्य सिद्धा भवितुमर्हामः। अस्माकं प्रमादासंमतेः केवलं यद्यपि सोऽन्याय्यो भवति तथापि न्यायस्थानं संमन्यत इति निश्चितं कथं जानीयात्। अपि चास्मत्सम्मत्यास्मद् व्यावहारिकः पराजित इति ब्रूमः। तेन का हानिरिति। ज्येष्ठन्यायवादिनोक्तं यथा—युक्त एव संमन्तव्यम्॥

न्यायस्थानं वा प्रतिपक्षो वा न परिहास्यतीति निश्चितं कथं नामाख्यातमित्यहमपृच्छम्॥

ज्येष्ठन्यायवादी दृढतयोवाच यथा—बाढं तर्हि भवानिमं व्यवहारं वादयति किं। भवताद्योक्तप्रकारेण वादयितुमहं न सज्जस्थितः॥

नम्रेण मया कथितं यथा—यदि भवान्न वादयेद्यदि च व्यवहारी मां तथा कर्तुमपेक्षते यदि प्रमादो न स्वीकृतस्तर्हि न मया किंचित्कर्तुमवशिष्यत इति॥

एवमुक्त्वा मया व्यवहारी दृष्टः। स तु भ्रांत इवासीत्। अस्मिन्व्यवहारे आरंभतोऽहं स्थितः। व्यवहारी मयि संपूर्णश्रद्धालुः। तेनोक्तं यथा एवं तर्हि भवान् वादं कृत्वा प्रमादं स्वीकर्तुमर्हति। नष्टं भवतु यदेतदस्मद् भागधेयम्। भगवान् धर्मं रक्षत्विति॥

अहं संतुष्टः। नान्यन्मया प्रतीक्षितं तस्मात्। ज्येष्ठो न्यायवादी पुनर्मां प्रत्यादिशत्। हठवृत्तिं मां दयालुतयापश्यत्। परन्तु मां निश्चयेनाभ्यनन्दत्।

अप्रेतनाध्याये न्यायस्थाने किं संवृत्तमिति द्रक्ष्यामः॥

पंचचत्वारिंशोऽध्यायः

## विदग्धव्यवसायः

मम बुद्धिवादस्य निर्दोषतां प्रति न मे संशय आसीत्। संदिग्धा तावन्मम योग्यता एतद्विषयसंपूर्णन्यायनां कर्तुम्। सर्वप्रधानन्यायस्थानस्य पुरस्तादेतादृशकठिनव्यवहारवादं वर्तुमनीव शंकाक्रान्तं मनः प्रत्यभात्। न्यायस्थानस्यामि मौनः कंपमानश्चोपस्थितः॥

आयव्यये प्रमाद निर्दिश्य वदन्त मामेको न्यायाधीश पप्रच्छ । यथा – भवन्त मत्ये बाधित्वा विषीदामि । व्यत्यासमधिकृत्य वाद प्रचलत्विति ॥

मम विवरणाधारभूत वस्तु पर्याप्तमासीत् । कृतज्ञोऽस्मि यन्न्यायाधिपतिरिम प्रश्नमुत्थापितवान् । आरभतो न्यायस्थानस्यावधान स्थिरीकृत्य स्थापयितुमीश्वरोऽभवम् । महद्धैर्यमालम्ब्य विस्तरेण विवरणे प्रक्रिया गृहीतवान् । न्यायस्थान मम वाद सहिष्णुतयाशृणोत् । व्यत्यास प्रमादेन सवृत्त इति न्यायाधिपतीन् निच्छिन्नसशयानकरवम् । ततस्ते कार्यबाहुल्यनिष्पन्न समस्तनिर्णय निराकर्तुमनसो नासन् ॥

प्रमादस्यागीकृतत्वादतीव वादो नावश्यक इति प्रतिपथा न्यायवादी विचिन्त्य श्रद्धया स्थित । परन्तु न्यायाधिपतय प्रमादोऽय केवलस्खलित सौकर्येण समीकर्तुं शक्यत इति निश्चस्य त प्रत्यादिशन्ति स्म । प्रतिन्यायवादी निर्णयमास्थापयितुमतीव प्रयेते । परन्तु स न्यायाधिपतिर्य पूर्व सदिग्ध स्थित स मदीयपक्ष निश्चयेनागत ॥

सोऽपृच्छद्यथा – वितर्क्यता गाधि प्रमाद नागीकृतवानिति तदा त्वया किं कृत स्यादिति ॥

अस्माभिर्नियुक्तादधिकसमर्थ सत्यवादी कुशलश्चायव्ययकर्ता तस्य सेवागीकारो दुर्लभ ॥

उक्त च न्यायाधिपतिना यथा – न्यायस्थानेऽनुमीयते व्यवहारी निजव्यवहार सम्यग्जानातीति । यदि ना कुशलेनायव्ययकर्त्रा स्खलितमेक प्रमाद विना नान्यप्रदर्शयितु शक्नोति तदा न्यायस्थान स्पष्टस्खलितकारणान्नूतनव्यवहारस्तदर्थव्ययश्च क्रियतामिति बलान्निष्कासयितु व्यवहारिणो नेच्छन्ति । वय नूतनश्रवणदिन व्यवहारस्य न दातव्य मन्यामहे । यत प्रमाद सौकर्येण समीकर्तुं शक्यते ॥

एव न्यायवादिनो दोषारोपो निष्कासित । न्यायस्थानेन निर्णय स्खलित समीकृत्य स्थिरीकृतो था प्रमाणपुरुषस्यैव प्रमाद समीकर्तुमाशस वा विस्मरामि ॥

अह सतुष्टस्तथा मम व्यवहार्यपि । ज्येष्ठन्यायवादी चानन्दित । सत्य यथास्थित विहाय व्यवहर्तुमपि शक्यमिति मनसि दृढीकृतम् ॥

याचकेन स्पर्धना यथा व्यवहारे सत्यवादित्व मूल्किान्यूनताया स्थिताया नोपशमयतीति ॥

## पञ्चचत्वारिंशोऽध्यायः

# व्यवहारिणः सहकारिणो जाताः

**धर्म्यानुष्ठाने** ट्रान्सवाल्नातालपत्तनयोरयं विशेषः । नातालपत्तने समाना धर्मसभा वर्तते । धर्मसभाध्यक्षो वादपटितस्य पदप्राप्त एव प्रतिपुरुषपदमप्यलमेतेन । ट्रान्सवालस्थले मोहमय्यामिव वादपंडितप्रतिपुरुषयोः कार्यक्षेत्रं भिन्नम् । वादपंडितस्तदा प्रतिपुरुषतया कार्यं करोतु । चरणाधिकारस्तस्य वर्तते । नाताल्नगरवादपटित सन् ट्रान्सवाल्नगरे प्रतिपुरुषपदं मयान्विष्टम् । वादपटित सन् भारतीयजनैः सह साक्षात्संपर्को न कस्य स्यात् । दक्षिणाफ्रिकायां गौराङ्गप्रति-पुरुषा मत्सकाशान्निवेदन पत्रं न गृह्णीयुः ॥

ट्रान्सवालस्थलेऽपि प्रतिपुरुषाः प्राड्विवाकेन न्यायस्थाने वादायानुज्ञाता । एकस्मिन्नवसरे जोहानिसबर्गस्थले प्राड्विवाकन्यायस्थाने वाद कुर्वाणो मम व्यवहारिणा वञ्चित इति दृष्टम् । साक्षिपेटिकायामप्युत्तराणि ददानः संपूर्णमेव खण्डित । अत कमपि वाद विनैव व्यवहारोऽपास्यतामिति प्राड्विवाकमुक्तवान् । प्रतिपक्षन्यायवादी आश्चर्यचकितोऽभूत् । प्राड्विवाक सन्तुष्टः । असत्यव्यवहारं मत्सकाशमानीतवन्त व्यवहारिणमभ्यसूयम् । तेन विज्ञातं मयासत्यव्यवहारा न स्वीक्रियन्त इति । यदाह तत्सर्वं तत् प्रत्यक्षमानीतवांस्तदा प्रमादमङ्गीचकार । ममेदं प्रतिभाति यदेष मम नानुष्यत् । प्राड्विवाकं प्रति व्यवहारमपसारयेत्युक्तवानहमिति । अस्मिन् व्यवहारे मम कार्यं सुलभतरमासीत् । मम सत्यव्रतञ्च न्यायवादिना मध्ये मम प्रसिद्धिमवर्धयत् । वर्णभेद प्राप्तोऽपि केषुचिद्व्यवहारेषु तेषां प्रीतिपात्रमप्यभूवम् ॥

अयमासीन्मम स्वभावो यन्मम मौर्ख्यं मम व्यवहारिभ्यस्तु न्यायवादिभ्यश्च नाहं कदापि न्यगूहयम् । यत्र यत्राहं मुग्धः स्थितस्तत्र तत्रैव न्यायवादिना सहायोऽप्यपेक्षित इति व्यवहार्युच्यते स्म । अथवा यद्ययं मयैव संदिग्धः स्यात्तु निश्चेत्तदा ज्येष्ठन्यायवादिनो बुद्धिवादः श्रूयतामित्यवोचम् । एतन्निष्कपटत्वं व्यवहारिणामपरिमितप्रीतिं श्रद्धां च समपादयत् । यदा यदा ज्येष्ठन्यायवादिना सह समालोचयितुमावश्यकमासीत्तदा तदा नियतशुल्कं दातुं सन्नद्धास्तिष्ठन्ते । एषा प्रीतिः श्रद्धा च मम सार्वजनिककार्येषु साहाय्यमकुर्वन् ॥

पूर्वमेव निर्दिष्टं मया यद्दक्षिणाफ्रिकाया मम व्यवहार स योगक्षेमार्थनिन्देनदुद्देशार्थमासीत् योगक्षेमार्जनमवर्जनीयो नियमः । उदारहृदयो भारतीयजनो द्रव्यार्थे कृत व्यवहारकार्यं मां मद्दत्ताहृतवान् स्वाभिमानप्रयोजनाय कारागृहप्रवेशाद् भाग्यमनुभवितुं प्रेरितः पक्षनन्दने बुद्धिवादमङ्गीचक्रुः । कर्तव्यस्य निर्दोषता विचार्य तथा न कृत परन्तु मयि श्रद्धा निहिता ॥

एतद्विषयक बह्व्य पवित्रा स्मृतयो मम हृदयमायान्ति । पर शता व्यवहारिणो लेखकसेवार्थं सुहृदो निश्चित सहकारिण्यश्च बभूवु । तेषा समागमेन जीवितं मधुरीकृतमासीत् । अन्यथा सकष्टापायभरित यत् स्थितम् ॥

सप्तचत्वारिंशोऽध्यायः

## कथं व्यवहारी रक्षितः

अत्रान्तरे वाचक 'पारसीरुस्तमजी' नामधेये परिचितो भवति । स किल एकदा मम व्यवहारी सहकारी च बभूव । अथवा प्रायेण प्रथमत सहकारी ततो व्यवहारी भवेति वचन यथार्थतर स्यात् । मयि तस्य तावती श्रद्धाभूत् यावती स गृहकृत्येष्वपि मम बुद्धिवादमनुसरति स्म । रुग्णश्चेदपि मम साहाय्यमन्वियेष । यद्यप्यावयोर्जीवनरीतयोऽभिद्यन्त तथापि मद्बुध्चिकित्सामङ्गीकर्तुं विकल्पवान्नासीत् । अथ सुहृदेकदा सकष्टे पपात । आपश स्वकीयसर्वकार्याण्यपि मह्य निवेदयति स्म । किन्त्वेकमात्र मन पूर्वक म सकाशान्न्यगूहत् । तेन मोहमयीनगरात् कलकत्ता नगराय बहूनि वस्तून्यानायितान्यभवन् । भूयो भूय स च्छलेन वस्तून्यलभत । शुल्कग्रहणशाला लेखक सह मात्संमैत्रीकत्वान कोऽपि तस्मिन् सशायमकरोत् । समर्पितद्रव्यपरिसंख्यापत्राणि तस्माद्विश्वासेन गृह्णन्ति स्म । कतिपये ज्ञात्वाप्युपेक्षा शुल्कचौर्ये कृतवन्त सु ॥

'अस्का' नाम्न गुजरातीकवे पल्वदौपम्य प्रयुक्त चेच्चौर्यं पारदर्शिगूहत इति पारसीरुस्तमजीमहाशयो नैव वर्जनीय । स मित्रमेव मा प्रति शीघ्रतरमुपाधावत् । नयनाभ्यामश्रूणि कपोलयो पतति स्म । तेनोक्त यथा—भ्रात मया त्व वञ्चितोऽसि । अस्मिन्दिने ममापवाद प्रकटित । वस्तूना छलेनानयन मया कृतम् । अह निनष्ट । कारागृह मया गन्तव्यम् । घ्वसितोऽहमस्मि । भवानेक एव मा कष्टादस्तितु समर्थ । मया त्वसकाशान्नान्यन्निगूहितम् । ईदृशानि धुल्पपारतन्त्राणि तुभ्यमुक्त्वा त्वा न क्लेशयेदितीद शुल्कचौर्यं कदापि नोक्तवान् । परन्त्विदानीं नियद्नुतप्यन इति ॥

तं शान्त कृत्वाहमवोच यथा—रक्षितु वा न रक्षितु वा भगवदायत्तम् । मा प्रवृत्य मम मार्गं त्वं जानासि । आत्मापराधस्वीकारेण त्वा रक्षितु प्रयतिष्य इति ॥

साधु पार्थी नष्टचैतन्य इवासीत् । भवत पुरस्तादपराधस्वीकार किं न पर्याप्त ॥

न मये नापराद्ध किन्तु राज्याधिकारे । यत्र मपुरस्तात्कृतोऽपराधस्वीकारस्त्वयोपयुज्येतेति सत्यादेव मया प्रयुक्तम् ॥

पारसीरुस्तमजीमहाशयव्यवहार समये कृत्वा व्यवस्थापित । यावच्चौर्यं कृतमित्यङ्गीकृत तावतो द्विगुणद्रव्य दण्ड प्रदेयोऽभवत् । व्यवहारस्य सर्वानपि विषयान् लिखित्वा पत्र समीकृत्य निजकार्यालये व्यवस्थयवथोत्तराधिकारिणा सहवाणिज्यकारिणा च स्मृतिर्जायेतेति ॥

रुस्तमजीमहाशयस्य इमे सुहृदोऽनेन चचलपश्चात्तापेन वचितेन भाव्यमिति प्रत्यादिशन् । इम प्रत्यादेश रुस्तमजीमहाशय यदा निवेदितस्तदा तेनोक्त यद्यह त्वा वचयेय तदा कामे गतिर्भविष्यतीति ॥

इति श्री गाधिमहात्मन
सत्यशोधनाख्याय मात्मकथाया
चतुर्थो भाग
समाप्त

### प्रथमोऽध्यायः

# मम प्रथमानुभवः

**गृहप्राप्तेः** पूर्वमेव फीनिक्सआश्रमान्निर्गतो जनः समागतोऽभूत् । प्राक्चिन्तितप्रकारेणाहमेव पूर्वमागतः स्याम् । परन्तु 'इंग्लैंड'देशे युद्धे सन्नद्धा मम प्रवृत्तिः सर्वमनोरथान् व्यर्थतामनयत् । 'इंग्लैंड'देशे कालानुमानं विना निरुद्धे मयि फीनिक्सस्थस्य जनस्य निवासाय स्थानान्वेषणचिन्तागता । शक्यं चेत्तैः सर्वैरप्येकत्र स्थित्वा फीनिक्सस्थले यज्जीवनं कुर्वन्ति स्म तदेवात्रापि कुर्युरिति मयापेक्षितम् । मया न कोऽप्याश्रमो ज्ञातो यत्र तान्प्रेषयितुं शक्यं स्यात् । अतस्तन्त्रीद्वारा तेभ्यो न्यवेदय 'अेन्ड्रुस'महाशयः द्रष्टव्यः तदुक्तप्रकारेण क्रियतामिति ॥

एव ते प्रथमतः कांगडीगुरुकुले स्थापिताः । तत्र हि स्वामीश्रद्धानन्दमहाशयः स्वपुत्रेष्विव तेष्वाचरत् । ततः पश्चाच्छान्तिनिकेतनाश्रमे स्थापिताः । यत्र कविवरैस्तरे लोकाश्च तान्निज-प्रीतिमग्नान् चक्रुः । एषु स्थलेष्वनुभवस्तान्मां च सुस्थितान् चक्रुः ॥

'अेन्ड्रुस'महाशयस्य यथाहमवादिषं व्यक्तित्रयं नाम कविः श्रद्धानन्दः प्रधानोपाध्यायः सुशीलरुद्रश्च । दक्षिणाफ्रिकादेशे यदा वयं स्थितास्तदा तानविकृत्य भाषणेन वयमायस्ताः । तथा च दक्षिणाफ्रिकायाः सद्वृत्तानां स्मृतिः 'अेन्ड्रुस'महाशयस्य व्यक्तित्रयवृत्तान्तो रात्रिंदिवं भाष्यमाणोऽतीव स्पष्टमधुरः प्रतिभाति । 'अेन्ड्रुस' महाशयः फीनिक्सजनस्य सुशीलरुद्रसम्पर्कं कृतवान् । प्रधानाध्यापकस्य रुद्रस्याश्रमो नासीत् । किंतु तस्यैकं गृहमासीद्यत्र फीनिक्साश्रमजनकुटुम्बानि स्थापितानि । तेषामागमनादेवास्मिन्नेव दिने तदीयो जनः एतांस्तथा सुखिनान् चकार यथा ते फीनिक्सस्थलपरित्यागं नास्मरन् ॥

यदाहं मोहमय्यामवतीर्णस्तदाज्ञासिषं यत् फीनिक्सजनः शान्तिनिकेतनमागत इति । तस्माद् गोखलेमहाशयं दृष्ट्वा तानवलोकितुमुत्सुकोऽभवम् । मोहमय्यां मम स्वागतीकरणे स्वल्पसत्याग्रहस्यावकाशं ददौ ॥

'जहांगीर पेटिट' स्थले मम गौरवार्थं कृतसभायामहं गुजरातीभाषया वक्तुं नाहं धैर्यमास्थितः । उज्ज्वलेनोत्तिशिष्टराजमन्दिरप्रातःपरिवेष्टकेष्वागतजनसमक्षताणां मध्ये कृतजीवनोऽहं ग्रामीणमिवात्मानममंसि । प्राकारशिरोवेष्टनोत्तरीयोपेक्षयाधिकतरागरिक इव प्रेक्ष्यमाणोऽपि तैरप्रमाद-स्याडम्बरतेनो विशेषेणाचेतन इवासम् । तथापि कथमप्यहं निर्गतः फिरोजशाहामहाशयस्य रक्षामण्डपे ॥

आसीदन्या गुजरातीव्यापृतिरेका। स्वागतं विना गन्तुं गुजरातीजनो न माममुञ्चत्। प्रत्यादिष्टमेतत् स्वागतं 'उत्तमलाल त्रिवेदि'महाशयेन । पूर्वमेव कार्यानुक्रमो मया ज्ञातः । जिन्नामहाशयः उपस्थितः सभाध्यक्षो वा प्रधानभाषणकृद्वा न जाने। स आङ्ग्लभाषायां संक्षिप्तभाषणं चकार। यावदहं स्मरामि तावद्भूत्सर्वमाङ्ग्लभाषायां भाषणम्। मम वारे प्राप्ते गुजरातीभाषायामेव मम धन्यवादपुरःसरं गुजरातीहिन्दुस्तानीभाषयोः पक्षपातमुक्त्वा गुजरातीसभायामाङ्ग्लभाषा-प्रयोगस्यासम्मतिख्यापनं कृत्वा स्थितः । दीर्घप्रवासानन्तरं निवृत्यानुभवशाली प्रतिष्ठापिताचाराणां विरोधेन वर्तत इत्येतदसभ्यमिति प्रतिभाति। गुजरातीभाषया प्रतिवचनानन्तरं न कोऽपि ममासम्मति-ख्यापनमन्यथा भावयत्। असम्मतिख्यापनस्य सर्वे समाहिता आसन् ॥

सभायां मम धैर्यमागतम् यथा मम भिन्नभिन्नाभिप्रायान् मम देशजनस्य पुरस्तात् स्थापयितुम्। प्राथमिकानुभवपूर्णायां मोहमय्यां स्वल्पकालं स्थित्वाहं पुण्यपत्तनं (पूनापत्तन) गतः । यत्र गोखले महाशय आव्हानमदात् ॥

## द्वितीयोऽध्यायः

# पुण्यपत्तने गोखलेमहाशयेन सहवर्तनम्

मोहमय्याः प्रतिक्षणमात्र एव गोखलेमहाशयो मां समदिशद्यथा राज्याधिपतिर्मां द्रष्टुमिच्छति । पुण्यपत्तनं प्रति गमनात्पूर्वमेव द्रष्टुमुचितमिति । तदनुसारेण गत्वा तद्दर्शनमग्रहीषम्। कुशलवार्ताविचारानन्तरं तेनोक्तं यथा भवन्तमेकं विषयमेव पृच्छामि । यद्राज्यव्यवहारे यत्किञ्चित् भवान्कर्तुमिच्छति तदागत्य मां द्रष्टुमर्हतीति ॥

मया भारतसेवासंघे प्रवेष्टव्यं इति गोखलेमहाशयस्य तीव्रेच्छासीत्। ममापि तथैवासीत्। परन्तु मम मतस्य च ध्येयानां कार्यानुष्ठानशैलेश्च तदुभयोः पार्थक्यस्य विद्यमानत्वात् संघप्रवेशो नोचित इति सदस्यानां प्रत्ययात्। स्वकीयनीतिनियमानां विषये यद्यहं निश्चितमनास्तेषां नीतिनियमान् सोढुमहं सन्नद्धस्थित इति गोखलेमहाशयो व्यश्वसत्॥

किन्त्वितरेषाममिमतस्य योग्यं मूल्यं प्रदातुं यूयं सिद्धा इति मतस्य सदस्यानां न विदितम्। ते किल नीतिनियमानां विषये हठवादिनो भवन्ति। ते भवन्तं स्वीकरिष्यन्तीत्याशा मम विद्यते। कदाचित्तथा न कुर्वन्ति चेत्तेषां युष्मासु गौरवं आदरो वा नास्तीत्येकं क्षणमपि मा मन्यताम्। युष्मासु तैर्निर्दिष्टगौरवस्य पात्रं न भवेदिति ते भवन्तं प्रवेशाय विरुन्धन्ते। परन्तु ते भवन्तं प्रवेशयितुमेव। वयं तावद्भवन्तं सदस्यं इत्येव मन्यामहे इति गोखलेमहाशयोऽब्रवीत्॥

अहं गोखलेमहाशयस्य ममोद्देशान् न्यवेदयम्। मां सदस्यत्वेन परिगृह्णातु वा न वा मम फीनिक्सकुटुम्बेन गुजरातदेशे क्वचिदाश्रमं परिकल्प्य निवस्यामित्याशा ममासीत्। यतोऽहं गुजरातीदेशस्थो गुजरातसेवाकरणाद्देशसेवाकरणमित्येव एव मम साधुमार्गं इत्यवेदिषम्। गोखलेमहाशयायायमभिप्रायोऽरोचत॥

उक्तं च तेन यथा—अवश्यमेव भवता तथा कर्तव्यम्। सदस्यैः सह युष्माकमालापस्य फलं यद्वा तद्वा भवतु। आश्रमस्य व्ययद्रव्यं ममकोशादेव प्रदीयताम्। आश्रमो मदीय इत्येव भावयामीति॥

मम हृदयमानन्दभरितोऽभूत्। द्रव्यसंग्रहपरिश्रमोऽपास्तः। अहमेकं एवास्मिन् कर्मणि प्रवर्तितुमावश्यकता नास्ति। यदा यदाहं कष्टे पतितस्तदा तदा कष्टपरिहारकर्ता एको मिलितः। सर्वमेतत् हर्षदायकमासीत्॥

सर्वतोऽस्मात् मम मनः स्थिरो भारोऽवतीर्णः। द्वितीयो डॉ. देव आहूतः। संघस्यायव्ययपुस्तकेषु मम नाम्नैकं खातापुटं निवेश्याश्रमस्य सार्वजनिककार्यस्य च व्ययार्थं मयापेक्षितद्रव्यदानमभ्याइसम्॥

अहं शान्तिनिकेतनं गन्तुं सज्जीकृतवान्। प्रस्थानात्पूर्वं गोखलेमहाशयः कतिपयमित्राणि वृत्वा वृत्वा वृत्तमेकं पर्यकल्पयत्। मनोज्ञाहारपदार्थाः फलानि बीजानि चानायितानि। प्रकोष्ठचतुष्पदद्दूरे वृत्तो मिलितः। तत्र परित्यज्य वृत्ते भागं वोढुं न शक्यमासीत्। मम निर्विष्टप्रेम नैराश्यो नागतः। परन्तु मूर्छां गत इति पश्चाद्बोधव्य आसीत्। इदं प्रयत्नेन तथा न मूर्छितः। पुनर्धैर्यं प्राप। वृत्तश्चाल्पनीय इति वाचं प्रेरयत्॥

अथ कूटं नवस्यातिथिगृहस्याभिमुखे स्थितस्यानावृतप्रदेशे कतिपयसैरणी मिलिता

भूचणकं खर्जूरं तत्कालभ्यफलानि च सेवमानः परस्परं मनोगतं सर्वं वदन् कथालापान् कुर्वाणश्च कालातिवाहनं करोति । तदर्थमेव परिकल्पितोऽयम् ॥

परन्तु मूर्च्छापतनं मम जीवने सामान्यविषयो न परिणतः ॥

## तृतीयोऽध्यायः

# तत् किं भर्त्सनम्

अहं मोहमयीतो राजकोटं पोरबन्दरं च गतः । तत्र मया हि मम भ्रातृजायेतरबन्धश्च द्रष्टव्या आसन् ॥

दक्षिणाफ्रिकायां सत्याग्रहयुद्धकालेऽहं मम वेषं यथाशक्यं नियमकर्मकराणां वेषवत्सारं कल्पितवान् । 'इङ्लैंड' देशेऽप्ययमेव वेषो धार्यते स्म । मोहमय्यां नौकावतरणकाले धारणाय मन्निकटे 'काठियावाडी' वेषः स्थितः । एवं हस्ताङ्गिकैका धोत्रमेकं दीर्घाङ्गिकापि चैका श्वेतं शिरोवेष्टनम् । सर्वमेतद्धि हिन्दुस्थाने यन्त्रनिर्मितकर्पटनिष्पन्नमासीत् । परन्त्वहं तृतीयश्रेण्या प्रयाणं कुर्वाण इति दीर्घाङ्गिका शिरोवेष्टनं भार इति विमुच्य 'काश्मीरीटोपी'मङ्गीकृतम् । एवंविधवेषधारकं द्रष्टृणां दीनोऽयमिति गणनायां नैव संशयोऽभूत् ॥

तदा ग्रन्थिज्वरे–( प्लेग ) प्रसृते तृतीयश्रेणीप्रयाणिकान् वैद्याः परीक्षन्ते स्म । मम स्वल्पज्वर आसीत् । मम शरीरस्योष्णतां दृष्ट्वा वैद्यो राजकोटे वैद्याधिकारी द्रष्टव्य इत्युक्त्वा मम नामधेयमलिखत् ॥

अहं वढवाणद्वारा प्रयाणं करोमीति वृत्तान्तस्तेनापि प्रेषित इति प्रतिभाति । यतस्तत्रत्यप्रसिद्ध प्रजासेवकः सौचिको मोतीलालमहाशयो लोहशकटीस्थानवेदिकायां मां दृष्ट्वा वीरमगामे शुल्कग्राहस्य विचारमेतेन कारणेन प्रयाणिकैरनुभूयमानसंकटानि च मह्यं न्यवेदयत् । मम ज्वरेण ग्रस्तत्वाद् भाषितुं नैवेच्छासीत् । अतः संक्षिप्तमुत्तरं दत्त्वा तं प्रसङ्गं समापयितुं मया प्रयतितम् । एतदुत्तरं एवंविधप्रश्नरूपमासीत् । यूयं कारागृहं प्रवेष्टुं सज्जास्थिता न वेति । तेन च द्रुततया पूर्णमुत्तरं दत्तं यथा यदि भवानस्मत्पुरोगमः स्यात्तदा वयं कारागृहमवश्यमेव गमिष्यामः । यतो वयं 'काठियावाडी' जनास्ततो भवदुपरि प्राथमिकोऽधिकारोऽस्मदीय एव । भवतामत्र प्रयाणच्छेदं कर्तुं न पारयामहे । परन्तु भवता पुनरागमनेऽत्र स्थास्यतीति वाग्दानमिच्छामः । अस्मद्युवकानां कार्यमुत्साहं च दृष्ट्वा सन्तुष्टो भविष्यथ । भवतामस्माह्वानमेव प्रतीक्ष्यते । विलम्बं विनागत्य सन्निद्ध्याम इति विश्वासमनु कुरुध्वमिति ॥

मोतीलालमहाशयोऽद्भुतमना भाति । तस्य सहकारिणामग्रणीः स्तुतिपात्रं चा– स्तीत्यस्माकं मतम् । स्वार्थे विषद्यते इति चेद्दिनमध्ये द्वौ घटौ पूर्वमपि

न्मासे सौख्येन पञ्चदशरूप्यकाणि संपादयति । तेनापेक्षितं च तावदेव । अनतिरिक्तकाले सर्वेऽपि सार्वजनिककर्मसेवायां विनियुङ्क्ते । शिक्षितपाश्चात्यजनानां सर्वेषां पुरोगामी स्थित्वास्मानतिक्रामतीति ॥

ततो मोतीलालमहाशयस्य मम च गाढपरिचयो यदाभूत्तदास्य स्तुतावतिशयोक्तिः कापि नासीदिति ज्ञातम् । स यावन्महाश्रमस्य स्थापनानन्तरं प्रतिमासं कतिपयदिनानि तत्र नीत्वा तत्र बाल-कानां सीवनकार्यं शिक्षयित्वाश्रमस्य कार्येषु कतिपयान् स्वयं सीव्यति स्म । वीरमगामनगरस्य विषये तत्र प्रयाणिकैस्तदनुभूयमानानि कष्टानि च प्रत्यहं मम निवेदयति स्म । यातना नितरां दृष्ट्वा सोढुमेवास्य केवलमसाध्यमासीत् । आकस्मिकज्वरेण प्रथमयौवने गृहीत्वा चलितम् । एतदनन्तर-मनाथितानां वढवाणजनानां जीवनं नष्टकल्पमासीत् ॥

राजकोटं प्राप्य परेऽहनि प्रातःकाल एवाहं तत्रत्यं वैद्याधिकारिणमपश्यम् । अथ वैद्यो मम परीक्षणस्योपरि क्रुद्धोऽभवत् । एतदनास्वस्थमासीत् । यतः परीक्षणं स्वकर्तव्यमकरोत् । नान्यत् । कोऽहमित्येतत्तस्य न विदितम् । कदाचिद्विदितवानपि तस्मिन् रीत्यन्तरेण न वर्तितुमर्हः । वैद्याधिकारी मां स्वपार्श्वं नागच्छति तथा कृत्वा मर्मस्पर्शेन परीक्षकं प्रेरयति स्म ॥

एतादृशसन्दर्भेषु तृतीयश्रेणीप्रयाणिकानां परीक्षणमारोग्यरक्षकैः कष्टप्रदमासीत् । महापुरुषा इच्छापूर्वकं तृतीयश्रेण्या प्रयान्ति चेत्किंचिज्जनानामन्यत्र गत्वा नियमनिवर्तनानां सर्वेषामपि स्वयं मनःपूर्वकमेव वशीभूय तैः स्थातव्यम् । अपि चाधिकारिभिर्विषयेऽस्मिन् निष्पक्ष-पातिभिर्भवितव्यम् । ममानुभवं वक्ष्यामि । अधिकारिणस्तृतीयश्रेणीप्रयाणिकान् स्वयमिव तेऽपि मनुष्या इत्यगणयित्वा मेषवत्तान् पश्यन्ति । तैः सह तिरस्कारेण भाषन्ते । तेषामुत्तरेभ्यो न श्रोत्र-मर्पयन्ति । तृतीयवर्गप्रयाणिकः भृत्यवदधिकारिण आज्ञा निर्वाहयेत् । अधिकारी तं ताडयेत् । तस्माद्द्रव्यमपहरेत् । यथाशक्ति क्लेशयित्वा तस्य प्रयाणपत्रं दद्यात् । ततश्च तस्य लोहमार्गशकटीप्रयाणमवरोधयेत । एतत्सर्वं मया मम नेत्राभ्यामेव दृष्टम् । विद्वांसो धनिकाश्च कतिपये निश्चित्य नवप्रदमयनीयं तृतीयश्रेण्या प्रयाणं कृत्वा दरिद्राणामसुविधाः सर्वाणि निराकृत्य परिहार्यं सकष्टानामन्यायस्थानानां नियमस्य च शिरोऽवनमयित्वा तानि निर्मूलयितुं यावत्पर्यन्तं विघ्नं तावत्कापि सुधारणा न साध्या भवति ॥

अहं काठियावाडदेशे यत्र कुत्रापि गतो वीरमगामनगरस्य शुल्कग्रहणस्य विचारे जनस्य दुःखापनयनमश्रृणवम् । अतोऽहं लॉर्डविलिंग्डन्महाशयसूचनामनादृत्य प्रवर्तितुं तत्क्षणमेव निश्च-यम् । एतद्विषयसम्बद्धप्रासर्वपत्राणि संगृह्य तु बम्बईशासनस्यागारेऽस्मिन्विषये प्राय मेहनती-राज्येन पत्रव्यवहारं कृतवान् । लॉर्डविलिंग्डनस्य मतपरिदर्शिनं दृष्ट्वा राज्यकक्ष च विशेषितवान् । अस्मिन्विषये निजसहानुभूतिं व्यक्तं चकार । परन्तु अन्तद दिल्लीराज्यस्योपरि स्थापितवान् । कार्यदर्शिनोक्तं यथा—अस्मदीयहस्तगते स्थिते चेत्कृत्यमस्ति पूर्वमेवास्माभिर्निरस्यत । भवन्तो भारतराज्यस्य पुरस्तात् गन्तव्यमिति ॥

अह भारतराज्यस्य पत्रमलेखिषम्। परं तेन पत्रमागतमिति निर्णयमुत्तरं न लब्धम्। अह लॉर्डचेम्सफर्डराज्यप्रतिनिधिं यदा दृष्टवान्तदैवैतत्संकट परिहृतमभूत्। अहमेतत्सम्बन्धिविषयान् सर्वानस्मै न्यवेदयम्। तदाश्चर्यभरितोऽभूत्। तस्य विरमगामनगरविषय एव न विदित ॥

मम निवेदन सह तेन कृत्वा वीरमगामनगरस्य सम्बद्धपत्राणि सर्वाण्यपि ध्वनियन्त्रद्वारानाय्यन्त। अधिकारवर्गस्या किमपि समाधान वक्तुसमर्थश्चेच्छुल्कघट्ट निष्कास्यत इति वाचं ददौ। तद्दर्शनानंतर कतिपयदिवसाभ्यंतरे वीरमगामनगरशुल्कघट्टो निष्कासित इति वृत्तान्त वृत्तपत्रेष्वपठम् ॥

एषा घटना हिंदुस्थाने सत्याग्रहस्योदय इत्यहमगणयम्। यतो यदाह मोहमयीराज्याध्यक्ष द्रष्टु गतस्तदा कार्यदर्शी बगसारे (काठीयावाडदेशे तथा ग्राम) दत्तभाषण सत्याग्रहविषये मयोक्तमाकर्ण्य तथाविधभाषण न हि मेऽरोचतेत्यब्रवीत् ॥

पृष्ट च तेन यथा—अयं भयोत्पाद किम्। प्रबलराज्य भर्त्सनाना शिरो न नमयतीति किं भवान् मन्यते—इति ॥

प्रत्युक्त मया यथा—एष भयोत्पादो न हि। एतद् प्रजाशिक्षणम्। निजसंकटानि दूरीकर्तुं न्याय्यता सर्वमिव जनस्य निवेदयितु मादृशाना धर्म। प्रजास्वातंत्र्यमर्जनीयमिति इच्छज्जनाग तत्स्वातन्त्र्यसाधनाय सन्मार्गानुपायाश्च जानीयात्। सामान्यत एषूपायेषु पशुबलमेवातिमोपाय। सत्याग्रहस्तावच्छुद्धाहिंसात्मक उपाय। तत्प्रयोग तस्य मर्यादाश्च जनस्य विशदीकर्तुं मम कर्तव्यमित्यह मन्ये। 'ब्रिटिश'राज्य प्रबलराज्यमित्यत्र न संदेह किंतु सत्याग्रह समस्तसंकटाना दिव्यौषधमिति न मे संदेह इति ॥

बुद्धिमान् कार्यदर्शी शिरश्चालयित्वा ससंशय सूचयन् द्रक्ष्याम इत्युवाच ॥

चतुर्थोऽध्यायः

# शांतिनिकेतनम्

अह राजकोटाच्छांतिनिकेतन गत। तत्रत्या शिक्षका विद्यार्थिनश्च ममोपरि वात्सल्यवृष्टिं पातयामासु। अस्मिन्स्वागतसरलता कलाकौशल्य प्रेम च सम्यगेकत्रस्थितानि। अत्रैवाह प्रथमत काकासाहेबकालेल्करमहाशय दृष्टवान् ॥

कालेल्करमहाशय 'काकासाहेब' इति कस्मादाहूयन्ति स्मेति तदानीं मम न विदितमासीत्। 'इंग्लंड'देशे यदाह स्थितस्तदैव केशवरावदेशपांडेमहाशयोऽप्यासीत्। तेन मम चागाधमैत्र्यासीत्। एष बडोदरसंस्थाने गंगानाथविद्यालय यदा चालयति स्म तदा गृहस्य वातावरण

कल्पयितुं शिक्षकाणां बधुत्वनामानि दद्यामिति मम पश्चाद्विदितमासीत्। तत्रैव शिक्षकस्य श्रीकालेलकरमहाशयस्य 'काका' (पितृव्य) इति फडकेमहाशयस्य (मातुलस्य) 'मामा' इत्यपि च हरिहरशर्मण (भ्रातु) 'अण्णा' इति च नामधेयानि रूढिमागतानि । इतरे चे दशान्येव नामान्यलभन्त । आनन्दानन्दस्वामी 'काका'महाशयस्य मित्रम् । पटवर्धनमहाशयो 'मामा'महाशयस्य सुहृत्त्वेन तदनन्तरमेत कुटुम्ब प्रविष्ट । एते सर्वेऽपि कालक्रमेण मदीयसहकार्यकारिणोऽभवन् । श्रीदेशपाडेमहाशय 'साहेब' इत्याहूयते स्म । विधात्रो यदा व्ययम त्तदैतत्कुटुब च निवृत्तम् । परन्त्वेते निजा यामिकमन्त्रं च निजरूढनामानि वा नात्यजन् ॥

'काकासाहेब' अन्यासां सस्थानामनुभव लब्धु प्रस्थित । यदाह शांतिनिकेतन गतस्तदा स तत्रासीत्। तस्यैव भ्रातृवर्गस्य चिंतामणिशास्त्रिणस्तत्रासन्। उभावपि तत्र सस्कृत शिक्षणे साहाय्यमकुरुताम्। शांतिनिकेतने फीनिक्सकुटुम्बस्य प्रत्येक वसतिर्दत्ताभवत्। 'मगनलाल-गाधि' महाशयोऽस्य कुटुबस्य मुख्यस्योऽभवत्। फीनिक्साश्रमस्य सकलनियमान् स्वल्पमपि स्खलित विनापि निर्वाहयति स्म। सोऽय निजप्रेम ज्ञानमभिनिवेश एतैर्निजसौरभ शांतिनिकेतने सर्वत्र प्रसारितवानित्यहमपश्यम् ॥

'ॲन्ड्रूज' महाशय तत्रासीत्। तत्रैव 'पियर्सन' अपि। अस्माक गाढपरिचय गताना बगशिक्षकाणां मध्ये 'जगदानदबाबु नेपालबाबु संतोषबाबु क्षितिमोहनबाबु नगेनबाबु शरदबाबु' अपि च 'कलिबाबु' सहस्थिता ॥

मम पद्धतिमनुसृत्याह तत्क्षणमेव शिक्षकैर्बालैश्च मिलित्वा स्वावलबनस्य विचार चर्चितवान्। शिक्षका बालकाश्च वेतनग्राहिण पाचक त्यक्त्वा निजाहार स्वयमेव साधयति चेत्तद्बालकाना देहारोग्यदृष्ट्याध्यामिकदृष्ट्या चाहारनियमसाधन शिक्षकाणां शक्य भविष्यति। एतदेव बालकाना स्वावलबनस्य वस्तुपाठो भविष्यतीति शिक्षकाणामहमवबोधयम्। तेषा कतिचिद स्मदादिसूचनाया समतिं ददु । बालकाश्च नान्यदर्थेऽपि स्वाभाविककुतूहलेन सूचनामिमामादरेण स्वीचक्रु । एवमस्माभि पाकप्रयोग समारब्ध । अह कवेरभिप्राय पृष्टवान्। स च शिक्षकाणां समतौ मत्त कोऽपि प्रत्यूहो नास्तीत्यवोचत्। बालकाना स्वराज्यसाधनबीजमस्मिन्प्रयत्ने स्थित-मित्यब्रवीत् ॥

'पियर्सन' अस्य समारभस्य विजयार्थे स्वदेहं वर्षयितुं प्रवृत्त । विकरणशुद्धयायासक्तोऽभूत्। शाकच्छेदाय कृत मेळन धान्यप्रक्षालनायान्यत्। एव रीत्या मेळनानि संवृत्तानि । नगीनबाबु महाशय इतरे च पाकशालां तत्पार्श्वस्थल च निर्मल स्थापयितु भारमूढवत । स्वनिग्रहस्तौरव कार्यकरण वीक्ष्य मतुष्टोऽभवम् ॥

किन्तु पचविंशत्युत्तरशताना बालकाना तदीयशिक्षकाणा च देहश्रमपूर्ण कार्य मन्यथा जटमिव सप्रविष्ट भवतीति निरीक्षितु शक्यते किम् । एतद्विषयिणी चर्चा प्रत्यह भवति स्म ।

कतिचिज्जना शीघ्रमेवायासचिह्नानि प्रदर्शयितुं प्रवृत्ता । किन्तु पियर्सनमहाशय आयासग्राही पुरुषो न । सर्वदापि मन्दहासेन पाठशालाया आवरणकमपि कार्यं कुर्वाण एव स्थित । महन्महद्भाण्डप्रक्षालनभार स वहति स्म । एतत्कार्यकर्तृभिर्जनैरायासपरिहाराय बालकानामन्य मेऽनं तस्य पुरस्तात् 'सितार'वाद्य ध्वनयति स्म । सर्वेऽपि समरीत्योत्साहेन श्रद्धया च कार्यं कर्तुमारभन्त । शातिनिकेतनं कार्यशीलतया मधुकोशेनेव झकारं करोति स्म ॥

ईदृक्परिवर्तनानि यदा प्रारभन्ते तदा विवृत्ता प्रयान्ति । पाकशालाकार्यकारिण स्वयमेव सर्वं निर्णयन्ति स्म । अपि च पाकोऽपि साधारण आसीत् ॥ उपस्कराादिकं नोपयुज्यते स्म । शालिधान्यं मुद्गशाकं गोधूमपिष्टं चैकदा बाह्यचुल्लिकाया पाचयन्ति स्म । शातिनिकेतनस्य बालका अपि बगपाकशालायामेतत्सुधारणमेवारब्धुमुद्दिश्य नूतनपाकशालामकल्पयन् । एकद्विशिक्षका कतिपयविद्यार्थिनश्चैतच्चालयन्ति स्म ॥

किन्तु स्वल्पकालानन्तरमिमा नूतनपद्धतिं व्यरमयन् । स्वल्पकालमेतत्पाकप्रयोगेन सा प्रसिद्धसंस्थानेन किंचिन्नष्टमन्वभूदिति मेऽभिप्राय । अस्माज्ज्ञातानुभवेनोपाध्यायाना लाभदायकेन भवितव्यम् ॥

अह शातिनिकेतने कतिचिद्दिनानि स्थातुमना आसम् । किन्तु दैवसंकल्पोऽन्यथाभवत् । एकसप्ताहाभ्यन्तरे पुण्यपत्तनाद् गोखलेमहाशयस्य मरणवार्ता तन्त्रीद्वारा प्राप्ता । शातिनिकेतनं शोकमग्नमासीत् । तत्रत्या सर्वेऽपि मा समाधातुमागता । देशेनानुभूयमानं नष्टं प्रति दु खसूचनायाश्रमस्य देवालये सभा मिलिता । सभाकार्यं गभीरतया सवृत्तम् । तस्मिन्नेव दिनेऽहं भार्यया मगनलालमहाशयेन च सह पुण्यपत्तन प्रति प्रस्थित । अवशिष्टा सर्वे शातिनिकेतने स्थिता ॥

ॲन्ड्रुजमहाशय मया सह बर्दवानपर्यन्तमागत । तेनाह पृष्टो यथा भारतदेशे सत्याग्रहाचरणकाल आगमिष्यति किम् । आगमिष्यति चेत् कदेति किं भवाञ्जानातीति ॥

प्रत्युक्त मया यथा—वक्तुमिदं कष्टम् । एकवर्षपर्यन्तं मया न किंचित्कर्तव्यम् । यतोऽनुभवसंपादनायास्मिन्देशे मया सचरितव्यम् । अस्मिन्काले सार्वजनिकविचारानधिकृत्य ममाभिप्राया न प्रकाशनीया इति गोखलेमहाशयेन पृष्टस्तथेति वाग्दानं कृतवानस्मि । एतद्वर्षान्तेऽपि भाषितुं ममाभिप्रायप्रकटीकर्तुं च नातुरोऽस्मि । तस्मान्मन्ये इत पचवर्षाणि सत्याग्रहाचरणस्य सदर्भो न भविष्यतीति ॥

'हिन्दुस्वराज' इति पुस्तके लक्ष्यमाणा मम कतिपयाभिप्रायान् दृष्ट्वा एकवर्षपर्यन्तं भारत वर्षे भ्रमत स्थिप्यन्तर भवदभिप्राया स्वयमेव सम्यग्भविष्यन्तीति वदति स्मेत्येतदस्मिन् सदर्भे निवेदयितुमर्हम् ॥

पंचमोऽध्यायः

# तृतीयश्रेणीप्रयाणिकानां संकटानि

प्रयाणानुज्ञापत्रिकां नेतुमपि तृतीयश्रेणीप्रयाणिकानां समभवन्संकटानि वयं बर्दवाननगरे स्वतोऽन्वभूम। तृतीयश्रेणीपत्रिकामभिपच्छीत्र नैव दत्ता इत्यूचुरस्माकम्। अहमग्नियानविरामस्थानाधिकारिणं गतः। कोऽपि दयालुस्तस्य स्थानं प्रादर्शयत्। तत्पार्श्वं गत्वास्मत्संकटे प्रोक्ते सोऽपि तदेव प्रत्युत्तरं ददौ। प्रयाणानुज्ञापत्रिकाप्रदानगवाक्षे विवृतेऽहं प्रयाणानुज्ञापत्रिकां नेतुं गतः। परन्तु तद्ग्रहणं सुकरं नासीत्। तत्र पशुबलं विना न किंचिदासीत्। इतरानवक्षिप्य पुरः पुरोऽतिरभसेन गच्छन्तो जना मां पश्चाद्विक्षिपन्त आगताः। अतः प्रयतमानो मिलितेषु प्रयाणानुज्ञापत्रिकां ग्रहीतुं प्रायोऽष्टमेवान्तिमोऽभवम्॥

अग्नियानमागतम्। तदन्तःप्रवेशोऽप्यत्यन्तकष्टमासीत्। शकटीमारूढानामारोढुं प्रयतमानानां च परस्परनिन्दनं रभसेन क्षेपणं चलन्ति स्म। वयं वेदिकायामितस्ततः प्रधाविताः। किन्तु प्रतिशकटीद्वारेऽप्ययं नात्यवकाशोऽत्र नास्त्यवकाश इत्येव प्रत्युक्तम्। अहमग्नियानरक्षकस्य पार्श्वं गतः। यत्र शक्यं तत्र गत्वोपविशत। नोचेदन्यस्मिन् शकटे गन्तव्यमित्युवाच। किन्तु मम त्वयं कार्यमस्तीति नम्रभावेनावोचम्। इदं श्रोतुं नासीदवसरः। अहं दिग्भ्रान्तोऽभवम्। यत्र शक्यं तत्र गत्वोपवेष्टव्यमिति मगनलालमहाशयमुक्त्वाहं मम भार्यया सह मध्यमकक्षाशकटे निषण्णः। अस्मानुपविष्टान् अग्नियानरक्षको ददर्श। 'आसनसोल'शकटीस्थानेऽधिकभाटकं ग्रहीतुमागतः। स मया प्रोक्तो यथा—अस्माकं स्थानप्रदानं युष्मत्कर्तव्यमासीत्। अस्माकं स्थलं दुर्लभमित्यत्रोपविष्टाः स्मः। तृतीयश्रेण्यामवकाशो दीयते यदि तत्र गन्तुं सतोषा एवेति॥

मया सह चर्चां मा कुरुध्वम्। न मे शक्यं वः स्थलं दातुम्। अधिकभाटकं दीयताम्। नो चेदवतीर्य गन्तव्यमित्यवदत् सः॥

मया कथमपि पुण्यपत्तनं गन्तव्यमासीत्। अतोऽग्नियानरक्षकेण सह कलहायितुं नैव सन्नद्धोऽस्थितम्। तदुक्तप्रकारेण पुण्यपत्तनपर्यन्तं यावदधिकं तावददाम्। किन्त्वेतदन्याय्यं मर्मघातकमभवत्॥

प्रातर्वयं 'मुगलसराई' प्राप्ताः। मगनलालमहाशयस्तृतीयश्रेण्यां स्थानं लब्धवान्। वयं तच्छकटं गताः। तत्राहं प्रयाणानुज्ञापत्रिकापरीक्षकस्य सर्वनियमानिरेव 'मुगलसराई'स्थाने श्रेणीपरिवर्तनाय साक्षिपत्रं विलिख्य दीयतामित्यपृच्छम्। असौ स न सम्मेने। 'रेल्वे' अधिकारिणामहमलिखम्। ततः प्रत्युत्तरमागतम्। यथा साक्षिपत्रं विनाधिकभाटकं निवर्तयितुं नास्माकं पद्धतिरस्ति। केवलं युष्मद्विषये पद्धतिरियं लुप्यते। किन्तु बर्दवानात् मुगलसराई-पर्यन्तमधिकभाटकं यद्दत्तं तन्न प्रतिदीयते इति॥

एतदनन्तरं मम तृतीयश्रेणीप्रयाणस्यानुभवा बहव समभवन्। तत्सर्वंमुद्रियते चेत्तदेव पुस्तकं भवति। एषु प्रकरणेषु सदर्भे प्राप्ते सति किंचित् किंचिल्लेखितु शक्यम्। मम शारीरिकदौर्बल्येन तृतीयश्रेणीप्रयाणमसाध्य भवति। अय मेऽप्यतिखेदहेतुर्यद्दौर्बल्य मे तृतीयश्रेणीप्रयाण त्याजयतीति ॥

तृतीयश्रेणीप्रयाणिकाना सकष्टाना रेल्वे' अधिकारिणा निरकुशप्रवर्तनमेव कारणमित्यत्र न सदेह। किन्तु प्रयाणिकानामविनीतवृत्तिरशौचपद्धतय स्वार्थपरताज्ञान च लघूनि कारणानि भवन्ति। अत्र खेदस्य कारणमेतद्भवति यथा वयमौद्धत्येन स्वार्थपरतया च वर्तामहे इति तेषा न विदितमिति। स्वय यदत् क्रियते तत्सर्वं स्वाभाविकमेवेति तेषां प्रतिभाति। एतत्सर्वस्यापि मूलकारण सुशिक्षितमिति मन्यमानैरास्थीयमानमौदासीन्यमेव ॥

यदा वय कल्याणपत्तनं प्राप्तास्तदा परमायासयुक्ता अभूम। अग्निरथविरामस्थलात् जल गृहीत्वा मगनलालमहाशयोऽह च स्नानमकरवाव। मम भार्याया स्नानाय परिकल्पयितुमुद्युक्तान् भारत सेवासघस्य कोल्महाशय परिचीयास्मत्पार्श्वमागत। सोऽपि पुण्यपत्तनगाम्यासीत्। तेनोक्त यथा मम भार्यां द्वितीयश्रेणीस्नानगृहमानेष्यामीति। तस्यादरेण कर्तुमुद्यतस्य साहाय्य स्वीकर्तुं विकल्पितवान् मम भार्याया द्वितीयश्रेण्या स्नातुमधिकारो नास्तीति मया विदितमासीत्। परन्त्वस्मिन्ननुचिते कार्ये भागी सवृत्त। सत्योपासकस्यैतदनुचितमित्यहमजानम्। तत्र गत्वा स्नानं कर्तव्यमिति भार्यातुरा स्थितेति न। पर पत्यु पन्या॥ पक्षपात स तस्य सत्यपात जिगाय। सत्यस्य मुख मायया सौवर्णाच्छादनस्य पश्चान्निगूहितमित्युपनिषत् ॥

षष्ठोऽध्यायः

# प्रेमोत्पादने प्रयत्नः

पुण्यपत्तनमागत्य सर्वासा श्राद्धक्रियाणा समाप्त्यनन्तर वय सर्वे भारतसेवासघस्य भविष्यद्दृशि स मया प्रवेष्टव्यो न वेति चर्चयितु प्रवृत्ता। एतत्प्रश्ननिर्धारण मम सूक्ष्मकार्यत्वेन पर्यणमत। गोखलेमहाशयस्य जीवितान्तपर्यन्त मम सघसदस्यत्व नावश्यकमासीत्। गोखलेमहाशयस्येच्छानुसारेण मम वर्तन पर्याप्तमासीत्। इय परिस्थितिर्मम सुखदायिन्यासीत्। क्षुब्धार्णवे नौकानयनाय यथा समर्थो नायकोऽपेक्ष्यते भारतखडस्य सार्वजनिकजीवने मम मार्गदर्शी कश्चिदपेक्षित आसीत्। गोखलेमहाशयो ममार्गदर्श्यासीत्। तस्याश्रयेऽह सुरक्षितो निर्भयश्चासम्। अद्य तस्याभावाद् भारो ममोपर्येव पतित। सघप्रवेशाय प्रयतन मम कर्तव्यमिति मन्मतमासीत्। यत गोखलेमहाशयस्यात्मन एतेन

सतोषो भविष्यतीति मम प्रत्यभात्। ततोऽह नि सकोच दृढतापूर्वक सघस्य प्रीत्युत्पादनाय प्रयत्न कर्तुमुद्युक्त ॥

अस्मिन् समये प्राय सर्वे सघसदस्या पुण्यपत्तने स्थिता । तत्पार्श्वमह गत्वा विज्ञाप्य तेषां मद्विषये स्थित सशय दूरीकर्तुमुद्युक्तोऽभवम्। परन्तु तेषु भिन्नोऽभिप्राय आसीदिति मम प्रत्यभात्। एक पक्षो मा प्रवेशयितु सन्नस्थित इतरपक्षायेद सर्वथा नारोचत। द्वावपि पक्षौ मय्येकरीत्याधिकप्रेमशालिनावभूतामिति मम विदितमासीत्। परन्तु तेषा स्वसघभक्तिस्ततोऽप्यधिकासीत्। यद्वा तद्वा भवतु मयि निविष्टप्रेमापेक्षयाल्पीयान् नासीत् ॥

ततोऽस्मद्विषयचर्चासु नासीदवकाशो मन कषायस्य। तत्केवल मुख्यतत्त्वाना सबद्धमासीत्। मम विरुद्धपक्षीयाना स्वाभिप्राया मदभिप्रायाश्चानेकमुख्यविचारेषूत्तरदक्षिणध्रुवसदृशात्वान्मम सघसदस्यत्वे सघसस्थापनाया मुख्योद्देशानामेव भगप्राप्तिर्भविष्यतीति सभव प्रतिभाति स्म। स्वभावत इद तेषा सहनशक्तिमतिचक्राम ॥

बहुचर्चासमाप्तौ वय पृथग्भूता । अन्तिमनिर्णयायान्या वेला मिलितव्यमिति निश्चितमासीत्। गृह गच्छन्नहमालोचनाया मग्न । सघस्य सदस्येष्वनेकजनानामभिमतत्वात् सघप्रवेश किं युक्त । एव कृते गोखलेमहाशये निविष्टगुरुभक्ति किं मग्ना न भविष्यति। मम सदस्यत्वविषये साधिकेष्वेतावति तीक्ष्णमतभेदे सति सघप्रवेशस्योद्देश स्वय परित्यज्योभयपक्षीयानुभयसकटादुत्तारयितुमत्युत्तमो मार्ग इति मम स्पष्ट प्रत्यभात्। इत्थमनुष्ठानादेव गोखलेमहाशयविषये मम धर्मपालन भविष्यतीत्यालोचयम्। एतन्निर्धारणमकस्मान्मम मनस्यस्फुरत्। तत्क्षणमेवाह श्रीश्रीनिवासशास्त्रिणा मम सघप्रवेशनाय सभा नैव मेलनीयेत्यलिखम्। विरुद्धपक्षीयेभ्यो मे निर्णयोऽयमतीवारोचत । इद तान् धर्मसकटादुदतारयत् । एतेनास्मत्स्नेहसबधो गाढतरोऽभूत्। वस्तुतोऽह सघस्य सदस्योऽभवम् ॥

अह नियमपूर्वक सघस्य सदस्यो भवितु युक्त आसम् । विरुद्धपक्षीया मा प्रतिभटीकृत्य स्थिता इत्येतच्च न्याय्यमेवेति । अस्मदीयमुख्यतत्त्वाना विचारेऽस्मन्मध्ये महान् भेद आसीदित्यनुभवेन ज्ञातम्। परन्तु एत मतभेदेनास्मन्मैत्र्या न्यूनता वास्मसबधे कटुत्व वा न जातम्। तदात्वादेव वय भ्रातर इव स्थिता । पुण्यपत्तने यत्सघभवन तन्मे यात्रास्थान भवतीति ॥

अह सघस्य सदस्यो न जात इत्येतस्य किन्त्वन्त करणेऽह सर्वदा सदस्य इव स्थित । लौकिकसबधादाध्यात्मिकसबधो गरीयान्। आध्यात्मिकसबधेन विना भूतो लौकिकसबध आत्मशून्यो देह इव ॥

सप्तमोऽध्यायः

# कुम्भमेलः

डॉ. मेहतामहाशयदर्शनार्थं मार्गे कलकत्तायां स्थातव्यमासीत्। अहं तत्र दिवंगतस्य भूपेन्द्रनाथवसोर्मंदिरेऽवतीर्णः। बंगदेशस्यातिथिसत्कारोऽत्र परां काष्ठामगमत्। तत्काले मया फलाहार सेव्यते स्म। तत कलकत्ताया लभ्यानि फलानि सर्वाण्यपि मदर्थं सग्रहीतान्यासन्। गृहस्त्रिय सर्वां रात्रिं जागरित्वा 'बदाम-द्राक्ष' इत्यादीन् निस्तुषीकुर्वन्ति स्म। एतद्देशपद्धत्यास्वादनाय फलानि सज्जीकर्तुं प्रयतन्ते स्म। मम सहवासिभ्यो नानाविधभक्ष्याणि ददु। यद्यपि मे मनसे रुचित प्रेमपूर्वक सत्कारस्तथापि द्विजातिथीनां सुखाय परिश्रमो मम सहनातीत आसीत्। परन्त्वेतत्सकटादुत्तरीतुमुपायो न प्राप्त ॥

रगूननगरगामिनीं नौकामारुह्य नौकावेदिकाया प्रयाणमकरवम्। वसुमहाशयस्य मंदिरे बहुलसत्कारसकटे पतित। अत्र नौकावेदिकाया प्रयाणिकाना सामान्यसौकर्येऽप्यक्यता नादरस्यानुभवभागोऽस्माकमागत आसीदेक स्नानप्रकोष्ठो नाम। तस्यानैर्मल्यमसह्यमासीत्। मलस्थानानि दुर्गंधमलकूपा आसन्। तान्युपयोक्तु मलमूत्राणि पादन्यसनेन बातिक्रम्य वा गतव्यमासीत् ॥

रगूननगर प्राप्य तत्रत्यनौकास्वामिन प्रतिनिधे सर्वान्विषयान्निवेद्यालिखम्। एतत्पत्रस्य परिणामेन डॉ मेहतामहाशय अस्मिन् विषये गृहीतपरिश्रमस्य फलरूपेण वा ममानन्तरप्रयाण यद्यप्यहं नौकावेदिकाप्रयाणिकोऽभव पूर्ववन्न कष्टमासीत् ॥

रगूनपत्तनेऽपि मम फलाहारशपथो गृहस्वामिन सकष्टहेतुरासीत्। परतु डॉ. मेहतामहाशयगृहे मम गृहे यावत्स्वातंत्र्य तावत्स्वातत्र्यमासीत्। तत आहारस्य समृद्धिं यथाशक्य निग्रहीतु साध्यमभूत्। मम भोज्यपदार्थाना विषये मया न किमपि परिमाण नियमितमासीत्। अतो मदर्थे आनायितनानाविधफलोपरिस्थमोह मम नेत्र जिह्वा च परित्यक्तु न शक्तौ बभूवतु। भोजनाल्पनियत कालो नासीत्। अहं तावदस्तमयात्पूर्वं दिनस्य चरम भोजन समापयितुमनापि सामान्यतोऽस्मद्भोजन रात्रावष्टनववादनात्पूर्वं न संपद्यते स्म ॥

एतदर्थे पचदशोत्तरैकोनविंशतिमितेऽब्दे कुम्भमेल प्रवर्तते स्म। अयं मेलो द्वादशवर्षानतरमेकदा हरिद्वारे चलति। एतदुत्सवायागन्तु मम तीव्रेच्छा नासीत्। परतु स्वगुरुकुले स्थितं मुनशीरामजीमहाशय द्रष्टुमातुरोऽभवम्। गोखलेसघो महान्त स्वयसेवकदल कुम्भमेले सेवार्थं प्रेषितवान्। पडितहृदयनाथकुंझरूमहाशयोऽध्यक्ष आसीत्। डॉ देवमहाशय वैद्याधिकारी।

पब्लिक्सदल एषा साहाय्यार्थं प्रेषयितव्य इत्यामन्त्रणमागतम् । ततो मगनलालगान्धिमहाशयो मत्तः पूर्वमेव गतः । रंगूनपत्तनात्प्रतिनिवर्तमानोऽहं तद्दलं प्राप्तः ॥

कलकत्तापत्तनात् हरिद्वारपर्यन्तं प्रयाणमतीव दुष्करमासीत् । कदाचिच्छकटे दीप एव नासीत् । शहरानपुरनगरेऽस्मान् वस्तुपूर्णशकटे पशुगोष्ठे वा पूरयामासुः । अस्य पटनाच्छाद-नाभावाच्छीर्षोपरि मध्याह्नस्य चण्डातपस्तस्याधस्तादञ्जल्लौहभूमिका । एतन्मध्ये वयं दग्धा अभूम । एतादृशप्रयाणोत्पादितपिपासायां सत्यामपि युष्मदीयहिन्दुजनस्य मुसल्मानसस्पृष्टोदकं न पेयमासीत् । हिन्दुजनाज्जलप्राप्तिपर्यन्तं ते निरीक्षमाणा स्थिताः । इमे हिन्दुजनारुग्णपतिता वैद्या मद्यं ददातु गोमांसं चापानं यादिशतु 'मुसल्मानो'ऽथवा 'ईसायी' औषधस्य मिश्रीकृत्य ददातु वा पुरः पश्चान्न पश्यन्ति न च विचारयन्ति ॥

शांतिनिकेतनेऽस्मदनुभवेन मार्गसंमार्जकस्य कार्यमेव हिन्दुस्थानेऽस्मदनिष्टकार्यं भवतीति विदितमस्माकम् । हरिद्वारे स्वयंसेवकार्थं धर्मशालायां पटमण्डपा निविष्टाः । वायुचालनाय डॉ. देवमहाशयः शौचकूपान् निखानितवान् । एतत्प्रेक्षणाय कतिपयवेतनग्राहिणां मार्गसंमार्जकानां-मुपरि भारं निवेशयितव्यमासीत् । अत्र हि फीनिक्सदलस्य कार्यं लब्धम् । एषु शौचकूपेषु मलस्योपरि मृत्तिकां क्षिप्त्वा वयं तान् शुचीन् निवेशयिष्याम इत्यूचिम । डॉ. देवमहाशय सतोषेण सम्मेने । एवं सेवां करिष्याम इति वक्ता यद्यप्यहं तथापि कार्यकारको मगनलालगान्धि आसीत् । मम कार्यं मुख्यतः पटमण्डप उपविश्य दर्शनादानम् । मां द्रष्टुमागतैरनेकैर्यात्रिभि-र्धर्मसन्धानितरविचाराश्चाधिकृत्य चर्चानुष्ठानमासीत् । एतदन्तरे मम स्वल्पोऽप्यवकाशो न लभ्य आसीत् । स्नान'घाट' प्रत्यय्येते दर्शनार्थिनो मामनुपतन्ति स्म । भोजनकालेऽपि ममैकत्वेव वर्तनस्यापि नावकाशं ददति स्म । दक्षिणाफ्रिकायां कृतात्पसेवया भरतखण्डे सर्वत्र गभीरपरिणाम' सवृत्त इत्येवं हरिद्वारे मनसापश्यम् । परन्त्वियं स्थितिस्तावन्मम सतोषदायिका नासीत् । अहं रीतिद्वयस्य संकटमध्ये लग्न आसम् । अहं केनाप्यपरिचीयमान-स्थानेऽस्मिन्देशे स्थानजनैरनुभवितव्यानि कष्टनिष्ठुराणि मया सोढव्यान्यासन् । रैल्वेप्रयाणं कुर्वाणो मद्विषयज्ञानां मध्येऽहं तेषां दर्शनाकाङ्क्षया दृश्यमासम् । अनयोर्द्वयोः का परिस्थितिरतीवकरुणाजनका इति निर्धारयितुमसक्तम्मम कष्टतरं भवति । एतावति सवृत्तेऽपि जानेऽहं दर्शनार्थिनामन्धप्रेम्णाहमनेकदा कोपं गतः । इतोऽप्यधिकवार मनस्तापं गतः । परन्तु तृतीयश्रेणीप्रयाणमसकृत् कष्टतरं परिणतम् । तथापि ममान्तःकरणशुद्धे कारणं भवति । न तु कोपोद्रेकस्य कारणं नैव जानामीति वक्तुं शक्यम् ॥

तदानीं मम पर्याप्ता कार्यशक्तिरासीत् । जनो मां तीर्थेषु प्रेक्षणक्षणमेव संभ्रमकारिणीं प्रसिद्धिमद्यापि न प्राप्तः । अस्मिन् गमागमे मम यात्रिकाणां धर्मभावनापेक्षया तेषामनागरू-कता कापट्यमालस्य च दृष्टिपथमागतानि । तत्र साधूनां गणा उद्भूयेवाभ्यागताः ।

तद्दर्शनेन ते साधुभोजनं भुक्त्वा सुखशय्यायां शयित्वा सविनोदेन जीवनपथं गन्तुमेव जन्म प्राप्तमिति प्रतिभाति स्म ॥

अत्राहं गां पञ्चपादामपश्यम् । एतेन ममाश्चर्यमभूत् । परन्त्वनुभविनो जना परमार्थं न्यवेदयन् । इदं पञ्चपादधराकी गौर्दुर्जनानां लोभस्याहुतिरासीत् । सजीवस्य गोवत्सस्य पादमेकं छित्वा तद्गोभुजस्य सलग्नीकृत्य यसवृत्तं तदेव पंचमपादं इति ज्ञातमासीत् । द्वयो प्राणिनो हिंसाकरणेन संवृत्तमिदं फलमज्ञानिनां द्रव्यार्पणायोपयुक्तमासीत् । पञ्चपाददर्शनमनपेक्षमाणो हिन्दुः कः वर्तते । एतादृशाद्भुतगवार्थे शक्तिमतिक्रम्य दानं कथं न करणीयम् ॥

कुम्भमेलस्य दिनमागतम् । तन्मे चिरस्मरणीयं संवृत्तम् । अहं यात्रार्थी हरिद्वारं न गतः । पवित्रतामन्विष्य तीर्थक्षेत्राणि गन्तुं मया कदापि नापेक्षितम् । तत्र प्रायेण सप्तदशलक्षजना आगता इत्यभ्यूहितमासीत् । सर्वेऽप्येते कपटिनो द्रष्टुमागता इति वक्तुं किं शक्यम् । एषां बहवो जनाः पुण्यमर्जयितुमात्मशुद्धये चागताः स्युरित्यत्र न मे संशयः । एवंविधा श्रद्धात्मनः पुरो वृद्धये सहायका भवतीति वक्तुमसाध्यं न भवेत्तथापि कष्टसाध्यमिति ब्रूयात् ॥

अतोऽहं तामखिलां रात्रिं विचारे मग्नोऽयापयम् । सर्वत्रप्रसृतपापव्यमध्ये ■ पवित्रात्मा स्थितः । भगवतो दृष्ट्या स निष्फलप्रयोऽभूत् । हरिद्वारं प्रति यात्रागमनमेव पापकृत्यं चेदहं लोकानां पुरस्तादभिप्रायमेतं प्रकटीकृत्य कुंभदिनमेव हरिद्वारं त्यक्तवान् । हरिद्वारं कुंभमेलं च यात्रार्थिनागमनं निष्फलमं चेत्तत्र प्रसृतस्थितपापवृत्ते प्रायश्चित्तरूपेण मया किमपि त्यागव्रतमगीकृत्यान्तःशुद्धिः करणीया । तन्मे केवलं सहजमासीत् । मम जीवनं नियमपूर्वकव्रताचरणस्योपरि रचितमस्ति । तावता औदार्येण मां कलकत्तापत्तने रंगूनपत्तनेऽपि कृतसत्कारानां गृहस्थानामहमनावश्यकमेवोत्पादितकष्टं मम स्मरणमायाति । ततोऽहमाहारवस्तूनां सङ्ख्यापरिमाणं निर्धार्यास्तमयात्पूर्वमेव भोजनं समापनीयमिति निरचैषम् । एतन्नियमान्न वहामि चेदग्रे मां सत्कुर्वाणानां गृहस्थानामधिकमननुकूलतायाः कारणं भविष्यामि । परसेवोपक्रमं विना मम सेवायामेव तैर्निरतैर्भवितव्यमिति मम मनस्यागतम् । अतोऽहं हिन्दुदेशे यदा स्थितस्तदा चतुर्विंशतिहोरासु पञ्चभिः पदार्थैरधिकं न भोक्ष्ये रात्रौ न भोक्ष्ये इति व्रतं गृहीतवान् । एतेन मम सम्भवन्ति कष्टान्यहं पूर्णमालोचयम् । परन्त्वन्यथाकर्तुं लेशतोऽप्यवकाशो न देय इति ममेच्छासीत् । अहं यदा रुग्णपतितस्तदौषधमेकं पञ्चपदार्थेषु गणनायां परिणाममचिन्तयम् । पथ्यग्रहणपदार्था गणनायां प्रवेष्टव्या इति निरचैषम् । पर्यन्ते केन हेतुनापि नियममेतं नातिक्रमितव्यमिति निश्चयमकार्षम् ॥

एतानि व्रतान्याचरतो मम त्रयोदशवर्षाणि बभूवुः । एतानि मां कठिनपरीक्षायां लक्ष्यमकुर्वन् । एतैरहं रक्षित इत्यपि वक्तुं शक्यम् । एतैर्मम जीवनपरिमाणमधिकमभूत् । अनेकजाड्यानि दूरीभूतानीत्यहं मन्ये ॥

तस्मिन्निवेश्य नादयितु प्रवृत्त । ततस्तद्यज्ञोपवीते छिन्ने सति तत्र व्यामोहोऽप्यापि स्थितो न वा न स्मरामि परत्वह नूतनयज्ञोपवीत नैवाधारयमिति ज्ञातम् ॥

यदाह प्राप्तवयस्कोऽभव तदा पुनस्तद्धारणाय हिन्दुस्थाने दक्षिणाभिमुखा च कतिपये सदुद्देशपूर्वका प्रयत्ना सवृत्ता । परतु ते न फलिता । यदि शूद्रैर्यज्ञोपवीत न धार्य तर्हीतर-वर्णाना को वास्त्यधिकार इत्यह वादमकरवम् । अपि च ममानावश्यकपद्धतिमनुसर्तु मया पर्याप्तो हेतुर्न दृष्ट । यज्ञोपवीतये न ममाक्षेप । किन्तु तद्धारणाय धारणमेव नास्ति ॥

अह वैष्णव सन् कठे मया कठी धार्यते स्म । शिखा तावदावश्यकमेवेत्यहमग्रयेष्व अगणयन् । किन्तु 'इग्लैंडदेश' प्रति प्रस्थानात्पूर्व शिखा निरकासयम् । शीर्षोपरि यदा किंचिन्न विद्यते इद लोकाना लक्ष्यभूत हास्यजनक भूत्वानागरिकोऽहमित्याग्लजनो मा गणयेदिति भीति । एतत्र मम कातर्य किंयद्दूर गतमिति चेत्तद्दया शिखा रक्षन्तो मम ज्येष्ठभ्रातु पुत्रा । छगनलालगाधिमहाशयोऽन्ये च स्वशिखा यथा निष्कासयन्ति तथाकरवम् । शिखारक्षणेन तेषा सार्वजनीनकार्यस्य प्रत्यादेश स्यादिति भीतोऽह तेषा मम खेदमप्यविचिंत्य यथा निष्कासयन्ति तथा कृतवान् ॥

एकोऽह सर्वांस्तान् नियमान् स्वामिभ्यो निवेदयाचेच यथा – अह यज्ञोपवीत न धारयामि । यद्यपसख्या हिंदवो नैतद्धारयन्ति तथापि मम धारणावश्यकता न मे प्रतिभाति । अपर च यज्ञोपवीतेनाध्यात्मिकपुर्नजन्मचिह्नेन भाव्यम् । ईदृक् पुनर्जन्मनो यज्ञोपवीतधारी विशुद्धतरमुच्च तर च जीवन यद्दृच्छापूर्वक प्रयतनमावश्यकम् । भारतदेशस्य हिन्दुधर्मस्य चाधुनिकपरि-स्थितौ हिन्दुजना ईदृग्गूढार्थ यज्ञोपवीत धारयितु स्वाधिकारसार्थकीकर्तुमर्हन्तीति मम तावत्सशयास्पद भवति । हिन्दुधर्मोऽस्पृश्यता निष्कासयोचनीचभेद विहायैवमेव मर्यादामतिक्रम्य स्थितानितरानेकदोषानपासार्य तत एवाधिकारमेत सवादमितु साध्यम् । अत एव यज्ञोपवीत-धारण न मे रोचते । परन्तु यूय शिखाधारणस्य विषये कृता सूचना विचारयोग्येति न सदेह । एकस्मिन्कालेऽह शिखावानासम् । असत्यलज्जया सा निष्कासिता । अतस्ता पुन आरोपयेमिति मे प्रतिभाति । एत विषयमह सहवासिभि सह चर्चयिष्यामीति ॥

यज्ञोपवीतविषये यन्मयोक्त तत्स्वामी न समेने । तद्धारणाय यानि कारणानीति प्रत्यभा-सान्येव तेषा धारणावश्यकता साधयितुमलमित्यदृश्यत । अद्याप्यस्मिन्विषये ममाभिप्राय प्रायेण इत्तीरेशे यथाभूत् तथैव स्थित । भिन्नभिन्ना धर्मा यावद्विचन्ते तावत् प्रत्येकस्य किमपि बाह्य-चिह्नमपेक्षित स्यात् । किन्तु तच्चिह्नमेवाराध्यदैवतमिति गणयित्वा तद्द्वारा स्वधर्म इतरध-र्मापेक्षया श्रेष्ठमिति प्रतिपादयितुमारभ्ये तदा तच्चिह्नमपक्षिपेत् । अद्य यज्ञोपवीत हिन्दुधर्ममुत्तम कर्तु साधनमिति न मे प्रतिभाति । ततोऽह तद्विषये तटस्थ स्थित ॥

परन्तु शिखानिष्कासनाय मम रुजैव कारणमासीदिति मित्राणा बुद्धिवादग्रहणानन्तर ता पुन आरोपयितु निश्चय कृतवान् ॥

हृषीकेशस्य लक्ष्मणसेतोश्च प्रान्तवर्ति प्रकृतिसौन्दर्यं दृष्ट्वाह मुग्धोऽभवम् । अस्मत्पूर्विकाणा सौन्दर्योपासनाया प्रकृते सौन्दर्यस्य धार्मिकभावदायिन्यास्तेषा प्रतिमायाश्च भक्त्याह नमस्कृतवान् । किन्त्वेतान्सुन्दरस्थाननिवेशान् यथा जन उपयुक्ते स्म तदालोक्य मम सकष्ट जातम् ॥

यथा हरिद्वारे तथा हृषीकेशेऽपि जना वीथी गगानदीतट च मलेन दूषयन्ति स्म । गगाया पवित्रोदक मलिनीकर्तुमपि नैव व्यकल्पत । लोकाना गमनागमनस्थल विहाय स्वल्प दूर गतु यद्यपि न कष्टमासीत्तथापि वीथीषु नदीतटे च मलमूत्रविसर्जन कृत दृष्ट्वा मम हृदय खेदेन बहुव्यथामापत् ॥

लक्ष्मणसेतुर्नाम गगानद्युपरिनिबद्धलम्बमानलोहसेतुरासीत् । न कश्चिदन्यत् । प्रथमत स्तत्र रमणीयरज्जुनिर्मितसेतुरासीदिति निवेदितम् । उदारबुद्धि कश्चन मारवाडिमहाशयो रज्जुसेतुमेन निर्मूल्याधिकद्रव्यव्ययेन लोहसेतु निर्माप्य कुचित्रा राज्यस्य वशे प्रादात् किल । मया नैव दृष्टो रज्जुसेतुरिति तद्विषये न किंचिद्वक्तु शक्तम् । किन्तु लोहसेतुस्तादृक्स्थाननिवेशे केवलमनुचित भूत्वा तत्रत्यसौन्दर्य विनाशयति ॥

एषा यात्रिकाणा सेतो कुचित्राया राज्यायार्पण मम तादात्विकराजनिष्ठाया सहनमप्यतिक्रान्तमासीत् । सेतोरतिक्रमानन्तर प्राप्य स्वर्गाश्रम शोचनीयस्थितावासीत् । कतिपयच्छिन्नभिन्नलोहकुटीराणि विना न किंचिदन्यदासीत् । श्रुत मयैतानि साधकेभ्यो निर्मितानीति । तदा तत्र बहव साधकजना नानिवसन्त । मुख्यमन्दिरे स्थितानेकद्विजनान्वीक्ष्य मम न सतोषोऽभूत् ॥

किन्तु हरिद्वारे ममानुभवा अमूल्यमेव पारणता । मया कुत्र स्थातव्य किं कर्तव्यमिति निर्धारयितु मम तेभ्यो बहुल साहाय्य सवृत्तम् ॥

नवमोऽध्याय:

# आश्रमस्थापनम्

कुंभमेल प्रति गमनात्पूर्वमेवदाह हरिद्वार गत ॥

सत्याग्रहाश्रम पचदशोत्तरैकोनविंशतितमे वत्सरे 'मे'मासस्य पचविंशे दिने स्थापित आसीत् । मया हरिद्वारे निवसितव्यमिति श्रद्धानन्दस्वामिनामपेक्षासीत् । कलकत्तावासिनो मम कतिचिन्मित्राणि वैद्यनाथधामनि स्थातव्यमित्यसूचयन् । मम्य राजकोटनगर वरणीयमितीतरे

साग्रह सूचनामदु । परन्तु यदाहममदावादनगरद्वारा प्रयाणमकरम् तत्र सुहृदो मया तत्रैवा-वस्थातव्यमिति निर्बन्ध विधायाश्रमस्य व्ययद्रव्यस्य स्वय सगृह्य प्रदान मे प्रतिज्ञाय निवासगृह दापयिष्याम इत्यवोचन् ॥

ममापीच्छामदावादनगरस्योपर्येवासीत् । यतोऽह गुजरातीजनस्ततो गुजरातीभाषाद्वारा सेवा कर्तुं मम शक्यमित्यहममसि । अपर च हस्तसूत्रयन्त्रस्य पुरातनकेंद्र गृहव्यवसायोऽपि च हस्तसूत्रनयनमनयो पुनरुज्जीवनस्यामदावादपत्तनमेवात्यनुकूल क्षेत्र परिणमेदिति निरीक्ष्यते स्म । अपर च तत्पत्तन गुजरातस्य राजधानीति धनिकप्रजाना साहाय्यमितरस्थलापेक्षयाधिकमत्र लभ्येतेत्याशावर्तत ॥

अमदावादपत्तनस्थैर्मित्रै सह चर्चिताना विषयाणामस्पृश्यताप्येकासीत् । अस्माकमस्य प्रारम्भक्षणमेव य कश्चियोग्यमन्त्यजमाश्रम प्रवेशयिष्यामीति स्पष्टमेव न्यवेदयम् । वैष्णवमित्रमेको युष्म नियमरक्षकोन्त्यज पुत्रलम्य इत्यात्मविश्वासेनापृच्छत् । पर्यन्त आश्रम अमदावादपत्तने स्थापयितु निश्चय कृतवान् ॥

वासस्थलस्य प्राप्तिविषये अमदावादपत्तनवर्ती ब्यारिस्टरश्रीजीवनलालदेसाईमहाशय सर्वापेक्षयाधिकमालम्बन ददौ । ते स्वकीय ' कोचरब ' बगले ' भाटकेन दातु समेने । वय तदेव ग्रहीतु निरचैष्म ॥

अस्माभि प्रथमतो निर्धारणीयो विषय आश्रमस्य कि नामधेयमिति । अह मम मित्राणा मतमपृच्छम् । तै सूचितनामधेयेषु सेवाश्रमस्तपोवनमित्यादि स्थितम् । सेवाश्रम इति नामधेय मह्यमरोचत । परन्तु तत किंविधा सेवेति न स्पष्टमासीत् । तपोवनमित्याडम्बरवान् प्रत्यभात् । यतो यद्यपि तपोऽस्माक प्रिय वय च तपस्विन इत्याख्यातुमर्हता न दृष्टा । सत्योपासनमेवास्मिन्मतमासीत् । सत्यशोधन सत्यसाधन चास्मदुद्योग आसीत् । दक्षिणाफ्रिकाया मया प्रयुक्ता पद्धति भरतखडस्य परिचय कारयितुमिच्छवान् । एव परिचितीकरण कियद्दूर शक्यमिति भरतखडे परीक्षणीयमितीच्छास्माकमासीत् । तस्मान्मम सहवासिभिर्मया च सत्याग्रहाश्रम इति नामधेय वृतम् । यतोऽस्मिन् पदेऽस्मद्ध्येय सेवापद्धतिश्च मिलितस्थितावास्ताम् ॥

आश्रमकार्यस्य निर्वहणाय नियमनिबधावलिरेकावश्यक्यासीत् । ततस्ता सज्जीकृत्य मित्राणामभिप्रायार्थे सा प्रेषिता । अस्माभि प्राप्तानेकाभिप्रायेषु सरगुरुदासबेनरजीमहाशयेन यो दत्त स मे स्मृतौ वर्तते । स नियमान् समेने । परन्तु तेषु नम्रतायाश्च स्थान देयमित्यसूचयत् । यतस्तादात्विकयुवकेषु नम्रता नासीदेवेत्ययममन्यत । यद्यप्येषा न्यूनता मम विदितासीत्तथापि नम्रताया व्रतत्वेन ग्रहणे तन्नम्रतारूपेण न स्यातु शक्यमिति शकितोऽहम् । नम्रताया पारमार्थिकोऽर्थो निरहकार । अहकारनाशो नाम मोक्ष । मोक्ष एव व्रत भवितु न साध्यम् । परन्तु तत्साधनार्थेतरव्रतान्यावश्यकानि स्यु । मुमुक्षोरथवा सेवकस्य कार्येषु

नम्रताया अथवा निरभिमानस्याभावे तस्य मोक्षस्याशा नास्ति । सेवा करणीयेतीच्छा नास्ति । नम्रताविरहिता सेवा स्वार्थपरताहङ्कार ॥

कालेऽस्मिन्नस्मद्देशे त्रयोदशतामिलजना अविद्यन्त । पञ्चतामिलबालका दक्षिणाफ्रिका-देशान्मया सहागता । सर्वैर्मिलित्वा वयं पुरुषा स्त्रियश्च पञ्चविंशतिरास्म ॥

आश्रमस्थापनमित्थमासीत् । सर्वेऽप्येकस्या पाकशालाया भोजनमकरवाम । सर्वैरप्येक-कुटुम्बस्थैरिव वर्तितुं प्रयत्न क्रियते स्म ॥

दशमोऽध्यायः

## दुष्परीक्षोत्तरणम्

आश्रमस्थापनात्कतिपयमासाभ्यंतरेऽस्माकमेका परीक्षागता । एवंविधा परीक्षा मया न निरीक्षिता । अमृतलालठक्करमहाशयोऽकिंचनानां प्रामाणिकानामस्पृश्यानां कुटुम्बमेकमाश्रमं प्रवेष्टुमिच्छति । किं यो नानुज्ञास्यथ इति तस्य पत्रमेकमागतम् ॥

अहं भीतोऽभवम् । अन्त्यजनानां कुटुम्बमेकं तत्रापि 'ठक्करबापा' महाशयसदृशजनस्य माध्यस्थ्येनाश्रमं प्रवेष्टुं तानर्ह्यामागमिष्यति–इति मया नैव परिगणितम् । मम सहवासिभ्य पत्रमपठम् । ते तस्य विज्ञापनामादरेण समेनिरे ॥

तत्कुटुम्बस्य सर्वेऽपि जना आश्रमनियमान् पालयितुं सिद्धाश्चेद्वयं समन्यामहे इति स्पष्टतयामृतलालठक्करमहाशयस्य पत्रमलिखम् ॥

दूदाभाईमहाशयाय तस्य भार्या 'दानीबहेन' अपि च तत्कालमेव शिक्ष्यमाणपरिश्रमा शिशुर्लक्ष्मीरेते तत्कुटुम्बजना । दूदाभाईमहाशय एतत्पूर्वमेव मुम्बईपत्तने उपाध्यायोऽभवत् । ते सर्वेऽप्याश्रमस्य नियमानुसारं वर्तितुं समेनिरे । ततस्ते प्रवेशिता ॥

परन्तु तेषां स्वीकारेणाश्रमस्य साहाय्यं कुर्वाणेषु मित्रेषु संभ्रम प्रवृत्त । कूपविचार एव प्रथमत कष्टमागतम् । अयं कूपो 'बंगलो'मंदिरस्य स्वामिन स्वाधीन आसीत् । अस्मज्जलभाण्डस्य जलबिन्दुपतनात् स्वयमपवित्रो भविष्यामीति जलोद्धारस्य सेवक आक्षेपमकरोत् । ततोऽस्मान्निंदितुं दूदाभाईमहाशयं च पीडयितुं प्रवृत्त । अधिक्षेपवचनानि सोढव्यानि जलोद्धरणं नैव परित्यक्तव्यमिति प्रत्येकोऽपि निवेदित । निशम्य च श्रुत्वापि निराकुलरीतिमान् वीक्ष्य लज्जयास्मान्क्लेशयितुमत्यजत् ॥

परन्तु द्रव्यसाहाय्यं मन्दं व्यसरत् । आश्रमस्य नियमाननुकूलस्पृश्यस्य विचारे इत-प्रभृति सुहृदस्माद्गमिष्यन्तीति नैव निर्णीतं चक्रिरे ॥

द्रव्याशाया निवृत्तायामस्मा बहिष्कुर्वन्तीति वार्ता श्रुता । यय सास्याप्यस्य सन्नस्थिता । अस्मान् बहिष्कृत्य सामान्यसौकर्येषु वर्तितेष्वपि वयममदावादनगर न त्यजाम । तत प्रति चेंडालवीथीं प्राप्य स्वय सपादनेन यत्किंचिल्लब्ध्वापि जीवनं निर्वाहयिष्याम इति सहवासिम्य उक्तमासीन्मया ॥

अस्मदीया परिस्थिति कीदृशी सवृत्तेति चेदेवस्मिन्दिने मगनलालगान्धिमहाशय आगामिमासस्य व्ययार्थे न किंचिदस्तीत्यवोचत् ॥ अह समाहित एव तर्हि 'भगी'वीथीं गमिष्याम इत्यवोचम् ॥

एवविधपरिणामा इद प्रथममेव न । इदृशसदर्भेषु सर्वेषु भगवानन्तिमक्षणे साहाय्य प्रेषित वान् । मगनलालमहाशयस्य स्वधनकोशस्य स्थितिप्रत्यादेशात्पर कतिपयदिनेष्वेकस्मिन् दिवसे प्रातरेको बालको मत्पार्श्वमागत्य कश्चिच्छेष्ठी बहि'मोटर'याने मा निरीक्षमाण स्थित इत्यवोचत् । तमह द्रष्टु गत । अहमाश्रमस्य स्वल्पसाहाय्य कर्तुमिच्छामि । तद्भवान् किं स्वीकरिष्यतीत्यपृच्छत् । उक्त मया यथावश्यमेव । अपि चाद्य मम द्रव्याभावेन मार्गमेव न पश्यामीति ॥

श्व प्रातरिमा वेलामत्रागतास्मि । किं भवानत्र स्थास्यति इत्यपृच्छत् । अस्त्वेति प्रोक्ते स प्रस्थित । परेद्युर्निश्चितवेलाया 'मोटर यानमागत्याश्रमस्य पार्श्वे स्थित । यानस्य शृगनादोऽभूत् । बालका वार्तामिमा वस्तु मत्पार्श्वमागता । श्रेष्ठी अन्तर्नागत । अहमेव गत्वा तमपश्यम् । स मम हस्ते त्रयोदशसहस्रमित'नोट'पत्राणि दत्वा प्रस्थित । मयैतदाशापूरण नैव निरीक्षितमासीत् । अपि च साहाय्यकरणस्य रीति । अय सद्गृहस्थ आश्रमस्यान्त पद नैव निवेशितवान् । यावदह स्मरामि तावदेकवारमात्र मया दृष्ट आसीत् । आश्रममागत्य नैव दृष्टवान् । नेव विचारितवान् । निराकुल धन दत्वा गत । एष मेऽत्यतासाधारणोऽनुभव आसीत् । एतेन साहाय्ये नास्माभि 'भगी' निवासगमन निरुद्धम् । अस्माक सौकर्यं प्राप्तमेकवर्षपर्यंत निरातक जीवन समभवत् ॥

यथा बहिश्चण्डमारुत उत्थितस्तथाश्रमस्यान्तेऽपि प्रचण्डवातश्चलित । आफ्रिकायामस्पृश्य मित्राणि मद्गृहमागत्य मया सह यद्यपि भुजते स्म तथाप्याश्रमेऽस्पृश्यप्रवेशो मम भार्याया इतर स्त्रीणा चेष्टं नासीदिति प्रतिभाति । दानीबहेनविषये आसामप्रीतिर्नासीदिति चेत्तासामौदासीन्य मम सूक्ष्मदर्शी पतितमेव । मम सूक्ष्मश्रोत्रयोरश्रुत नासीत् । पर वाश्रमात स्थितमेतन्मन कषाय मम सहनशक्तिमतिक्रम्यावर्तत । 'दानीबहेन' सामान्यस्त्री आसीत् । दूदाभाईमहाशयोऽल्प शिक्षण प्राप्तवानपि बुद्धिमानासीत् । तस्य सहन दृष्ट्वा मम सतापो जात । सकृत् सकृत् क्रुद्धो भवति स्म । तथापि तस्य सहन विशिष्टमासीदिति मम लक्ष्यमागतम् । अल्पाल्पा अपमाना सोढव्या इति मया प्रार्थित । तस्याय न केवल समनिमदापर स्वभार्याया अपि तथा कर्तुं प्रेरितवान् ॥

एतत्कुटुम्बप्रवेशेनाश्रमस्य लाभदायकं शिक्षणं लब्धम्। आश्रमेऽस्पृश्यताया नास्ति स्थानमिति पूर्वमेव प्रपञ्चस्य प्रसारितम्। आश्रमस्य साहाय्यं कर्तुमिच्छतामनया रीत्या प्रत्यादेशो दत्त इव। एतद्विषयमधिकृत्याश्रमस्य कार्यं बहुशः सरलं जातम्। प्रत्यहं वर्धमानस्याश्रमव्ययद्रव्यस्य प्रदाने बहवः पूर्वाचारनिष्ठा हिन्दुजना इति बीजस्यास्पृश्यताया आधारस्तम एव चलित इति स्पष्टं व्यक्तीकृतम्। इतरप्रमाणानि च बहूनि विद्यन्ते। तथाप्यस्पृश्यैः सह पङ्क्तिभोजनं कुर्वत आश्रमस्य साहाय्यं कर्तुं सनातनीहिन्दुजना न विकल्पन्ते इत्येतदल्पप्रमाणं न भवति॥

एताः प्रधानसमस्या या उद्भूताः कतिपयोगूढसमस्याः कथमपूर्णा मामनिरीक्षितानि कतिचित्कष्टानि कथं निर्व्यूढान्येतदादिसत्यशोधनवर्णनस्य प्रकृतानपि चैतदध्यायमनन्तरानेकविचारानहं परित्यक्तुमास्थितः। एतेन खिन्नोऽस्मि। अग्रेतनाध्यायेष्वयं लोपः स्पष्टीभवति। मया कतिपयविचाराः परित्यक्तव्या भवन्ति। यदेतन्नाटकपात्राणां मध्ये बहवो जीवन्ति। तत्सम्बन्धघटनावर्णने तन्नामधेयान्यनुज्ञां विनोपयोक्तुं न युज्यते। तेषां सम्मतिलाभोऽथवा स्वस्वव्याख्यायान्परिशोधयितुं यदा कदा वाप्याह्वानं न साध्यं वचनम्। परमेतादृशक्रमः एतदात्मवृत्तस्य परिमितो नास्ति। अतोऽग्रिमकथा मम मते सत्यशोधकानां लाभदायिका यद्यप्यनिवार्यपासपूर्णतया कथनीया भवन्तीति शङ्कितोऽस्मि। तथा तथापि भवतु। इममितिहाससमसहयोगयुगपर्यन्तं माख्येयमिति ममेच्छापि चाशा। एतत्सिद्धिर्दैवायत्ता। असहकारादिवसपर्यन्तमिमां कथां प्राप्स्यामीति मनसि वर्तते॥

एकादशोऽध्यायः

## कर्मकराणां विदेशयात्राप्रतिरोधः

इत्थमाश्रमेण प्रथमत एवानीककारापीडया निरोद्धव्या बभूवुः। एतत्क्षणमात्र विहायास्मिन् समये मम दृष्टिमागतमेकं विषयं सङ्क्षेपतो ब्रवीमि॥

प्रतिज्ञाकर्मकरा नाम पञ्चवर्षाण्यथवा न्यूनकालं कार्यं करिष्याम इति प्रतिज्ञाय भरतखण्डाद् गतास्ते। चतुर्दशोत्तरैकोनविंशतिमिते वत्सरे सवृत्तं 'स्मट्स्-गान्धि' नियमानुसारेण प्रतिज्ञाकर्मकरत्वेन नानाप्रत्तनं प्रविष्ट्या। देयं करो यद्यपि निष्कासितस्तथापि भरतखण्डादिदेशं प्रति जीवनार्थं गच्छत्स्थायिना विषये परिशोधनमावश्यकमासीत्। षोडशोत्तरैकोनविंशतिमिते वर्षे भारतभूषणपंडितमदनमोहनमालवीया प्रतिज्ञाकर्मकरत्व निष्कासनीयमिति साम्राज्यिकशासनकेन्द्रसभाया निर्णयमानयन्। लॉर्डहार्डिंगनामा साम्राज्यप्रतिनिधिरेतदर्थानुग्रहाणं पद्धतिमिमां कालक्रमेण निर्मूलां कर्तुं सार्वभौमराज्येन याथार्थं कृतमस्तीपरोचत्।

एवंविधा स्पष्टश्रद्धावचनेन न तर्पितव्य प्रतिज्ञाकर्मकरत्वमेतत्क्षणमेव निष्कासयितु प्रयतनीय-मित्यस्माकं प्रत्यभात् । भरतखंड केवलमौदासीन्येन पद्धतिमिमामनिरध्य स्थिता । आसीन्मे विश्वासो यत्क्लेशमुक्तये जनैर्मिलित्वा कृत आडंबर सफलो भविष्यतीति । पुरोगमान्कतिपयानहम-पश्यम् । ज्ञात मया पद्धतिरिय विना विलब निष्कासनीयेति लोकमतमस्तीति । अय सया-ग्रहयोग्य कि विषयो भवेत् । तथेति मम संदेहो नासीत् । परतु तदाचरणरीतिर्न मे ज्ञाताभवत् ॥

एतदतरे साम्राज्यप्रतिनिधि कालक्रमेण निर्मूलनमित्यर्थं विशदीकृतवान् । अन्यत्स-विधान कर्तु कालयापने सति पद्धतिरिय निष्कासनीयेति तदर्थं ॥

तत सप्तशतोत्तरैकोनविंशतिमिमिते वत्सरे पडितमालवीय पद्धतिरिय निष्कासनीयेति शासन कारयितुमनुज्ञामपैक्षत । लॉर्डचेम्सफर्डमहाशयेनानुज्ञा नैव दत्ता । अतोऽखिलभारतेऽपि क्षोभोत्पादनाय प्रयतन कर्तु काल प्राप्त ॥

एतदारंभात्पूर्वं राज्यप्रतिनिधेर्दर्शनमुचितमिति मत्वा तस्मिन्निवेदिते ममाशय स समेने । सरजॉनमेफीमहाशयस्तत्स्यासकार्यदर्शी बभूव । आवयोरुभयोगाढ सबधो जात । लॉर्डचेम्सफर्ड महाशयेन सह सवृत्त सभाषण तृप्तिकरमासीत् । यद्यप्यय निश्चयपूर्वं किंचिदपि नोक्तवानपि तु साहाय्य करिष्यामीति वाग्दानमकरोत् ॥

अह मम प्रयाण मोहमयीत प्रारब्धवान् । जहागीरपिटीटमहाशय ' इडियन् सिटिजन्-शिप असोसिएशन् ' ( अधिराज्यप्रजामडली ) नाम्ना समाह्वानभारमुवाह । तत्संस्थाया कार्यकारिणीसमिति सभाया पुरत स्थापनीयान् प्रस्तावान्निर्धारयितु प्रथम मिलितासीत् । डॉ रीड-सर लल्लुभाई-शामल्दास-नटराजन-इत्यादयो महाशया अपि समिते सभ्या बभूवु । राज्य कतिपयदिनाभ्यतरे प्रतिज्ञाकर्मपद्धति निष्कासयेदिति विचारे चर्चा प्रबलासीत् । एत-त्मन्वद्धास्तिस्र सूचना आसन् । एता यथा–(१) यथाशक्य शीघ्र निर्मूलनीयम् । (२) जुलाई-मासस्यैकत्रिंशतारीखाभ्यन्तरे निर्मूलनीयम् । (३) एतत्क्षणमेव निष्कासनीयमिति । निश्चित प्रतिज्ञाकर्मकरत्व दिवसाभ्यतरे निर्मूलनीयमिति ममाभिमतमासीत् । यतस्तद्दिनाभ्यतरे राज्य यदि नैवास्मदिच्छा पूरयेत्तदास्माभिमे कि कर्तव्यमिति निर्धारयितु समय प्राप्यते । सरलल्लुभाई-महाशयेन तत्क्षणमेव निर्मूलयितुमिति सूचनानुमोदिता । तत्क्षणमिति जुलाई ३१ दिवसा-त्पूर्वमेवेत्यर्थ इति सोऽवदीत् । जनसामान्यस्य तत्क्षणमिति स्पष्टार्थो न भवति । तत स्मिमपि कार्यमपेक्ष्यते चेदितोऽपि स्पष्टतरार्थं पद प्रयोक्तव्यम् । तत्क्षणमिति प्रत्येको यथा स्वप्रतिभानरीत्या तावत्तरीत्या लोकाः अन्यरीत्यार्थं कुर्वन्ति । जुलाई ३१ अस्यार्थद्वय न घटते । तद्दिवसाभ्यतरे यदि न किंचित्कृत तदास्माभि कार्यक्रमथाल्नीय इति मया निवृत्तमासीत् । अस्य वादस्यौचित्य डॉ. रीडमहाशयेन ज्ञातम् । पर्यन्ते सरल्लुभाईमहाशयोऽपि समेने । प्रतिज्ञाकर्मकरपद्धति

जुलाई ३१ दिनाभ्यन्तरे राज्येन प्रकटीकर्तव्यमिति निर्धारितमस्माभि । सार्वजनिकसभाया निर्णयोऽय समत आसीत् । भारतखडे सर्वत्राप्येतदर्थपरो निर्णय सभाभिरङ्गीकृत ॥

श्रीमती–जायजी–पिटिमहाशया राजप्रतिनिधिं द्रष्टुमेका श्रीमन्डली सविधातु सर्वप्रयत्न विनियुक्त स्म । एत मडलीस्थाना मोहमयीमहिलाना मम ' लेडी ताता ' अपि च ' दिल्शाद बेगम ' इत्यनयोर्नामनी स्मर्येते । अनया मडल्या राजप्रतिनिधेर्दर्शन सफलमासीत् । राज प्रतिनिधिर्महिलानामाशाजनकमुत्तर ददौ ॥

अह ' कराची–कलकत्ता ' इत्याद्यनेकस्थलानि गत । सर्वत्रापि महत्य सभा मिलिता सर्वत्राप्युत्साह पूर्ण आसीत् । क्षोभस्य प्रारमे मयेतत्सर्व न निरीक्षितमासीत् ॥

तदान्ते मयैकेनैव प्रयाण क्रियते स्म । एतेन ममापूर्वा अनुभवा बभूवु । राज्यस्य गुप्तचरा सदा मामनुसरन्ति स्म । तेभ्यो निगूहित न किंचिदासीत् । अतो मा न पीडयन्ति स्म । ते मया नैव क्लेशिता । अदृष्टवशात्तदा ' महात्मा ' इति ख्यातिर्न प्राप्तासीत् । यत्र लोकाना विदितोऽभूव तत्र तन्नामघोष सामान्य आसीत् ॥

एकदा गूढचरा अनेकलोहशकटीवेदिकासु मम प्रयाणानुज्ञापत्रिका द्रष्टु तन्नाम्ना लिखित्वा गताश्च । अह तास्तै पृष्टप्रश्नाना शीघ्रमेवोत्तरमदाम् । मम सहप्रयाणिका सर्वेऽपि मामेक साधुमथवा ' फकीर ' इति गणयामासु । प्रतिलोहशकटीवेदिकाया मा क्लेशयतो जनान् वीक्ष्य बहुक्रुद्धा गूढचरानधिक्षिप्य कुत साधुमेन पीडयथेति । एपा दुर्जनानामनुज्ञापत्रिका मा प्रदर्शयेति मामूचुर्जना ॥

उक्त मया विनयेन प्रयाणानुज्ञापत्रिकाप्रदर्शनेन मम किमपि कष्ट न भवति । ते स्वकर्तव्य कुर्वन्तीति । एतेन ते समाहिता न बभूवु । ते मम पक्ष पूर्वापेक्षयाधिक स्वीकृत्य निर्दोषाणा पीडनमखडयन् ॥

एतैर्गूढचारैरुत्पादितकष्टानि न गणयितुमर्हाण्यासन् । तृतीयश्रेण्या प्रयाणमेव वस्तुतो मम क्लेशकरम् । लाहोरपत्तनाच्छ्रीनगर प्रति प्रयाणे ममानुभवा सर्वापेक्षया कठिनतरा कटुतराश्चासन् । अह कराचीपत्तनात् कलकत्तानगर लाहोरद्वारा गच्छन्नासम् । लाहोरनगरे मया शकटीपरिवर्तन कार्य लोहशकट्या स्थलमेव दुर्लभमासीत् । शकट्य पूर्णा बभूवु । अत प्रवेशार्थ देहबलमुपयुज्य पुर पुर गच्छन्ति स्म । द्वार कीलकेन बद्ध चेद्गवाक्ष तोऽन्त प्रविशन्ति स्म । सभाभेऽस्य निर्दिष्टदिवसे मया कलकत्तानगरी प्राप्तव्या । एता शकटीं विहाय तत्र सकाल गन्तु न शक्यमासीत् । स्थलाभावे निराशा स्थित । न कोऽपि मे स्थलमदात् । तावदन्येन कश्चित्कर्मकरो मम परिस्थितिं वीक्ष्य मम द्वादशाणका दीयन्ते यदह स्थल दापयिष्यामीत्यवदत् । स्थल मे दास्यते चेद्द्वादशाणका प्रयच्छामीति तस्य गोचरम् । स युवक प्रयाणिकान् शकटीवीक्षक याचमानो गत । परतु तस्य वचनं न कोऽपि श्रेयसे

गृहात् । प्रस्थितवत्याया शकट्यामत्र स्थलं नास्ति । तथापीष्यते चेन्मामन्त प्रवेशयेत् । परन्तु तिष्ठता भाव्यमित्यूचु । कर्मकरो युवक किं ब्रूथेति मामपृच्छत् । तत्क्षणमेवाहमनुमत्य स मा गवाक्षान्त पापितवान् । एवमहं शकटान्त प्रविष्ट । कर्मकरो द्वादशाणकान् सपादयामास ॥

सा रात्रि क्लेशकरी जाता । अन्ये प्रयाणिका कथंचिदुपविष्टा । अहमुपरितनफलकं गृहीत्वा होराद्वय यावत् स्थित एवासम् । एतदंतरे प्रयाणिका कतिपये मा पीडयन्ति स्म । भवान् कुतोऽद्यापि नोपविष्ट इति पप्रच्छु । स्थलाभावादिति वक्तु प्रयत्नमकरवम् । उपरितन-फलके पाद प्रसार्य शयिता अपि मा तिष्ठन्त न सोढुमशक्नुवन् । मा क्लेशयित्वा स नायास्यति । विनयेन प्रतिवक्तु नाहमायस्तवान् । एतेन पर्यन्ते स शान्तोऽभूत् । तेषा कतिपये मम नाम-धेयमपृच्छन् । उक्ते तस्मिंस्ते लज्जिता बभूवु । मा क्षमापयित्वा मम स्थल ददु । इत्थ क्षमा सफलाभूत् । अहमत्यन्तमायस्तोऽभवम् । शिरो भ्राम्यति स्म । मम साहाय्य आवश्यके सति भगवताह रक्षित ॥

एव कथंचिद्दिल्लीं तत कलकत्ता च प्राप्त । 'कासमबजार' महाराज कलकत्ता-मेलनेऽध्यक्षो ममातिथ्यकृदासीत् । यथा कराचीनगरे तथात्राप्यपरिमितमौदार्यमासीत् । सभाया कतिपये आंग्लजना आसन् ॥

चतुर्नवत्युत्तराष्टादशमिते वर्षे पर्यायविरोधेन प्रथमा प्रार्थनपत्रिकामलिखम् । तदानीमेव ममाशासीद्यदेतदर्धदास्यमय पर्याय सरहटरमहाशयेन निर्दिष्ट कदाचिदन्त गमिष्यतीति । चतुर्नवत्युत्तराष्टादशमिते वर्षे सवृत्तक्षोभस्य बहव साहाय्य चक्रु । शक्तिम सत्याग्रहोऽस्त त्वया-मासेति वक्तुं शक्यम् ॥

तत्क्षोभस्याभेतनवित्तरमशक्नुं येऽभिलपन्ति के तस्मिन्सत्याग्रहे भागमहुरिति ज्ञातुमिच्छन्ति तैर्दक्षिणाफ्रिकासत्याग्रहेतिहासोऽवलोकनीय ॥

## द्वादशोऽध्यायः

# नीलकलंकः

चंपारण्यं जनकराजस्य देश । स इदानीमाम्रारामै पूर्ण इव सप्तदशोत्तरैकोनविंशतिमितवत्सर-पर्यन्तं नीलारामैर्भरित आसीत् । चंपारण्यस्य कृषीवलो मूल्याद्यर्थ भूमे शते विंशतिभागेषु नीलं रोपयेदिति शासनेन निहितमासीत् । अस्य 'तिनकठिया' पद्धतिरिति नामधेयम् । यतो विंशतिकट्टानां (एक एकर) त्रिषु नीलं रोपणीयमासीत ॥

अस्मिन्समये मम चंपारण्यस्य स्थलं न ज्ञातम्। तस्य नामापि न श्रुतमासीत्। नीलिकाराभाः कीदृशा भवन्तीति मया नावगतम्। नीलिकाया बंधनानि तावद् दृष्टानि। परन्तु ते चंपारण्ये सिध्यन्ति। तेन परःसहस्रकृषीवलानां कष्टं समभवदिति स्वप्नेऽपि नालोकितम् ॥

राजकुमारशुक्ल एवं कष्टपतितानां कृषीवलानामेकः। स्वयमिव दुःखितानां परःसहस्रजनानामुपलक्षितं नीलस्य कलंकं निष्कासयेदित्यावेशपूर्ण आसीत्सः ॥

अहं षोडशोत्तरैकोनविंशतिवत्सरस्य महासभां लखनौपत्तने संवृत्तां प्रतिगत आसम्। तदा मां महाशयो गृहीत्वा वकीलबाबुमहाशयोऽस्य संकटानि सर्वाणि तुभ्यं निवेदयतीत्युक्त्वा चंपारण्ये गमिष्याम इति मां निरबध्नात्। वकीलबाबुमहाशय इत्यन्यः कोऽपि न। चंपारण्यप्रकरणे मम मान्यवरः सहयोगी बीहारप्रदेशे सार्वजनिकजीवनस्य प्राणभूतो बाबुव्रजकिशोरप्रसादः। राजकुमारशुक्लस्तं मम पटमंडपमानिनाय। सोऽयं कृष्ण' आल्पाका'निर्मितदीर्घांगिकां जंघावस्त्रं च धृतवान्। तं दृष्ट्वा तदा मम मनस्यसाधारणं गौरवं नैव जनितम्। निष्कपटानां कृषीवलानां द्रव्यापहारकर्ता 'वकीलमहाशयो'ऽयमेक इत्यहमज्ञासिषम्। चंपारण्यविषये तेनोक्तं किंचिदाकर्ण्य मम पद्धतिमनुसृत्य प्रत्युक्तवान् यथाहं प्रत्यक्षमेव तत्रत्यस्थितिदर्शनं विना ममाभिप्रायं न दद्याम्। एतद्विषये महासभायां निर्णयोऽस्तु सद्यो मां मुञ्चेति राजकुमारशुक्लेन महासभायाः साहाय्यमपेक्षितम्। बाबुव्रजकिशोरप्रसादश्चंपारण्यजनैः सहानुभूतिसूचकं प्रस्तावं महासभायामानीतवान्। सर्वैसंमतया सोऽङ्गीकृतः ॥

एतेन राजकुमारशुक्लो यद्यपि संतुष्टस्तथापि तावता संतृप्तिं न यातः। स्वतो मयैव चंपारण्यं गत्वा तत्रत्यकृषीवलानां कष्टवृत्तिर्द्रष्टव्येत्यैच्छत्। अहं देशाटनाय प्रवृत्तः। तन्मध्ये चंपारण्येऽप्येकद्विदिवसान् यापयिष्यामीत्यवोचम्। एकं दिनं पर्याप्तम्। भवानेव तत्रत्यस्थितिं द्रक्ष्यतीति सोऽब्रवीत् ॥

लखनौपत्तनादहं कानपूरं गतः। राजकुमारशुक्लो मां तत्राप्यन्वसरत्। चंपारण्यमितो बहुसमीपे वर्तते। दिनमेकं दीयतामित्यवोचत् सः। इमां वेलामहं क्षन्तव्यस्तत्राहमागमिष्यामीति वाग्दत्ता मयेत्यहमुक्त्वेतोऽपि बद्धतरोऽभवम् ॥

अहमाश्रमं प्रति निवृत्तः। सर्वव्यापी राजकुमारस्तत्रापि स्थितः। कदागम्यते इत्येतन्निर्णीयाधुना ब्रूयेति सोऽब्रवीत्। मयोक्तं यथा—मया ईदृग् दिवसे कलकत्तानगरे भवितव्यम्। तदागत्य मां दृष्ट्वा ततो नेतुमर्हसीति। क्व गंतव्यम्। किं कर्तव्यम्। किं द्रष्टव्यमित्येतत् किमपि मया न ज्ञातमासीत् ॥

मया कलकत्तायां भूपेंद्रबाबोर्गृहगमनात्पूर्वमेव राजकुमारशुक्लस्तत्र गत्वा स्थितः। एवं निरक्षरो नागरिकतान्यस्तथापि दृढप्रतिज्ञः कृषीवलो मामाचकर्ष ॥

एवं वयं सप्तदशोत्तरैकोनविंशतिशतमितवर्षस्यारम्भे चम्पारणनगराद्धरण्यं प्रति प्रस्थिता । उभावपि ग्राम्यौ कृषीवलाविव दृश्येते स्म । कां शकटीमारुह्य मया गन्तव्यमित्यपि मया न ज्ञातम् । स मां तत्र निनाय । उभावपि सहप्रयाणं कृत्वा प्रातः पटणापत्तनं प्राप्तौ ॥

इदं प्रथममेवाहं पटणापत्तनं गतः । तत्र कस्यचिद्गृहेऽवतरीतुं मित्राणि वा परिचिता वा नासन् । राजकुमारशुक्लो यद्यपि सरलमतिः कृषीवलः पटणानगरे तस्य परिचितैर्मित्रैर्वा भवितव्यमेवेति मया गणितमासीत् । प्रयाणे मम तदीयपरिचयः इतोऽपि साधीयान् सवृत्तः । पटणापत्तनप्राप्त्यनन्तरं तद्विषये ममासमीचीना अभिप्राया न स्थिताः । स न किंचिद्ज्ञासीत् । अथ 'वकील' महाशयं मित्रं मन्यमानोऽपि नैव मित्रमासीत् । तद्दृष्टौ राजकुमारशुक्लो भृत्यवत् स्थितः । एवं व्यवहारिणां कृषीवलानां तेषां 'वकील'महाशयानां च मध्ये उत्थितप्रवाह-गंगानदी पुटभेदवदन्तरं विद्यते ॥

राजकुमारशुक्लो मां पटणापत्तने राजेंद्रबाबुमहाशयगृहं निनाय । राजेंद्रबाबुमहाशयो नगरे न स्थितः । जगन्नाथपुरीं गतो वान्यत्र कुत्रापि गतो वा न स्मरामि । 'बंगले'मंदिरे एकद्विभृत्या स्थिताः । ते मां नैव लक्षयामासुः । मन्निकटे यत्किंचिदाहारपदार्थ आसीत् । मया खर्जूरमपेक्षितम् । तन्मह्यं राजकुमारशुक्लः पण्यस्थानादानीय ददौ ॥

बिहारप्रदेशे नियतास्पृश्यतासीत् । किंजातीयोऽहमिति भृत्यानां न विदितम् । अतो यदा ते कूपोदकमपयुञ्जते स्म तदा मया सेकपात्रे जलं नोत्तोलनीयम् । पात्रात्पतज्जलबिंदव एतान्स्पृष्ट्वा मलिनीकुर्युरिति भयात् । राजकुमारो मम गृहात स्थितं शौचकूपं प्रादर्शयत् । भृत्यस्तत्क्षणमेव बहिः स्थितमदर्शयत् । एतत्सर्वेण ममाश्चर्यं वा कोपो वा नाजायत यतो मयेदम् भ्यस्तचरमासीत् । भृत्याः स्वकर्तव्यं कुर्वन्ति स्म । राजेंद्रबाबुमहाशयस्य यथेष्टं तथाकार्षुः ॥

एतत्कुतूहलजनकादनुभवाद्राजकुमारशुक्लं न केवलमज्ञासिषम् । परं तस्मिन्मम गौरवं मवर्धत । ममेदानीं स्पष्टमभूयद्राजकुमारशुक्लो मम मार्गदर्शीति न खलु स्यान्मयैव सूत्रं बोढव्यमिति ॥

त्रयोदशोऽध्यायः

## साधुशीलो विहारी

मौलनामझरूलहक्कमहाशयो यदा लंडनपत्तने बारिस्टरपरीक्षार्थमधीते स्म तदा तस्य परिचयो मे जातः । पंचदशोत्तरैकोनविंशतिशतमिते वर्षे मोहमय्यां मिलितमहासभायां (तस्मिन् वर्षेऽसौ 'मुस्लिम'अधिवेशनाध्यक्ष आसीत्) मया दृष्टोऽयं पूर्वपरिचयस्य नूतनजीवकलां दत्त्वा यदा

यदाहं पटणानगरं गन्तास्मि तदा तदा तस्य गृह एवावतरीतव्यमिति निमन्त्रणं तेन दत्तमासीत्। तदाह्वानं स्मृत्वा तस्य ममागमनकृत्यं निवेद्य लेखं प्राहैषम्। स स्वीय-'मोटर'यानेनागत्य मया तस्यातिथ्यं स्वीकरणीयमिति निरबध्नात्। अहं तस्य मम कृतज्ञतां व्यक्तीकृत्य प्रथमतो लभ्यया लोहशकट्याहं चम्पारण्यं प्रति प्रेषणीय इति व्यज्ञापयम्। लोहशकटीविषयमृते मादृशाय्यजनस्य किमपि प्रयोजनं नासीत्। राजकुमारशुक्लमुखेन मया प्रथमं मुजफ्फरपुरं गन्तव्यमित्यसूचयत्। तत्सायमेव तत्र गन्त्री लोहशकट्यासीत्। तया मां प्रेषितवान् ॥

आचार्यकृपलानीमहाशयस्तदा मुजफ्फरपुरे स्थित । हैदराबादनगरं प्रति गमनात्प्रभृति तस्य विषयो मया ज्ञात । डॉ. चोईथराममहाशयस्तस्य महात्यागवृत्तिं विषयं तस्य जीवनस्य सरलतां तेन प्रदत्तद्रव्येण निर्मिताश्रमनगरीं च मम न्यवेदयत्। सोऽयं मुजफ्फरपुरस्य राजकीयप्रौढविद्याशालाया अध्यापकगणामेको मया तत्र गमनकाल एव कार्यं परित्यज्य स्थित । ममागमनं तस्य तन्त्रीद्वारा निवेदितमासीत्। लोहशकटी तत्र मध्यरात्रे गतापि बहुभिर्विद्यार्थिभिः सह मां शकटीवेदिकायामभ्युत्तस्थौ। तस्य स्वीयं गृहं नासीत्। अध्यापकमल्कानीमहाशयस्य मन्दिरे निवसति स्म। ततो मल्कानीमहाशय एव ममातिथ्यं चकार। तदानीं राजकीयसेवकजना मादृशस्य निवासप्रदानमासीदसाधारणो विषय ॥

आचार्यकृपलानीमहाशयो मम बिहारप्रदेशस्य तत्रापि तिरहुतप्रान्तस्यातिशोचनीयामवस्थां विवृत्य मदीयकार्यं कियत्कठिनमस्तीति न्यवेदयत्। बिहारवासिना तस्य च निकटसम्बन्ध आसीत्। मया बिहारप्रदेशगमनोद्देश पूर्वमेव जनस्य निवेदित आसीत् ॥

प्रातर्व्यापवादिनामेकोऽन्यो गणो मां द्रष्टुमागत । तेषां मध्ये रामनवमीप्रसादस्य स्थितिमद्यापि स्मरामि। यतस्तस्य श्रद्धा ममाकर्षकमभवत् ॥

तेनोक्तं यथा—भवत्कार्यमत्र मल्कानीमहाशयगृहे स्थित्वा कर्तुं न शक्यम्। अस्माकं कस्यचिद्गृहमागत्य स्थातव्यम्। गयाबाबुमहाशयोऽत्र प्रसिद्धो न्यायवादी। भवन्तं तस्य वचनात्तद्गृहं नेतुमहमत्रागत । सर्वेषामस्माकं राज्याधिकारिभ्यो भीतिरस्तीत्यस्माकं मननम्। परन्तु यथाशक्ति साहाय्यं कर्तुं सन्नद्धास्तिष्ठामः स्म। राजकुमारशुक्लेनोक्तमशेषं बहुशः सत्यमेव। अस्मत्प्रेष्या अस्मिन्दिने यत्र स्थिता समीचीनमभाषिष्यत्। मयानयोरुभयोर्बाबुव्रजकिशोरप्रसादो बाबु-राजेन्द्रप्रसाद इत्यनयोस्तन्त्रीद्वारा वार्ता प्रेषिता। तयोरागमननिरीक्षणमासीत्। ताभ्यां युष्मदपेक्षितसर्वविषयस्यापि निवेदनमपि च साहाय्यप्रदानं च भविष्यतीति निश्चितमेव। कृपया गयाबाबु-महाशयस्य गृहमागन्तव्यमिति ॥

अस्य सन्निधिप्रदाने गयाबाबुमहाशयस्य कष्टं भवेदिति क्षणमेकं दर्दिनमपि तस्य प्रार्थना नैव निराकृता। गयाबाबुमहाशयो मत्कोच पर्यहरत्। ततोऽहं तद्गृहे गत । सोऽयं तद्गृहस्याथ मनोहरं वासस्थानं प्रासरत् ॥

इदानीं ब्रजकिशोरबाबुमहाशयो दरभाङ्गानगराद् राजेन्द्रबाबुमहाशयश्च पुरीपत्तनादाजग्मतुः। ब्रजकिशोरबाबुर्मया लखनौपत्तने दृष्टः। ब्रजकिशोरबाबुमहाशय इव न दृष्टः। एतदा तेषु दृश्यमाना विहारिणो नम्रता सरलता साधुतासाधारणश्रद्धा च मम मनसि दर्शिता। एतेन मम हृदयं हर्षपूर्णमासीत्। विहारस्य यावदीमण्डल्यास्तस्मिन् विन्यस्तगौरवं दृष्ट्वा ममाश्चर्यमानदश्चाभूत्॥

अनया मित्रमण्डल्याह यावज्जीवमैत्र्या बद्धो भवन्नामिति शीघ्रमेवाहमपश्यम्। ब्रजकिशोरबाबुमहाशयो मह्यं वस्तुस्थितिं न्यवेदयत्। स किल निर्धिचनकृषीवलानां व्यवहाराश्चाव्यति स्म। यदाह तत्र गतस्तदा व्यवहारद्वयं चलति स्म। व्यवहारे जिते सति जनस्यैनावद् साहाय्यं दत्तमिति समाहितोऽभूत्॥

यद्येतेभ्यः कृषीवलेभ्यः शुल्कं न गृहीतं स्यत्कुटुम्बनिर्वाहाय द्रव्याभावादरिद्राणां सफलसाहाय्यं कर्तुं न शक्यत इति मिथ्यावगम्यते। तैर्गृह्यमाणशुल्कं बंगालविहारादेशेषु चलत्प्रमाणं च वीक्ष्याहं भ्रान्तोऽभवम्। स स्वाभिप्रायदानार्थं दशसाहस्रं रूप्यकं दत्ता इति मामवोचन्। सहस्रादून नैव गणनीयम्॥

एतद्विषयमधिकृत्य सदुद्देशपूर्वकं मया कृतं वाग्दंडनमथ सुहृदन्यथा न मत्वा श्रोत्रयोरगमयत्॥

मयोक्तं यथा—एतद्व्यवहारपरिशीलनानन्तरं ममेदं प्रतिभाति यन्न्यायस्थानानि न गन्तव्यानि। ईदृग् विवादं न्यायस्थानं प्रवेश्य न कोऽपि लाभं सपद्यते। कृषीवला एव कष्टपतिता भयाकुला यदा स्थिता न्यायस्थाने किं प्रयोजनम्। भीतिपरिहार एवास्य पारमार्थिकमौषधम्। 'तीनकठिया' पद्धतिर्बिहारप्रदेशाद्बहिर्यावन्निष्कासिता तावन्निश्शब्दमुपवेष्टुं न योग्यम्। दिनद्वयेनैतं प्रस्थातव्यमिति मनस्यकरवम्। परन्तु कार्यमिदं वर्षद्वयं गृह्णाति चेत्तावन्तं कालमत्र यापयितुं सन्नस्थितोऽस्मि। मम पुरोमार्गे किंचित्किंचिद् दृश्यते। परन्तु युष्मत्साहाय्यमपेक्ष्यत इति॥

बाबुब्रजकिशोरप्रसादोऽसाधारणस्थिरप्रज्ञया स्थित इत्यपश्यम्। शान्तेन तेनोक्तं यथा—अस्माकं यावच्छक्यं करिष्यामः। परन्तु युष्माभिरपेक्षितं किमिति कृपया ब्रूथेति॥

एवं वयं मध्यरात्रपर्यन्तं भाषमाणा उपविष्टाः॥ उक्तं च मया यथा—शासनसंबद्धेन युष्मदीयपरिश्रमेण न मे किंचिदुपयोगो भविष्यति। मया लेखकाना द्विभाषिणां च साहाय्यमपेक्षितम्। कारागृहप्रवेशसंभवोऽप्यस्ति। परन्तु यद्यपि युष्माभिस्तदपायाङ्गीकारो ममेष्टोऽपि यूयं वियद्दूरगमनशक्तिर्युष्माकं स्यात्तावद्दूरमात्रं गच्छत। युष्मदुद्योगं विनिश्चितकालपर्यन्तं विहाय लेखककार्यस्वीकारोऽपि नाल्पो विषयः। अत्र भाष्यमाणं हिन्दीप्रातिकविभेदमवगन्तुं मम कष्टं भवति। कैथिभाषाया अथवा उर्दुभाषाया लिखितपत्राणि मम पठितुं

नायाति । तानि युष्माभिर्मासान्तरीकरणीयानि । एतत् सर्वस्यापि वेतन दातु न शक्यते । एतत्सर्वं प्रेमपूर्वक सेवाभावेन च करणीयमिति ॥

व्रजकिशोरबाबुमहाशय सर्वमेतत्तत्क्षणमेवावागच्छत् । स इदानीं मा स्वसहवासिभ्योऽप्येकैकशो नानाविधै प्रश्नैर्मां मोहयितु प्रवृत्त । मयोक्तस्य सर्वस्यापि फलितार्थं कियन्ति दिनानि सेवाकार्ये स्थातव्यम् । कियन्तो जना अपेक्ष्यन्ते । पर्यायश कार्यं करणीय वेत्याद्यत्र गन्तु प्रयेतिरे । एतदनन्तर न्यायवादिषु त्यागशक्ति कियती विद्यते इत्येतदधिकृत्य तानपृच्छत् ॥

पर्यन्ते ते ममैव रीत्या प्रत्यादिशन्यथास्मास्वेतावन्तो जना भवदुक्तप्रकारेण करिष्याम ॥ अस्माक यावन्ति दिनान्यावश्यकानि तावन्ति युष्मत्पार्श्वे स्थास्याम । कारागृहगमनमस्माक नूतनो विषय । तथाप्यानुकूल्याय प्रयतिष्यामह इति ॥

चतुर्दशोऽध्यायः

## अहिंसादेव्याः संमुखे

चपारण्यस्य कृषीवलाना परिस्थितिं विमृश्य तैर्नीलभूस्वामिना विषये निर्दिश्यमानान्यारोपणानि ज्ञातु ममोद्देशोऽभूत् । एतदर्थेऽह पर सहस्रकृषीवलान् द्रष्टुमावश्यकमासीत् । विमर्शारम्भणात्पूर्वमस्मिन्विवादे भूस्वामिना पक्ष ज्ञातु तत्प्रान्तविभागस्याधिकारिणो द्रष्टु चातिमुख्यमिति मया परिगणितम् । उभयोर्महाशय निवेद्य पत्राण्यलिखमुभावपि तस्मिन् काले मया द्रष्टुमागन्तव्यमिति मह्य न्यवेदयताम् ॥

भूस्वामिना सचस्य कार्यदर्शी निस्पष्टमेव त्व बाह्यो जन । भूस्वामिना कृषीवलाना च मध्य आगन्तु नास्ति कोऽप्यधिकार । तथापि यत्किंचिन्निवेदयितुमिष्यते चेल्लेखनद्वारा निवेचतामिति मामाह । मया तामद्विनयेन कार्यदर्शी प्रोक्तो यथाह बाह्यो जन इति न मन्ये । कृषीवला इच्छन्ति चेत्तेषा स्थितिगतीर्विचारयितु मम सपूर्णाधिकारोऽस्तीति । प्रान्तविभागस्याधिकारी च दृष्ट । स मा त्रासयितुमारब्ध । अपि च मया तिरहुतप्रात परित्यज्य गतव्यमित्यसूचयत् ॥

अह निरोद्धव्यश्चेन्मम बधन मोतीहारीस्थलेऽथवा चेतियास्थले जायमानमत्युत्तमम् । अतो मया तत् स्थलगमन त्वरया कर्तव्यमिति ॥

चपारण्य तिरहुतप्रातविभागस्यैक मडलम् । मोतीहारीस्थल च तस्य मुख्यपत्तनम् । राजकुमारशुक्लस्य स्थल बेतियास्थलसमीपस्थितम् । तस्यासमतात् स्थितकोठीकृषीवलास्त मडलेऽत्यतदरिद्रा बभूवु । मया ते द्रष्टव्या इति राजकुमारशुक्लस्य तीव्रेच्छासीत् । ममाभिलाषोऽपि तावत्प्रबल स्थित ॥

अतोऽहं तस्मिन्नेव दिने मम सहवासिभिः सह मोतीहारीस्थलं प्रति प्रस्थितः । बाबु-गोरखप्रसादः स्वगृहेऽस्मात्समाश्रयं ददौ । तैस्तु धर्मशाला बभूव । अस्माकं सर्वेषामपि तत्र स्थातुमवकाशः कष्टतर आसीत् । मोतीहारीस्थले प्रायः पंचमैल्दूरे वस्यचित् कृषीवलस्योपर्यत्या-चारप्रवृत्त इति वार्ता तद्दिनमेवागता । परेद्युः प्रातरस्माभिर्धरणीधरप्रसादेन सह गत्वा ■ द्रष्टव्य इति निश्चितमभूत् । तथा वयं गजमारुह्य तत्र प्रस्थिताः । यथा गुजरातदेशे वृषभशकटी साधारणा तथा चंपारण्ये गजः साधारण इति वक्तव्यम् । अर्धमार्गातिक्रमात्पूर्वमेव 'पोलीस' अधिकारिणः सेवक एकः पार्श्वमागत्य 'पोलीस' अधिकारिणो वन्दनानि न्यवेदयत् । तस्यार्थो मया ज्ञातः । धरणीधरबाबुमहाशयमग्रे पूर्वस्थलं प्रति गन्तुमनुज्ञाय सेवकेनानीताया भाटक-शकट्यामहमुपविष्टः । तदा सोऽयं चंपारण्यं परित्यज्य गन्तव्यमित्याज्ञापत्रं मम प्रदाय मां पूर्वस्थलं निनाय । आज्ञापत्रप्राप्तये मया हस्ताक्षरं कर्तव्यमित्युक्तोऽहं चंपारण्यस्य कृषीवलानां स्थितिगते परिशीलनपर्यन्तं चंपारण्यपरित्यागे ममोद्देशो नास्तीत्यलिखम् । एतदनन्तरं मया बहिष्कारनिग्रहो धिक्कृत इति परेद्युरेव न्यायस्थाने विचारणायाज्ञापत्रमागतम् ॥

अहं सर्वरात्रं जागरितो भूत्वा पत्रलेखने बाबुव्रजकिशोरप्रसादस्यानुशासनप्रदाने च कालमयापयम् । प्रतिबोधनपत्रं आह्वानपत्रं चेत्युभयोर्वृत्तान्तो दावाग्निवत् प्रसारितः । तस्मिन्दिने मोतीहारीस्थले केनाप्यदृष्टपूर्वं दृष्टमिति मयावगतम् । गोरखबाबुमहाशयमंदिरं न्यायस्थानं च जनैः पूर्णमासीत् । सौभाग्यवशान्मया रात्रावेव सर्वं कार्यं समाप्तमासीत् । अतो जनसमूहं निरोद्धुं साध्यमासीत् । मम सहवासिभिरत्यन्तसाहाय्यमर्पितम् । जनानां नियन्त्रणे त उद्युक्ता यतः सर्वत्रगामिनं मां जनसमूहोऽनुसरति स्म । मंडलस्याधिकारी 'मैजिस्ट्रेट' 'पोलिस सुपरिंटेंडंट' अपि चाहमेतदस्मन्मध्ये काचिन्मैत्री उदियाय । मदुपरि प्रयुक्तप्रतिबोधनपत्रेत्यादीनि मया शासनानुरोधेनैव विरोधयितुं शक्यान्यासन् । एतत्प्रति मया ते सर्वे स्वीकृताः । अधिकारिणां विषये मम वृत्तमनिर्वचनीयमासीत् । अहं तान् व्यक्तिगत्यानविरुद्धवास्तेषामाज्ञाया सविनयं विरोधनमित्येतेषामवगतमासीत् । एवं तेषां मनः परिवृत्तम् । अतो मपीडनं परित्यज्य जनसमूहस्य नियन्त्रणाय मम सहवासिना च साहाय्यं सतोषेणोपायुज्यत । परन्तु स्वाधिकारः सर्वोऽपि शिथिलीभूत इत्येतेन तद्दृष्टेर्व्यक्तमासीत् । जनास्तत्क्षणे दण्डभयं त्यक्त्वा स्वेषां नूतनमित्रस्य प्रेमशक्तिं प्रणेमुः ॥

चंपारण्ये मम कस्यापि परिचयो नासीदिति स्मर्तव्यम् । कृषीवलाः सर्वेऽनभिज्ञाः । चंपारण्यं गंगानद्या उत्तरे बहुदूरे हिमगिरिपर्यन्तस्य पादे नेपालस्यातिसमीपस्थित्या भारतखंडस्येतर-भागेन सपर्कशून्यमासीत् । तस्मिन् प्रान्ते महासभाया नामापि नावगतमिति वक्तुं शक्यम् । श्रुतमहासभानामधेया अपि ता प्रवेष्टुं तन्नामोच्चारयितुं वा भीत्या पश्चाद्भवन्ति स्म । परन्त्वद्य महासभा तत्सम्याश्च महासभाया नाम्ना न यद्यप्यत्र तवास्तविकरीत्या तत्प्रान्तं प्रविष्टा ॥

मम सहवासिना सूचनामादाय किंचिदपि कार्यं महासभाया नाम्ना न करणीयमिति निर्धारितं मया। अस्माभिरपेक्षितं न कीर्तिः परं कार्यम्। यतो राज्याधिकारोऽपि च तत्सूत्रधारिणो भूस्वामिनो महासभां क्रोधेन तिरस्कारेण च पश्यन्ति स्म। तद्दृष्टौ महासभा नाम न्यायवादिनां वादविवादशासनस्य भगानन्विच्याक्रमकार्यमार्गेन पावकौपनस्थानायकलस्याकृत्यानि। व्यवहारचातुर्यमाषाढभूतिकपटविद्यैषा सर्वेषामपि जन्मभूमिः। अस्माभिस्तदुभयोरप्युक्तयोर्यो निष्कासनीय आसीत्। अतोऽस्माभिर्महासभाया नाम न प्रकाशितम्। कृषीवलादिजनानां महासभाया नाम श्रुतवाया स्थितिरपि न वक्तव्येति निरचैष्म। तैर्महासभाया अन्तःकरणं ज्ञात्वानुसृतं सम्यक्। अक्षरश एतदवलम्बनमपेक्षितमित्यस्मदाशयोऽभूत्। अतोऽस्मदागमनात्पूर्वं भूमिका साधयितुं महासभाया पक्षमाश्रित्य गूढचारा इतरे वा न प्रेषिताः। राजकुमारशुक्लस्य परं सहस्रकृषीवलानां हृदयमनगाहितुं न साध्यमासीत्। तन्मध्ये किंचिदपि राजकीयकार्यं न कृतम्। चपारण्याद्बहिः स्थितो लोकः तैर्नाज्ञात। तथापि यथ जन्मारभ्य संवृत्ताः सुहृद इव तेऽस्मानागमयामासुः। एवं रीत्या समन्मेलने ईश्वरस्याहिंसाया अपि च सत्यद्वयसाक्षात्कारोऽभवदित्युक्ते तदक्षरशः सत्यमेव नातिशयोक्तम्॥

एतत्साक्षात्कारसिद्धेर्मम को वाधिकार इत्यालोच्यमाने मया जनेषु प्रेमैकं विना नान्यद् दृश्यते। एतदपि किम्। अहिंसाया ममाचला श्रद्धा नान्यत्किंचित्॥

चपारण्ये नीतं तद्दिनं मम जीवने कदापि न विस्मर्यं भवति। तत्रत्यजनानां मम च तद्दिनमपूर्वानन्ददसुदिनम्॥

शासनानुरोधेन न्यायस्थानेऽहं विचारणीय आसम्। परन्तु वस्तुतो राज्याधिकार एवापराधिस्थाने स्थितः। प्राप्तविभागाधिकारिणो मदर्थं प्रसारितवागुराया राज्याधिकारं तदन्तः पातयामासुः॥

पंचदशोऽध्यायः

## व्यवहारो व्यपनीतः

विचारणा प्रारेभे। राज्याधिकारस्य न्यायवादी 'मॆजिस्ट्रेट' महाशय इतरेऽधिकारिणश्च दिग्भ्रान्ता स्थिताः। किं कर्तव्यमिति तेषां न प्रत्यभात्। व्यवहारं पुरस्ताद् यान्तिनि राजकीयन्यायवादी 'मॆजिस्ट्रेट' महाशयं निर्बध्नाति स्म। परन्त्वहं निवार्य चपारण्यं परित्यक्तुमित्याज्ञाया उल्लङ्घनापराधमहं समन्तुमिच्छाम्यस्मि। इत्युक्त्वा पुरस्ताद् मम साक्षिमन्त्रणं पठितवान् यथा—

'क्रि प्रो कोड'गतचतुश्चत्वारिंशदुत्तरशततस्य निबन्धनमवद्राभाज्ञामहमुल्लङ्घितवानिति प्रतिभाति खलु। अतिगभीरपरिणामवदेतद्वर्तनं विमित्यनुसृतमित्येतद् व्यतीकर्तुं न्यायस्थानस्यानुज्ञाया सक्षेपेण वक्तु प्रवृत्तोऽस्मि। एतदत्याधिकारिणा मम चाभिमतभेदविषय इति प्रतिभाति। जनसेवा राष्ट्रसेवा च कर्तव्येत्युद्देशेन मयास्मिन्देशे पादो न्यस्त। नीलिकाभूस्वामिनोऽस्माभि सह न्यायरीत्या न वर्तन्त इत्यत्रत्या कृषीवला वदन्ति। मयागागत्य कृषीवलाना साहाय्य कर्तव्यमिति निर्बध्यमानोऽहमागतोऽस्मि। अत्रत्यस्थितिगतीरविज्ञाय मया न किंचित् साहाय्य करणीयमासीत्। ततोऽह शक्य चेद्राज्याधिकारिणामपि च भूस्वामिनामाश्रय प्राप्यात्रत्यविषयानवगन्तुमागत। ममोद्देशान्तर नास्ति। मयात्रागमनेन कयापि रीत्या प्रजाशान्तिभग प्राणहान्यादयश्च भविष्यन्तीति न विश्वसनीयम्। एतादृशविषयेषु ममाधिकानुभवो विद्यत इति वक्तु शक्यम्। परन्तु राज्याधिकारिभिरन्यथा पर्यालोचितम्। तदीयकष्ट मम सपूर्णमेव विदितम्। तेषामागतसमाचारस्याधारेणैव तै प्रवर्तितव्यमित्यपि समन्ये। शासनानुरोधेन प्रवर्तमानाना प्रजानामहमेको मया प्राप्ताज्ञा पालनीयेति मनस प्रतिभातीत्येतत्सहजम्। अस्मिन् सदर्भे सवृत्तमपि तथैव। परमहमत्र येषा कृते आगतस्तेषा विषये मम कर्तव्यमुल्लङ्घ्य मया तथा करणीय नासीत्। अस्मिन् समये तेषा मध्यस्थितेनैव तेषा सेवा कर्तुं शक्येति मम प्रतिभाति। ततो मया स्वयमेव प्रतिनिवर्तितु न शक्यमासीत्। एतत्कर्तव्यसग्रामे मामेतज्जनमध्याद्बहिर्निष्कासनभार राज्याधिकारिणामुपरि धारणमात्र मम साध्य स्थितम्। भरतखडस्य सार्वजनिकजीवने मादृशै स्थानप्राप्तैरितरेषामुदाहरणप्रदानेऽत्यतजागरूकैर्भाव्यमिति मया ज्ञातम्। अद्य वयमतिसकीर्णराजकीयव्यवस्थायां जीवाम। ईदृश्या परिस्थितौ ममाप्रस्थितेषु सदर्भेष्वेष्वात्मगौरववता मनुष्याणा निरपायो मानकरो मार्गो मयावलबितस्तावदेक एवेति मम दृढो विश्वास आज्ञोल्लघनफल दण्ड। नि शब्दमेव सोढु स मार्ग। मम विधीयमानदण्ड कयापि रीत्या न्यूनीकर्तुं न मया भाषण कृतम्। मयाज्ञोल्लघनकारण शासने तिरस्कारबुद्धिर्न। तथानुष्ठान ममात्मशासकमुच्चतरनियममन्तरात्मन आज्ञा पालयितुमेवेति निवेदनमेतद्भाषणस्योद्देश इति॥

अद्य विचारणा परोगमयितुमवश्यकमेव नासीत्। परन्तु न्यायाधिपतिना राजकीयन्यायवादिना चैतन्निवे भाषण न निरीक्षितमिति निर्णय पठितुमन्यद्दिन निरचायि। एतदन्तरेऽस्माभि सर्वे विषया पटणापत्तनसुहृद्भ्य पडितमदनमोहनमालवीयेभ्य इतरेभ्यश्च तन्त्रीद्वारा प्रकाशिता॥

मम विहित दण्डमवगन्तु न्यायस्थानगमनात्पूर्वमेव न्यायाधिपतिर्मम पत्रमलिखद्यथा विहारप्रातस्य राज्याधिपतिर्ममोपरिस्थितव्यवहार विरमयितुमाज्ञापयदिति। मडलाधिकारी च पत्रमलिखद्यथा—अह कृषीवलाना परिस्थितिविमर्श कर्तुं नास्ति कोऽप्यतराय। अधिकारिणसकाशात् सर्वसाहाय्य लप्स्यत इति। एतावच्छीघ्रमीदृश परिणामो भविष्यतीति न केनाप्यस्माकं निरीक्षितम्॥

अहं मण्डलाधिकारिणं हेकोकमहाशयं गत्वापश्यम्। न्यायतत्परः सज्जन इव सोऽदृश्यत। तेनोक्तं यथा मयापेक्षितपत्राणि द्रष्टुं पृच्छेत्। यदापेक्ष्यते तदा द्रष्टुमागम्यतामिति। एवं देशस्य विनयेन शासनभङ्गे प्रत्यक्षं प्रथमो वस्तुपाठो लब्धः। तस्मिन् स्थले वृत्तपत्रिकासु चैतद्विषयमधिकृत्य चर्चा प्रवृत्ता। मम विमर्शकार्यमनिरीक्षितप्रकटनासौकर्यं प्राप। एतद्विमर्शकार्यस्य राज्याधिकारस्तटस्थो भवितुमावश्यकमासीत्। परन्तु वृत्तपत्रिकाणां वार्तानिवेदकानां च सम्पादकीयलेखनानां चावलम्बो नापेक्षित। वस्तुतश्चम्पारण्यगृहपरिस्थितिस्तथा सूक्ष्मक्लिष्टाभवद्यथा प्रकटीका वार्तावर्णननिवेदनानि वा मम प्रसाध्यमानकार्यं साकल्येन विनाशयितुं शक्यमासीत्। ततो मया लिखितं वृत्तपत्रसम्पादकानां यथा—प्रकटयितुमावश्यकान्सर्वान् विषयान् युष्माकं प्रेष्यामि परिस्थितेर्निरन्तरं परिचयं कारयिष्यामि। कृपया वृत्तान्तनिवेदकान् प्रेषयितुं न परिश्रमं वोढुमर्हथेति॥

राज्याधिकारिणो मामत्र स्थातुं न निवारयन्तीति दृष्ट्वा चम्पारण्यस्य भूस्वामिनः क्रुद्धा इति मया विदितम्। अधिकारिणामपीदं मुक्तं विवृत्य नोच्यमानमपि नेष्टमासीदित्यस्माभिर्ज्ञातम्। ततो वृत्तपत्रेष्ववास्तवविपरीताभिप्रायप्रदा वृत्तान्ताः प्रकटीकृताश्चेत्तनस्तेषां क्रोधज्वालाया इतोऽप्युद्रेकगमनसंभवः स्थितः। अपि च ते क्रोधमेतं ममोपर्यनपसार्य वराकाणां भयभीतानां कृषीवलानामुपर्यपसारयन्तीति न कोऽपि संशयोऽभवत्। एतेन मम सत्यशोधनस्य महाप्रत्यूहो लगति स्म॥

एतावज्जागरूकतया स्थितेऽपि मयि भूस्वामिनो मम विरुद्धा अतिविषमयं क्षोभमुपानयन्त। मम सहकारिणां च विषये नानाविधान्यनृतानि वृत्तपत्रिकासु प्रकटीबभूवुः। परन्त्वहमतिजागरूकतया स्थितत्वात्केवलाल्पविचारमारभ्य सर्वविषयेषु सत्यस्यैव साधितत्वात्तैर्मुक्तबाणा निरर्थका बभूवुः॥

व्रजकिशोरबाबुमहाशयस्योपरि वृत्तिनिक्षेपे भूस्वामिनः स्वप्रयत्नान् सर्वान् व्ययीचक्रुः। परन्त्वधिकं च तन्निन्दाधिकं च लोकानां गौरवमित्यारोहति स्म॥

एतादृशसूक्ष्मसन्दर्भे इतरप्रान्तेभ्यो नायकानामाह्वानमुचितमिति न मया [illegible]। पण्डितमालवीयो यदापेक्ष्यते तदा निवेद्यताम्। अहमागमिष्यामीति वाचं प्रेषितवान् [illegible] नाक्लेशयम्। एवमयं संग्रामो राजनीयस्वरूपं यथा न प्राप्नुयात् तथा मया [illegible] नायकेभ्यो मुख्यवृत्तपत्रेभ्यश्च वृत्तान्तः प्रेष्यते स्म। इदं प्रकटनाय न [illegible] फले राजकीये सत्यपि कारणं राजकीयं न भवति चेत्तस्य राज[illegible]दशास्वल्पमप्रदाय तस्मिन्निजपरिश्रमिणो स्थापिते तदारम्भ प्राणोऽपि [illegible] वा विषयो भवतु निष्कामबुद्ध्या कृतया [illegible] भविष्यतीति चम्पारण्यसंग्रामो निदर्शनम्॥

षोडशोऽध्यायः

# सेवाक्रमः

चंपारण्यविमर्शे यत्पूर्णेतिहासकथन तात्कालिकदृष्टीकल्पना चरितस्य लेखनमेव भविष्यति। इदमेषु प्रकरणेषु न साध्यम्। चपारण्यस्य विमर्श सत्याहिंसोपेतो धीरतर प्रयोग आसीत्। अनया दृष्ट्याहं केवलं वर्णनायोग्यमेवं प्रतिसप्ताहं लेखितास्मि। इतोऽप्यधिक-विवरणमपेक्ष्यते चेद्बाबुराजेंद्रप्रसादेन हिन्दीभाषायां लिखित चपारण्यस्य सत्याग्रहेतिहास एव पठनीय ॥

एतदध्यायस्य विषय पर्यालोचयाम। बराको गोरखबाबुमहाशयो वस्तुतो गृह न परित्यज्यते चेत्तस्य गृहे विमर्शं कर्तुं न शक्यमासीत्। मोतीहारीस्थलजनोऽस्मान्मेक गृह भाटकेन प्रदातुमद्यापि भीतिग्रस्त एव स्थित । तथापि ब्रजकिशोरबाबुमहाशय स्वचातुर्येण गृहमेक भाटकेन प्रदापयामास। तस्याङ्गणे विशाल अनावृतप्रदेश आसीत्। वय तद्गृह गत्वा स्थिता ॥

एतत्कार्यानुष्ठान द्रव्य विना साध्यमिति न प्रतिभाति स्म। ईदृशकार्याय प्रजाभ्यो द्रव्ययाचन न पद्धतिरासीत्। ब्रजकिशोरबाबुमहाशयस्तन्मित्राणा च बहवो न्यायवादिन आसन्। एते सदर्भागतेषु स्वय वा स्वमित्रेभ्यो वा द्रव्यमुपस्थापयन्ति स्म। ते स्वय स्वसदृशाद्यपेक्षित-प्रदाने समर्था सन्तो लोकयाचन कथं कार्यमिति तेषा भावनेति प्रतिभाति। चपारण्यस्य कृषीवलेभ्य एकापि काकिणी न स्वीकर्तव्येति मनसि निश्चित मया। तथा स्वीकारेऽपार्थ कुर्वन्तीति निश्चितम्। एतद्विमर्शनाय हिन्दुस्थाने सर्वतो द्रव्यदानाय प्रार्थना नैव कर्तव्येति च दृढमवधारितम्। तथानुष्ठानेन तस्याखिलभारतस्वरूप राजकीयवर्णश्च प्राप्त आयात स्म। मोहमयीनगरस्य कानिचिन्मित्राणि रूप्यकाणा पचदशसहस्र प्रदातुमागता। कृतज्ञतापूर्वक तन्निराकृत मया। चपारण्याद्बहिर्निवसद्भ्योऽनुकूलस्य बिहारनिवासिभ्यो ब्रजकिशोरबाबुमहाशयस्य साहाय्य प्राप्य मासलभ्य द्रव्य सगृहीतोऽप्यधिकमपेक्षित चेन्मम मित्र डॉ. प्राणजीवनदास-महेतामहाशय प्रष्टव्य इति निश्चयम्। यावदावश्यक तावद्द्रव्य प्रेषयिष्यामीति डॉ महेता-महाशयस्तत्क्षणमेव समैने। एवमस्माक द्रव्यमवद्धा चिंता न कार्यासीत्। चपारण्यस्या-किंचनलोचित यावत्साध्य तावत्प्राप्य मितव्ययेन वर्तनीयमित्यस्माभि सकल्पितत्वादस्माकमधिक द्रव्यस्यावश्यकताप्रसगो नासीत्। वस्तुतोऽस्मानमधिकद्रव्यस्यावश्यकता कथं नासीदिति पर्यन्ते दृष्टम्। सर्व मिलित्वा त्रिसाहस्ररूप्यकाणा व्यय कृत इति मे प्रतिभाति। यावदह स्मरामि तावता यत्क शक्यमस्माभि सगृहीतधनाच्च पचशतानि रूप्यकाणा रक्षितानीति प्रतिभाति॥

मम सहवासिनां जीवनवैचित्र्यं प्रारम्भे निरतविनोदविषय आसीत् । प्रत्येकस्य न्यायवादिन एको वाचक एको भृत्यश्चासन् । तस्मात्तेषां प्रत्येकं पाकशालाप्यासीत् । असकृन्मध्यरात्रे भुञ्जते स्म । यद्यपि ते स्वीयं व्ययं स्वयमेव सहन्ते स्म तथापि तज्जीवनक्रमे नियमराहित्यमुपद्रवं ददौ । तथापीमां वेलां वयं गाढमित्राण्यभूमेत्यतो वैमनस्यमस्माकं न समभूत् । मम हास्यकुचोद्यानि नान्यथाशासिषुः । पर्यन्ते निश्चितं यथा भृत्या निष्कासनीयाः सर्वेषामेकस्यैव पाकशालया भवितव्यं सर्वैः क्लृप्तकाले कार्याण्यनुष्ठातव्यानीति चेति । सर्वेऽपि शाकाहारिणो नाभवन् । द्वाभ्यां पाकशालाभ्यां व्ययोऽधिकाधिको भवति स्म । तस्मात्सर्वेषामेकैव शाकाहारस्य पाकशाला भवेदिति निश्चितम् । साधारणमेवाहारं सर्वेऽपि गृह्णीयुरिति नियमयितुमावश्यकमित्यपश्यन् ॥

अनया व्यवस्थया न केवलं व्ययो न्यूनोऽभवत्परं कालोऽप्यल्पीयान् जातः । कार्यशक्तिश्च रक्षिताभूत् । अस्माकमेतदावश्यकतापि बहुलासीत् । कृषीवलाः स्वभाषणानि दातुं गणशः उपस्थिताः । तेषां सहचराणां सैन्यं तद्गृहं आगतागमनाभ्यामथ जनैरुल्लसितानि बभूवुः ॥

दर्शनार्थिभ्यो मां रक्षितुं मत्सहवासिनां साहसमसकृद् व्यर्थीबभूव । निश्चितकाल एव दर्शनं प्राप्यमासीत् । षट्सप्त वा स्वयंसेवका भाषणानि लेखितुमावश्यका आसन् । तदानीमपि कतिभिश्चिद्भाषणानि प्रदातुमवकाशं विना सायं गन्तव्यमापतितम् । एतानि विज्ञापितानि सर्वाण्यपि सारभूतानि न बभूवुः । तेषां बहूनि पुनरुक्तान्येवासन् । परन्तु लोकस्तीव्यन्तरेण समागतान्यासन् । अस्मिन्विषये तेषां मनोभावोऽपि मया ज्ञायते स्म ॥

उक्तलेखने कतिपये नियमा अनुसर्तव्या आसन् । प्रत्येकं कृषीवलो नानाविधैः प्रश्नैर्मोहनीय आसीत् । ये केचिदनुत्तीर्णाः परीक्षायां तेषां विज्ञापितानि त्यज्यन्ते स्म । एतत्सर्वं अधिकं कालमपैक्षत । परन्तु बहूनि लिखितोक्तानि सत्यसिद्धानि परिणेमुः ॥

एषां भाषणानां लेखनकाले गुप्तचराणामेकः सर्वदोपस्थितः । तस्योपस्थानं परिहर्तुं शक्यमासीत् । परमस्माभिः पूर्वमेव निर्धारितं यथा गुप्तचराधिकारी न निवारणीयः । विनयेन दृष्ट्वा निवेदनीयवृत्तान्तमशेषं निवेदनीयमिति । एतेनास्माकं न किमपि नष्टमभवत् । नैतावदेव गुप्तचराधिकारिणः पुरस्ताद्भाषणानां लेखनं कृषीवलानां निर्भयताया अन्यतममेव कारणमासीत् । अस्याधिकारिण उपस्थानादेव कृषीवलानां भयं पलायितम् । अन्यत्र कृषीवलेभ्योऽतिशयोक्तिं कर्तुं सहजो निरोधोऽभवत् । लोकान् वागुरया पातयितुमेव गुप्तचराधिकारिणां कर्तव्यमित्यतः कृषीवलैर्जागरूकैर्भवितव्यमासीत् ॥

भूस्वामिनो न क्रोधनीया इति ममेष्टमासीत् । सप्रश्रयं तेषां मन आवर्जनीयमित्यपि ममेष्टम् । अतो येषां येषां विषये महाप्रमादस्यारोपं कुर्वन्ति स्म तेषां तेषां भूस्वामिनां पत्रं लिखित्वा ते मया दृश्यन्ते स्म । उपगम्याहं भूस्वामिनां सभां गत्वा तेषां पुरः दर्शनं गत्वा

सर्वकथा युक्त्वा तैस्य त्रिपय कीदृग्दृष्ट्या वीक्ष्यते इयसगम्यागत । कतिपये भूस्वामिनो मयि द्वेप निदधु । कतिपये मामश्रद्धयापश्यन् । चतु पञ्चा जना मा विनयेन दृष्टवतो बभूवु ॥

सप्तदशोऽध्यायः

# मम सहचराः

ब्रजकिशोरबाबुमहाशयो राजेन्द्रबाबुमहाशयश्चेत्यनयोर्युगल नैव लभ्यमिति वक्तु शक्यम् । तयोर्मयि प्रेमातिशयात्त साहाय्य विनाहमेकपदमप्यग्रे न यतेशयम् । तयो शिष्या अथवा सहचरा 'शम्भुबाबु – अनुग्रहबाबु – धरणीबाबु – रामनवमीबाबु' इत्यादिन्यायवादिन सदा मया सहैव वसन्ति स्म । विंध्याबाबु – जनकधारीबाबुमहाशयौ तदा तदाग्य साहाय्य चक्रतु । एते सर्वेऽपि बिहारिण एव । कृषीवलाना भाषणलेखनमेव एषा मुख्यकार्यमासीत् ॥

अध्यापक कृपलानीमहाशयोऽस्माभि सह कथ न मिलेत् । यद्यप्यय सिंधी जन्मारभ्य बिहारिणोऽप्यधिकबिहारी भवति । प्रान्तप्रामस्य कोऽपि वा भवतु । त स्वीयमिव कृत्वा तत्रत्यैर्जनै समेल्नशक्ता अल्पा एव जना मया दृष्टा । ईदृग्जनेषु कृपलानीमहाशय एक । सोऽन्यप्रान्तीय इति वक्तु न शक्यमासीत् । स एव मम द्वारपालक आसीत् । तत्र मद्दर्शनाकाङ्क्षिभ्यो जनेभ्यो मा रक्षितुमेव ता वेला स्वपरमपुरुषार्थ चकार । एतद्द्वार निजविनोदवाग्बाणाना प्रयोगेणान्यद्द्वार अहिंसामतात्रासनै त्रासनेनैव जनान्निरुरोध । साय निशामुखेऽन्धकारे प्रवर्तमाने सति शिक्षकवृत्ति वहन् स्वसहचरानितिहासिकपाठै टीकाभिश्चानदयन् भीरुस्वभावो य कश्चिदागतश्चेत् तस्मिन्शौर्यमुपादयामास ॥

मौलानामजहरूलहकमहाशय आवश्यके सत्यागतृणा पङ्क्त्या स्वनामधेय ददौ । स प्रतिमासमेकद्विवारमागत्यास्मान् दृष्ट्वा गच्छति स्म । तदानीमसौ स्वजीवन वैभवेनातिशोभया च चकार । तस्यापि चाधुनिकमरलजीवनस्य च भूम्याकाशयोरिवान्तर भवति । तस्य लौकिकाचार दृष्ट्वा बाह्यजनस्य प्रकारांतरेण यद्यपि ■ प्रयमात् तथाप्यस्माभि सह मिलितत्वात् सोऽप्यस्माकमेक इति गण्यते स्म ॥

बिहारे योग्यशिक्षणव्यवस्था विना चिरकालस्थायि कार्यं न साध्यमिति मया ज्ञातम् । कृषीवलानामज्ञान करुणाजनकमासीत् । ते निजापत्यानि परिभ्रमितुमनुजानन्ति स्म । नो चेद्धर्माणकार्यं प्रातरारभ्य साय यावन्नीलिक्षेत्रेषु व्यापारयन्ति स्म । तत्रांऽ प्राय दिनस्य वेतन पुरुषस्य सार्धाणकद्वय स्त्रिय सार्धैकाणको बालकस्यार्धाणक एव स्थितम् । दिने दिने

चतुराणकान् य सपादयति सोऽन्यतारदृष्टशालीति गण्यते स्म। मम सहचराणा मतमादायाह षड्ग्रामेषु प्राथमिकशाला उद्घाटयितु निरचैषम्। ग्रामस्थै सहासीदय नियमो यत्तै शिक्षकाणामाहारो वासस्थान च देयम्। इतरव्ययोऽस्माभिर्देय इति। ग्रामस्थाना हस्ते पणक नैवासीत्। परन्त्वाहारसामग्रीमुपस्थापयितु तेषा साध्यमासीत्। वस्तुत पूर्वमेव तैर्निवेदित धान्यादिपदार्थान् क्रय दातु सज्जस्थिता स्म इति ॥

शिक्षका कुतो लभ्या। इयमेकसमस्या स्थिता। अल्पवेतनेनाथवा वेतन विनापि धार्यकर्तार शिक्षकास्तत्र दुर्लभा बभूवु। सामान्यशिक्षकाणा हस्ते शिशूनामर्पण न मेऽभिमतमासीत्। तेषा साहित्यप्रवीणतापेक्षया चारित्रसपन्नता मुख्यतरा बभूव ॥

अतोऽहमेतच्छिक्षणकार्यार्थे स्वयसेवका अपेक्ष्यन्त इति सार्वजनिकविज्ञापना प्रकटीकृतवान्। एतद्विज्ञापनायास्तत्क्षणमेवागतान्युत्तराणि। श्रीगगाधररावदेशपाडेमहाशयो बाबासाहेबसोमण-पुडरीकमहाशयौ प्रेषयामास। मोहमयीत श्रीमती-अवतिकाबाईगोखले-पुण्यपत्तनात् श्रीमती–आनदीबाईवैशम्पायनमहाशया चागते। मोतीलाल-सुरेंद्रनाथोऽपि च मम पुत्रो देवदास एतान्प्रेरयितुमाश्रमस्य पत्रमलिखम्। अस्मिन्नेव समये महादेवदेसाईमहाशयोऽपि च नरहरिपरीखमहाशयो एतौ भार्याभि सहागत्यास्माभि सह मिलितौ। कस्तुरीबाईमहाशयाप्येतत्कार्यार्थे समाहूता। एतान् सर्वान्मिलित्वा प्रबल सैन्यमेवासीदिति वक्तव्यम्। श्री अवतिकाबाई-महाशयापि च आनदीबाईमहाशया सुशिक्षिते आस्ताम्। परन्तु श्री. दुर्गादेसाई-श्री. मणिबेनपरीख–इत्येतयोर्गुजराती अक्षरज्ञानमात्रमासीत्। कस्तूरीबाईमहाशयायास्तदपि नासीत्। एता महिला बालकाना हिन्दीभाषाया पाठ कथ शिक्षेरन् ॥

ताभिर्बालकाना व्याकरणस्य पठनस्य लेखनस्य गणितस्य च शिक्षणापेक्षयाधिक स्वच्छता सद्वृत्त च शिक्षणीयमिति निरीक्ष्यते। इहमुक्ताक्षरज्ञानविषयेऽपि गुजराती हिन्दी-मराठी-भाषाणा मध्ये तैरकात यावत्तावदतर नास्तीति प्राथमिकवर्गेष्वक्षरमालाया गणितस्य च शिक्षण दुष्करमिति न्यवेदयम्। अस्य परिणामप्रकारेणैताभिर्महिलाभि शिक्ष्यमाणवर्गा अत्युत्कृष्टमेव चलन्ति स्म। तासा स्वानुभवेनात्मविश्वास कार्ये उत्साहश्च सजाता। श्री. अवतिकाबाई-महाशयाया शालादर्शविद्यालयोऽभूत्। सा पाठशालायै स्वा मानमेवार्पयत्। निजाद्वितीयगुणान् सर्वानप्यस्मिन् कार्ये उपयुयोज। एतन्महिलाद्वारा ग्रामस्त्रीणा जीवनस्य परिवर्तनमपि स्वल्पश साध्यमासीत् ॥

परन्तु प्राथमिकविद्याभ्यासस्यानुकूल्यता निर्माय परित्यागो मम नेष्ट आसीत्। ग्रामा अशुचयोऽभवन्। मार्गा अमेध्यपूर्णा आसन्। कूपान् परित पङ्कस्थित्या दुर्गन्धमायाति स्म। गृहाणामगणान्यसहोन पूतिगन्धेन पूरितान्यभवन्। शौचरक्षण महतामपि शिक्षणमावश्यकमासीत्।

वीथ्यङ्गणानि च समार्जयामासु । कूपान् शोधयामासु । इतस्ततः स्थितानि गर्तान्यपूरयन् । ग्रामस्था स्वयमेव स्वयंसेवकान् व्यवस्थापयितुं प्रेम्णा प्रेरयामासु । एतैर्मधुरैरनुभवैरौदासीन्यप्रयुक्ता कटवोऽनुभवा मर्दिता न बभूवुरिति न । कतिपये ग्रामजना एवविध कार्यं तेषा नैष्टमासीदिति स्पष्टमूचुरित्यह स्मरामि ॥

इत पूर्वं बह्वीषु सभासु मया वर्णितस्यानुभवस्यैतस्य निर्गमनगम न स्यात् । 'भीतिहरवा' इति एक स्वल्पो ग्राम । तत्रास्मदीया शालासीत् । तत्समीपस्थितमन्य ग्राम यदाह गतस्तदा बहुमलिनानि वासासि धारयन्ती स्त्रीरपश्यम् । ता स्ववासासि कस्मान्न क्षालयन्ती-ति विचारयेति कस्तूरबाईमहाशयामनुनयम् । सा तासामेकया सह भाषमाणा तया स्वकुटीर नीत्वा पश्यतु भवती, अत्रान्यद्वासो निवेशयितु पेटिका वा कुसूलो वा नास्ति । मया धार्यमाणा एकैव 'साटी' मलिनस्टेऽस्ति । कथ मया सा क्षालनीया । महात्माजी ब्रूहि । अन्या साटीमानीय देहीति । ततोऽह प्रत्यह स्नात्वा धौतवस्त्र धारयामीति प्रतिजानं इत्यवर्वीत् ॥

इदकुटीरमिदमेकमेव न । भारतवर्षस्यानेकग्रामेषु एतादृशानि सन्ति । भरतखण्डस्य नि सत्यकुटीरेषु वस्तुशून्या मानरक्षणाय शरीरोपरि छिन्नवस्त्र निवेश्यान्यद्वासो विना जीवन कुर्वन्ति॥

अनुभवान्तरमत्र निवेदयिष्यामि । चपारण्ये तृणवेणूना समृद्धिरस्ति । भीतिहरवाग्राम एत सामग्रीमुपयुज्य शालाकुटीर निर्मितमासीत् । कोऽपि समीपस्थितभूस्वामिना मत्सरेण स्यात् । तस्य कुटीर रात्रावग्निसाच्चकार । कुटीरान्तरस्य तृणवेणुभिर्निर्माणमनुचितमिति प्रत्यभात् । श्रीसोमणमहाशयो योग्यमेक मन्दिरमेव निर्मातुमुचितमिति निरचैषीत् । तस्य परिश्रम दृष्ट्वा इतरे बहवस्तेन सह मिलिता । एवमेकमिष्टिकागृहमेव शीघ्र सिद्धमभूत् । तस्य दहनभीतिर्नासीत् ॥

एव स्वयसेवकानामेषा शालाग्रामनैर्मल्यप्रवर्त्तस्था औषधोपचार इत्येतैर्ग्रामजनस्य विश्वास गौरव च सपाद्य ग्रामजनस्योपरि स्वप्रभाव प्रसारयितु शक्ता बभूवु ॥

परन्त्वेतद्ग्रामोज्जीवनकार्यं चिरस्थायिनोऽस्ति भारस्योपरि स्थापयितुमाशा मम न सिद्धेति विषादपूर्वक समन्तव्यम् । स्वयसेवका स्वल्पकालमात्र स्थानुमशका । बहिर्ग्रामादधिको जनो न लब्ध । सदा प्रतिरूढ विना कार्यकर्ता जनो बिहारेऽपि नालभ्यत । चपारण्ये मम कार्य-समाप्तेरनन्तरमेवान्यत्र सञ्जीभरकार्यं मामाकृष्य जग्राह । तथापि चंपारण्ये चतु षण्मासपर्यन्त कृतकार्यप्रभावभूयस्तोऽद्यापीति चेत्तस्य प्रभावोऽद्याप्येकस्मिन्नन्यस्मिन्वा रूपे दृश्यते ॥

ते सर्वेऽपि चर्मरोगेण ग्रस्ता बभूवु । अतो यावच्छक्यं ग्रामनैर्मल्यकार्यं करणीयम् । तेषां जीवनस्य प्रत्येकभागोऽपि प्रवेष्टव्य इति निर्धारितमभूत् ॥

एतत्कार्यस्य वैद्यसाहाय्यमावश्यकमासीत् । दिवंगत डॉ. देवमहाशयोऽस्मत्पार्श्वं प्रेषणीय इति भारतसेवासंघजन प्रार्थित । वयमासुहृद्दोऽभूम । सोऽस्मानुपागत्य षण्मासान् कार्यं कर्तुं समेने । शिक्षका सर्वा स्त्रिय पुरुषाश्च तस्य वशे स्थित्वा कार्यं चक्रु ॥

भूस्वामिनामारोपणानि राजकीयविचाराश्च मनसि कृत्वा न प्रवर्तनीयमिति ते सर्वेऽपि बलवन्निर्बद्धा । यत्किंचित्सकष्टं निवेदनीयं चेत् स जनो मत्पार्श्वं प्रेषणीय आसीत् । केनापि नियतमार्गं परित्यज्य न चलितव्यमासीत् । मम सुहृद सर्वेऽपि एतान्नियमान् स्खलितं विना चालयामासु । नियमातिक्रमणसदर्भो नैकोऽपि मया स्मर्यते ॥

## अष्टादशोऽध्याय

# ग्रामान्त प्रवेशः

**प्रत्येकशालानिर्वहणमेकस्याः** स्त्रिय एकस्य पुरुषस्य च वशे स्थापितमभूत् । एभि स्वयं सेवकैरौषधोपचारस्य ग्रामनैर्मल्यस्य च व्यवस्था द्रष्टव्यासीत् । स्त्रीवर्गसबद्ध कार्यं स्त्रीभिरेव कर्तव्यमासीत् ॥

औषधोपचारस्य कार्यं सुकरमासीत् । एरण्डतैलं ज्वरगुलिकागंधकस्य लेप एतान्यौषधानि स्वयंसेवकाना वशे भवन्ति स्म । रोगिणो जिह्वाया श्वेतायामथवाजीर्णे निवेदिते तस्यैरण्डतैलमदीयत । ज्वरपीडिताना प्रथम किंचिदेरण्डतैलं दत्त्वा तदनु ज्वरगुलिका दीयते स्म । व्रणकण्डूतिभि पीडिताना रोगस्थानं क्षालयित्वा तदुपरि गंधकलेप चक्रु । न किमप्यौषधं गृहं नेतुमनुज्ञासीत् । अधिकरोगस्थलेषु डॉ. देवमहाशयस्य निर्देशानुसारमाचेरु । स प्रतिकेन्द्रं सप्ताहे सकृत्सकृत् निश्चितदिने गच्छति स्म ॥

यद्यपि जना एतन्सुकरं चिकित्साक्रममुपायोजयन् । तत्र प्रसृता रोगा अल्पाल्पा बभूवु । तन्निवारणायैषा चिकित्सा प्राय पर्याप्ता बभूव । महावैद्याना साहाय्य नापेक्ष्यत । एतेषु स्मृतेष्वपि कार्यव्यवस्था न विचित्रा प्रतिभायात् । लोकानामपि व्यवस्थानुकूला बभूव ॥

ग्रामनैर्मल्यस्य कार्यं कठिनमासीत् । जना किमपि कर्तुं न सज्जस्थिता । क्षेत्रस्य कर्मकरा अपि मार्गसमार्जनं कर्तुं न सिद्धा बभूवु परंतु डॉ. देवमहाशय सौजन्येन भग्नहृदयो न भविता । एतस्मिन्ग्रामे आदर्शनैर्मल्य यथा भवेत्तथा स्वयसेवकै सहायमशक्तिमुपयुयुजिरे । ते

वीथ्यङ्गणानि च समार्जयामासु । कूपान् शोधयामासु । इतस्तत स्थितानि गर्तान्यपूरयन् । ग्रामस्था स्वयमेव स्वयसेवकान् व्यवस्थापयितु प्रेम्णा प्रेरयामासु । एतैर्मधुरैरनुभवैरौदासीन्यप्रयुक्ता कटवोऽनुभवा सकीर्णा न बभूवुरिति न । कतिपये ग्रामजना एवविध कार्यं तेषा नेष्टमासीदिति स्पष्टमूचुरित्यह स्मरामि ॥

इत पूर्वं बहीषु सभासु मया वर्णितस्यानुभवस्यकस्य निवर्णमनागत न स्यात् । 'भीतिहरवा' इति एक स्वल्पो ग्राम । तत्रास्मदीया शालासीत् । तत्समीपस्थितमन्य ग्राम यदाह गतस्तदा बहुमलिनानि वासासि धारयन्ती स्त्रीरपश्यम् । ता स्ववासासि कस्मान्न क्षालयन्तीति विचारयेति कस्तूरबाईमहाशयामनुरम् । सा तासामेकया सह भाषमाणा तया स्वकुटीर नीत्वा पश्यतु भवती, अत्रान्यद्वासो निवेशयितु पेटिका वा कुशूलो वा नास्ति । मया धार्यमाणा एकैव 'साडी' मलिनत्वेऽस्ति । कथ मया सा क्षालनीया । महामार्जी ब्रूहि । अन्या साडीमानीय देहीति । ततोऽह प्रत्यह स्नात्वा धौतवस्त्र धारयामीति प्रतिजाने इत्यब्रवीत् ॥

इदकुटीरमिदमेकमेव न । भारतवर्षस्यानेकग्रामेषु एतादृशानि सन्ति । भरतखण्डस्य नि सख्यकुटीरेषु वस्तुशून्या मानरक्षणाय शरीरोपरि छिन्नवस्त्र निवेश्यान्यद्वासो विना जीवन कुर्वन्ति ॥

अनुभवान्तरमत्र निवेदयिष्यामि । चपारण्ये तृणवेणूना समृद्धिरस्ति । भीतिहरवाग्राम एत सामग्रीमुपयुज्य शालाकुटीर निर्मितमासीत् । कोऽपि समीपस्थितभूस्वामिना भृत्येष्वेक स्यात् । तस्य कुटीर रात्रावग्निसाच्चकार । कुटीरान्तरस्य तृणवेणुभिर्निर्माणमनुचितमिति प्रत्यभात् । श्रीसोमणमहाशयो योग्यमेक मदिरमेव निर्मातुमुचितमिति निरचैषीत् । तस्य परिश्रम दृष्ट्वा इतरे बहवस्तेन सह मिलिता । एवमेव मिष्टिकागृहमेव शीघ्र सिद्धमभूत् । तस्य दहनभीतिर्नासीत् ॥

एव स्वयसेवकास्तेषा शालाग्रामनैर्मल्यव्यवस्था औषधोपचार इत्येतैर्ग्रामजनस्य विश्वास गौरव च सपाद्य ग्रामजनस्योपरि सत्प्रभाव प्रसारयितु शक्ता बभूवु ॥

पश्चादेतादृशस्थायि कार्यं स्थिरस्थापयितुम् अस्ति भारतस्योपरि स्थापयितुमहम् मम न सिद्धेति विषादपूर्वक समन्तव्यम् । स्वयसेवका स्वल्पकालमात्र स्थातुमागता । बहिर्ग्रामादधिको जनो न लब्ध । सदा प्रतिफल विना कार्यकर्ता जनो बिहारेऽपि नालभ्यत । चपारण्ये मम कार्य-समाप्तेरनन्तरमेवान्यत्र सज्जीभवत्कार्यं मामाकृष्य जग्राह । तथापि चपारण्ये चतु षण्मासपर्यन्त कृतकार्यमगाधमूलमरोहदिति चेत्तस्य प्रभावोऽद्याप्येकस्मिन्नन्यस्मिन्वा रूपे दृश्यते ॥

एकोनत्रिंशोऽध्यायः

# राज्याधिपतिर्यदा सज्जनः

मया पूर्वाध्यायेषु विवृत समाजसेवाकार्यमेकतश्चलत्य यत कृषीवलाना दु खविषयकाना भाषणाना लेखनकार्यं शीघ्र चलति स्म। तादृशानि पर सहस्रजनाना भाषणान्यलेखिषत। तै किमपि फल न जायेत वा। भाषणानि प्रदातुमागच्छता कृषीवलाना सख्या दिने दिनेऽवर्धत। एतेन भूस्वामिनो वर्धमानक्रोधा अस्माभि क्रियमाणानि विचारणानि निरर्थकानि कर्तुं विघ्नप्रयतन चक्रु ॥

एकस्मिन्दिने विहारप्रान्तस्य राज्याधिकारादेक पत्र मम करतलमागतम्। तद्यथा—दीर्घ कालात्क्रियते विचारणा भवता। इदानीं तत्परित्यज्य विहार विहाय निर्गमनसमय किं न प्राप्त इति ॥

पत्रमिद विनयपूर्ण भाषया लिखितमासीत् परन्तु तस्यार्थ स्पष्ट ॥

अस्य प्रत्युक्त मया यथा—" विचारणा दीर्घकालाच्चलतीति सहजम्। एतेन लोकाना कष्टपरिहारो यावद् भवति तावदितो विहाराद्गन्तुमुद्देशो मम नास्ति। मया क्रियमाणविचारणा विरमयितु राज्याधिकारायत्तमासीत्। कृषीवलाना दु खस्य कथा यथार्थभूतेति समत्या तत्कष्टपरिहारोऽथवा कृषीवलाना भाषणेषु याथार्थ्यं स्यादित्यवगम्य तत्क्षणमेव राज्याधिकारेण विचारणोपक्रम इमेऽस्य मार्गा खल्विति मया व्यक्तीकृतम् ॥

प्रतिनिधी राज्याधिपति सरएडवर्डगेइटमहाशयो मामाहूय विचारणोपक्रम कर्तुं न केवल स सम्मतिं प्रदर्शितवान् पर सदस्यत्वेन ममाह्वान प्रजिघाय। अहमितरसदस्याना नामानि विचार्य मम सहचराणामाशयमादाय समिते सदस्यो भवितु सम्मतिमदाम्। पर चैतन्नियमानुरोधेन यदा समिते विचारण चलति तदा मम सहचराणामाशय ग्रहीतु स्वतन्त्र स्याम्। यतोऽह समिते सदस्य कृषीवलाना पक्षे वक्तुमधिकार न हास्यामीति विज्ञातव्यम्। समितेर्विचारणाया परिणामो यदि न सम्पूर्णो न स्यात्तदा कृषीवलैरमे कया रीत्या वर्तितव्यमिति तेषा बुद्धिवाद प्रदाय मार्गप्रदर्शनाय स्वतन्त्रेण भवितव्यमिति ॥

सरएडवर्डगेइटमहाशय एते नियमा न्याय्या उचिताश्चेति स्वीकृत्य विचारणासमिते स्थापने प्रकल्पयामास। दिवानमर्लैफ्रस्लाईमहाशय समितेरध्यक्ष कृत ॥

समिति कृषीवलाना पक्ष निर्णीय भूस्वामिभिर्गृहीतकरादेको भाग पुन प्रदातव्य शासनस्य विरुद्धमादपि च 'तीनकठिया' पद्धति शासनेन निष्कासनीया इत्यसूचयत् ॥

समिति सर्वसम्मत्या निर्णयं लेखितुं समितेराशयानुरोधेन रचितशासनमङ्गीकर्तुं च सरएटवर्डगेइटमहाशयो बहुशः कारणकर्ताभूत् । तेन दृढमत्याय तद्विषये स्वकौशलं सर्वं यदि नोपयुज्येत तर्ह्येकमत्य कृषीवलानां शासनस्वीकारः साध्यो नाभविष्यत् । भूस्वामिना विशेषतः प्राबल्यमासीत् । निर्णयमगणयित्वा शासनाङ्गीकारस्य प्रचण्डविरोधं चक्रुः । परन्तु सरएडवर्डगेइटमहाशयोऽन्तिमकालपर्यन्तं दृढं स्थित्वा समितेराशयान् सपूर्णमेव कार्यरूपमानिनाय ॥

प्रायः शतवर्षपर्यन्तं निरूढा 'तीनकठिया' पद्धतिरेव बहिष्कृता बभूव । तेन सह भूस्वामिना शासनमप्यस्तमभूत् । तदाप्रभृति मर्दिता कृषीवलाः शनैः शनैः शिरांस्युदचक्रुः । नीलिकावर्णः कदापि न निष्कास्यत इति या मूढभक्तिः सादृश्यं गता ॥

व्यवस्थापनार्थमितः कतिपयवर्षाणि चालयित्वा इतोऽप्यधिकाः पाठशालाः उद्घाट्य ग्रामजीवनमितोऽपि सूक्ष्मतया प्रवेष्टुमाशा ममासीत् । अस्य सर्वं सिद्धमासीत् । परन्त्वितः पूर्वमनेकशो यथा संवृत्तं तथापि ममोद्देशं पूरयितुं भगवतश्चित्ते नासीत् । दैवनियमोऽन्य आसीत् । स मामितरकार्यं ग्रहीतुं व्यगास्यत् ॥

विंशोऽध्यायः

# कर्मकरैः सह संबन्धः

यावच्चंपारण्यसमितौ मम कार्यं समाप्यते स्म तावदेव मम श्रीमोहनलालपण्ड्या-श्रीशङ्करलाल-परीखमहाशयाभ्यां 'खेडा' जनपदे क्षाममागत्य सस्यानि नारोहन् कृषीवला करं दातुमशक्ताः सजातास्तेषां मार्गो दर्शनीय इति पत्रमागतम् । ततस्तत्रागत्याविचार्य तेभ्यो निवेदयितुं ममेष्टं वा धैर्यं वा नासीत् ॥

अस्मिन्नेव समये श्रीमती-अनसूयाबाईमहाशयासकाशादहमदाबादनगरे धर्मकराणां परिस्थितिमधिकृत्य पत्रमेकमागतम् । भृतिः स्वल्पाभवत् । अस्य वृद्धये धर्मकरा बहो कालाद्धादानुवादं कुर्वन्ति स्म । तस्य चैषां मार्गदर्शी भवितुमिष्टमासीत् । परन्त्वेतमल्पविषयमपि तावद्दूरान्निर्वोढुमिष्टं नासीच्छ्रद्धा । अतोऽहमहमदाबादनगरं गन्तुं प्रथमोऽवसरो मया गृहीतः । एतत्कार्यद्वयं शीघ्रमेव समाप्य चंपारण्ये समारब्धस्य रचनात्मककार्यस्यावेक्षणं कर्तुं तत्र पुनर्गन्तव्यमित्याशा ममासीत् ॥

परन्तु मया यथापेक्षितं तथा शीघ्रमेव कार्याणि न संवृत्तानि । चंपारण्यं प्रति पुनर्गमनं न शक्यमासीत् । अतः एताः शालाः एकैकशो विरताः । मया मम सहचरैश्च बहूनि गगनकुसुमानि निर्मितान्यासन् परन्तु तानि सर्वाण्यपि तथाप्यसिद्धानि गतानि ॥

चपारण्ये ग्रामनैर्मल्य शिक्षण च मुक्त्वा गोरक्षण चैकमासीत् । गोरक्षणं हिंदीप्रचारश्च केवल 'मारवाडी 'जनस्य कार्यं सवृत्तमिति प्रयाणेषु मम चित्तगोचरमासीत् । 'बेतिया 'ग्रामे मारवाडीमित्रमेक धर्मशालाया ममाश्रय ददौ । इतरो मारवाडीजनो गोशालाविषये मय्यासक्ति-मजनयत् । गोरक्षणमधिकृत्य ममाभिप्राया अस्मिन्काले स्फुट रूपमाश्रिता । तद्विषये मम तादात्विकी कल्पनाधुनिकयेवासीत् । ममाभिप्राये गोरक्षणक्रमे गोवशवृद्धिर्गोजातिसुधारणा वृषभाणामादरेण दर्शनमादर्शदुग्धालयाना निर्माणमित्यादिसर्वमास्थितमासीत् । कार्येऽस्मिन्मार-वाडीसुहृद सपूर्णसहकार प्रत्यजानन् । परन्तु मम चपारण्ये स्थातुमशक्यतया कार्यक्रमोऽय न फलित ॥

'बेतिया 'स्थलेऽद्यापि गोशाला चलति । किन्तु सादर्शदुग्धालयत्वेन न परिणता । चपारण्यस्य वृषभेभ्यस्तेषा शक्तिमतिक्रम्याद्यापि कर्म कारयन्ति । 'हिन्दव ' नामैतेऽद्याप्येत वराक प्राणिन निर्दय प्रहरन्त स्वधर्मस्य कलङ्क वितन्वन्ति ॥

एतत्कार्यस्य फलाभावो मम निरतरविषादस्य कारण भवति । मम चपारण्यगमनकाले सर्वदा मारवाडी विहारि सुहृदा मृदुनिन्दा श्रुत्वा मया हठात् परित्यज्यमानोद्दिष्टकार्याणि स्मार स्मार गाढनि श्वास मुञ्चामि ॥

शिक्षणकार्यं बहुषु मार्गेष्वनेकस्थलेषु चलति । परन्तु गोरक्षणकार्यमद्यापि दृढ रूढमूल नासीदित्येतन्मयोद्दिष्टरीत्या नाग्रतो गतम् ॥

'खेडा 'जनपदस्य कृषीवलाना प्रश्नो यदा चर्च्यमान एवासीत्तदाहमहमदाबादनगरे पेषणयत्रकर्मकराणा प्रश्ने प्रविष्ट आसम् ॥

मम परिस्थितिरत्यतसूक्ष्मासीत् । कर्मकराणा विवाद साधारण आसीत् । यत पेषणयत्रस्वामिपक्षे त एव मुख्यभूतास्तस्थु । तै सह मम मैत्र्यासीदित्यतस्तै सह वादानु-वादकरणमितोऽपि कष्ट परिणतम् । अह तैर्मिलित्वा सभाव्यविवादो माध्यस्थवशे दातव्य इति प्रार्थनामकरवम् । कि तु ते माध्यस्थ्यतत्त्वमेव न समैनिरे ॥

अतो मया कर्मकराणा कर्मत्यागसाहस कुरुध्वमिति बुद्धिवादो वक्तव्य आसीत् । तदनुष्ठानात्पूर्वं तेषा तदीयनेतृणा च गाढपरिचय प्राप्य कर्मत्यागेन सफलेन भवितव्य यथावश्यकान् विषयान् विवृतवान्यथा—

( १ ) अहिंसाभङ्ग कदापि न कर्तव्य ।

( २ ) कर्मत्यागनिश्चयस्य विरोधेन कार्यकर्तार न हिंसेत् ।

( ३ ) भिक्षान्न नैव भुञ्जीत ।

( ४ ) कर्मत्यागानुष्ठान 'चिरकालगाम्यपि निश्चल स्थिरता देहश्रमेण कर्मत्यागकाले न्यायत पिष्टं सपादनीयम् ।

कर्मत्यागस्य मुख्यस्था सर्वनितान्नियमानर्थतो गृहीत्वा तत्र समेनिरे । कर्मकरा सभामाहूय यावपेषणयन्त्राणां स्वामिनः कर्मकराणां नियमानङ्गीकुर्युरथवा विवादमाध्यस्थ्यनिर्णयस्य समन्येरन् तावत्ते पुनः कार्याय न गच्छाम इति प्रमाणमकुर्वन् ॥

एतत्कर्मत्यागकाले एव श्रीवल्लभभाईपटेलमहाशय श्रीशंकरलालबैंकरमहाशय – अनयोर्निकटपरिचय आसीत् । श्रीअनसूयाबाईमहाशया तु पूर्वमेव सम्यक्परिज्ञाता ॥

साबरमतीनद्यास्तटवृक्षच्छायायामस्माभिः प्रत्यहं कर्मकराणां समाहूयते स्म । ते सभाया सहस्रशो मिलित्वा बभूवुः । तैः कृतैः प्रमाणं शान्तिमात्मगौरवं च न भञ्जनीयमिति मया मम भाषणेषु तत्स्मृतिमानीयते स्म । ते प्रत्यहं 'एक टेक' इति लेखनधारिणं ध्वजमादाय तन्नगरस्य वीथीषु शान्त्यालोकयात्रां वितेनुः ॥

कर्मत्यागः एकविंशतिदिनानि बभूव । अस्मिन्कालेऽहं पेषणयन्त्रस्वामिनो यदा तदा दृष्ट्वा कर्मकराणां न्यायं करणीयं इति प्रार्थनामकरवम् । ततस्तैः प्रयुक्तं यथा – किमस्माभिर्न कृतं प्रमाणम् । अस्माभिः सह कर्मकराणां सम्बन्धः पितृशिशूनां सम्बन्धः तृतीयो जनो यदि प्रतिरुन्धाति तत्कथं सहेम । माध्यस्थ्यस्य कुतोऽवकाश इति ॥

एकविंशोऽध्यायः

## आश्रमान्तः सूक्ष्मनिरूपणम्

**कर्मकराणां** पेषणयन्त्रस्वामिना मध्यवर्तिन्यायविवादकथाया विवरणात्पूर्वमाश्रमं प्रति दृष्टिप्रसारणमावश्यकम् । चंपारण्ये निरस्ततो मम मानसादाश्रमः किल न दूरीबभूव । तदा तदा विराम प्राप्य तत्र धावितेन मया प्रतिनिर्वर्तनीयमासीत् ॥

तत्कालमाश्रमोऽहमदाबादस्य निकटवर्तिनि कोचरबनामकग्रामे स्थितः । तस्मिन्ग्रामे प्रथिज्वरः प्रारेभे । एतेनाश्रमशिशूनामपायः सम्भवेदिति स्पष्टमदृश्यत । आश्रमान्तर्नैर्मल्यनियमेषु विशेषतः सूक्ष्मतया चर्यमाणेष्वपि समन्तादवस्थितमशुचित्वपरिणामं सम्पूर्णमेव परिहर्तुमशक्यमासीत् । कोचरबग्रामस्थजनो यथा नियमानेतान् पालयेत्तथा कर्तुं वा ग्रामस्य सैन्यवरणं सेवा कर्तुं वास्माकं तदा न सामर्थ्यमासीत् ॥

अस्मदाश्रमेण पत्तनाद् ग्रामाच्च पर्याप्तदूरवर्तिना भवितव्यम् । तथापि नातिदूरे भवितव्यमित्यस्माकं ध्येयमासीत् । अपि च स्वीयभूमेरुपरि कदाचिदेकस्मिन् दिनेऽस्स्थानव्यमेवेत्यस्माभिः सङ्कल्पितमासीत् ॥

कोचरबग्रामं परित्यज्य गन्तुं प्रथिश्चर एव पर्याप्त प्रत्यादेश इति मम प्रयभात्। अह मदाबादनगरे कश्चिद्वणिगासीत्। श्रीपूजाभाईहिराचदनामेति। तस्याश्रमस्य च गाढसपर्क सजात। स बहुषु विषयेष्वाश्रमस्य निर्मलनिरभिमानभावेन साहाय्य करोति स्म। अहमदाबाद सबद्धव्यवहारेषु तस्य विशेषतोऽनुभव आसीत्। युष्माकमनुकूला भूमिमहमुपस्थापयिष्यामीति स्वयमेवाब्रवीत्। अह स्थलान्वेषणाय तेन सह कोचरबग्रामस्योत्तरदक्षिणभागेषु भ्रमन्निश्चतु क्रोश दूर उत्तरदिग्वर्तिनीं भूमिमेकामविष्य तमब्रवम्। सोऽप्ययत्नाश्रमस्थान निरणैषीत्। तत् साबरमतीकारागृहनिकटवर्तीत्यतो विशेषगुण प्रयभात्। कारागृहगमन सत्याग्रहिणा साधारणी स्थितिरिति गणनया स्थानमेतन्महाम रोचत। अपि च कारागृहस्थानार्थं वृतभूमे समन्तात्स्वच्छता विद्यत इति मया ज्ञातम्। प्राय सत्याग्रहदिवसेषु क्वचिदन्यत्र लेखितम्। तद् भूमेरुपरि मदिर वा वृक्षको वा नासीत्। परन्तु नदीतीरे एकान्तस्थाने तस्य वर्तन बह्वनुकूलमासीत्॥

गृहनिर्माणात्पूर्वमस्माभि पटमडपेषु वस्तव्यम्॥

कुटीरान् निर्माय तत्र पाक करणीय इति निरचैष्म॥

आश्रम शनै शनैर्वर्धते स्म। पुरुषा स्त्रिय शिशवश्च सर्वे मिलित्वास्माभिश्चत्वारिंशज्जनै एकस्यामेव पाकशालाया भुज्यते स्म। एतत्स्थल गत्वावस्थानकल्पना सर्वा मदीया। ता कार्यरूपमानेतु यथासप्रदाय भारो दिवगतमगनलालमहाशयस्योपरि पतित॥

निवासाय स्थिरगृहाणा निर्माणात्पूर्वं वय बहु क्लेशिता। वर्षाकाल समीप आगत आसीत्। वस्तूनि चतु क्रोशाद्दूरवर्तिनो नगरादानेतव्यान्यासन्। तत्कालपर्यन्त वन्ध्याया भूमौ सर्पा स्थिता। अस्या परिस्थितौ बालशिशुभि सह निवस्तुमपायो बहुल प्रत्यभात्। अहननं सर्पाणा सामान्यो नियम आसीत्। परन्त्वेतद्विषजन्तुभ्यो भयमस्माक स्थितमेवेति समन्तव्यम्। अस्मिन्दिनेऽपि तन्न गतम्॥

विषजन्तूनामहननियम फिनिक्सस्थले टॉल्स्टॉयक्षेत्रे साबरमत्याश्च बहुश आचरित। एतप्रदेशस्थलेऽपि मया वध्यभूमावस्थातव्यमासीत्। परन्तु सर्पदशेन प्राणहानिर्न सजाता। एतत्सदर्भे समालोचिते मम श्रद्धापूरितदृष्टे करुणामयस्य परमेश्वरस्यामृतहस्त प्रतिभाति। देवो न पक्षपाती। मनुष्याणा दैनदिनकार्ये प्रवेष्टुं तस्य समयो नास्तीत्युक्त्वा मम श्रद्धा प्रति न कोऽपि हसतु। एतमेवमेवानुभव वर्णयितुमेतद्विषयस्य वास्तव्यता व्यतीकर्तुं च मम वागन्तर न प्रतिभाति। भगवतो मार्गदर्शने मानुषभावनाया पूर्णचैतन्य नास्ति। भगवत कार्याण्यवर्णनी यानि। मनुष्यस्य बुद्ध्या न ग्राह्याणीत्यह जानामि। परन्तु पामरो मनुष्यस्तानि वर्णयितुं प्रवृत्त श्चेत्समाश्रयात्परमेव गतिर्नान्यो मार्गो विद्यते। पचविंशतिवर्षकालपर्यन्त प्राणिनामहननियमो न्यूनाधिकत्वेनाचरितोऽपि तत्काकतालीयन्यायादित्य वैयक्तिकवसिन सभवो न भवति। सेश्वरस्य

कृपेति श्रद्धापि मूढविश्वास इत्युक्तेऽपि तां मूढभक्तिमेवाऽऽलिङ्गिताहमस्मीति न संदेहः ॥

अहमदाबादनगरे कर्मकराणां कर्मत्यागकलहे चलति सति वयनशालाया वास्तु निवेश्यते स्म। यतो वयनमाश्रमस्य मुख्यकार्यमासीत्। सूत्रकर्तनं तदात्वपर्यन्तमस्माकमसाध्यमासीत् ॥

## द्वाविंशोऽध्यायः

# उपवासः

प्रथमसप्ताहद्वये पेषणयन्त्रस्य कर्मकरा बहुलं धैर्यमात्मसंयमं च प्रादर्शयन्। प्रत्यहं महतीः सभाः कुर्वन्ति स्म। अवसरेषु तदीयप्रतिज्ञास्तत्स्मृतिमानीयन्त। अस्य ते प्राणत्यागमपि कुर्मो न पुनः प्रतिज्ञानं न कुर्म इति उच्चैरूचुः ॥

परन्तु पर्यन्ते शिथिलीभवनचिह्नं प्रादर्शयन्। यथा मनुष्याणां दौर्बल्यं क्रोधावस्थायां दृश्यते तथा कर्मत्यागविरोधेन कर्म कर्तुं गच्छतां कर्मकराणां क्रोधः कर्मत्यागः शिथिलीभविष्यतीति दृष्ट्वा परं ववृध इति ॥

ते कलहकारित्वमातिष्ठन्तीति मया शङ्कितम्। प्रत्याह्निकसभासु जनसंख्याल्पाल्पा भवति स्म। तत्रागतानां मुखे नैराश्यमुद्रा स्पष्टं ददृशे। पर्यन्ते कर्मत्यागिनः कर्मकराः पलया-ल्वो बभूवुरिति वार्ता ममागता। अहमत्यन्तं खिन्नोऽस्मिन्संदर्भे किं मम कर्तव्यमिति तीव्रमनोविचारे निमग्नः। दक्षिणाफ्रिकायां संवृत्तस्यागाधकर्मत्यागस्यानुभवो ममासीत्। किन्त्वत्र मे परिस्थितिरन्या बभूव। कर्मकरैर्मया निर्दिष्टप्रकारेण प्रतिज्ञानम्। ते तत्र प्रतिदिनं ममाग्रे पुनः पुनरब्रुवन्। तेऽधुना तद्विरुद्धमाचरेयुरिति कल्पनापि मम मनसि नोदतिष्ठत्। अस्य मनोभावस्याधारो ममाहङ्कारो वा कर्मकरेषु स्थितं मम प्रेम वा मम तीव्रसत्योपासना वा को ब्रूयात् ॥

यदेकस्मिन्दिने प्रातः कर्मकराणां सभा भवति स्म। अहमन्धकारे मार्गमपश्यन्मार्गमन्विष्यामि तदा दिव्यज्योतिर्मत्साहाय्यार्थमागतम्। कमपि प्रयत्नं विनोदतिष्ठत् ॥

उक्तं च सभा मया—यावत्कर्मत्यागिनो मिलित्वा यः कोऽपि निर्णयो भविष्यति यावच्च पेषणयन्त्राणां परित्यागपर्यन्तं कर्मत्यागं न त्यजन्ति तावदहमाहारं न स्पृशामीति ॥

कर्मकराणामुपरि वज्रपात इवाभूत्। श्रीअनसूयाबाईमहाशयायाः कपोलयोर्जलप्रवाहो निःसर्तुमुपाक्रमत्। उक्तं च कर्मकरैर्यथा—उपवासं मा कुरुध्वम्। वयमिह स्थास्यामः किमिदमुपवासः क्रियत इति। अस्मत्प्रमादः क्षन्तव्यः। इतो वयमस्मत्प्रतिज्ञां यावत्पर्यन्तं करिष्याम इति ॥

प्रयुक्तं च मया यथा—युष्माकमुपवासो नावश्यकः। युष्मत्प्रतिज्ञानुष्ठाने यद्बलं तावता।

अस्मन्निकटे धनं नास्तीति युष्माकं ज्ञातमेव लोकेभ्यो भिक्षामादाय जठरं पूरयित्वा कर्मत्यागानुष्ठानं मह्यं न रोचते । अतः कर्मत्यागं कियन्ति चिद्दिनानि चलतु । युष्माभिर्निश्चितैर्भूत्वा केनचिदुद्योगेन जीवनस्य पर्याप्तं संपादयितुं प्रयतनीयम् । ममोपवासः कर्मत्यागसमाप्तावेवान्तं गमिष्यतीति ॥

एतदन्तरे वल्लभभाईमहाशयः कर्मत्यागिना कर्मकराणां पौरसभायां यत्किंचित्कार्यं संपादयितुं प्रयतमान आसीत् । परन्तु तत्रैतदाशापूरणायाधिकमवकाशो नासीत् । आश्रमस्थित-तातरशाला या भूतले वालुकाया संग्रहणीयत्वादेतत्कार्ये कतिपयजना नियमितव्या इति मगनलालगांधिमहाशयः सूचयामास । कर्मकरा एतं निर्देशमादरेण स्वीचक्रुः । श्रीअनसूयाबाईमहाशया शीर्षोपरि कण्डोलं विन्यस्याग्रेसरी स्थिता । शीघ्रमेव नदीतलकन्दराद्वालुकाकण्डोलान् धारयित्वा प्रचलतां कर्मकराणां सततप्रवाहो ददृशे । एतद्दर्शनयोग्यं दर्शनमासीत् । कर्मकरेषु नवचैतन्यं प्रविष्टमेव तेषां प्रत्यभात् । तेषां भृतिप्रदानं कष्टकरं परिणतम् ॥

ममोपवासे एको दोष आसीत् । यतो मया पूर्वोक्तप्रकारेण मम पेषणयन्त्रस्वामिना च निकटमधुरसंबन्ध आसीत् । ममोपवासेन तन्मानसोपरि परिणामो न भवतीति किं न स्यात् । मम सत्याग्रहिणः सत एतद्विरोधेनोपवासो न कर्तव्यः । कर्मकराणां कर्मत्यागस्यैकस्यैव प्रभावेन तन्मानसोपरि यथा पतेत्तथा कर्तव्यमिति मम विदितमासीत् । पेषणयन्त्रस्वामिभिः कृतकस्यापि दोषस्यार्थे मयैतदुपवासव्रतमङ्गीकृतम् । कर्मकराणां दोष एव तस्य कारणमासीत् । यतोऽहं तत्प्रतिनिधीभूत्वा दोषभागी आसमिति मम प्रत्यभात् । स्वामिष्वहं सविनयनिवेदनमात्रं कर्तुं साध्यमासीत् । तान् प्रत्युपवासग्रहणं बलोद्बधोऽभविष्यत् । कथं ममोपवासस्तन्निबध्नातीति यद्यपि मे विदितं—वस्तुतस्तथैव परिणतम् । तस्योपायान्तरं नास्तीति मे प्रत्यभात् । उपवासाङ्गीकारो मम कर्तव्यमिति मे स्पष्टमदृश्यत ॥

स्वामिनां मनः शान्तं स्थापयितुं मया प्रयतितम् । युष्मन्मार्गं परित्यक्तुं वो लेशतोऽपि नावश्यकमित्यहं तानब्रुवम् । परन्तु तैर्ममोक्तानि गौरवेण न दृष्टानि । एतावदेव न । परं ते ममोपरि तीक्ष्णान् सूक्ष्मांश्च वाग्बाणान् चिक्षिपुः ॥

कर्मत्यागविषये पेषणयन्त्रस्वामिनां निश्चलस्थितेः कारणभूता मुख्यव्यक्तिः शेठ अम्बालाल-महाशय आसीत् । तस्य मनोदार्ढ्यं निर्मलनिष्कापट्यं च विस्मयजनके बभूवतुः । तौ मम हृदयमाचकर्षतुः । तदग्रे स्थित्वा धन्यवादयितुं मनोऽभवत्कार्यमासीत् । ममोपवासनिरोधो मम मनोऽभीष्टाद् गच्छन् । इदमुक्त्वा तद्धर्मपत्न्याः श्रीसरलादेव्याः ज्येष्ठभ्रातृवद् भावनासीत् । अनन्तरं ममोपवासग्रहणाद् ममनुभवन्तीं दृष्ट्वा मोढुमशक्यमासीत् । प्रथमदिवसे श्रीअनसूयाबाई-महाशया इतराणि कतिनिमित्राणि कर्मकराश्चोपवासं चक्रुः । परन्तु ग्रामो न कर्तव्य इति कथनेन तान् प्रतिन्यवारयम् ॥

एतत्सर्वस्य फलरूपेण सौहार्दस्य वातावरणं सर्वत्रापि प्रससार । पेषणयन्त्रस्वामिनाम-न्तःकरणं द्रवीभूय विवादमेनमन्तं गमयितुं कमपि मार्गमन्वेष्टुं प्रावर्तत । अनसूयाबाईमहाशयाया गृहं चर्चाकूटानां मन्दिरमासीत् । पर्यन्ते श्रीआनन्दशङ्करध्रुवमहाशयं मध्यस्थं चक्रुः । मम कृतोपवासस्य त्रीणि दिनान्यभूवन् । तावदत्र एव कर्मत्यागो व्यरमत् । कर्मकराणामिष्टं विभज्य स्वामिनः सुसन्धेः स्मृतिं स्थिरीचक्रुः । एवमेकविंशतिदिनानि कर्मत्यागे चलति विवादः समाप्तोऽभूत् ॥

उत्सवाय मिलितानां कूटे पेषणयन्त्राणां स्वामिनस्तस्य मुख्याधिकारी चागताः । अस्मिन्सन्दर्भे मुख्याधिकारी कर्मकरानधिकृत्य यूयं सर्वदा गान्धिमहाशयस्योक्तप्रकारेण प्रवर्त-ध्वमिति बुद्धिवादमवदत् ॥ एतद्घटनासमाप्तेरल्पकालेनैवैतैः सद्गृहस्थैः सह कलहः सवृत्तः । परन्तु तात्कालिकसन्दर्भो व्यत्यस्तो बभूव । तेन सह तेऽपि परिवर्तनं गताः । तदा ते खेडाग्राम स्थकृषीवलानां मम वचनं न श्रोतव्यमिति प्रत्यादिशन् ॥

यावद्विनोदकरं तात्कालिकरणाजनकं विषयमेकमनावेद्य प्रकरणमिदं न समापनीयम् । एतन्मिष्टविभजनसन्दर्भे सवृत्तम् । पेषणयन्त्रस्वामिनः परं 'शतमण'मितं मिष्टमानायितं चक्रुः । तत्परं सहस्रकर्मकराणां कथं विभजनीयमिति महान् प्रश्न आसीत् । यस्य वृक्षस्याधस्तात् कर्मकराः प्रतिज्ञां चक्रुस्तस्यैव वृक्षस्याधो विभजनमुचितमिति निर्धारितम् । इदमुक्त्वैतत्र तत्समाहारो बहुनानुकूल्यकारणमभविष्यत् ॥

एकविंशति दिनानि नियमेन वृत्तो जनो मिष्टप्रदानकाले यत्किंचिदपि सकटं विना पङ्क्तौ क्रमेण स्थास्यति । मिष्टार्थं एकस्योपर्यन्यो यथा न पततीति मम सरला बुद्धिर्ममोवाच । परन्तु परीक्षाकाले प्राप्ते विभजनाय कृतः सर्वोपायो न सार्थको बभूव । निमिषद्वयं यावत्प्रदाने पङ्क्तिं परित्यज्याभिधावति स्म । कर्मकराणां मुख्यस्थास्तत्र सर्वे क्रमेण यथा चलति तथा यावच्छक्यं साहसं चक्रुः । परन्तु तत्सफलं नासीत् । तत्रत्याभिधावनत्वरा चान्ते कियदधिकं बभूवेति चेद्बहुतरं मिष्टं पादप्रहारेण नष्टं बभूव । अनावृतप्रदेशे मिष्टविभजने प्रयत्नः पर्यन्ते परित्याज्य एवासीत् । मिरजापुरस्थित शेठ-अम्बालालमहोदयस्य गृहेऽवशिष्टमिष्टं कथंचित् नीतमस्माभिः । परेद्युस्तद्गृहावरण एव मिष्टं क्लेशं विना विभक्तमासीत् ॥

अस्या घटनाया विनोदास्पदोऽशः स्वल्प एवास्ति । परन्तु करुणाजनकस्याशस्योल्ले-खनमुचितं भवति । ततो विचार्यमाणेऽहमदावादस्थभिक्षुकवर्गः 'एकटेक' वृक्षस्याधो मिष्टप्रदानसमाचारं कथंचिज्ज्ञात्वा तत्र गणशः आगतः पिष्टशून्यजठरं आतुरेण हस्तं लम्बयन्नित्येतदेव तात्कालिकाभिधानस्य कोलाहलस्य च कारणमभूदिति विदितमासीत् ॥

अस्मद्देशस्य वेदनाहर्त्ता बहुदारिद्र्यं निराहारत्वेनाथ कियत्कठिनमिति चेद्वर्षे वर्षेऽ-धिकजनान्याचकसमूहे मज्जयति । पिष्टार्थेऽनुभूयमाना तेषां गतिर्मानमर्यादा मर्गौरवं चैतस्य

सपर्कमेव निष्कासयति । अपि चास्मद्गनिकदानिन कार्ये नियोजन विना एतेषा भिक्षा प्रयच्छति ॥

त्रयोविंशोऽध्यायः

## खेडासत्याग्रहः

मम निराम स्वल्पोऽपि न लब्ध । यावदहमदावादनगरस्य पेषणयत्रकर्मकराणा कर्मत्यागो न समाप्तस्तावदह खेडाजनपदसत्याग्रहयुद्धाय गन्तव्यमापतितम् ॥

खेडाजनपदस्य बहुभागेषु सस्यानामल्पत्वात्तत्रत्यापरिस्थिति क्षामसदृशी बभूव । खेडाजनपदस्थकृषीवलास्तद्वर्षस्य भूकरविलम्बनाय प्रयतमाना स्थिता ॥

यावदस्मिन् विषयेऽह कृषीवलाना निर्दिष्टाशयप्रदानात्पूर्वं श्रीअमृतलालठक्करमहाशय-स्तत्रत्यपरिस्थितिं विमृश्य तद्विषयक सर्वं न केवल लिखितवान् पर तत्प्रान्तस्य मुख्याधिकारिण प्रश्नमेक मुखतश्चर्चयामास । श्रीमोहनलालपन्ड्याशङ्करलालपरीखमहाशयावेतावेतद्युद्धाय प्रविश्य श्रीविट्ठलभाईपटेलमहाशयोऽपि च दिवगतसर्गोकुलदासकहानदासपारेखमहाशय द्वारा मोहमयीशासनसभाया वादानुवाद कारयामासतु । एतद्विषये राज्याधिपतिं द्रष्टु कतिपया समितयस्तत्सकाशं गता ॥

अस्मिन्समयेऽह गुजरातसभाया अध्यक्षोऽभवम् । इय सभा राज्याधिकारिण प्रति प्रार्थनापत्राणि तन्नीप्रार्थना च प्राहैषीत् । अधिकारिणोऽधिक्षेपास्त्रासवचनानि च क्षमया निर्गीर्णवती ॥

अस्मिन्विषयेऽधिकारवर्गस्य वर्मनिर्वहण निष्पदहास्यकर मर्यादाशून्य चासीदित्येतत्स्मृतौ इदानीं नैतच्छ्रद्धातव्य भवति ॥

कृषीवलाना प्रार्थना दिनप्रकाशवद्विस्पष्टा बभूव । परिमिता च सा येन राजनीया समन्तु न योऽप्युत्तरायआसीत् । भूकरस्य नियमानुसारेण चतुराणकापेक्षया सस्यवृद्धिरल्पतरा भवेद्यदि कृषीवलैर्भूकरस्य निवर्तनं प्रार्थनीयमासीद्राजनीयास्तु चतुराणकापेक्षया अधिका सस्यवृद्धिर्जातेति स्थापयन्ति स्म । कृषीवलास्तु चतुराणकादल्पेति वदन्ति स्म । परन्तु राजपुरुषा लोकानां श्रवणं न प्रथमम् । मध्यस्थो नियोजनीय इति लोकैः प्रार्थिते सति ता प्रार्थना राजपुरुषा नोदशिष्यगणयन् । प्रार्थनाविनयाः शिथिलाः यदा निष्फला बभूवुस्तदा मम सहचराणां मननमिव कृषीवलानां सत्याग्रहमाचरितुं समादिशम् ॥

एतस्मिन् कलहे न केवल खेडास्वयसेवका पर श्रीवल्लभभाईपटेल-शकरलालबॅकर-श्रीमतीअनसूयाबाई अपि च श्रीइन्दुलालकनैयालालयाज्ञिक-महादेवदेसाई-महाशयप्रभृतयो मम सहचरा आसन् । अस्मिन्युद्धे प्रविश्य श्रीवल्लभभाईमहाशयेन सम्यक्चलित वर्धमान च न्यायवादिकार्यं परित्याज्यमासीत् । तत्पुन नैव प्रारभितमिति वक्तव्यम् ॥

सर्वेषामस्माक निवस्तु पर्याप्तोऽवकाशो न लभ्य आसीदिति नडियादनगरस्यानाथाश्रमेऽस्मत्कार्यकेन्द्र प्रवृत्तम् ॥

सत्याग्रहिण अधोलिखितप्रमाणस्य स्वहस्ताक्षर दद्दु ॥

अस्मद्ग्रामेषु सस्य चतुराणकापेक्षयाल्पतर जातमिति वय राजकीयानागामि वर्षं यावद्भूकर न गृह्णीध्वमिति प्रार्थयाम । राजकीयास्त्वस्मत्प्रार्थना नागणयन् । अतो वयमस्तात् स्वहस्ताक्षरकृतो राज्याधिकाराय पूर्ण भूकरप्रदानमथवैतद्वर्षस्य शेष च न दास्याम इत्येव प्रमाणतो वक्ष्याम । राजकीया स्वापेक्षापूर्व व्यवहर्तुमस्मदन्तरायो नास्ति । वय भूकरस्याप्रदानेन य परिणाम स सतोषेणानुभविष्याम । अस्माभि स्वय भूकरप्रदानेनास्मत्पक्षो न सत्य इति गणयितुमवकाशप्रदानापेक्षया राज्याधिकारोऽस्मदीयभूमिं परित्याजयितु समन्यामहे । पर तु मडलेऽस्मिन्राजकीया द्वितीयभागप्रदान विलवयन्ति चेदस्माक ये प्रदाने शक्तास्ते भूकर समग्र वा प्रदाय शेष वा प्रदास्याम । प्रदाने समर्था कुतो न प्रदास्यन्तीति चेत्तै प्रदाने दरिद्रा कृषीवला वित्रस्ता स्वै प्रदेय दातु स्ववस्तुविक्रयेण वा ऋण कृत्वा वात्मोपरि दु खमापातयेयुरित्येव प्रदाने शक्तेऽपि भूकरप्रदान दरिद्राणा कृते स्वकर्तव्यमित्यस्माक प्रतिभाति ॥

एतत्कलहमधिकृत्य ममानेकाव्यायान् लेखितुमशक्यम् । अतस्तत्सबद्धानि मधुरस्मरणानि व्यक्तव्यानि भवन्ति । एतन्मुख्यकलहसबद्धानतिशयानवगन्तुमिच्छन्ति तै श्रीशकरलालपरीख-महाशयेन विरचय्य प्रकटीकृत खेडाजनपदसत्याग्रहस्य सपूर्णविश्वसनीय इतिहास पठनीय ॥

चतुर्विंशोऽध्याय:

## पलांडुचोरः

**चम्पारण्यं** भरतखडस्य बहुदूरकोणे स्थितत्वाद्वृत्तपत्रिकाप्रनिनिधीना तद्युद्धस्य बहिष्कृतत्वाद्-बहवो बाह्यप्रेक्षका अनाहूता बभूवु । परन्तु खेडासंग्रामस्य विषयोऽन्य आसीत् । अस्य घटना प्रत्यह वृत्तपत्रिकासु प्रकटीक्रियन्ते स्म ॥

गुजरातीजना अस्मिन् रणक्षेत्रेऽतीव कुतूहलिनो बभूवु । अस्मिन् विजयलाभाय ते द्रव्यप्रदानाय सज्जास्थिता । केवल धनसहायेन सत्याग्रह कर्तुमशक्यमित्यवगन्तु तेषा न सुलभमासीत् । सत्याग्रहस्य साधनेषु द्रव्यापेक्षयाल्पतरमूल्य वस्तु न किंचिद्विद्यते । बहुधोक्तापि मोहमयीस्थश्रेष्ठिनो यावदस्माकमावश्यकमासीत्ततोऽप्यधिक द्रव्य प्रेषयामासु । अस्य फल किं जातमिति चेद्रणसमाप्तावस्मदीयहस्ते धनमवस्थितम् ॥

सत्याग्रहिभि स्वयसेवक सरलजीवनस्य नूतन पाठ शिक्षणीय आसीत् । तैस्तसर्वं सपूर्णतया वक्तुमशक्यम् । किन्त्वेते स्वजीवनक्रम बहुश पर्यवर्तयन् ॥

कृषीवलानामपि तद्युद्ध नूतनो विषय आसीत् । अतोऽस्माभिर्ग्रामाद्ग्राम गत्वा सत्याग्रहस्य तत्त्वानि विवरणीयानि बभूवु । अधिकारवर्गस्या लोकप्रदत्तकरद्रव्येण स्व-वेतन लभन्ते तस्मात्ते प्रजाना भृत्या न तु स्वामिन इत्यवगन्य भय यस्मात्त्यजन्ति तथाकर्तुमेव मुख्यो विषय आसीत् । अपि च निर्भये सति विनयरक्षण च स्वकर्तव्यमिति यथा जानीयुस्तथा कर्तुमसाध्यमिव प्रत्यभात् । अधिकारिभ्यस्त्यक्तभयानामपमान समवति चेत्त प्रतीकारविधानात् कथ ते दूरी-वर्तनीया । किन्तु तेऽविनयेन यदि वर्तन्ते तद्दुग्धभाण्डस्थदुग्धमिव विषबिन्दुना सत्याग्रह विनाशयति । तैर्विनयवृत्तिपाठो मया निरीक्षितप्रकारेण सम्यङ् न शिक्षित इति मया पश्चाद्विज्ञातम् । विनय एव सत्याग्रहस्य कठिनाश इति ममानुभवात्सम्यगवगतम् । अत्र विनयो नाम प्रतिपक्षस्य शुभ करणीयमित्याशापि च नैजमाधुर्यं च भवति । न पुन समयानुकूलमभ्यस्ता मृदुवाक् । एतै सत्याग्रहिण प्रतिकार्यरूपमास्थेयम् ॥

प्रथमतो बहुना धैर्येण यद्यपि जना प्रवृत्तास्तथापि राजकीया प्रबलदण्ड विधातुमिच्छय इव नादृश्यन्त । किन्तु तेषा मनस्थैर्यं न चलतीति दृष्ट्वा राज्याधिकार उग्रतर दण्ड प्रारेभे । करग्रहणाधिकारिणो गोधन विचिक्रियु । अपि च स्वहस्तग्राह्याणि चरवस्तूनि सर्वाणि जगृहु । दण्डार्पणपत्राणि स्वीकारयामासु । तत्र तत्र रूढसस्यान् जग्रहु । एतेन कृषीवला धैर्यहीना करनिश्चये प्रदेय ददु: । इतरेऽधिकारिभिश्चरवस्तुग्रहण कृत्वा प्रदेयकर यथा गृह्णीयुस्तथा कर्तुमैच्छन् । अन्ये च करनिश्चयेऽन्तपर्यन्त कष्टायितु सज्जस्थिता ॥

शासनानुरोधेनैव तथापि नैतिकदृष्ट्या तदपराध एव । अपि च बलादपहारो नान्यत् । अतो राजकीयग्रहणमुल्लङ्घ्य पलाण्डुग्रहणं जनस्य धर्म एवेत्यहमन्वचयम् । एतद्विधागमन भङ्गेन फलितं कारागृहवासो दण्डप्रदानं यथा जनः स्वयमेव लभते । तथा पाठशिक्षितुरेतत्तु मनसिंभूत । श्रीपण्ड्यामहाशयस्य तावदीदृगनुभवोऽप्यादावेवाभवत् । सत्याग्रहस्य तत्त्वानुसारेण प्रवृत्तस्यापि किंचित्कार्यकारणाच्छिक्षामननुभूय सत्याग्रहस्यान्तगमनं तस्मै न रुरुचे । तस्मात्स्वयमेव क्षेत्रात्पलाण्डूनपनेष्यामीत्यग्रेसरः स्थितः । अस्मिन्कार्ये समाहतना मिलिताः ॥

राजकीया कथमेतान् स्वतन्त्रान् मुञ्चेयुः । मोहनलालमहाशयस्तन्मित्राणि च राजकीयैर्गृहीता इति जनस्योत्साहो ववृधे । कारागृहस्य त्रासे पलायिते सति दण्डनस्योग्रता यथा वर्धते तथा जनस्य धैर्यमुत्साहश्च वर्धेते । विचारणादिने जना गणशो न्यायस्थानमुपस्थिताः । पण्ड्यामहाशयस्तस्य सहचराश्चापराधिन इति निर्णीय तेषामल्पकालपर्यन्तं कारागृहवासोऽदीयत । पलाण्डुनामपनयेन 'पीनलकोड'प्रकारेण चौर्यापराधलक्षणानि सन्तीति न्यायाधिपस्य निर्णयोऽन्याय्य इति मे मतमासीत् । किन्तु न्यायस्थानानां परित्याग एवास्माभिर्निरधारीत्यतस्तन्निर्णयोपरि 'अपील' न चक्रे ॥

एतानपराधिनो यात्रामारचय्य जनैः कारागृहं नीताः । तद्दिने श्रीमोहनलालपण्ड्यामहाशयो लोकैः 'पलाण्डुचोर' इति गौरवप्रदं बिरुदं समपादयत् । एतद्बिरुदमद्याप्यस्य चरति ॥

खेडासत्याग्रहस्य परिसमाप्तिमग्रेतनाध्याये निवेदयिष्यामि ॥

पंचविंशोऽध्यायः

# खेडासत्याग्रहस्यान्तः

सत्याग्रहकलहोऽनिरीक्षितमन्तमानं प्राप । लोकाः परिश्रान्ता इति स्पष्टमासीत् । अनिदृढतया दृढमैनास्य निराशा भवितुमर्हन्तु मया विकल्पितम् । नम्रतम विरमयितुं सत्याग्रहिणा स्वीकार्यं समीचीनं एको मार्गो मयान्विष्यते स्म । ईदृगेक केनचिन्निरीक्षितो लब्धः । नडियादतालुकस्थो 'अमल्दारो' "धनिकाः कृषीवला यदि प्रदेयं करं यच्छन्ति तदा निर्धनैः कृषीवलैः प्रदेयं विलम्ब्य सह्यते" इति सन्देशं प्राहैषीत् । इदं मम लेखनद्वारा निवेदनीयमित्युक्तोऽसौ तथा चकार । किंतु अमल्दारः स्वतालुकामात्रस्य पर्यनुयोज्य आसीत् । अतो मण्डलाधिकार्येव मण्डलस्य सर्वभागानां नवचेऽधिकारयुक्त आसीदिति च ज्ञायमानत्वान्मयोपरि निवेदितकार्यं सर्वमण्डलस्याप्यन्वय भवति न वेति विचार्याहमलिखम् । तेन प्रत्युक्तं तथाविधाज्ञा

सर्वत्र प्रेषितेति । ममेद न विदितमासीत्। किंतु तस्मिन्यथार्थे सति लोकस्य प्रतिज्ञा पूर्णाभवत्। अस्मत्प्रतिज्ञाया उद्देशोऽपि तदेवासीदिति याचकाना स्मृतिरस्तीति मन्ये । अतो वयमनयाज्ञया तृप्ता इति व्यक्तीकृतम् ॥

परत्वनया समाप्त्या मम सतोषो नाभूत् । यत प्रतिसत्याग्रहयुद्धस्यान्ते द्रष्टव्य माधुर्यमत्र नासीत्। मडलाधिकारी स्वेन व्यवस्थापयितु न किंचित्कृतमितीव वर्तते स्म। निर्धनेभ्य करग्रहणमाज्ञप्तमासीत्। किंचैतेनाल्पजनानामानुकूल्यमासीत्। को निर्धन इति निर्धारण लोकायत्तम्। परतु ते तन्नाचरन्। तदाचरितु चैतन्याभाव तेषु वीक्ष्य दु खितोऽभवम्। अत एतद्युद्धसमाप्ति सत्याग्रहस्य विजय इति जनस्य विजृभणे सत्यप्यह तत्रोत्साहनाभवम्। यत पूर्णविजयस्य मुख्याशा अत्र न स्थिता ॥

सत्याग्रहिण आरभापेक्षयान्तेऽधिकशक्तिमन्तस्तेजोवतश्च यदि भवन्ति तदा तादृश सत्याग्रह युद्ध योग्यमिति वक्तु शक्यम् ॥

यद्यप्येव तथाप्यप्रत्यक्षा सपरिणामा नाभूवन्निति न । एतेऽद्यास्मद्गोचरमायान्ति । एतेषा फल वयमद्य भुञ्ज्महे। खेडासत्याग्रह एव गुजरातीकृषीवलाना जागर्तेरुदयचिह्नम् । तदेवैषा राजकीयशिक्षणस्याक्षराभ्यास ॥

डॉक्टरबेसटमहाशया ' होम रूल ' प्रसरण कृषीवलानस्पृशदिति सत्यम्। किंतु खेडा सत्याग्रह एव सुशिक्षिता सार्वजनिकसेवका कृषीवलाना जीवनेन सपर्कमारब्धातु शक्यमकुर्वन्। एतेनैते राष्ट्रसेवका स्वेषा कृषीवलाना चैक्यमशिक्षन्त। स्वकार्यस्य योग्य क्षेत्र तैर्लब्धम्। तेषा त्यागशक्तिरवर्धत। श्रीवल्लभभाईमहाशयोऽस्मिन्युद्धे प्रविष्ट इत्येतदेव प्रशसनीयम्। गतवर्षे गुजरात देशेऽतिवृष्ट्या यदानाहूतमभूत्तदा जनस्य साहाय्यकरणादस्मिन् वर्षे ' बारडोली ' सत्याग्रहा चरणाच्च तस्य प्रमाणमस्माक विदितमासीत्। गुजरातीजनजीवने नूतना कला वीर्यं च पूर्णमासीत्।

तत्रत्यकृषीवलस्यानिर्भयस्वशक्तेर्ज्ञानमुत्पन्न स्वस्य मुक्ति स्वहस्ते स्थिता । अपि यत् मुक्ति स्वीयसहनशक्ति त्यागशक्ति चानुरुध्य वर्तत इति पाठो मनस्यप्रमृज्यरीत्या लग्नोऽभूत्। ' खेडा 'कलहद्वारा सत्याग्रहो गुजरातीभूतले दृढमूल स्थित ॥

एव मम सत्याग्रहपरिसमाप्तौ सतोषमनुभवितु यद्यपि न किंचिद्दृष्ट तथापि खेडाकृषीवला अत्युत्साह प्राप्नुर्यत स्वप्रयत्नयोग्यफल लब्धमिति तेषा विदितम्। अपि च दु खनिवारणाय सत्य रामबाणसदृश मार्गमवालोकयन्। तेषामुत्साहस्यैतद्ज्ञान पर्याप्त कारणमासीत् ॥

तथापि खेडाकृषीवला सत्याग्रहस्यान्तर्यस्वरूप नाजानन्। अस्य कटुरनुभव पश्चात्तेषा-मभूत्। एतदग्रिमाध्याये विवरिष्यते ॥

षड्विंशोऽध्यायः

# ऐक्यार्थे प्रबलापेक्षा

खेडासत्याग्रहारम्भे यूरोपखण्डस्य भयंकरं संग्रामं प्रवर्तते स्म। राजप्रतिनिधिर्दिल्लीपत्तने युद्धसभां विधाय तदर्थेऽनेकानग्रेसरानाह्वयत। अहमपि तां सभां गन्तुं निर्बद्धः। पूर्वमेव निवेदितो मया राजप्रतिनिधिना लॉर्डचेम्सफर्डमहाशयेन सह मम स्नेहसम्बन्धः॥

आमन्त्रणं स्वीकृत्याहं दिल्लीपत्तनं गतः। तथापि सभां प्रवेष्टुमासन्नं तत्राया। 'अली'सहोदरयोरनाह्वानं सभायास्तत्र मुख्यस्य। तौ तदा कारागृहे आस्ताम्। यद्यपि तद्विषयो मयाधिकं श्रुतस्तथाप्येकद्विवारमात्रं तयोर्दर्शनमासीत्। प्रत्येकोऽपि तयो राष्ट्रसेवां धैर्यं च प्रस्तौति स्म। मम 'हकीमसाहेब'महाशयस्य निकटपरिचयस्तदानीं न संबभूव। स्व आचार्यरुद्रमहाशयो दीनबन्धु ॲन्ड्रूजमहाशयश्च तयोर्महतीं प्रशंसामकुरुताम्। कलकत्तापत्तने प्रवृत्तायां मुसल्मानानां महासभायामहं श्वेबकुरेशीमहाशयं न्यायवादीख्वाजामहाशयं चादर्शम्। डॉ अनसारी-डॉ अब्दुर्रहेमान-महाशयाभ्यां मया परिचयः कृत आसीत्। मया मुसल्मानसज्जनानां मैत्री अन्विष्यते स्म। एतेषां सम्पर्कद्वारा मुसल्मानजनानां चित्तं ग्रहीतुं मम तीव्रेच्छासीत्। अतस्तैः सह गाढसम्बन्धं कर्तुं यत्रकुत्रापि तैराहूतेन मया गम्यते स्म। मयि निर्बन्धोऽनावश्यक आसीत्॥

हिन्दुमुसल्मानजनानां ससौहार्दं नासीदिति मम दक्षिणाफ्रिकायां स्वल्पेनैव कालेन विदितमासीत्। ऐक्यमार्गे स्थितानन्तरायान् निर्मूलयितुमवकाशे सति तादृगवकाशो मया न परिहीयते स्म। यस्य कस्यापि स्तुत्या अथवा स्वगौरवहान्येतरास्तोषयितुं मम स्वभावे नासीत्। किन्तु ममाहिंसातत्त्वस्य हिंदुमुसल्मानजनानामैक्यताप्रश्न एवातिकठिना सूर्मी भविष्यति। अहिंसाप्रयोगानां तदेव विशालक्षेत्रमिति दक्षिणाफ्रिकायां ममानुभवैर्मनसो दृढमासीत्। अद्याप्यहं तथैव मन्ये। भगवान् मां परीक्षते इति मम जीवनस्य प्रतिक्षणं विज्ञायते॥

यदाहं दक्षिणाफ्रिकायाः प्रतिनिवृत्तस्तदेदृशाद्धामिप्रायवानासम्। अत 'अली'भ्रात्रोः सम्बन्धममूल्यमगणयम्। तथापि ततोऽप्यधिकमैत्र्या समावनात् पूर्वमेव राजकीयास्तौ जनसम्पर्कादूरीचक्रतुः। मौलानामहम्मदलीमहाशयः कारागृहाधिकारिणामनुज्ञां प्राप्य मम 'बतुल'कारागृहात 'छिंदवाडा'कारागृहाच्च पत्राणि दीर्घाणि लिखति स्म। 'अली'सहोदरौ द्रष्टुमहं राज्याधिकारमनुज्ञां प्रार्थयम्। किन्तु तन्निष्फलमभूत्॥

अनयोः सहोदरयोर्बन्धनादनन्तरं कलकत्तायां मिलिते 'मुस्लिमलीग' अधिवेशने मुसल्मानमित्राणि मामाह्वयन्त। भाषणं कर्तुमहं प्रार्थितः सन् कारागृहाद्'अली'भ्रात्रोर्विमोचन

कर्तव्यमधिकृत्य भाषणमकरवम्। ततः स्वल्पकालेनैतानि मित्राणि मामलिगढपत्तनस्य मुस्लिम् विद्याशालां प्रति निन्युः। तत्रत्य युवकानामहं देशसेवाप्रवृत्तौ "फकीरैः" युष्माभिर्भवितव्य मित्याह्वानमदाम्॥

अनन्तरं 'अली' भ्रात्रोर्बन्धविमोचनाय राज्याधिकारे पत्रव्यवहारमकरवम्। अहं 'खिलाफत' विषयेऽस्मिन्सबन्धे 'अली'भ्रात्रोरभिप्रायान् प्रवर्तितकार्याणि च परामृष्टवान्। मुसल्मानमित्रैः सह बहुशस्ता चर्चामकार्षम्। यद्यहं मुसल्मानजनाना वस्तुतः सुहृद् भवेय तथा 'अली'भ्रात्रोर्विमोच नाय 'खिलाफत'समस्या न्यायेन पूरयितुं च साध्य सर्वसाहाय्य मया करणीयमिति मम प्रत्यभात्। तत्प्रार्थनाया नीतिविरुद्ध किमपि न चेदस्ति तावतालम्। तत्प्रश्नस्य स्वतन्त्रगुणदोषाणा गणना मम कार्यं न हि। धर्मसबद्धविषयेषु भिन्ना सन्ति विश्वासाः। प्रत्येकपुरुषस्यापि स्वीयविश्वास एव परमोत्तमः। प्रत्येकस्मिन्धार्मिकविषये सर्वेषामेक एव विश्वासश्चेत्सर्वस्मिञ्जगत्येक एव धर्मः स्थितो भवेत्। दिनेषु गच्छत्सु मुसल्मानजनाना 'खिलाफत'सबन्धे या प्रार्थना सा नीतिनियमविरुद्धा न भवति। अपि च न्याय्य भवतीति आङ्ग्लप्रधानमन्त्रीलॉइड्ज्यॉर्जमहाशय ममतिमदादिति मम ज्ञातमासीत्। ततः प्रधानमन्त्रिणा दत्तवचन यथासौ निर्वाहयति तथा कर्तुं यथाशक्ति साहाय्यकरण मम कर्तव्यमिति मम प्रत्यभात्। तेन दत्त वचन कियत्स्पष्टमासी दिति चेन्मुसल्मानजनप्रार्थनाया गुणदोषविमर्शः केवल ममान्तरात्मनस्तृप्तये भवति॥

मित्रैर्विमर्शकैश्च 'खिलाफत'प्रश्नविषये मम वर्तन खडितम्। तथापि ममाभिप्रायान् परिवर्तयितु मुसल्मानजनैः सहकारेण विषाद प्राप्तु वा मम न किंचित्कारणमस्तीति प्रतिभाति। तादृक्सदर्भस्य पुनः प्राप्तौ मम वर्तन पूर्ववदेव तिष्ठेदिति॥

अतो दिल्लीं गतेन मया मुसल्मानजनाना पक्षो राजप्रतिनिधेरवधानाय नेतव्य इति मम पूर्ण उद्देश आसीत्। 'खिलाफत' प्रश्नः पश्चात्स्वरूपो न तदापि प्राप्त आसीत्॥

*किन्तु दिल्लीं प्राप्ते मयि मम युद्धसभाया भागीभवननिषयेऽन्योऽन्तराय आसीत्। दीनबन्धु* ॲण्ड्र्यूमहाशयः युद्धसभाया मम प्रवेशो नातिनिरुद्ध खल्विति प्रश्नमुपास्थापयत्। 'इग्लैंडइटली'देश योर्मध्ये प्रवृत्तगुप्तनियमानधिकृत्याङ्ग्लपत्रेषु वर्तमान विषय मे न्यवेदयत्। 'इग्लैंड' देशे तर 'यूरोप्य' राज्याधिकारेण गुप्तमर्थानकरोद्यदि मयास्या सभाया भागिना भवितव्य कथमिति ॲण्ड्र्यूमहाशयः पप्रच्छ। अत सभागमने मम सकोचं निवृत्याह लॉर्डचेम्सफर्डमहाशयाना पत्रमलिखम्। स तं प्रश्नमामना सह चर्चयितुं ममाह्वान ददौ। तेनापि च तस्यास पार्श्वदर्शिना मेफिमहाशयेन सह दीर्घकालमहमचर्चयम्। सभागमनेतु मम नैर्मिरिनास्य पत्रितमभीत्। राजप्रतिनिधेर्मतं एवं स्थित इति वक्तव्य—यथा यद् 'ब्रिटिश'मन्त्रिणां पृष्टे न मिथ्ये तमर्हं राजप्रतिनिधिर्जानातीति भवता नागन्तु गद्य। 'ब्रिटिश'राज्याधिकारो न कदापि प्रमत्ततीयद वेत्तरे वा न भूम। किंतु परमाधिपत्येन

समष्ट्या सदैव कृतमिति यदि भवान् समन्यते 'ब्रिटिश'सर्वधेन हिंदुस्थानस्य लाभ एवासीदिति भवता विश्वस्यते चेत् सङ्कटे निपतिते साम्राज्ये तस्य साहाय्य कर्तुं प्रत्येकभारतीयस्य कर्तव्यमिति किं भवता न समन्यते। आग्लपत्रिकाभिर्गुप्तनियमानधिकृत्य यल्लिखित तन्मयापि पठितम्। तन्मुक्त्वा एतद्विषये न किंचिन्मया ज्ञायत इतीमा पत्रिका बहुवारमसत्यवार्ता स्फोटयन्तीति भवता ज्ञायत एव। साम्राज्यस्यैतादृक्कष्टकाले पाप्ते केवलवृत्तपत्रिकावृत्तान्तस्याधारेण साहाय्य न दास्यामीति किं युक्त। युद्धसमाप्तौ भवदिष्टप्रकारेण नैतिकप्रश्नानादायास्मान्यथेच्छ खण्डयत। किंत्वद्य मास्तु॥

एवंविधो वादो न हि नूतन। किन्तु तद्वचनविधया तत्सदर्भस्य महिम्ना च स मे नूतन इव प्रत्यभात्। अह सभाया भागी भवितु समतिमदाम्। मुसलमानप्रार्थनाविषये राजप्रतिनिधिं प्रति पत्र लेखिताभवम्॥

सप्तविंशोऽध्यायः

# सैनिकानां प्रवेशः

एवमहं युद्धसभा गत। सैनिकाना सग्रहविषयो निर्णयो मयानुमोदितव्य इत्यतीवोत्सुक आसी द्राजप्रतिनिधि। अह हिंदी हिंदुस्तानीभाषाया वक्तुमनुज्ञा प्रार्थयम्। राजप्रतिनिधिरस्य समैने। किंत्वाग्लभाषायामपि वक्तव्यमित्यसूचयत्। मम वक्तव्य भाषण नासीत्। मया एकमेव वाक्यमुच्चारितम्। तस्य तात्पर्य यथा मम पर्यनुयोज्यतामवगत्य निर्णयमेतमनुमोद इति॥

हिंदुस्तानीभाषायामुक्तमाकर्ण्य बहवो मामभ्यनदन्। तादृशसभाया हिंदुस्तानीभाषाया यस्य कस्यापि भाषण जीवत्स्मृतावयमेव प्रथमो वार इति तैरुक्तम्। एतान्यभिनंदनान्यपि च हिंदुस्तानीभाषाया भाषणकृदहमेक एवेति ज्ञान च मम राष्ट्रियमानगौरव भङ्क्त्वा मम हृदय दु खितमकुर्वन्। अह भूगर्भमवतीर्य निगूढो भवेयमित्यमसि। अस्मद्देशकार्यमवबद्धास्वस्मद्देश एव मिलितासु सभास्वस्मद्देशभाषाया बहिष्कार। मादृशो य कश्चित् हिंदुस्तानीभाषाया भाषते चेत् सोऽभिनन्दनयोग्यो विषय। कीदृशीय विषादकरी वार्ता। एतादृग्घटना वय कियत्क्षीणदशामवतीर्णा इति स्मारयन्ति॥

सभाया मयोक्तमेक वाक्य मम बह्वर्थगर्भितमासीत्। सभा वा मयानुमोदितप्रस्तावो वा मया न विस्मरणीयोऽभवत्। दिल्लीस्थेनैव मया पूरणीया पर्यनुयोज्यतैकासीत्। मया राजप्रतिनिधि पत्र लेखनीयमासीत्। एष मे न सुलभो विषय। अह सभा प्रविष्ट कथ किमर्थ चेति विवृत्य राज्याधिकारिवर्गनिरीक्षित किमित्येतत्स्पष्ट निवेद्य पत्रलेखनेन राज्याधिकारस्यापि च प्रजाना लाभाय मम कर्तव्यमिति मम प्रत्यभात्॥

अस्मिन् पत्रे लोकमान्य तिलक-'आली' सहोदरप्रभृतीना नायकानामेना सभा प्रयनाह्वानहते मम विषादो राजकीयसबन्धे लोकानां समतिप्राप्तये राजकीय कनिष्ठपक्षे कर्तव्या सुधारणा युद्धानन्तरपरिस्थितेविषये मुसल्मानजनै प्रार्थित च व्यक्तमकार्षम्। तत्प्रकरणाय राजप्रतिनिधेर नुज्ञामपेक्षितामसौ सतोषेण प्रददौ ॥

सभासमाप्तेरनतरमेव 'सिमला'प्रति राजप्रतिनिधेर्मयानात्तत्र पत्र प्रेषणीयमासीत्। मम दृष्ट्या तन्महत्त्वपूर्णमासीत्। प्रेषणाधिकरणाप्रेष्यमाणे विलम्बोऽभविष्यत्। यात्वमप्यीष्टं मासीन्ममेच्छा। तथापि यस्य कस्यापि सदेशहारिणो वशे प्रेषयितु न रोचते स्म। य योऽपि परिशुद्धहृदयस्तदादाय राजप्रतिनिधेर्भवन स्वहस्तेनैव प्रापयेदिति ममेच्छासीत्। दीनबधु-अँड्रुजमहाशयो मुख्याध्यापकसुशीलरुद्रमहाशयश्च 'केंब्रिजमिशनपाद्रि' आयर्लेंडमहाशयस्य नामधेयमसूचयताम्। स सज्जन पत्रमालोक्य सदिति दृष्टे नेतु समेने। तदा ममात्रपत्र नासीदित्यतो नासीत् कोऽपतराय। स तत् पठितवान्। तस्मायिदमरोचत। तन्नीत्वा प्रदातु समेने। द्वितीय श्रेणीप्रयाणशुल्क प्रदिसुरहम्। तथापि तन्न गृहीत्वा मध्यमश्रेण्या प्रयातुमभ्यासो ममेत्यनैषीत्। तस्मिन्रात्रिप्रयाणे सत्यपि तस्यामेव श्रेण्या प्रयात। तस्य सरलता ऋजु स्वभावो निष्कपटा वाक् च मम मानसमाचकर्ष। एवरीत्या पवित्रमानससज्जनद्वाराप्रेषितपत्रेणाभीप्सितमेव फल लब्धमिति मे प्रयभात्। एतेन मम मनोभारोऽवतारित। मम मार्ग सुगमोऽभवत्॥

योधाना सग्रहो मम द्वितीयपर्यनुयोज्यतासीत्। खेडा विना कथमन्यत्र मयारभणीयम्। मया सह कार्यकर्तॄन् विना प्रथमतो योधा भवितु के वान्ये आह्वातव्या। तस्मात् 'नडियाद'पत्तन प्राप्य वल्लभभाईप्रभृतिमित्रै सहैतद्विषय चर्चितवान्। तेषा कतिपयैरिय गुलिका सौलभ्येन निगरितुमशक्या भवति। अगीकृतमदीयसूचनास्तस्य फलवास्तिविषये सशयग्रस्ता बभूवु। अह येषा पार्श्वे गत्वा सैन्य प्रवेष्टव्यमिति प्रष्टुमीप्सितवास्तेषा राज्याधिकारस्यापि मध्ये प्रेमोत्सेको नासीत्। राजकीयसेवकाना सबन्धे तैरनुभूत कटुरनुभवस्तत्स्मृतावद्यापि नूतन स्थित ॥

तथापि ते कार्यारभपक्षेऽभिमता आसन्। आरब्धे मया कार्ये ममांधत्व गतम्। ममाशाप्रवाह स्यादस्मादतरायोऽभूत्। 'खेडा' सत्याग्रहकाल जना स्वशकट भाटक विना प्रयच्छन्ति स्म। इदानीं पुन स्वयसेवकानां वाक् तिष्ठतु। भाटकस्यापि शकट दुर्लभमासीत्। शकटानि विहाय पादक्रमणन् प्रयातव्यमिति निरचैष्म। एव दिनस्य विंशतियोजनदूर गतव्यमासीच्छकटानामप्यलाभे जना आहार प्रयच्छन्तीति निरीक्षण कथ स्यात्। आहाराय प्रार्थनाप्यनुचितेति वक्तुमशक्य मासीत्। निश्चित च स्वयसेवकै प्रत्येकेनापि स्वकीयमाहार स्वयमेव कोशे स्थापयि वा प्रयातव्य मिति निर्धारितम्। तदोष्णकाल इति शयन वा निशारो वा नावश्यकमासीत्॥

यत्र यत्र वय गतास्तत्र तत्र सभा आमत्रिता। जनास्तात्रदायान्ति स्म। परन्त्वेवद्विपुरुषा अपि सैन्य प्रवेष्टुमग्रे नायाना। भवानहिंसोपासकस्तथापि शस्त्रग्रहण कथ ब्रवीति। वय

राज्याधिकारस्य साहाय्यकर्तारश्चेत्तेन को वोपकारः कृतोऽस्माकम् । इमान् प्रश्नान् तथाविधानन्यानपि पृच्छन्ति स्म ॥

तथाप्यस्मन्निरन्तरोद्यमः फलकारी भवितुं प्रवृत्तः । बहवो जनाः स्वनामानि प्रददुः । प्रथमसमूहस्य प्रेषणात्परमवशिष्टान् गणान् प्रेषयितुं साध्यं भविष्यतीत्यस्माभिर्निरीक्षितम् । एवं नूतनप्रविष्टाः कुत्र स्थापनीया इति विषयमधिकृत्याहं प्रान्तविभागाधिकारिभिः सह पूर्वमेव वाग्व्यवहारं कुर्वन्नासम् । प्रत्येकप्रान्तविभागाधिकारिणः ( कमिशनर् ) दिल्लीसभायाः समाहूयन्ते स्म । एतादृगेव गुजरातदेशे मिलिता । अहं मम सहवासिनश्च तत्राहूताः । वयं तत्र गताः । परन्तु गव्हर्नरस्यौचित्यं दिल्लीसभापेक्षयात्राल्पीयस्तरमिति प्रथमात् । नीचदासत्ववातावरणे नाहं सुखित आसम् । अहं स्वल्पदीर्घं भाषणमकरवम् । मम भाषणेऽधिकारिणा स्तुतिरूपं न किंचिदुक्तम् । तावदेव न । एकद्विकठिणवाचोऽप्यासन् ॥

सैन्यं प्रवेष्टव्यमिति जनं प्रार्थयितुं मया 'चीटय' प्रदीयन्ते स्म । तेषां मध्ये युक्त एको वाद कमिशनरस्याधिकारिणोऽरुचिकर आसीत् । तद्यथा भरतखण्डस्य शासने 'ब्रिटिश'जनैः कृतेष्वकृत्येषु सर्वेष्वपि जनानामेव निःशस्त्रीकरणमकृत्यमत्यन्तगर्हितमिति चरित्रे परिगण्यते । एतच्छासनं निराकर्तुमस्माभिः शस्त्रविद्या शिक्षणीया यदर्थं सुसमयः प्राप्तः । मध्यमश्रेणीजनः स्वयमग्रत आगत्य राज्याधिकारस्य संजातेऽस्मिन्नापत्काले साहाय्यं करोति चेदविश्वासो विनश्य शस्त्रधारणान्तरायो न स्थास्यतीति ॥

प्रान्तविभागाधिकारी एतदभिलक्ष्य भाविचोभयोर्मतभेदे सत्यपि यतो भवान्ममात्रागतस्ततोऽहं संतुष्ट इत्युवाच । ममाभिप्राया मया यथाशक्ति विनयेनैव समर्थयितव्या एवासन् ॥

अस्ति इहास्माद्राजप्रतिनिधिं प्रति लिखितं पूर्वोक्तं पत्रम् —

" यथा भवान् जानाति तथैतन्मासस्य ( एप्रिल ) पञ्चविंशतितारांकदिनस्य पत्रे लिखितकारणैर्युद्धसभामहं नागत इति वक्तव्यमापतितम् । परन्तु कृपया दर्शनप्रदानानन्तरं यद्यपि विनान्यत्कारणात् परं भवति मम परमादरात् सभां गन्तव्यमिति स्वयमेवात्मानं प्रेरयित्वा सभामागतोऽस्मि। लोकमान्य टिळक–मिसिस बेसंट–आलिबन्धौ ( एते प्रजाभिमतनायकेष्वन्यतमप्रमुखा इति मे मतम् । ) सभां प्रति नाहूता इत्ययेकं कारणम् । तेषामनाह्वानमत्यन्तं प्रमाद इतीदानीमप्यहं मन्ये। एतत्सभानन्तरं प्रान्तेष्वपि सभा मिलिष्यन्तीति मया ज्ञातम् । तस्मात्तेनान्यप्रमुखानाहूय राज्याधिकारिणस्तदाशयानारुण्यं यावत् प्राप्य स्वप्रमादं मार्जयेयुरिति विनयपूर्वकं मया सूच्यते । एतान् कोटयन्तर्प्रजानां प्रतिनिधीनायकान् राज्याधिकारस्यातिभिन्नाभिप्रायवादिनोऽपि ये कोऽपि राज्याधिकारानादरेण दृष्टा न विजयेतेति विज्ञापयामि । परन्तु सभायामुपस्थितेषु मेरे पक्षः स्वाभिप्रायं निराकर्तुं व्यक्तीकर्तुमवकाश आसीदिति वस्तु मम मनोगतं भवति । सभायां योऽस्मकं वा मतभिमतमुद्देशपूर्वकमेव न व्यक्तीकृतम् । सभायां स्वकीयनिष्कपटसहायप्रदानेन ममाया उद्देश्यमहमुत्-

मतया साधयितुं शक्यमिति मम प्रत्यभात्। अहं कमप्यन्तरायं विना तथा कृतवान्। एतेन सह प्रेषिते प्रत्येकपत्रे निवेदितसूचना राज्याधिकारिणः शीघ्रमेव स्वीकुर्वन्ति चेत्तथा शीघ्रमेव कार्यरूपं नेतुं शक्यन्त इत्याशां बिभर्मि ॥

इत्थं किंचित्कालेनैव वयमितरस्वास्थ्यानीव 'ब्रिटिश'चक्राधिपत्यस्य स्वतन्त्रभागिनो भविष्याम इत्याशय रक्षाम। यदा चक्राधिपत्यस्य सङ्कटमागतं तदा निर्मत्सरेण निरातङ्केन च साहाय्य-प्रदानमस्माकं धर्म इति मम समतिरस्ति। तथाप्यलब्धो दातव्य इति निश्चितमस्माभिः। किञ्चास्मद्-भीष्ममितरेषामिव त्वरितमेव सेत्स्यतीति निरीक्षणमेवैतस्याः प्रवृत्तेः कारणमिति केवलं सत्यमेव। अतः कर्तव्यस्याचरणं स्वयमेवानुचितमधिकारं सम्पादयिष्यतीति यथैतदनन्तरे भविष्यन्तीति भवदीय भाषणे सूचितराजकीयसुधारणा राष्ट्रमहासभापि च मुसल्मानमहासभाभ्यां मिलित्वा रचित-निर्वहणक्रमं स्थूलतयानुसरन्तीति जनस्य निरीक्षणं न्याय्यमेव भवति। युद्धसभाया बहवः सदस्या आ महदयपूर्वकं सहकारं प्रदातुमिव श्रद्धाधारभूता भवतीति मे विश्वासः ॥

अस्मदेशीयो जनो यथा पदं पश्चान्निवर्तते तथा कर्तुमहं शक्तश्चेन्महासभाया निर्णयान् खिलाफ्प्रश्नस्य युद्धसमाप्तिपर्यन्तं स्वराज्यमथवा प्रजाप्रतिनिधित्वमिति नोच्चारणीयं यथा तथाकरिष्यम्। साम्राज्यस्यैतद्विषमघटीप्राप्तौ भरतखण्डः स्वीयसुदृढयुवकान् सर्वानपि साम्राज्यस्य कृते आहुतीकर्तुं यथा शक्यं तथा कर्तव्यम्। अनेन कार्येणैकेनैव हिंदुस्थानं चक्राधिपत्ये सर्वत्राप्यत्यन्तादरपात्रमङ्गं भूत्वा वर्णभेदः कुलभेदश्च प्रणष्टोऽभविष्यदिति मे विदितम्। किन्तु प्रायो भारतस्य जना सर्वेऽपीनोऽप्यन्यपरिणामं मार्गमनुसर्तुं निश्चिता भवन्ति। अपि च शिक्षितवर्गे जनसमाजस्योपरि प्रभावशाली न भवनीयश्च वक्तुं न शक्यम्। दक्षिणाफ्रिकातो हिंदुस्थानं निवर्तनादनन्तरं मम हृदयेऽतिसाहाय्यकमादमपर्को भवति। तेषु राज्याभिलाषो विशेषतः प्रसृत इत्यहं स्मरामि। पूर्वं महासभाया मेऽन्ते शासनेन निर्धारणपूर्वकं निश्चितान्यस्तरे 'ब्रिटिश'हिंदुस्थानस्य प्रजाप्रतिनिधिः प्रदेयमिति निर्णयस्याहमपि भागी सवृत्तः। एतच्चार्थं महाधैर्यापेक्षमिति मम समति-रस्ति। किंतु शीघ्रमेव प्रामाण्यं स्वराज्यमयप्रेक्षणापेक्षयान्यन्तरेणान्येन केनापि भरतखण्डस्य प्रजा न तृप्यन्तीति मया सम्यगवगतम्। एतद्ध्येयमावनाय न काप्यादृतिरिक्ता भवनीति मयमानानेके भारते विद्यते इति मम विदितम्। यस्मिन् साम्राज्ये स्वीयोऽप्युत्सवदद्यारोढव्येति इच्छामात्रा च निश्चित-यत्नन्यदर्थे स्वयंमानमर्पयितुं सज्जरितमेवैतत्यमिवयत्नं पर्याप्ता जागर्तिरस्तेषां विद्यते। अतः एतच्चक्राधिपत्यस्य प्राप्तसमयाय दर्शयितुं निःशब्दं निराडंबरं च कायेन वाचा मनसापि प्रवर्तितुं दानादस्मदीयाश्वस्य निकटे वेगेन गमनं विना नान्यत्। एतत्सुस्मसय न लक्ष्यते चेत्तद्वीयाम इत्या भविष्यति। साम्राज्यस्य रक्षणप्रयत्ने वयं भागिनश्चेत्तस्मिन्कार्ये एव स्वराज्यं स्थापितमिवात्र निर्णेतव्यम् ॥

अतोऽस्मात् लभ्य प्रत्येकं पुरुषं साम्राज्यरक्षणार्थमर्पयितुं समतिर्देयेति मम स्पष्टमस्ति। किंत्वार्थिकसाहाय्यविषये तदैव वचनं वक्तुं न शक्यम्। भारतखण्डेन साम्राज्यस्य कोशे मम योग्यतामतिक्रम्य धनं प्रदत्तमिति मम कृपीनलै सह मवृत्तनिकटसंपर्केणावगतम्। एवमुक्त्वाहं मम देशबान्धवेष्वधिकभागवासिनामभिप्रायं व्यक्तीकुर्वतास्मीति मम विदितम्॥

सर्वेषामस्माकमाशयं साधयितुं वयमस्मज्जीवनस्य विनियोजनेनैव सभा पदमेकं भवतीति मम मतम्। इतरे बहवोऽस्माकं तथैव भावयन्तीति मे विश्वासः। किंत्वस्मदीया परिस्थितिरति विचित्रा। अद्य वयं चक्राधिपत्ये स्थिता स्म। किंत्वस्माकं तत्रभागिनामधिकारो न विद्यते। अग्रेऽपि परिस्थितिरुत्तमा भवेदित्याशामवलम्ब्य वयमस्मज्जीवनमेव विनियुञ्महे। साशा कीदृशीति स्पष्टमेतन्नकिंचिन्निगूह्य युष्माकं निवेद्यते। न चेदहं युष्माकं मम देशस्यापि द्रोही भवेयम्। साशा सिध्यत्विति वयं युष्माभिः समतिपत्रं नापेक्षामहे। किंत्वाशाभंगे सति तेन साम्राज्यभ्रमोऽपि नश्यतीति युष्माभिरवगन्तव्यम्॥

विषयमेकमनिवेद्य मया न स्थेयम्। अस्माकमतभेदा विस्मर्तव्या इति युष्माभिरुक्तं खलु। राज्याधिकारिणामत्याचरणं निरङ्कुशवर्तनं च सोढ्वा स्थातव्यमित्येतदेव तदर्थश्चेदहं युष्मदिच्छा मनुसर्तुं न शक्तः। सुसघटितं निरङ्कुशप्रवर्तनं प्रत्यास्यातुं मम साहसमशेषं व्ययीकरिष्यामि। नैवोऽपि मनुष्योऽनादरेण द्रष्टव्यः कालान्तरापेक्षयातिशयितं प्रजाभिप्रायं ज्ञात्वा तदवधातव्यमित्यधिकारिणा निवेदनीयं भवति। चंपारण्ये बहोः कालादवस्थितं निरङ्कुशराज्यं प्रत्ययापाहं 'निटिश' न्यायपक्षपात एव सर्वाधिकाशक्तिरिति मया प्रदर्शितम्। 'खेडा'स्थले राज्याधिकारं शपतो जना अद्य स्वीयसन्मार्गे कष्टं सोढुं सिद्धा भवेयुश्चेत् स्वयमेव देशस्य शक्तिर्न राज्याधिकार इति ज्ञातम्। अतो राज्याधिकारं प्रति तेषां क्रोधः प्रशाम्यतीन। ते वदन्ति यथा—यदा न्याय्यं शिर उन्नापयेत् तथा सविनयेन क्रमेण प्रत्यवस्थेयम्। अतोऽनेन राज्याधिकारेण प्रजापक्षपातिना भवितव्यमिति। अनया रीत्या चंपारण्यस्य खेडास्थलस्य च समारम्भा मया युद्धसबन्धे कृता स्पष्टविशिष्टप्रत्यक्षसेवा भवति। अस्मिन्विषये मम कार्यं विरमयेत्युक्तिरेका मम श्वासोच्छ्वासं विरमयेत्येवा उभेऽपि समाने। पशुबलं प्रति प्रेमशक्तिर्नामात्मबलस्य शक्तेरुपयोगं जनेषु प्रकाशयितुं यद्यहं शक्तस्तदा प्रपञ्चमपि प्रत्यवस्थातुं समं भारतखण्डं युष्मदग्रे स्थापयितुं शक्नोमीति मया ज्ञायते। अत एतद् सत्यसहनस्य नित्यधर्मं मम जीवने व्यक्तीकृत्य तत्र ये सादरास्तत् स्वीकाराय तदग्रे स्थापयितुं कालोऽयमकालोऽय मिति नियमं विहायाभ्यसमभ्यस्यामि। अन्यस्मिन् कस्मिंश्चित्कार्येऽहं प्रवृत्तश्चेत्तदेतद्धर्मस्य सारश्रेष्ठ्यं प्रतिवादयितुमेव नान्यकारणाय॥

पर्यन्ते यूयं चक्रवर्तिनो मन्त्रिणो मुसल्मानराज्याधिकृत्याभयहस्तप्रदानाय वक्तव्य मित्यहमिच्छामि। प्रत्येकमुसल्मानस्यापि विषयेऽस्मिन् गाढासक्तिरस्तीति युष्मान् विदितमेव। हिंदुर्भूत्वाप्यहं तेषां विषयं औदासीन्यं न किञ्चित् सहे। तेषां दुःखान्यस्मद्दुःखानि भवन्ति। तत्र

स्थानाधिकारिणा लेशतोऽपि हिंसन यथा न भवेन्मुसलमानतीर्थक्षेत्राणा विषये तन्मनोधर्मणा-मादरणमपि च स्वराज्यसाधनाय हिंदुस्थानस्याधिकारविषये न्यायेन सकाल च व्यवस्थापनमेत-त्कार्यक्रम एव साम्राज्यस्य क्षेमाय स्थित । आग्लजनागे मम प्रेमणि स्थिते प्रत्येकभारतीये आग्लाना विषये आदरोऽस्तु । इतीच्छयैवेद लिखितम् ॥

## अष्टाविंशोऽध्यायः

# मृत्युसंमुखे

सैनिकसंग्रहणकार्येऽहं मम देहस्वास्थ्य प्राय सपूर्णमिव व्यनाशयम् । तत्काले मया मुख्यश सेव्यमान आहारो यथा—भूचणक नवनीत जवीरादि । यद्यपि मया ज्ञात नवनीतममित भक्षयित्वारोग्यहानि सुलभेत्यह तदधिकमभुजे । एतेनामशकारब्धा । इदमहमधिकमलक्षयित्वा यदा कदाचिद्यथा मया गम्यते स्म । तथैव सायमाश्रम गत । तत्काले मयौषधसेवनमपूर्वमासीत् । एकवार भोजनपरित्यागे स्वास्थ्य भविष्यतीत्यचिंतयम् । परेद्यु प्रातर्न किंचिन्मया भुक्तम् । एतेन मम देहस्थितिरुत्तमाभूत् । किंतु सपूर्णस्वास्थ्यलाभायेत कतिपयकालमुपवास कार्य । यत्किंचिद्-भोक्तव्ये सति फलरसमेक विना नान्यत् ग्राह्यमिति मे निदितम् ॥

तद्दिन किंचित्पर्वदिनमासीत् । मध्याह्ने भोक्ष्य इति कस्तुरबाईमहाशयोक्तापि सा ममाशामुपाहरत् । अहमाशाधीन सल्म । अह दुग्धनवनीतदधिसर्पिरादिभि कृतपदार्थान्न भोक्ष्य इति सयल्पमाचरन्नासम् । अत कस्तुरबाईमहाशया मदर्थे गोधूमयूरे मधुरान्न कृत्वा तत्र सर्पि प्रति तैल निक्षिप्य समिश्रितवती । मदर्थे मुद्गदल्पायस निचिक्षेप । एतानि मह्यमरोचन्त । कस्तुरबाईमहाशया सतोष्य मम रुचि च तर्पयितु पर्याप्तमेव खादामि । एतेन मम देहस्थितेर्हानिर्न भवेदित्यह तान्यभक्षयम् । किंतु मम दुर्दैवमेनाद्रक्कालमेव निरीक्षते स्म स्वल्प मया न भुक्तम् । जठरपूर्णमभुजे । इतो यमधर्मराजस्यैतदधिक ताबूलप्रदानेन समाह्वान मावश्यकमासीत् । घटद्वोराभ्यन्तरे आमशका तीक्ष्णाद्दस्यन ॥

तद्दिनसायकाल एव मया 'नडियादपत्तन' प्रतिनिवर्तनीयमासीत् । साबरमतीनामक-मन्दिरस्थानकमन्दिरोद्दूरे स्थितमपि तत्र पादक्रमेण बहुल प्रयासोऽभवत् । श्रीवल्लभभाई-महाशयोऽप्यगमि महामदावादनगरे मिलिन । ममास्वास्थ्यं तेन ज्ञानमासीत् । किंतु मम वेदना निपदसह्याभूदिति तस्य नाहमदर्शयम् ॥

वय 'नडियाद'पत्तन दशहोरावादनसमये प्राप्ता । तत्रत्ये 'हिंदु'अनाथाश्रमभवने मे स्थानमासीत् । नडियादस्थानकान्मार्गरोशदूरे स्थितम् । अहं कथंचित्तत्र गत्वा प्राप्त ।

किर्त्वनर्वेदना वर्धमानाभूत् । पचदशानिमेषैरेवतार मङ्ग मिनर्नयमासीत् । पर्यन्तेऽहमा- यस्तोऽभवम् । मयानुभूयमानवृक्कवेदना मित्रेभ्यो निवेद्याहं शयने पतित । तावत्पर्यन्तं मया सर्वैरुपयुज्यमान शौचकूप गम्यते स्म । अथ दूरे स्थित । मम पार्श्वे मलोत्सार ('कमोड') आनेतव्य इत्यहमब्रवम्। एतत्प्रस्तुमह लज्जितोऽप्युपायान्तर नासीत् । श्रीछगनलालवापुजीमहाशय प्रयासिनो मलोत्सारमेकमानिनाय । सुहृद सर्वे चिन्ताक्रान्ता मा परित स्थिता । तैर्ममोपरि प्रसारितप्रेमभारया अवेक्षमाणतामर्नेव नानमासीत् । किन्तु तैर्नन वेदना परिहर्तुं न शक्यम्। तेषा नि महायता मम हठोऽवर्धयत् । वैद्याना साहाय्य मा भूत् । अहमौषध न ग्रहीष्ये । मया कृतप्रमादस्य प्रायश्चित्तमनुभवितु वरम् । इत्थ मनिहठ्याग्निनि निरुपाया पश्यन्त- स्तस्थु । तस्मिन्नुविंशतिहोरानिन्तरे त्रिंशद्वार चत्वारिंशद्वार वा मलोत्सारेण भवितव्यम् । अहमुपवासमकरवम् । प्रथमत फलरसोऽपि न गृहीत । बुभुक्षा त्वपूर्णतया निवृत्ता । तावत्पर्यन्तं मया मम शरीर वज्रमिव दृढ भवतीत्यगणनम् । किंतु तदेवाद्य मृत्तिकाखर्परमिवासीदिति मया दृष्टम् । तस्य सहनशक्तिरेव निनष्टासीत् । डॉ तलवलकरमहाशय आगत्यौषध सेव्यतामिति बहुप्रावदत् । मया समतिर्न दत्ता । 'इंजेक्शन' ग्रहीष्यामीत्युवाच । तदपि मे न समतम् । तत्काल 'इंजेक्शन'- विषये ममाज्ञान केवल हास्यजनकमासीत् । 'इंजेक्शन' अत यस्य कस्यापि प्राणिनो द्रुवेण भवितव्यमिति मया चिन्तितमासीत् । अनेन वैद्येन सूचिते 'इंजेक्शन' अत केवल वृक्षवनस्पत्यादि सिद्धपदार्थ उपयोजयिष्यते स्मेति मया पश्चादवगतम् । परन्त्वेतत्काल तस्योपयोगायातीवविलम्ब समवृत्त । विरेचन न व्यरमत् । एतेन मम केवल नि शक्तिरुद्भूत् । फलित नातिपातज्वर । मम सुहृदो भीता । अन्ये वैद्यैर्दिशन्तानिन्युः । किंत्वविधेय रोगिण प्रत्य किं वा कुर्यात् ॥

शेठअम्बालालमहाशयस्तस्य भार्या च नडियादपत्तनमागत्य मम सहवासिभिरालोच्य महता आग्रहेण मा 'मिरजापुर'स्थितस्वीय'शाहीबाग' मन्दिर प्रापयामास । अस्या ऋणानरपया मम कृतसेवापेक्षयाधिकतरनिर्मलनिष्कामप्रेमपूरितशुश्रूषाभाजो न कस्यापि भाग्य आसीत् । किंत्वेकविध स्वल्पज्वरो विराम विना मम शरीर जरयन्नासीत् । चिरकालस्थायीद जाड्य कदाचिन्मरणान्त मा गमयेदिति प्रत्यभात् । शेठअम्बालालमहाशयगृहे वर्धप्रमादपालनगौरवेणापि मन्न कस्यचिदनि- रुद्धय मामाश्रम प्रापयन्तेति त निरबध्नाम् । ममाग्रहेणाय वशीकृतो मा तत्र निनाय ॥

यदाहमाश्रमे चारपाया शयने लुठन्नासं तदा श्रीवल्लभभाईमहाशयो 'जर्मनी'देश सम्पूर्णं पराजित इति वर्तमानमानिनाय । अतः परं सैनिकसङ्ग्रहो निवृत्त इति प्रान्तीयसमितेः सूचनेन मदेश मम न्यवेदयत् । इत परं योधसङ्ग्रहो निवृत्त इति वृत्तान्तो मम मनसो भार न्यूनीकृतवान् ॥

अहमिदानीं जलचिकित्साप्रयोग कुर्वन्नासम् । एतेन मम किंचिदुत्तम समजनि । तथापि शरीरदार्ढ्यं पुन सम्पादयितु कष्टसाध्यमासीत् । बहवो वैद्या नि सन्देहमभिप्रायान् ददु । किंतु न किंचिदप्यौषध मनसा समतमासीत् । द्वित्रा मित्रैर्मया दुग्धस्यात्यन्तमहत्त्वस्य प्रतिपादनार्थं-

मम सार [illegible] इति [illegible] । [illegible] [illegible] पठितम् । [illegible]
[illegible] बहुशोऽजनीत । [illegible] ॥

[illegible] निर्णयो नासीत् । मम जीवन-
पथनिर्णायका नियमा [illegible] । अथ [illegible] मम जीवनपथेन [illegible]
आसीत् । [illegible] प्रेरणां [illegible] जीवितुमिच्छा मम नासीत् । मम [illegible]
नियमानेकान् निर्दिशिष्येन [illegible] तन्नियमविचार यतम ॥

एवं [illegible] । मम जीवन एव [illegible] मम
प्रथमो वार । मम नियमा परामृश्य [illegible] । [illegible]
[illegible] । अहं मृत्युमुखम् [illegible] इति मम [illegible] । तत्र श्री[illegible]महाशया
आहूता । [illegible] । [illegible]महाशयो डॉ. [illegible]महाशयेन सहागत । वैद्यो नाडी दृष्ट्वा
भवतो नाडी यथास्थिता भवति । चिन्ताया नास्त्यवकाश । एतदर्थमपि [illegible]
नान्यत् किंचिदित्यवदत् । किंत्वेतेन मम मन शान्तिर्नाभूत् । तां रात्रिं निद्रां विनायापयम् ॥

प्रातःकाल आगत । न तु प्राणा गता । किंत्वेत मरणमागत इति भावना प्रहत्य
पलायन कारयितुं न शक्यमासीत् । अतो यदा यदाहमुत्थितस्तदा तदा गीतापठनश्रवणेन काले
याप्यते स्म । अहं पठितुमशक्त । भाषितु नासीदिच्छा । अल्पस्वल्पभाषणेनापि मस्तिष्क बाध्यते
स्म । जीवन उत्साह एव नष्ट । केवलं श्वासोच्छ्वासेन जीवनमिति प्रदर्शनं मम नेष्टम् । एवं न
किंचित्कुर्वन्म्रियमाणा सहवासिना च सेवां स्वीकुर्वाणं शरीरं शनैं शनैर्जीर्णदलमिवासीत् सहायतया
यज्जीवनं तत्तीव्रवेदनाजनकमासीत् ॥

मरणं केनचित्कालेनायास्यतीति निरीक्षमाण शयितोऽहं यदा तदा डॉ. तल्वलकरमहाशय
किंचिद्विचित्रप्राणिन सहानीयागत । असौ महाराष्ट्रीय । नाय प्रसिद्ध पुरुष । किंतु तद्दर्शन-
मात्रेण सोऽप्यहमिव कश्चिदुन्मत्त इति दृष्टवान् । अयं स्वीयचिकित्सा ममोपरि प्रयोक्तुमागत ।
असौ 'ग्रान्ट' वैद्यशालाया पाठक्रम प्राय समापितवान् । परत्पाधिर्न गृहीत । असौ ब्रह्मसमाजे
प्रविष्ट इति पश्चादवगतम् । केल्करमहाशय इति तस्य नामातिस्वतन्त्रवृत्तिर्हठवादी च । प्रत्येकमसौ
स्वीयहिमपिंडशुश्रूषामग्रे स्थापयति । 'हिमपिंड' वैद्य इति तस्य नामास्माभिरवगतम् । सुशिक्षित
वैद्यैरनालोकिता कतिपयविषया आत्मनोपलब्धा इत्यस्ति दृढो विश्वासस्तस्य । त विश्वास मय्यपि
रूढमूल कर्तुमसौ न शक्त इत्येष उभयोर्दृढदृष्टविषय । एकस्मिन्विषये मम तच्चिकित्सायामस्ति
विश्वास । किंतु कतिपयविषयाणा निर्धारेऽसावत्यातुर प्रवृत्त इति मम शङ्का ॥

तेन परिशीलितविषयाणा गुणागुणास्तिष्ठन्तु नाम । स्वीयप्रयोग मम शरीरोपरिकर्तुमवकाश-
मदाम् । बाह्यचिकित्सा मया नावहिता । शरीरस्योपरि सर्वतो हिमपिंडबन्धन सा तस्य चिकित्सा ।
स्वप्रयोगेण मम शरीरस्योपरि सजात परिणाम इति सर्वं यद्यपि न सम्मत तेन मयि नूतनाशाङ्कुरिता

नवचैतन्यमभ्युदियायेति मया समनुभूतम्। प्रकृत्या मनसि जनितपरिवर्तनेन न शरीरस्थिति परिवर्तिता। मम बुभुक्षोत्पन्ना। पञ्च वा दश वा निमेषाच्छनैः शनैः परिक्रमितुं प्रवृत्तः। स इदानीं ममाहारे परिवृत्तिमसूचयत्। यथा भवतामाण्डानि यदि सेव्यन्ते तदा तव देहस्याभि-पुष्टिर्जायते। ततो देहस्यैतोऽपि शीघ्रं शक्तिरायाति। अण्डमपि दुग्धवन्निर्दोषः पदार्थः। इदं मांसं न भवति। सर्वाण्डेभ्योऽपत्यानि न निर्गच्छन्तीति भवता किं न ज्ञातम्। एतादृङ्निर्जीवाण्डानि पण्यवीथीषु लभ्यन्त इति॥

अहमीदृशाण्डान्यपि भक्षयितुं न सज्जस्थितः। किन्तु मम सार्वजनिककार्येषु कुतूहलं कर्तुं पर्याप्ता शरीरस्थितिरुत्तमा बभूव॥

एकोनत्रिंशोऽध्यायः

## 'रोलेट'शासनमपि च मम धर्मसंकटम्

**'माथेरान'**स्थलं गत्वा देहस्वास्थ्यं शीघ्रमेव भविष्यतीति सुहृदो वैद्याश्च दार्ढ्येनाब्रुवन्। तस्मादहं तत्र गतः। किंतु तत्र पयमुदकमतीवलवणमयमासीत्। अतो ममावस्थितिस्तत्र बहुकष्टतराऽभवत्। आमशूलबाधया ममान्तद्वारं बहुसूक्ष्मतया तत्र विदरवशान्मलविसर्जनकाले तीव्रयातना समभवत्। अत आहारजिघृक्षोर्भयमुत्पेदे। एकसप्ताहात्पूर्वमेव मया 'माथेरान' स्थानं परित्यज्य गन्तव्यमापतितम्। अथ शङ्करलालबैंकरमहाशयो ममारोग्यशिक्षणभारमुवाह। डॉ. दलालमहाशयस्यादेशः प्रष्टव्य इति निरबध्नात्। तदनुसारेण डॉ दलालमहाशय आहूतः समागतः। एतस्मिन्ने-व क्षणे मनोनिर्धारणशक्तिस्तदीया मम मानसमाचकर्ष। व्रणस्य तत्क्षणमेव शस्त्रचिकित्सा कर्तव्येति स ऐच्छत्। तथास्त्वित्यहमुक्तवान्। मम प्रकोष्ठ एव तत्कर्तुं न कोऽप्यन्तराय आसीत्। परेद्युरेव तन्निवृत्तम्। तेन पूर्णसाफल्यमप्यलभ्यत॥

किंतु तावता तस्य तृप्तिर्नासीत्। दुग्धसेवनं विना भवतो देहस्थितिः पूर्ववन्न भविष्यती-त्यवादीत्। तेन सह शालपाषाणस्य लोहस्य च 'सोमल' नामकौषधस्यान्तःक्षेपणेन भवतः शरीरं सुदृढं भवतीति दृढप्रत्ययं ब्रवीमि इत्यसाववादीत्॥

अन्तःक्षेपणं स्वात्मदीयताम्। परन्तु दुग्धस्य विषयोऽन्यः। तन्न पास्यामीति प्रतिज्ञातं मयेति प्रत्युत्तरमदाम्॥

भवत्प्रतिज्ञा कीदृशीति वैद्यः पप्रच्छ। तस्य तत्कथामशेषां मम प्रतिज्ञाकारणानि च न्यवेदयम्। दोहनकाले गोमहिषीणां चित्रहिंसां कुर्वन्तीति यदा ज्ञातं तदारभ्य दुग्धं मम त्याज्यमासीत्।

अधिकं च दुग्धं मनुष्यस्य सहज आहारो न भवतीत्यभिप्रेतत्वाद्दुग्धं मया सपूर्णमेव परित्यक्तमिति च मया विवृतमासीत् । तर्ह्यजाया दुग्धं पातुं भवत कोऽप्यन्तरायो न स्यादित्यब्रवीत् ॥

वैद्योऽप्येनदनुसृत्य भवताजादुग्धपानेनाप्यलम् । मत्कार्ये चलतीत्युवाच ॥

अहं पराजितः सत्याग्रहयुद्धं कर्तुमासक्तिर्मम जीवितुमाशामुदयत् । अतोऽहं प्रतिज्ञाया सारभूताशस्य तिलाञ्जलिं प्रदाय तामक्षरशः पालयित्वा तृप्तोऽभवम् । यतो यदा मया प्रतिज्ञा कृता तदा मम मनसि गोमहिष्य केवलमास्ताम् । तथापि सहजार्थे इतरप्राणिना दुग्धमपि मिलितमासीत् । तदपि मुक्त्वा दुग्धं मनुष्यस्य नैसर्गिकाहारो न भवतीति यावदभिप्रायो वर्तते तावद्दुग्धसेवनं मम नासीद्धर्मं । यद्यप्येतत् सर्वं मे विदितं तथाप्यजाक्षीरपानाय समतिर्दत्ता । जीवितुमाशा सत्योपासनां निरर्थकामकरोत् । सत्याग्रहयुद्धं करणीयमिति सुक्तः सत्योपासक एकदा स्वीपादर्शस्य कलङ्कमानिनाय । एतत्कार्यस्य स्मरणमद्यापि मम हृदये निगूढं मम पश्चात्तापं जनयति । अजाक्षीरपरित्यागायोपायं सदालोचयामि । परत्वद्यापि मां प्रसमानसूक्ष्ममोहेन सेवा करणेच्छया नाहमद्यापि पारं गन्तुं शक्तः ॥

आहारविषये मम प्रयासा मयाङ्गीकृता हिंसातत्त्वशोधनकार्ये एको भागो भवतीति मम प्रिया सन्ति । तैरहं विनोदमानन्दं च लभे । परन्त्वद्य मयाजाक्षीरोपयोगोऽहिंसादृश्यापेक्षयाधिकं सत्यदृष्ट्या प्रतिज्ञाभङ्गदृष्ट्या तु मां बाधते । अहिंसातत्त्वादपि सम्यक्तरा सत्यस्यादर्शो ज्ञात इति प्रतिभाति । सत्यस्योपरितनग्रहणे मुक्ते सत्यहिंसामहमिमां न कदापि पूरयितुं शक्त इत्यनुभव प्राह । प्रतिज्ञा विरुद्धं न केवलमक्षरशः परमार्थतश्च पूरणीया इति सत्योपासनाया नियमः । प्रकृतसन्दर्भेऽहं मम प्रतिज्ञाया बाह्यरूपस्य केवलं मूल्यमास्थाय तस्यात्मानमर्थं व्यनाशयम् । मम हृदयं तापयते तदेव । परन्तु यद्यपि मे एतत्स्पष्टज्ञानमस्ति तथाप्यग्रेतनो मार्गो मम न दृश्यते । एवं चेत्प्रायशो मम समीचीनमार्गे गन्तुं न धैर्यमस्ति । तदुभयस्याप्यर्थं सम्यग्दृष्टयैक एव । यत सशयस्यानन्य मूलोऽप्यश्रद्धाथवा श्रद्धाभाव । अतो भगवन् मम श्रद्धां देहीति रात्रिंदिवं मम प्रार्थना ॥

इत शीघ्रमेव मयाजाक्षीरपानमुपक्रान्तम् । डॉ. दलालमहाशयो ममोपरि छिद्रस्य चिकित्सां चकार । यदाहं स्वस्थोऽभवं तदा जीवितुमभिलाष समुत्पन्न । यतो भगवान् विशेषतः मम कार्यं निर्मिमाय ॥

मम स्वास्थ्यप्राप्ते काले एव वृत्तपत्रिकासु प्रकटीकृतं 'रौलेट' समितेरावेदनमकस्मान्मम हस्तगतम् । तस्मिन्ने सूचना दृष्ट्वाहं कम्पितः । श्रीमदुमभाईमहाशय प्रायशः प्रतिदिनमागत्य मां द्रष्टुं गच्छन्ति स्म । अत्र मम मौनिर्निरीक्षायाः व्यतीत्य यस्य किमपि करणीयमिति चम् । अधुनिकस्यादिशाद्यतो विमलानि पदं शास्त्रीयसो प्रयच्छ । मया प्रयुक्तं यथा – पर्याप्तस्यान्तरे मन्या जना किञ्चिदपि अकुर्वन् । इदमक्षरपि मम मनेनोदाहरणानुगमनेन शासने निर्मिते सति

सत्याग्रह करणीय । अहमेव रुग्णशायिनो नामत्र यदि एक एव अन्यवस्थायेतरे च मामनुसारे-ष्यन्तीति निरीक्षमाण स्थित स्याम् । किंतु ममाधुनिकनिरुपायस्थितौ एतत्कार्यानुष्ठानाय मम शक्तिरेव नास्तीति प्रतिभातीति ॥

एतद्वादानुवादफलत्वेन मम परिचितैश्च तु पञ्चषैर्जनैर्युता सभाह्वातव्येति निर्धारितमासीत् । 'रोलेट' समितेराख्यानेषु प्रकटीभूतसाक्ष्यमाश्रित्य समितेराशया न निष्कृतीति ममाभिमतमासीत् । आत्मगौरवयुक्तो जनो न कोऽपि तदनुसर्तुं शक्यामिति मम प्रत्यभात् ॥

पर्यन्ते समाश्रमे मिलिता । विंशतिजना अपि तत्र नाहूता । यावदहं स्मरामि श्रीवल्लभभाई-महाशय सुतरां तत्रागता जना श्रीमतीसरोजिनीनाईडुमहाशया–होर्नीमनमहाशयो दिवंगत-उमरसुबानी–श्रीशङ्करलालबैंकरमहाशयोऽपि च श्रीअनसूयाबाईमहाशया बभूवु । सत्याग्रह-प्रतिज्ञा सभायामेव सिद्धाभूत् ॥

तत्रत्यैः सर्वैरपि स्वस्वहस्ताक्षरी कृत पत्रमिति मम स्मृतिरायाति । तदानीं मया न कापि पत्रिका चाल्यते स्म । तदा तदा दैनिकपत्रिकासु ममाभिप्राया प्रकाश्यन्ते स्म । इय पद्धतिरत्याग्गी-कृता । श्रीशङ्करलालबैंकरमहाशयोऽस्मिन् सदर्भेऽत्यन्तश्रद्धामुवाह । सर्वथैव सुव्यवस्थया सर्वदा कर्तुं तस्यासाधारणशक्तेर्ज्ञानं ममास्मिन्नेव सदर्भे प्रथमत समुत्पन्नम् ॥

तात्कालिकी सस्था सत्याग्रहसदृश नवीनमायुधमुपयोक्तुमशीस्करोतीत्याशा निराधारेति मम प्रत्यभात् । अतो मम सूचनामनुसृत्य सत्याग्रहसभेति प्रत्येकमस्यैका स्थापिताभूत् । तस्या प्रमुख-सदस्या मोहमयीवर्तिन इत्यतस्तस्या केन्द्र मोहमय्यामेव स्थितम् । प्रतिज्ञापत्र बहवो जना हस्ता-क्षरीकर्तुमुपगता । प्रसिद्धपत्रिका निरगु । जनस्य सभा मिलिता । सर्वमेतदालोक्य मम 'खेडा' सग्रामस्य सामान्यलक्षणानि सर्वाणि स्मृतिमायान्ति स्म ॥

अह सत्याग्रहसभाया अध्यक्षोऽभवम् । एतत्सभावर्तिना सुशिक्षितानां वर्गस्य मम चैकमत्यमसभोऽस्त्य इति मम शीघ्रमेव विदितमासीत् । सभासूदेषु गुजरातीभाषया वक्तव्यमिति मम हठो विचित्र दृश्यमान इतरकार्यपद्धतयश्च तानतिदोषनाधिकतायामाकुलत्वे च पातयामासु । परन्तु त औदार्येण मम वैपरीत्यानि सेहिरे इति मया समनव्यम् ॥

तथापि सभा बहुकाल न जीवेदिति प्रथमत स्पष्ट प्रतिभाति स्म । सत्याहिंसायाः प्राधान्यं मया प्रतिपादयता तदानीमेव कतिपयानामप्रियमित्येतन्मम दृष्टिमागतम् । एव स्थितेऽपि प्रारम्भेऽस्म-त्कार्यमतिरभसेन प्रवृत्त बभूव ॥

# अद्भुतदृश्यम्

एकतो 'रोलेट' आख्यानस्य विरुद्धआदोलने परिमणे तीक्ष्णत्वे च विद्यमाने सत्यन्यतो राज्याधिकार समिते सूचना प्रचारमानेतुमधिकं हठमाददे। 'रोलेट' शासन प्रकाशितम्। भरतखण्डस्य शासनसभाकार्यकलापमहमेकवारमेव मम जीवनकाले दृष्टवान्। एतच्छासनमधिकृत्य चर्चा यदाभूत्तदा श्रीशास्त्रीमहाशय आवेशपूरित भाषण कुर्वन् राज्याधिकारस्य पूर्वप्रबोध ददौ। तस्योष्णवाग्धारया प्रवहन्त्या राजप्रतिनिधि पूर्णदृष्ट्या त पश्यन्ननन्यमनस्कतया शृण्वन्निव प्रत्यभात्। एतद्भाषणेन राजप्रतिनिधेर्मनसि गभीरपरिणामो भवत्येव नान्यथेति तदा मे प्रत्यभात्। तच्चावत्सत्यमुद्वेगपूर्णं चासीत्॥

परतु सत्यमेव निद्रितमुद्बोधयितु साध्यम्। निद्राण इव छल करोति चेत्सर्वोऽपि प्रयत्नो निष्फल। राज्याधिकारस्य परिस्थितिरप्येतादृशी बभूव। शासनस्य नियमाननुसृत्य नाटकविधानमात्रे स आतुर आसीत्। अग्रेतनकार्यं पूर्वमेव निर्धार्य स्थापितम्। अत शास्त्रिण पूर्वप्रबोधो राज्याधिकारस्योपरि केवल व्यर्थो बभूव॥

ईदृक् सदर्भे मम वाक्यमरण्यरुदनमेव नान्यत्। अह राजप्रतिनिधिं दृष्ट्वा तादृशमार्गो नावलम्बनीय इति बहुधा प्रार्थितवान्। तस्य स्वयं च वृत्तपत्रिकाद्वारा च पत्रमलिखम्। राज्याधिकारस्य कार्यक्रमेण मम सत्याग्रहमेक विना मार्गांतरनिरुद्धमिति स्पष्टमकार्पम्। किंतु तत्सर्वं निरर्थकमासीत्॥

शासन राजकीयपुस्तिकान्तोऽद्यापि शासनत्वेन न प्रकाशितमासीत्। मम शरीरमतीव दुर्बल स्थितम्। तथापि मम मद्रासपत्तनादाह्वान यदायात् तदा दूरप्रयाण कर्तुं निरचैषम्। सभासु भाषणाय पर्याप्तमुच्चै स्वरारोहण तदा मम न साध्यमासीत्। स्थित्वा सभासु भाषण समाप्तपि न शक्यमासीत्। अधिककाल स्थित्वा भाषमाणस्य शरीरमखिल कम्पमान हृदय च वेगवत् स्फुरितुमारभते स्म॥

दक्षिणदेश प्राप्तस्य तत्राह बाह्य इति न कदाप्यदृश्यत। मया दक्षिणाफ्रिकाया कृतकार्येण तामिल्तेलुगुजनस्योपरि विशिष्टाधिकार आसीदिति मम प्रतिभाति स्म। दाक्षिणात्या सज्जना मम भावनामेतासया नाकार्षु। आमत्रण दिवगतकस्तुरी–रगा–आयगरमहाशयस्य नाम्नागतम्। परत्वस्य पश्चाद्वर्मिण श्रीराजगोपालाचार्य इति मम 'मद्रास'नगरप्रयाणमार्गे विदितमासीत्। एष एवमेनं सह प्रथम परिचय इति वक्तु शक्यम्। तदास्ता तावत्। व्यक्तिश परिसृतज्ञानमिदं प्रथममेव॥

इय सूचना राजगोपालाचार्यस्य मनसि तत्क्षणमेव निरुद्धासीत्। अतोऽस्मिन्नितरमित्रेषु निवेद्यमानेषु तेऽपि सतोषेण समेनिरे। अह सक्षेपेण विज्ञापनपत्रिकामलिखम्। एकोनविंशत्यधिकनवशतोत्तरैकसहस्रमिते ■सरे 'मार्च'मासस्य त्रिंशे दिने 'हडताल'आख्य कार्य विराम आचरणीय इति निश्चितमासीत्। परतु तत एप्रिलमासस्य षष्ठे दिने इति परिवर्तितम्॥

एव जनानामस्य वृत्तात आचरणस्य स्वल्पकालात्पूर्वमेवाज्ञायत। कार्यस्य तत्क्षणमेवा रम्भणीयत्वाज्जनानामितोऽपि दीर्घतरकालो न प्रादायि॥

परतु तत्सम्यगाचरितमिति वक्तार के। एकातादपरातपर्यत हिंदुस्थान सर्वे ग्रामा पत्तनानि च सपूर्णं 'हडताल'आख्य कार्यविराममाचरन्। तद्दिनस्य दृश्यमद्भुतमासीत्॥

## एकत्रिंशोऽध्यायः

# स्मरणीयः सप्ताहः (१)

दक्षिणभारते स्वल्पकाल सचर्याहं मोहमयीपत्तन प्राप्त। तद्दिन एप्रिलमासस्य चतुर्थो दिन इति स्मरामि। मया एप्रिलमासस्य षष्ठदिनस्य कार्यक्रमे भागिना भवितव्यमिति शकरलाल बैंकरमहाशयसकाशात्तन्त्रीवृत्ता त आगत। परत्वेतदतरे 'मार्च'मासस्य त्रिंशे दिने दिल्हीनगरे 'हडताल'आख्य कार्यविराम आचरित आसीत्। तत्र दिवगतस्वामीश्रद्धानदस्यापि च दिवगतहकीम–अजमलखानसाहेबमहाशयस्य वाक्य वेदवाक्यमासीत्। 'हडताल' 'एप्रिल' मासस्य षष्ठदिनपर्यंत विलबनीयमिति तन्त्रीवृत्त तस्ताभ्या समये न प्राप्त। दिल्हीनगरे तादृश 'हडताल'आख्य कार्यविरामो न दृष्टपूर्व। हिंदवो मुसल्मानाश्च एकपुरुषवन्मिलिता। 'जुम्मा मशिदे 'भाषण कर्तव्यमिति श्रद्धानद आहूत सन् स तथैवाकार्षीत्। सर्वमेतद्राज्याधिकारस्य सहनशक्तिमतिक्रातमासीत्। 'हडताल'आख्य कार्यविरामस्य जनयात्रा यदा अग्निरथविरामस्थानात् पार्श्व गच्छति स्म तदा 'पोलीस'जनस्ता स्थापयित्वा ता प्रति गुलिकाक्षेपमकार्षीत्। बहव क्षत प्राप्ता। कतिपया प्राणान् जहु। दिल्हीनगर अत्याचार साम्राज्य प्रारभत। श्रद्धानदो मया तत्क्षणमेव दिल्हीनगर प्रत्यागतव्यमिति तन्त्रीवृत्त प्राहिणोत्। मोहमयीपत्तने एप्रिल ६ दिनस्य कार्यसमाप्तेरनतरमागमिष्यामीति प्रत्युत्तरमलिखम्॥

दिल्हीनगरे प्रसक्ता वर्धैव प्राय लाहोरपत्तनेऽमृतसरपत्तनेऽपि प्रवृत्ता। मयामृतसर गतव्यमिति डॉ सत्यपाल–डा कीचलूमहाशयाभ्यामाग्रहपूर्वकमाह्वान प्रेषित यद्यपि मे

तदा तत्परिचय एव नासीत् । तथापि दिल्हीनगरगमनानन्तरममृतसरनगरमागमिष्यामीति ममोद्देश ताभ्या न्यवेदयम् ॥

एप्रिल्मासस्य पष्ठदिने प्रात मोहमय्या पर सहस्रप्रजा 'चोपाटी'स्थाने समुद्र-स्नानार्थं मिलिता । स्नानानन्तर मिलित्वा ते 'माधवबाग'दिशा यात्रा चक्रु । यात्राया स्त्रिय शिशवश्च बभूवु । अनेके मुसल्मानाश्चासन् । मुसल्मानमित्राणि यात्रामिलितान् कतिपयान् 'माधवबाग'समीपवर्तिमस्जिद नीत्वा श्रीसरोजिनीदेव्या मम च भाषण कारयामासु । विट्ठलदास-जेराजाणीमहाशयस्तत्र तत्क्षणमेव 'स्वदेशी' प्रतिज्ञा हिंदुमुसल्मानानामैक्यप्रतिज्ञा च कारयितु सूचनामदात् । किंत्वह न केनापि प्रतिज्ञा अत्यनसरे कार्या अथ क्रियमाणप्रतिज्ञानिर्वहणेनैव तृप्तैर्भवितव्यमिति सूचना प्रत्यादिशम् । एकदा कृतप्रतिज्ञाया नैव भग कुर्यात् । अत स्वदेशीप्रतिज्ञाया इगितपरिणाम के जाता इत्यवगन्तुमावश्यक भवति । हिंदुमुसल्माना-नामैक्यताप्रतिज्ञाया निगूढस्य महत्तरस्य पर्यावर्तनस्य सर्वैरर्थो ग्राह्य । इत्यह वादमकार्षम् । पर्यन्ते प्रतिज्ञाधारण चिकीर्षुभि सर्वैरपि तदुद्देशात परेद्यु प्रात पुन समेतव्यमित्यसूचयम् ॥

मोहमय्या 'हरताल'आरब्ध कार्यनिरामो निरतिशयेन प्रवृत्त इति वक्तुमेव नावश्यकम् । सविनयशासनभग कर्तुं सर्व सज्जीकृतमासीत् । एतत्समये द्वित्रान् विचारानधिकृत्य चर्चा कृता । जनसामान्येनाभिमुखीभवितु सुलभसाध्याना साधनमेव केवल सविनयभग समाचरणीय इति निश्चितम् । लवणस्योपरि करो लोकानामप्रिय आसीत् । एतमपसारयितु कियता कालेन जनक्षोभ प्रचडो भवति स्म । तस्माल्लवणशासनाना निरोधेनापि जना समुद्रजलेन स्वगृहेष्वेव लवण सज्जीकुर्यादित्यहमसूचयम् । मम द्वितीया सूचना राज्याधिकारेण बहिष्कृत पुस्तके 'हिंदी स्वराज्य' 'सर्वोदय' (रस्किन् कवे Unto The Last इति ग्रथस्य गुजरातीभाषयानु-वाद ) एतदुद्देशानुकूल्येन प्राप्ता । ते मुद्राप्य सर्वेषामग्रत विक्रयणमेव सविनयशासनभगस्यात्यत सुलभो मार्ग इति प्रत्यभात् । अत एते पुस्तके पर्याप्ति मुद्राप्य तत्सापमुपवासान्तर प्रवर्तमान प्रचडसार्वजनिकसभया ते विक्रेतु परिपाटिर्व्यवीयत ॥

एतदनुसृत्य एप्रिल्मासस्य पष्ठदिनस्य सायकाले स्वयसेवकानामेव सैन्यमेवैते बहिष्कृते पुस्तके जनाना विक्रेतुमानिनाय । श्रीसरोजिनीदेवी अह च महात्वरया तेषु प्रस्थितौ । सर्वा प्रतिलिपय शीघ्रमेव विक्रीता । एतद्विक्रयागतद्रव्य सविनयभगसमरव्ययार्थं उपयोक्तव्यमिति निश्चितम् । एतत् पुस्तकद्वयस्य प्रतिलिपेरेकस्याश्चतुराणका मूल्यम् । इति निश्चितमपि तन्मूल्येनैव विक्रेतारो न मया स्मर्यन्ते । बहवो जना एकप्रतिलिपेरर्थे कञ्चुककोशात स्थितमखिलद्रव्य बहिर्ददु । एकप्रातिलिपेरर्थ पचरूप्यकाणा दशरूप्यकाणा च 'नोट' पत्राण्या गतानि । एतदनन्तर एका प्रतिलिपि पचाशद्रूप्यकैर्विक्रीता इत्यह स्मरामि । एता बहिष्कृत

मया सहैव स्थितं । मथुरां प्राप्य मां सैनिकशिबिरं निन्युः । परंतु किं कर्तव्यमिति वा कुत्र नेतव्योऽहमिति वा न कोऽप्यधिकारी वक्तुं समर्थ आसीत् । परेद्युः प्रातश्चतुर्वादनसमये मामुत्थाप्य मोहमयीगामिवस्तुपूर्णशकट्यामतर्मां निन्युः । मध्याह्ने मां सवाईमाधवपुरे पुनरवतारयामासुः । लाहोरपत्तनात् पत्रग्राहकशकट्या आगतोऽधिकारी 'बौरिंग' महाशयो मां स्वस्रो स्थापयामास । तेन सह मां प्रथमश्रेण्या शकट्यामुपावेशयत् । सामान्यो वंदिरहं 'जेंटलमेन' वंदी संवृत्तः । सोऽधिकारी सरमाइकलओडायरमहाशयस्य दीर्घस्तुतिपाठमारभत । तेनोक्तं यथा सरमाइकलमहाशयस्य वैयक्तिकतया भवदुपरि न कोऽपि द्वेषोऽस्ति । भवता 'पंजाब' देशे पदं न्यस्यते चेत्तत्र शांतिभंगो भवेदिति शक्यते तावदेवेति । पर्यंते मया स्वयमेव मोहमयीं प्रतिनिवर्तितव्यं 'पंजाब' देशावधिं नातिक्रमामीति समलव्यमिति मामूचुः । मम दत्ताज्ञाप्रकारेणाचरितुं न साध्यं निवर्तितुमहं सिद्धो नास्मीत्युक्तवान् । सोऽधिकारी प्रोवाच यथान्यो मार्गो न विद्यते । भवदुपरि शासनानुरोधेन कार्यक्रमं स्वीकार्यो भवतीति । किंतु मया न विमन्यत् कर्तुमिच्छितीति पृष्टे सोऽब्रवीद्यथा न जाने । उपरितनाधिकारिणामाज्ञां निरीक्षे । सद्यो भवन्तं मोहमयीं नेष्यामीति ॥

एवं वयं सुरतनगरं प्राप्ताः । अत्र मामन्यस्य कस्यचिदधिकारिणो वशे ददुः । मोहमयीं प्राप्यानंतरं भवेदिदानीं स्वतंत्रः । तथापि मरीनलाइन्सनामकाग्निरथविरामस्थानस्य पार्श्वेऽवतरीतुं वरम् । तत्राहं भवदर्थे वाष्पसंचालितशकटीं स्थापयिष्यामि । 'कोलाबा' स्थले जनसमूहो मिलित इति सभयो दृश्यते इत्यूचुः । भवदिष्टप्रकारेण वर्तितुं सम्मतिर्ममेति न्यवेदयम् । अनेनाय संतुष्टो मामवदन्त् । तदुक्तप्रकारेणाहं मरीनलाइन्सस्थलेऽवतीर्णः । मम मित्रस्यैकं शकटस्तत्र गच्छति स्म । स मां रेवाशंकरजवेरीमहाशयस्य मंदिरं निनाय । मदासेधवृत्तांतमाकर्ण्य जना अतिक्रुद्धा आसन् । ◼ क्रोधस्तेषामुन्मादमजनयदिति मह्यं न्यवेदयन् । 'पायधूनी' स्थल समीपे यत्र क्वापि क्षणे जनक्षोभो निरीक्ष्यते । न्यायाधिकारी सैनिकाश्च तत्र गता इत्यवोचत ॥

यावदहं गृहं प्राप्तस्तावदेव उमरसोबानीमहाशयो अनसूयाबाईमहाशया चागत्यैव क्षणमेव भवता 'मोटर' यानेन पायधूनीस्थलं प्रति गंतव्यमित्यवोचताम् । जना क्षमामनीता । अनीयशाता भवन्ति । अस्माभिस्तान्समाधातुमशक्यम् । भवानेव समर्थ इत्यवोचताम् ॥

अहं 'मोटर' यानं उपविष्टः । पायधूनीस्थलपार्श्वे महान् जनसमूहः स्थित इत्यपश्यम् । मद्दर्शनादेव लोका आनंदेनोन्मत्ता इव । तत्क्षणमेव जनैः मिलित्वा "वंदे मातरम्" "अल्ला हो अकबर" इति ध्वनिना गगनं विदीर्णमिवासीत् । पायधूनीस्थलं अश्वारूढा सैनिका दृष्टा । उपरिष्टादिष्टिकाखंडानां वृष्टिः पतति स्म । शांतैर्भवितव्यमिति प्रार्थितास्तथापि वृष्टिखंडवृष्टिं परिहर्तुं न शक्येव प्रत्यभात् ॥

पुस्तकाना क्रयणेन दड आसेवनीयं भवेदिति यथा रीया जनाना विवृतमासीत्। परतु तन्नाउ कारागृहमीति सर्वेषा नष्टा बभूव ॥

राज्याधिकारेण बहिष्कृतपुस्तकयो विक्रय एव नासीत्। विक्रीतपुस्तके बहिष्कृतपुस्तके इति वक्तु न शक्यते। एतदर्थं राज्याधिकारिण टीका स्वानुकूल्यमनुवन्निति पश्चादवगतम्। पुस्तकाना पुनर्मुद्रणात्तानि बहिष्कृतपुस्तकाना नूतनावृत्तयो भूत्वा तेषा विक्रय शासनानुरोधेना-पराधो न भवतीति राज्याधिकारस्याभिप्राय आसीत्। अथ वृत्तान्तो जनानामाशाभग आसीत्॥

परेद्यु प्रात स्वदेशीयाना हिंदुमुसलमानानामैक्यमभिकृत्य प्रतिज्ञाधारणाय सभा मिलिता। विठलदासजेराजाणीमहाशयस्य यद्यद्रल तदुध न भवतीत्यनुभवोऽद्य प्रथमवार समभूत्। स्वल्पो जन उपस्थित। तत्रागतचतु पट्सहस्रदरीणा कतिपया स्पष्ट मे स्मृतौ वर्तते। तत्र मिलितानां पुरुषाणा सख्याल्पयत्ना। प्रतिज्ञा तावल्लिखिता मया सभामानाता। तत्रत्यैर्जनैस्तद्धारणात्पूर्वं तदर्थं सर्वोऽपि विवृत। तत्र बहुल्पश जना स्थिता इति मम दु ख वाश्चर्यं वा नासीत्। यतो जनसामान्यस्य वर्तने मयाथ सहजो व्यत्यासो दृष्ट। अग्रेतनकार्ये पक्षपातो मौनेन कर्तव्यरचनामकार्येऽस्तीत्येतदतरमेतद्दिनपर्यंत तिष्ठति ॥

परत्वेतद्विषयमधिकृत्यैक अध्याय एव लखनीयो भवति। कथाया अग्रतश्च लाभ। एप्रिलमासस्य सप्तमदिनरात्रौ दिल्हीनगरमभृतसरनगर च प्रस्थित। एप्रिलमासस्य सप्त दिने मथुरा प्रातेनमया ममासेध कुर्युरिति सूचना ज्ञाताभवत्। मथुराया अग्रेतनस्थाने आचार्य-गिडवाणीमहाशयो मा द्रष्टुमागत। ममासेध स्यय इति निवेद्यावश्यके सति मम सेवा स्वीकार्ये यब्रवीत्। अस्याह तमभिनद्यावश्यके सति तथा करिष्यामीत्यवोचम् ॥

मया पजाबप्रात प्रविष्टे तत्र प्रजशातिभगप्राप्ते सभवस्य विधमानत्वात्पजाबदेशस्याधि-नीतिनमितव्य इति लोहशकट्या 'पल्वल' नामकमग्निरथविरामस्थानप्राप्ते पूर्वमेव मह्य लिखितामाज्ञा ददु। शकट्यास्तरीतव्यमित्यूचु। निश्चितमेवागतव्यमित्यह पजाबदेशमागतु माहूत। ततोऽह तत्र गतुमिच्छामि। मया तत्र गमन शातिभगाय न पर शातिस्थापनाय। अतो युष्मदाज्ञामनुसर्तुमह न शक्नोमीत्युक्त्वा शकट्या नावतीर्ण ॥

पर्यते वाष्पसचालितशकटी 'पल्वल'नामकमग्निरथविरामस्थान प्राप। महादेवदेसाई महाशयो मया सह स्थित। इत प्रवृत्तवृत्तान्त स्वामिश्रद्धानदाय निवेद्य जनाना ज्ञाता भवतेति वक्तुमह ■ दिल्हीपत्तन प्राहैषम्। मया दत्तामाज्ञामुल्लघ्य तत्फलरूपो दण्डोऽनुभवितव्य इति कस्मान्निर्धारितमिति यादृक् तादृगपि दण्ड मे ददतु वय चेत्पूर्णशा या स्थितास्तदास्माक जयो भविष्यतीति च तेन विवरणीयमासीत्॥

'पल्वल' स्थाने मा वाष्पमचालितशकट्या अवतार्य सैनिकवशे ददु। अचिरादेव दिल्हीनगरत वाष्पसचालितशकट्यागता। तत्र मा तृतीयश्रेण्यामतरुपावेशयन्। सैनिकवर्ग

मया सहैव स्थित । मथुरा प्राप्य मा सैनिकशिबिर निन्यु । परतु किंकर्तव्यमिति वा कुत्र नेतव्योऽहमिति वा न कोऽप्यधिकारी वक्तु समर्थ आसीत् । परेद्यु प्रातश्चतुर्वादनसमये मामुत्थाप्य मोहमयीगामिवस्तुपूर्णशकट्यामनयाँ निन्यु । मध्याह्ने मा सवाईमाधवपुरे पुनरवता-रयामासु । लाहोरपत्तनात् पत्रवाहकशकट्या आगतोऽधिकारी 'नॉरिस'महाशयो मा स्ववशे स्थापयामास । तेन सह मा प्रथमश्रेण्या शकट्यामुपावेशयत् । सामान्यो वन्दिरह 'जेंटलमेन'वन्दी सवृत्त । सोऽधिकारी सरमाइकलओडवायरमहाशयस्य दीर्घस्तुतिपाठमारभत । तेनोक्त यथा सरमाइकलमहाशयस्य वैयक्तिकतया भवदुपरि न कोऽपि द्वेषोऽस्ति । भवता 'पजाब'देशे पद न्यस्यते चेत्तत्र शातिभगो भवेदिति शक्यते तावदेवेति । पर्यन्ते मया स्वयमेव मोहमयी प्रतिनिवर्तितव्य 'पजाब'देशावधि नानिक्रमामीति समतव्यमिति मामूचु । मम दत्ताज्ञाप्रकारेणा-चरितु न साध्य निवर्तितुमह सिद्धो नासमित्युक्तवान् । सोऽधिकारी प्रोवाच यथान्यो मार्गो न विद्यते । भवदुपरि शासनानुरोधेन कार्यक्रम स्वीकार्यो भवतीति । किंतु मया न निमन्यत् कर्तुमिच्छतीति पृष्ट सोऽब्रवीद्यथा न जाने । उपरितनाधिकारिणामाज्ञा निरीक्षे । सद्यो भवन्त मोहमयीं नेष्यामीति ॥

एव वय सुरतनगर प्राप्ता । अत्र मामन्यस्य कस्यचिदधिकारिणो वशे ददु । मोहमयीं प्राप्यानतर भवेदिदानीं स्वतत्र । तथापि मरीनलाइन्सनामकाश्रियविरामस्थानस्य पार्श्वेऽवतरीतु वरम् । तत्राह भवदर्थे वाष्पसचालितशकटीं स्थापयिष्यामि । 'कोलाबा'स्थले जनसमूहो मिलित इति सभगो दृश्यते इत्यूचु । भवदिष्टप्रकारेण वर्तितु समतिर्ममेति न्यवेदयम् । अनेनाथ सतुष्टो मामवदन्त् । तदुक्तप्रकारेणाह मरीनलाइसस्थलेऽवतीर्ण । मम मित्रस्यैक शकटस्तत्र गच्छति स्म । स मा रेवाशकरजवेरीमहाशयस्य मदिर निनाय । मद्गृहसवृत्तात मारुर्प्य जना अतिक्रुद्धा आसन् । स क्रोधस्तेषामुन्मादमजनयदिति मम न्यवेदयन् । 'पायधूनी' स्थल समीपे यत्र कापि क्षणे जनक्षोभो निरीक्ष्यते । न्यायाधिकारी सैनिकाश्च तत्र गता इत्यवोचत ॥

यावदह गृह प्राप्तस्तावदेव उमरसोबानीमहाशयो अनसूयाबाईमहाशया चागत्यैव क्षणमेव भवता 'मोटर' यानेन पायधूनीस्थल प्रति गतव्यमित्यवोचताम् । जना क्षमामनीता । अतीवाशाता भवन्ति । अस्माभिस्तान्समाधातुमशक्यम् । भवानेव समर्थ इत्यवोचताम् ॥

अह 'मोटर'यान उपविष्ट । पायधूनीस्थलपार्श्वे महान् जनसमूह स्थित इत्यपश्यम् । मद्दर्शनादेव लोका आनदेनोन्मत्ता इव । तत्क्षणमेव जनैं मिलित्वा "वदे मातरम्" "अल्ला हो अकबर" इति ध्वनिना गगन विदीर्णमिवासीत् । पायधूनीस्थले अश्वारूढा सैनिका दृष्टा । उपरिष्टादिष्टिकाखडाना वृष्टि पतति स्म । शातैर्भवितव्यमिति प्रार्थितास्तथापि मृत्तिकाखडवृष्टि परिहर्तु न शक्यैव प्रत्यभात् ॥

जनयात्रा 'अब्दुलरहेमान 'वीथिनागत्य 'क्रॉफर्डमार्केट 'दिशा यदा संचलति तावदेवाकस्मात् अश्वारोहिणोऽभिमुखीभूय स्थिताः। जनयात्रा इतोऽग्रतो दुर्गपार्श्वं यथा न गच्छेत्तथाकर्तुमागतास्ते। जना निर्विवरतया सांद्रमेव स्थिताः। सैनिकजनानां पंक्तिविच्छेद आसीत्। अस्मिञ्जनसमूहे मम ध्वनिर्न श्राव्य इति वक्तुं शक्यम्। तावदंतरे अश्वारोहिणामाज्ञां दत्तवान् मुख्याधिकारी जनान् विद्रावयतेति। तत्क्षणमेवाश्वारोहास्तोमरान् भ्रामयंतो जनमध्ये महावेगेन पतिताः। अहमपि क्षतो भवेयमिति क्षणमात्रं मे प्रत्यभात्। परंत्वियं भीतिर्निर्मूला-भवत्। अश्वारोहिषु महावेगेन पतत्सु जनसमूहो भग्नः। क्षोभे प्रवृत्ते जनाः पलायितुमारब्धाः। कतिपयाः पादैस्ताडिताः पतिताः। कतिपयानां शरीरं क्षतमासीत्। तस्मिञ्जनसमूहेऽश्वानां परिचलनाय नैव स्थलमासीत्। जनान् विद्रावयितुमपि नासीन्मार्गः। अतोऽश्वारोहा नेत्रे निमील्य जनमध्ये मार्गमाक्रम्य गताः। स्वेषां वचनाल्यानं किमिति ते व्यजानन्नेत्यभ्यूहितुमपि न शक्यम्। सर्वेष्वेतन्मिलित्वान्यन्नमयानकदृश्यमासीत्। अश्वारोहा जनाश्चोन्मत्तक्षोभे मिश्रिता बभूवुः॥

एवं जना विद्राविताः। अग्रे प्रक्रमितुमासक्ता निरुद्धाः। 'मोटर'यानस्य गंतुमवकाशो ददुः। अहं तत् 'कमिशनर कचेरि' स्थानस्याग्रे विहाय तस्य सैनिकजनस्य वर्तनविचारं वक्तुं तत्रावतीर्णः॥

## द्वात्रिंशोऽध्यायः

# स्मरणीयः सप्ताहः (२)

अहं 'कमिशनर ग्रिफिथ' महाशयस्य कचेरीं गतः। तत्र गंतव्यपदेषु सर्वत्र युद्धायैवापाद-मस्तकं शस्त्रसज्जितान् तान्सैनिकानद्राक्षम्। वेदिकोद्दीपितेवासीत्। यदाहं कचेरीं प्रवेशितस्तदा तत्र ग्रिफिथमहाशयस्य निकटोपविष्टं बोरिंगमहाशयमपश्यम्॥

मन्नेत्रपतितानि सर्वाणि दृश्यानि 'कमिशनर' महाशयस्यावर्णयम्। तेन संक्षेपतः प्रोक्तं यथा यदि जनयात्री दुर्गं गच्छेत्तदा जनक्षोभः सत्यमेव भविष्यतीति ज्ञात्वा तस्यास्तत्र गमनं नाहमैच्छम्। जनाः सद्वचनं न शृण्वन्तीति मम व्यक्तमासीत्। अतः अश्वारोहिणो जनोपर्यभिधावितुमाज्ञा दत्ता। नासीदन्यपरो मार्ग इति॥

मयोक्तं यथा किंत्वस्य फलं किं भविष्यतीति युष्माकं विदितमासीत्किल। अश्वाः कथं जनान् न मर्दयेयुः। अश्वारोहिणस्तत्र प्रेषयितुमावश्यकमेव नासीदिति मम प्रतिभाति॥

ततः ग्रिफियमहाशयेनोक्तं यथा—तन्निश्चयेनाख्यातुमशक्यम् । भवदुपन्यासेन संवर्तमानः परिणामो ज्ञायतेऽस्माभिरधिकारिभिः । प्रथमत एव कठोरसंविधानानि न क्रियन्ते चेदप्रेतना परिस्थितिः परवशा जायते । जना युष्मद्दशा न तिष्ठन्तीति निश्चितं ब्रवीमि । शासनं प्रति-भर्तीकर्तुं शीघ्रमेव जानन्ति । शांता भवितुमस्मत्कर्तव्यमिति न जानीयुः । भवदुद्देशानां विषये मम न कोऽपि संशयो विद्यते । जनास्ताननवगत्य स्वीयां सहजां बुद्धिमनुसरन्तीति ॥

प्रत्युक्तं मया यथा—दृश्यताम् । अत्रैवावयोरस्ति मतभेदः । जनाः स्वभावतः शांता न पुनर्हिंसापरा इति ॥

एवं चिरकालं चर्चाभवत्तयोः । पर्यन्ते ग्रिफियमहाशयः पप्रच्छ यथा—भवदुपन्यासो जनोपरि सर्वो व्यर्थो भवतीति चेद्दृष्टं तदा किं भवान् करिष्यतीति ॥

तथा यदि स्पष्टं मे प्रतिभाति तदा सविनयशासनभंगं निरोत्स्यामि । तस्यार्थः कः । भवान् विमोचितक्षणमेव पंजाबं प्रस्थास्यत इति बोरिंगमहाशयस्यावोचत् ॥

सत्यम् । प्रथमबाष्पसंचालितशकटेनैव प्रयाणं कर्तव्यमित्यालोचितम् । किन्त्वेतस्मिन् दिने तन्न शक्यम् ॥

यदि भवान् क्षमावानास्ते तर्ह्ययं विनयो भवता दृश्यत एव । अथाहं अमदावादनगरे किं भवतीति किं भवान् जानात्यमृतसरनगरे वा । सर्वत्र जनानामुन्मादः संवृत्तः । वस्तुतो मम सर्वो विषयो न विदितः । कतिपयस्थलेषु वृत्तांतवाहिनी तंत्री विच्छिन्ना । एषां सर्वक्षोभाणां पर्यनुयोज्यता भवत एवेति ब्रवीमि ॥

यत्र यत्र मया तथा दृश्यते तत्र तत्राहं सिद्धः इमन्ये । मा भूदत्र संशयः । किन्त्वमदा-बादनगरे प्रवृत्तः क्षोभ इत्येतत्सत्यं चेत्तन्म आश्चर्यं व्यथां च जनयति । अमृतसरनगरविषये वक्तुं न शक्यम् । तत्राहं न गतः । न किंचित्तत्र जानामि । किंतु 'पंजाब'विषये सम्यक् ज्ञातम् । यदि तत्रत्या राज्याधिकारिणो मम तत्र प्रवेशं न न्यरोत्स्यंस्तदा तत्रत्यां परिस्थितिं शांतां कर्तुमधिकं साहाय्यमभविष्यत् । मां निरुध्य जनानां अनावश्यकतया क्रोधोद्दीपिनं चक्रुः ॥

एवं रीत्यावयोश्चर्चा भवति स्म । द्वयोरेकमतं न शक्यमासीत् । मया चोपाटीस्थले भाषणं कृत्वा शांतैर्युष्माभिर्भवितव्यमिति वक्तुमिच्छामीत्युक्त्वा तावभिवाद्य ततो निर्गतः । चोपाटीवालुकासु सभा मिलिता । अहमहिंसाधर्मं सत्याग्रहस्य परिमितिं चाधिकृत्य दीर्घकालं भाषमाण इत्यमुक्तवान्यथा सत्याग्रहः सत्यवतामायुधम् । सत्याग्रहिणाहिंसाव्रतभंगी कार्यम् । अतो जना यदि कायेन वाचा मनसाप्यहिंसां नानुसरन्ति तदा सत्याग्रहयुद्धेनाचरितुं मम न शक्यमिति ॥

अमदावादक्षोभवृत्तातोऽनसूयाबाईमहाशयामन्यागात् । साप्यमेरितेति वृत्तान्तं केनापि प्रसारितं । कर्माणि त्यक्त्वाहिंसाकार्ये उपक्रान्ता । कश्चिदधिकारीग्मिन् क्षोभे प्राणान् तत्याज ॥

अहममदावादनगरं गतः । नडियादनगरसमीपे रेलदण्डाशा उत्क्षेप्तुं यत्नः कृतः । वीरमगामग्रामे कश्चिद्राजकीयाधिकारिणं मारितवत । अमदावादे युद्धशासनस्य प्रयोग उपक्रांत इत्यहमज्ञासिषम् । जना भयग्रस्ता बभूवुः । तैर्हिंसाकार्याणि कृतानि । अथ राज्याधिकारेण कुसीदसहितं दण्डः दापिता । 'कमिशनर' पार्श्वे नेतुं मां कश्चिदधिकारी स्थाने निरीक्षमाणः स्थितः । यदाहं प्रैटमहाशयस्य पार्श्वे गतस्तदासावतिक्रोधाविष्ट आसीत् । मया तदग्रे मृदूक्तमासीत् । क्षोभः प्रवृत्ता इति मम विषादो व्यक्तीकृतः । युद्धशासनं नावश्यकमिति सूचयित्वा शाते पुनः स्थापनाय यत्र क्वापि प्रयत्ने कृते तत्साहाय्यं कर्तुं सज्जस्थितोऽस्मीति तस्मै न्यवेदयम् । साबरमती–आश्रमस्य बहिरङ्गणे सार्वजनिकसभा मेलयितुमनुज्ञा प्रार्थिता । इयं सूचना तस्य मनसे रुचिता । 'एप्रिल' मासस्य त्रयोदशदिने भानुवासरे सभा मिलिता । युद्धशासनं तद्दिनं वा परेद्युर्वोच्छिन्नमभूत् । सभायां भाषमाणो स्वापराधज्ञापनाय प्रयत्नमकार्षम् । प्रायश्चित्तरूपेण त्रीणि दिनान्युपवासं करिष्यामीत्युक्त्वा जनैश्चैकं दिनं तथा करणीयमिति प्रार्थितवान् । यैर्हिंसाकार्यं कृतं तैः कृतं मयेति समतव्यमित्यसूचयम् ॥

मम कर्तव्यं मम दिनप्रकाशवत् स्पष्टमभूत् । मया कर्मकराणां मध्ये चिराय सेवा कृता । तत्सकाशादुत्तमं वर्तनं निरीक्षितं मया । एतादृशा क्षोभविचारा मम सह्यनातीता आसन् । तेषामपराधस्याहं च भागीति मम प्रत्यभात् । स्वापराधः समतव्य इति यथा जनानामब्रोचं तथा राज्याधिकारिभिरपीमे प्रमादा क्षतव्या इत्यसूचयम् । द्वावपि ममाशयं नाशृणुताम् ॥

एवं गते दिवंगतरमणभाईमहाशयो अमदावादनगरस्येतरजनाश्च मामागत्य सत्याग्रहं निरोधयेति प्रार्थयामासुः । अस्य न किंचिदावश्यकमासीत् । यतो यावज्जनाः शांतिरक्षणपाठं न शिक्षन्ते तावत्सत्याग्रहो निरोद्धव्य इति पूर्वमेव मम मनः कृतम् । एतानि मित्राणि संतुष्टा जग्मुः ॥

एवं ममेदं निर्धारणमन्यसुहृदोऽसंतुष्टानकरोत् । मया सर्वत्र शांतिं निरीक्षमाणेन सत्याग्रहोपक्रमे पूर्वं तादृशशांतिस्थापनमावश्यकं भवेद्यदि जनसामान्यस्य सत्याग्रहो नैव शक्य इति तेषां प्रत्यभात् । एषा मे मतभेदो मया व्यक्तीकृत । येषां मध्ये मया कार्यं क्रियते स्मापि च येऽहिंसामनुरोद्धं स्वीयकष्टं च सोढुं सज्जस्थिता इति निरीक्षितास्त एवाहिंसा नानुसरन्ति चेत्सत्याग्रहो न शक्य इति वक्तव्यमेव नास्ति । ये जनान् सत्याग्रहमार्गे नेतुमिच्छन्ति तैर्निरीक्षितमात्रमपि तानहिंसामार्गे स्थापयितुं शक्ता भवितुमर्हन्तीति दृढं मे मतमासीत् । अद्यापि ममाभिप्राय स एव ॥

त्रयस्त्रिंशोऽध्यायः

# हिमालयसदृशः प्रमादः

अमदावादनगरे मिलिता सभा यावत्समाप्ता तावत् स्वल्पेनैव कालेनाहं नडियादनगरं गतः ।
हिमालयसदृशः प्रमाद इति शब्दप्रयोगमिहैवाकार्षम् प्रथमतः । तत एतदपि प्रचारमागतम् ।
अमदावादनगरेऽपि मम प्रमादः शनैः शनैर्मम गोचरीभूतः । किंतु मया नडियादनगरं प्राप्य
तत्रत्यां परिस्थितिमालोक्य खेडामण्डलस्य बहुजनानामासेवमानाकर्ण्यापि खेडामण्डलस्यापि चेतरप्रान्तानां
च जनान् शासनस्य सविनयभङ्गं कर्तुमाह्वातुमुपक्रमोऽगाधः प्रमाद इत्यकस्मान्ममास्फुरत् ।
तदा तानाह्वातुमद्यापि कालो न प्राप्त आसीदिति मम प्रत्यभात् । तदाहं सार्वजनिकसभायां
भाषमाण आसम् । एवमहं मम प्रमादमङ्गीकृतवानित्युपहास्यपात्रं न जातः । परंतु तथा
समतया न मया पश्चात्तापोऽनुभूतो यतो यः कोऽपि वा भवतु स्वप्रमादान् पर्वतप्रमाणसदृशानि-
तरदोषान् रजःकणसमानांश्च द्रष्टुं शिक्षते तदानीमेवोभयोस्तुलनेन न्याय्यो भावोऽवगन्तुं न
शक्य इति सदा मेऽभिप्रायः । अपि च सत्याग्रही भवितुमिच्छुः नियमेन स्वल्पमपरिहार्या-
चरितुमावश्यकमिति मम श्रद्धा ॥

अथ पश्यामो हिमालयसदृशः प्रमादः क इति । शासनस्य विनयभङ्गाचरणात्पूर्वं यः
कोऽपि वा भवतु स्वदेशशासनानि मनःपूर्वकं विनयेन च पालयेत् । बहुधा शासनानतिक्रमेऽ-
स्माभिस्तद्भङ्गेन दंडं प्राप्स्याम इत्यालोच्य नैतिकतत्त्वशून्यानां शासनानां विषये तु विशेषतो
यथार्थमेव तत् । अत्र दृष्टान्तः । न चोरयितव्यमिति शासनमस्तु वा मास्तु वा प्रामाणिको
मानी पुरुषोऽकस्माच्चौर्यं न करिष्यति । किंतु स एव पुरुषोऽन्धकारे प्राप्ते द्विचक्रयानं दीपं
विना न सञ्चरितव्यमिति शासनमतिक्रमितुं स्वल्पमपि पश्चात्तापं न धत्ते । अस्मिन् विषयेऽ-
तीवजागरूकेण भाव्यमित्युक्तश्चेदङ्गीकरोतीति संशय एव । किंत्वेवं शासनातिक्रमेण प्राप्य
न्यायस्थानव्यवहारकष्टं परिहर्तुमपि तदनुसरिष्यति । ईदृगनुसरणं सत्याग्रहिणा कर्तव्यं मनः
पूर्वकमैच्छिकमनुसरणं न भवति । सत्याग्रही समाजनियमपालनं स्वीयं पवित्रो धर्म इति
मन्यते । अतस्तान् स्वीयेच्छया परिज्ञानेन चाचरति । यः कोऽपि वा भवतु स समाजनिय-
मानां समर्थीभूयाचरणात्परमेव के नियमाः समीचीनाः के नीतियुक्ताः के सदोषाः केऽन्याय्यसम्मता
इति निर्धारयितुं शक्नोति । तदा विवेदितं तु कतिपयशासनानि निर्दिष्टपरिस्थित्या भञ्जयितु-
मधिकारं प्राप्नोति । एतदावश्यकम् । परिमितिमनवलक्ष्यितुमेव मम प्रमाद आसीत् । जना
सविनयभङ्गकर्तारः उपयुक्तनीत्या सम्पादनात्पूर्वमेव तस्मिन् कार्ये प्रवर्तितुमाहूतवानहम् ।
ममायं प्रमादो हिमालयसदृशोऽगाधपरिणामो वा दृश्यते । अहं खेडामण्डले पदं न्यस्य तदनन्तरं

स्पुरत खेडासत्याग्रहस्य स्मृतयो मम मन प्रविश्य तान्स्पष्टमाश्विना इत्येतत् कथ मया न दृष्टम्। इत्याश्चर्यभरितो भवामि। यत्किंचिन्नाम वा भवतु। शासनस्य सविनयभंगाचरणप्राप्ते पूर्वमेव तस्य गभीरतररहस्य ज्ञातव्यमिति मम मनस्यागतम्॥

अत सार्वजनिकसविनयशासनभगस्य पुनरारम्भणात्पूर्व सत्याग्रहस्य कठिनसाधनानि यस्य सम्यगूज्ञातानि यस्यानुभवसिद्धानि तस्य शुद्धमनस स्वयसेवकदलमेक निर्मातुमावश्यकम्। ते जनाना सर्वविषयान् निवृत्य निद्रा विना जागरूकतया यथा जना असत्पथ न गच्छन्ति तथा द्रष्टु शक्यम्॥

एभिर्विचारैर्मनसि पूर्णे सति मोहमयीं प्राप्य तत्रत्यसत्याग्रहसभाद्वारा सत्याग्रहिणा स्वयसेवकदलमेक सगृह्य तदालम्बनेन सत्याग्रहस्यार्थ तस्यात सार चाविष्कृत्य जनाना शिक्षणप्रदानकार्यमारब्धवान्। एत मुख्यश एतद्विचारसबद्धसर्वविषयगर्भितान्नूतनपत्रिकाविभजत शिक्षणमकरवाम॥

किंत्वेतत्कार्ये चलति जनाना सत्याग्रहस्य शातस्वरूपे कुतूहल जनयितु दुष्करमिति मम प्रत्यभात्। पर्याप्तसख्या स्वयसेवकाश्च न मिलिता। अपि क्रमयुक्तमभ्यास न प्रापु। दिनेषु गच्छत्सु नूतनस्वयसेवकाना सख्याधिक्यभवन मुक्त्वा स्वल्पतरा भवितु प्रवृत्ता। सविनय-शासनभगस्य शिक्षण मन्निरीक्षितत्वरया न भविष्यतीति मम मनसि दृढं प्रत्ययो जात॥

चतुस्त्रिंशोऽध्यायः

## 'नवजीवनं' 'यंग इंडिया' च

**एवमहिंसारक्षकगतिरेकतो** यदापि प्रसृवरान्यतो राज्याधिकारस्याराजकदडनीतिरतिरभसेन प्रवहती 'पजाब'देशे सर्वस्पष्ट निजस्वरूप प्रदर्शयति स्म। नायका असेधिता युद्धकालस्य शासन—शासनस्य नास्तित्व-प्रचारमागतम्। प्रत्येकन्यायस्थानानि निर्मितानि। एतानि धर्माधर्मनिर्णायिका सस्था न बभूवु परतु निरकुशस्य कस्यचित्स्वतत्रस्य निरकुशमनोनिश्चय चास्यन्त्यायुधान्यासन्। साक्ष्यस्याधार विना धर्मस्य तिलाजलिप्रदानेन दडो व्यधीयत। अमृतसरनगरे निर्दोषिण पुरुषा निर्दोषा वनिताश्च कीटवज्जठरेण यथा चलन्ति तथा चक्रिरे। यद्यपि 'जलियावाला बाग'नामकस्थानस्य हत्याकाड एव विशेषतो भारतखडस्यापि सर्वप्रपच स्यापि दृष्टिमाचकर्ष स एतत्कार्यक्रमस्य पुरस्तात् ममातिसामान्य इवादृश्यत॥

परिणामस्य गणना विना तत्क्षणमेव पजाबप्रदेश प्रस्यातव्यमिति निरबध्नन्। तत्र गतुमनुज्ञा देयेति राजप्रतिनिधिं प्रति पत्रमलिख तत्रीप्रार्थना च प्राहैषम्। तत्सर्वं निष्फलमभूत्। तथाप्यनुज्ञा

विना प्रस्थाने पञ्जाबदेशस्यावस्थाभिज्ञैरस्तु न मा मुञ्चति स्म। सविनयभङ्गेन या वृत्तिर्भवेत्तावता मया मनोव्यथासीत्। अत किमत्र कर्तव्यमिति प्रश्न कठिनमुत्पन्नकष्टप्रस्थानकरोत्। तात्कालिकशासकेभ्यो पञ्जाबप्रदेशात् पद न निक्षिपेदित्याज्ञा उल्लङ्घ्य मम दृष्ट्या सविनयभङ्ग इति नोच्यते स्म। यतो मा परितो मया निर्दिष्टिशान्तेरावरणं नासीत्। पञ्जाबदेशो परिस्थितिं विना प्रत्यक्षदर्शनीया जनस्य क्रोधो वर्धते। अनन्तरकाले सविनयभङ्गस्य कृत चेच्छक्नुयाम् नौ धीप्रदेश न्यायमिच्छत्। एतेनाह पञ्जाबप्रदेशं न गमिष्यामीति निश्चयानिरोधेन निवारयन्। एतस्मिन्विषये निरिक्ष न रोधने स्म। प्रतिदिनं क्रूरोऽन्याय्य प्रकारैः वृत्तान् पञ्जाबदेशात् आयाति स्म। किंतु मया दतान् कटकट्यमानया हस्तौ बद्धोपविष्टव्यमभवत्। न किंचिदन्यत्कर्तुं शक्यमासीत्॥

तस्मिन्नेव समये होर्निमनमहाशय राज्याधिकारिणः क्वचिदपाहरत्। 'बॉम्बे क्रॉनिकल' पत्रिका तस्य हस्तेऽनावगाकि परिणता। राज्याधिकारिणामिदं कार्यमस्मद्दुर्नीतियुक्तमिति मे प्रथमात् तस्य हेयत्वरूपस्य स्मृतावद्यापि मम शरीरे दुर्गन्धं च जायते। होर्निमनमहाशयेन अशान्तत्व नापेक्षितमित्यहं जाने। पञ्जाबराज्याधिकारिणा निरोधनरूपोऽन्याय तेन नाभीप्सितम्॥

सविनयभङ्ग स्थापयितुं यत्निर्धारण तत् स्मृतिमनुमोदितम्। यतस्तिरोहितो मया न प्रस्थीकृत तत्पूर्वमेव तस्मात्पत्रमालिकायामयागतम्। मोहनवी-अमदावादनगरयोरतिदूरत्वात्तस्य पत्र मम निर्धारस्य प्रकाशनाद्ननन्तरमागतम्। अतोऽकस्मात्तस्यापहरणेन मम दु खनाश्च मज्जातम्॥

एतन्मघटनाना फल चेद यत् 'बॉम्बे क्रॉनिकल' पत्रिकानिर्वाहभारो मया बोढव्य इति पृष्टोऽहम्। ब्रेल्वीमहाशयस्य तत्कार्येष्वस्थनात् मया कर्तव्यमधिक नावशिष्टम्। तथापि मत्स्वभावानुसारादिय पत्रनुयोज्यत्रा ममोपर्यन्यो भार परिणत॥

किंतु भार एव न बोढव्य आसीत्। राज्याधिकारो मम साहाय्य कर्तुमगत इव मम कार्यमाद् 'बॉम्बे क्रॉनिकल' पत्रिका प्रकटन निवर्त्यामास॥

'क्रॉनिकल' पत्रिका चालननिर्वाहकर्तारोऽस्मत्सेवानी—शङ्करलालबेंकरमहाशयेहस्त एव 'यंग इंडिया' पत्रिकापि स्थिता। क्रॉनिकलपत्रिकाया निरोधात् 'यंग इंडिया' सम्पादकत्वं मया बोढव्यमिति निरुद्धपत्रिकास्थानं सम्यक् पूरयितुमेनपत्रिकाया सप्ताहस्यैकवार प्रकटन विहाय द्विवार प्रकटनं कार्यमिति च मित्राण्यनूचयन्। ममाभिप्रायोऽपि स एव। सत्याग्रहगर्भितमर्थ जनस्य विशदीकर्तुमुत्सुकोऽभवम्। एतत्पत्रद्वारा पञ्जाबदेशस्य परिस्थितिमुत्तमतर कर्तुमपि शक्य स्यादित्याशासि ममासीत्॥

यतो मम लेखनेषु सर्वेष्वपि सत्याग्रहो गर्भित आसीत्। राज्याधिकारेणाप्येतत् ज्ञातम्। अतो मन्मित्राणा सूचना मम समतासीत्॥

किंत्वाक्लभाषाद्वारा स जनसामान्यमखिल सत्याग्रहाय सज्जीकर्तुं कथम् मम मुख्यक्षेत्र गुजरातदेश आसीत्। तस्मिन् समये श्रीइन्दुलालयाज्ञिक--सोबानी बैंकरमहाशयमगृहे स्थित। एतेन गुजराती 'नवजीवन' मासपत्रिका चाल्यते स्म। अस्या पत्रिकाया अस्मन्मित्रैर्धनसाहाय्यमासीत्। इय मासपत्रिका च मद्वशे आगता। एतदनिक श्रीयाज्ञिकमहाशय एतत्पत्रिकार्थेऽह कार्य करिष्यामीत्यब्रवीत्। इय साप्ताहिकपत्रिका कृता॥

एतदतरे 'क्रॉनिकल'पत्रिका पुनर्जीव प्राप्ता। अतो 'यग इंडिया'पत्रिका पूर्ववत् साप्ताहिकपत्रिकाभवत्। साप्ताहिकपत्रिकाद्वयस्य भिन्नभिन्नस्थलेभ्य प्रकटन ममानानुकूलमधिकव्ययकारि च बभूव। 'नवजीवन'स्यामदाबादनगरात् प्रकटीकृतत्वान्ममाशयरीया 'यग इंडिया' पत्रिकापि तत्रैवानायि॥

एतत्परिवर्तनस्य कारणातराण्यासन्। 'इंडियन् ओपिनियन'पत्रिकासबधेन सपादितो ऽनुभव एतादृशपत्रिकाना स्वतत्रमुद्रणालयस्यावश्यकता मया सम्यग् ज्ञाता। अपि च तत्काल वृत्तपत्रिकाणा सबद्धशासनानि क्रूराणि बभूवु। अतो ममाभिमत निरातक व्यजयितव्य चेत्तादात्विकमुद्रणालया प्रकटीकर्तुं विकल्पन्ते स्म। यतस्तासा चालनमार्थिकदृष्ट्या। अतोऽस्मदीय एव मुद्रणालय कश्चिदावश्यक आसीत्। एव कर्तुममदाबादनगर एव केवलमनुकूलमासीदतो 'यग इंडिया' अपि तत्रैव निर्वहणीयासीत्॥

अथाहमेतत्पत्रिकाद्वाराक्षरस्थजनाना सत्याग्रहविषये शिक्षणप्रदानकार्ये यावच्छक्ति निरोद्धुमुपाक्रमे। एतद्द्वयमेकदातिविशाल वाचकवर्ग सपादयति स्म। प्रत्येकस्या प्रायश्चत्वारिं शत्सहस्रमल्याका वाचका बभूवु। नवजीवनस्य ग्राहकाणा सख्यैकदैव ववृधे। किंतु 'यग इंडिया' वर्गीयाणा सख्या मद मदमवर्धत। मया कारागृहवासे प्राप्ते एतद्द्वयस्यापि सख्याल्पतराभूत्। अद्यैतदष्टसहस्राभ्यतरे वर्तते॥

एतासु पत्रिकासु सवादा न प्रकटनीया इति प्रथमतो मया निर्धारितम्। एतेन तासा न किमपि नष्ट सजातमिति मन्ये। न तावदेव। एतेन ता निजस्वातत्र्य रक्षितु बहुसहाया भवतीत्येव मेऽभिप्राय॥

अपि चैता पत्रिका मम मन शातिस्थापनाय सहाया बभूवु। यतो यद्यप्येतत्क्षणमेव शासनस्य सविनयभगसमालोचनाया अवकाशामात्रेऽपि एतद्द्वारा ममाभिमत निरातक व्यक्तीकृत्य धैर्योत्पादन कर्तुं मम साध्यमासीत्। एवमेतत्पत्रिकाद्वय जनानामस्मिन् सकटकालेऽधिकसाहाय्य कृत्वा युद्धशासनस्यात्याचारमल्पीकर्तुं साहाय्यमकरोदिति गणयामि॥

### पंचत्रिंशोऽध्यायः

## पंजाबदेशे

**सरमाईकल-ओडवायरमहाशयः** पंजाबदेशे सवृत्तस्य सर्वस्याप्यहमेव पर्यनुयोज्य इति कतिपया कोपोद्दीपिता पत्रानयुक्ता युद्धशासनप्रचारस्याहमेव कारणभूत इति चाभिप्राय दद्व । मयि सविनयशासनभंगमस्थापयति जलियानवालाबागनामकस्थानस्य हत्याकाण्ड एव नाभविष्यदिति प्रतिवादमकुर्वन् । तेषा केचिन्मया पंजाबप्रदेशान पद निक्षिप्यते चेन्मारयिष्याम इति भीतिमुदपादयन् ॥

परंतु मम गणनाया मम कार्यक्रमस्तथा निर्दोष आसीद्यथा न कोऽपि विवेकशाली तमन्यथा जानीयात् ॥

पंजाबप्रदेश गंतुमहमातुरोऽभवम् यतोऽहं तत्र कदापि न गत । तत तत्रत्या परिस्थिति साक्षादवगंतु ममौत्सुक्य द्विगुणीभूतमासीत् । पंजाबप्रदेशमागतव्यमिति मामाहूयका डॉ. सत्यपाल-डॉ. किचलूमहाशयौ अपि च रामभजदत्तचौधरिमहाशय एते तदा कारागृहे स्थिता । परंतु राज्याधिकारिणामेतानितःपरदीर्घ चिराय निर्बन्धु नास्ति धैर्यमिति स्पष्टमेव विदितम् । यदाहं मोहमयीनगरे स्थितो बहवो पंजाबप्रदेशस्थजना मा द्रष्टुमागता । एषु मदर्भेष्वहं तेषां प्रोत्साहनाय वाचमनुवम् । एतेन तेऽपि सुखिता बभूवु । तदानीं वर्तमान आत्मनिश्वास इतरेष्वपि धैर्यमुपादयति स्म ॥

परंतु मया पंजाबप्रदेशगमनमनेकवार विलम्बितम् । मया पृष्टराजप्रतिनिधि सर्वदेदानीं मेति ब्रवीति स्म । एव च प्रयाण विलम्बनीयमासीत् ॥

एतदंतरे युद्धशासनसंबंधे पंजाबराज्याधिकारिण कार्याकार्याणि विमष्टु 'हंटरकमिटि' उपस्थितेति प्रकटीकृतम् । दीनबंधुअँड्रुजमहाशय एतदंतरे पंजाबप्रदेश प्रविष्ट आसीत् । तस्य पत्रेषु पंजाबप्रदेशपरिस्थितेः हृदयविदारकाणि वर्णनान्यासन् । तानि पठतो मे युद्धशासनस्यात्याचारा वृत्तपत्रिकासु वर्णितविषयापेक्षया वस्तुतोऽतिहीना आसन्निति प्रत्यभात् । मया तत्क्षणमेव प्रस्थायागतव्यमिति साग्रह पत्र लिखितम् । तस्मिन्नेव समये पंडितमालवीयजीमहाशयस्तत्क्षणमेव पंजाबप्रदेशमागतव्यमिति तत्रीवृत्त प्राहैषीत् । मयाद्य पंजाबप्रदेशगमन भवेद्वा न वेति राजप्रतिनिधे पुन तत्रीवृत्तान प्रहितवान् । कृत्तदिनानतर भवतीति प्रत्युक्तिरागता । किं तद्दिनमिति न स्मरामि । परंतु ऑक्टोबरमासस्य सप्तदशतमोदिन इति प्रतिभाति मे ॥

यदाहं लाहोरपत्तन प्राप्तस्तदा तत्र दृष्ट न कदापि विस्मरेयम् । नाण्यसंचालितशकटी-विराम वेदिकास्थानमादितोऽन्तपर्यंत जनस्तोमेन जर्जरितमासीत् । तत्पत्तनवासिन चिरकाल-

वियोगादागतमात्मनयो प्रत्युत्थानायेव तत्रागत्यात्यातुरेण प्रतीक्षमाणा आनदेन परवशा आसन् । अहं रामभजदत्तचौधरीमहाशयस्य मंदिरं अवतीर्णे । ममोपचरणभारं श्रीमतीसाव्योदेवी । चौधराणीमहाशयाया शिरसि पपात । वस्तुत सोऽय भार इत्येव वक्तव्य । यतोऽधेत्र तदापि मयावतीर्णस्थलमत्रसत्र परिणमति स्म ॥

यतो मुख्यनायका कारालये स्थितास्ततस्तेषा स्थान युक्तमेत्र पडितमालवीयजी पडित मोतीलाल दिवगतस्वामीश्रद्धानद-इत्यैतैराक्रातमिति मया दृष्टम् । ममैतत्पूर्वमेत्र मालवीयजी-श्रद्धानदमहाशययोर्गाढ परिचय आसीत् । परतु मोतीलालमहाशयेन निकटमपर्कप्राप्तिरिद प्रथमा । एते नायका अपि कारागृहप्राप्तिसन्मानस्याद्याप्यपात्राणि स्थलीया अग्रेसरा मा स्वकीयमिव ददृशु । क्षणमप्यह विदेशीय इव न दृष्ट ॥

'हटर' समितेरग्रे साक्ष्य न देयमिति सर्वे वयमेकमतेन कथ निर्धारयामेत्यपमेतिहासिको विषय । तस्य कारणानि तदानीमेव प्रकटितानि । न पुनर्निवेदनीयानि । अल मे तावद्वचनेन । एतावत्कालानतर तस्या सगत्या परिशीलिताया समितिर्बहिष्कार्येति कृतोऽस्मन्निर्णय । तस्य कारणानि च केवल युक्तानीति ममाद्यापि प्रतिभाति ॥

'हटर' समितेर्बहिष्कारस्य फलरूपेण राष्ट्रमहासभाया पक्षे तस्मिन्नेत्र विषये विचारण कारयितु राजकीयाना समितिमेका कल्पयितु निर्धारितम् । पडितमोतीलालनेहरू दिवगतदेश-बधुचित्तरजन दास जयकर-अब्बासतैयबजीमहाशया अपि चाह समिते सदस्या कल्पिता । पडितमालवीयजीमहाशयेनैव कल्पिता इति वक्तव्यम् विमर्शार्थं वयमनेकस्थानेषु विभजन प्राप्ता । समिते कार्यक्रमनिर्णयो ममोपरि स्थित । इतरापेक्षयाधिकस्थलेषु विमर्शनभाग्य मम सप्राप्तमित्यत पजाबप्रदेशस्थलोकान् ग्रामाश्च सूक्ष्मतया परिचेतु ममापूर्वावकाशो लब्ध । विमर्शनकाले पजाबप्रदेशस्थमहिलाना परिचयोऽपि प्राप्त । वयमन्योन्य युगान्तरेण ज्ञातवन्त इव प्रतिभाति स्म । मम गमनस्थलेषु समूहशा आगत्यानीतानामूर्णासूत्राणा राशीनग्रतो निक्षिपन्ति स्म । एव विमर्शस्य सबद्ध मम कार्य पजाबप्रात खादीमहाक्षेत्र भवितुमर्हेदिति मनसि सजातम् ॥

जनोपरिसवृत्तात्याचारविषयेऽग्रतो विचार्यमाणे राजकीयनिरकुशताया अधिकारिणा स्वेच्छाप्रवृत्तेश्च कथा मम श्रोत्रयो पेतु । इमा देया वियदासन्निति चेन्मयेदृशान्यपि कृत्यानि सवृत्तानीतिनैव निरीक्षितमासीत् । सर्वमेतदाकर्ण्य मम महती मनोव्यथा सजाता । तदानीं किं ममाश्चर्यमजनयदिति चेद्युद्धकाले 'ब्रिटिश' राजस्यैतत्प्रातेभ्योऽधिकान्योधानुपस्थापितवान् प्रात एतादृशपाशविकात्याचारान् कथ हस्त बद्ध्वा सेहे इत्यय विषय इदानीमपि मा विस्मापयति ।

अस्या समितेराख्यानलेखनकार्यमपि मम भाग आसीत् । पंजाबप्रदेशस्थजनस्योपरि जातानत्याचारान् जिज्ञासुभिरेतदाख्यान पठितव्यमिति मम सूचना । मयात्र वक्तव्यमेतावदेव ।

तस्मिन् कुत्रापि ज्ञात्वा लिखितातिशयोक्तिरस्ति । तत्रत्यस्य प्रत्येकविषयस्यापि साक्ष्यस्याधारो विद्यते । अपि च प्रकटित साक्ष्य समितेर्निर्शार्तेन साक्ष्यस्यात्यल्पभाग । लेशमात्रमपि सशया-स्पदो विषय आख्याने न विद्यते । न्सत्याशमात्र बहि प्रकाशनीयमित्युद्देशेन सज्जीकृतमाख्यान पठित चेद् ब्रिटिशराज्याधिकार स्वप्रात्रन्यसंरक्षणाय कियद्दूर गन्तुमिच्छति कीदृशानत्याचारान-मानुषकृत्यानि च कर्तुं शक्नोतीति स्पष्ट प्रतिभाति । यावदह जानामि तावदस्मिन्नाख्याने किमपि वाक्यं मृषेति न केनापि प्रदर्शितम् ॥

## षट्त्रिंशोऽध्यायः

# 'खिलाफतं' प्रति गोरक्षणम्

सद्योस्माभिः पजाबदेशस्य इमा दुर्घटना विस्मर्तव्या ॥

पजाबदेशे सवृत्त'डायरशाही'विषये महासभाया समितेर्विचारण प्रारेभे । एतदतरे 'खिलाफत'प्रश्नालोचनाय दिल्लीनगरे समिलित हिंदुमुसलमानानामुभयसमेलन प्रत्यागतव्यमिति बहुना प्रेषितमाह्वानपत्र ममाप्यागतम् । तस्या हस्ताक्षरकर्तृणा मध्ये दिवगतहकीमसाहेब-असफ-अलीमहाशयो नामनी चास्ताम् दिवगतस्वामीश्रद्धानद समेलनमागमिष्यतीति तत्पत्रे स्थितम् । यावदह स्मरामि तावत्तत्समेलनमेतद्वर्षस्य नवेम्बरमासे उपवेष्टव्यमासीत् । स्वामिश्रद्धानदेन तस्योपाध्यक्षो भवितव्यमित्यालोचितमिति मम स्मृतिरस्ति । तस्मिन् पत्रे प्रस्तावितानेकसगतिषु तत्समेलनेन 'खिलाफत'द्रोहस्य प्रश्नो गोसरक्षणस्य च प्रश्न चर्चयिष्यते । अतस्ता समस्या पूरयितु तदापूर्व सनिवेशो लभ्यत इत्यासीत् । एव गोरक्षणस्य प्रस्तावन मम समर्ति न प्राप । अत आह्वानपत्रस्य प्रतिवचनरूपेण लिखितपत्रेऽह समेलनमागतु सर्वप्रयत्न करिष्यामि । तत्प्रश्नद्वय मिलित्वोपकारप्रत्युपकारदृष्ट्या नालोचनीयम् । प्रत्येकमालोच्य प्रत्येक तत्तद्गुणदोषानुसारेण निर्धारयितव्यमिति सूचयित्वालिखम् ॥

इत्थमालोचयन्नह समेलन गत । तदनतर सवृत्तकूटेष्विवासिन्दशसहस्राका विंशति-सहस्राका वा जना यद्यपि न मिलिता अस्य जनसख्या अधिकाप्रभूवेत्येव वक्तव्यम् । उपर्युक्तप्रश्न तत्रागतस्वामिश्रद्धानदेन सहाचर्चयम् । मम वादस्तस्य समर्ति आप । तत्समेलनस्यायानमानेतु मामेवान्वजानाति । तथाहमेतत्प्रश्नद्वय हकीमसाहेबमहाशयेन सह प्रस्तावितवान् । 'खिलाफत'-गतेर्न्यायधर्मयोराधारोऽस्ति चेत् ( तादृगाधार आसीदित्येव मे श्रद्धा ) राज्याधिकार केवलमन्याय नाचरेद्यदि मुसलमानाजना 'खिलाफत'सबधेऽभियोजने हिन्दुभिस्तेषा साहाय्य कर्तव्यम् । गोसरक्षणप्रश्नप्रस्तावो नैत सदर्भे मुसल्मानजनै सह नियमविधानमुपयोजन वोचित न भवति ।

आसम्। समेलनस्यात्र ममाभिप्रायस्याप्रकटनं कर्तव्यलोपो भवतीति केवलं भाषितुं प्राप्तोऽयं आसम्। परंतु ममाश्चर्यानुसारेण तत्रत्या मम भाषणं संपूर्णावधानेनाशृण्वन्। अपि च ममाभिप्रायस्य वेदिकास्थितानां संपूर्णानुमोदनप्राप्त्यैकैकशो ममाभिमतं पुष्टीकृत्य भाषणं चक्रुः। 'ब्रिटिश'वस्तूनां बहिष्कारो न केवलमस्मदुद्देशं सार्थकीकरोति। परं तदनुसारेण हास्यास्पदं भविष्याम इति प्रमुखा अजानन्। तत्रागतानां शरीरोपरि यत्किंचिद् 'ब्रिटिश'-वस्तुस्थितमेव। यतो निर्णयमनुमोदमाना एव यदा नाचरितुं शक्तास्तदा तादृगस्याभिसमतिरनर्थयैवेति तत्रत्यानां बहूनां मनसि स्फुटमासीत्॥

केवलविदेशीयवस्त्रबहिष्कारेण तृप्तिर्न भविष्यति। यावदावश्यकमस्माकं तावत्स्वदेशीय-वस्त्रमुत्पादयितुमपि च विदेशीयवस्त्रं संपूर्णमेवापसारयितुं च कियान् कालो भविष्यतीति को वा जानाति। 'ब्रिटिश'जनानां शीघ्रमेव परिणामजनकं किमपि वाञ्छितम्। विदेशीयवस्त्रबहिष्कारस्तिष्ठतु। तस्य न कोऽप्याक्षेपो न विद्यते। परंतु तेन सह इतोऽपि शीघ्रतरं वाहनं साधनं दीयताम्। इत्येतदेव समष्टया मौलानाहसरतमोहानीमहाशयस्य वादः आसीत्। तस्य भाषणं शृण्वत एव विदेशीवस्त्रबहिष्कारेण सह किमप्यन्यन्नूतनमावश्यकमिति मनस्यस्फुरत्। एतं बहिष्कारमपि तत्क्षणमेव कर्तुमसाध्यमिति प्रत्यभात्। अपेक्षायामस्माकं पर्याप्तं खादीवस्त्रमुपस्थापयितुं शक्यमिति तस्मिन्काले न ज्ञातमासीत्। एतदस्माभिः पश्चाद्दृष्टम्। परन्त्वस्य बहिष्कारस्य साधनाय निर्माणयन्त्रेष्वेव विश्वासिनश्चेद्वयं वञ्चिताः स्यामेति तदानीमप्यस्माकं विदितमासीत्। यावदहमुभयसंकटे स्थितस्तावदेव मौलानामहाशयः स्वभाषणं समापयामास॥

यतः सम्यग् हिन्दीवचनं अथवा उर्दुवचनं नास्फुरत्ततः संकटे स्थितः। उत्तरदेशस्य मुसल्मानजनैर्बहुभिर्मिलितसभायां तार्किकभाषणमिदं प्रथममेव कृतम्। कलकत्तानगरे मुसल्मानानां सभायामुर्दुभाषायां भाषणं कृतं परंतु चतुःपञ्चनिमेषमात्रम्। तस्योद्देशः केवलं सभासदां हृदयावगाहनम्। अत्र तावत्सभा न मे विरोधवर्तिनी भवेद्यदि मम वाक्यं विमर्शनदृष्ट्याप्यवद्धीत। ईदृक् सभायामहं ममाभिप्रायान्विवृत्य मनसि स्थापयेयम्। परंतु मया लज्जावृत्तिरपि समुत्सारिता। मम तत्र परिस्थितिर्मम योग्यतामतिक्रान्तादिल्लीमित्रहिंदीभाषायां तत्सभायां ममाशयं व्यक्तीकर्तुमेव। न पुनर्दिल्लीनगरस्थमुसल्मानजनानां निर्दोषस्वच्छहिन्दीमाश्रित्य भाषणं कर्तुम्। अस्मिन्नुद्देशेऽहं कृतार्थो जातः। हिंदी-उर्दुभाषायैव हिंदुस्थानस्य राष्ट्रभाषा भवितुं योग्येतीयं सभा मम प्रत्यक्षनिदर्शनं ददौ। आङ्ग्लभाषायां भाषणेन तादृशं गंभीरपरिणामं जनयितुमशक्यमासीत्। मौलानामहाशयः बहुशः स्पर्धां नाकारयिष्यत्। स्पर्धाकरणेनापि तस्य सम्यगुत्तरं दातुं शक्यं न भवेत्॥

तदा स्फुरितनूतनभावं व्यक्तीकर्तुं मम हिन्दीभाषाशब्दोऽथवा उर्दुभाषाशब्दो नास्फुरत्। अनेनाहं स्वल्पं कुपित इव। पर्यन्ते तं भावं 'नॉन-कोऑपरेशन' (असहकार) इति वाचा समसूचयम्।

तथैव मुसल्मानजनैरपि 'खिलाफत'सत्त्वे हिन्दूनामवलंबनलाभाय गोहत्यां विरमयितुं ममनिर्णा न योग्या। परतु मुसल्मानजना स्वयमिच्छया हिंदुना धार्मिकमनोरथमादर्थेनेऽस्मत्पारिपार्श्ववर्तिनो भूमातुरेकस्या एतद्देशवर्तिन शिशव इति गणयित्वा कर्तव्यदृष्टया गोवधं विरमयन्ति चेत्तदत्यन्तयोग्य तेषा भूषणप्राय भविष्यति। स अन्यो विचारो भविता। तथा स्वतन्त्रदृष्टयाऽलोचनमेव तत्कर्तव्यम्। तेन तेषामाचारस्य गाभीर्यं द्विगुण भविष्यति। परतु मुसल्मानाः पारिपार्श्ववर्तिन समालोच्य स्वकर्तव्यमिति दृष्टया गोवधो न कर्तव्य इति मन्यन्ते यदि हिंदव खिलाफतविषये साहाय्य कुर्वन्तु वा न वा गोवधे प्रतिरुन्धीयु। अत एतद्विषयद्वय प्रत्येक चर्चनीयम्। एतत्समेलनस्य कार्यमत्रापि 'खिलाफत'प्रश्नस्य केवल सबद्धैर्भवितव्यम्। इत्यह समेलने वादमकरवम्। अय वादस्तत्रत्याना मनसि निरूढ आसीत्। अस्य फल च गोरक्षणविषये तदा न चर्चा कृता॥

परत्वेव मम प्रबोधनेऽपि मौलाना-अब्दुलबारीसाहेबमहाशयो हिन्दवोऽस्माकं साहाय्य कुर्वन्तु वा न वा वय हिन्दूना देशबाधवा इति भावेन हिन्दूना मनोवृत्तिमादृत्य गोवध प्रतिरोद्धव्य इत्युवाच। अपि चैकदा मुसल्मानास्तत्र प्रतिरुन्धन्त्येवेति प्रत्यभात्॥

'खिलाफत'प्रश्नेन सर्वपजाबदेशस्यात्याचारप्रश्नमपि परिगृण्हीयादिति कैश्चित्सूचितम्। अहमिद प्रत्यवस्थित। उक्त मया यथा—पजाबप्रदेशप्रश्न केवल प्रातिको विषय। युद्धसमाप्तेरुत्सवेष्वस्माभिर्भागिभिर्भवितव्य वा न वेति तस्य स्थान न देयम्। सर्वैर्नियमैरेवोदित'खिलाफत' प्रश्नेन सेय स्थलीयसमस्या मिश्रिता चेन्महानविवेको भविष्यतीति। मम तर्कं सर्वेषा मन प्राविशत्॥

मौलानाहसरतमोहानीमहाशय सभामिमामागत। इत पूर्वमासीन्मे तस्य परिचय। परतु स कीदृशो योध इति ममाचैव विदितम्। प्रथमत एव वयं भिन्नमतौ स्व। केषुचिद्विषयेष्वद्य भिन्नाभिप्रायोऽद्यापि तिष्ठति॥

अनेन समेलनेनानुमोदितनिर्णयेषु हिन्दुभिर्मुसल्मानजनैश्च स्वदेशीव्रतमगीकर्तव्यमित्येकम्। अस्य सहजानुवर्तिततया विदेशीवस्तूनि बहिष्कार्याणीति च प्रस्ताव स्वीकृतोऽभूत्। 'खादी'वस्त्रस्याद्याप्युचितस्थान न लब्धमासीत्। हसरतसाहेबमहाशयो निर्णयमेत न समेने। 'खिलाफत'विषये न्याय्यो निर्णयो न भवेद्यदि 'ब्रिटिश'चक्राधिपत्यस्योपरि प्रतीकार एव तस्योद्देश आसीत्। अतोऽयमिदप्रति यावत्साध्यम् 'ब्रिटिश'पदार्था बहिष्कार्या इति निर्णय सभाग्रे आनिनाय। अहमेन तात्त्विकदृष्टया कार्यदृष्टया च प्रत्यवस्थित। एतत्सबधे मयोक्ता वादा अद्य बहुशो जनानामवगाहनमागता। एतन्मुक्त्वाहमहिंसाविषये मयाभिमत सभाया अवधानमानैषम्। मयोक्त तत्रागताना मनसि गभीरपरिणाममजनयदिति मम विदितमासीत्। मत्त पूर्वं सभा हसरतमोहानीमहाशयस्य भाषणमत्यन्तोत्साहेनाशृणोत् इत्यन मम वचनमरण्यरोदन भवेदित्यह भीत

आसम् । समेत्यनस्यात्र ममाभिप्रायस्याप्रकटन कर्तव्यगोपो भवतीति केवल भाषितु प्रासभैर्य आसम् । परतु ममाथ्यर्यानुसारेण तत्र्या मम भाषण सपूर्णात्राननेनाश्नुग्वन् । अपि च ममाभिप्रायस्य वेदिनास्थितिनाना मपूर्णानुमोदनप्राप्येकैकशो ममाभिमतं पुष्टीकृत्य भाषण चक्रु । 'ब्रिटिश'वस्तूना बहिष्कारो न केवलमस्मदुद्देश सार्थकीकरोति । पर तदनुसारेण हास्यास्पद भविष्याम इति प्रमुखा अजानन् । तत्रागताना शरीरोपरि यत्किंचिद् 'ब्रिटिश'-वस्तुस्थितमेव । यतो निर्णयमनुमोदमाना एव यदा नाचारेतु शकास्तदा तादृशास्माभि समतिरनर्थायैवेति तत्रत्याना बहूना मनसि स्फुरमासीत् ॥

केवलविदेशीयवस्त्रबहिष्कारेण तृप्तिर्न भविष्यति । यावदावश्यकमस्माक तावत्स्वदेशीय-वस्त्रमुत्पादयितुमपि च विदेशीयवस्त्र मपूर्णमेवापसारयितु च कियान् कालो भविष्यतीति को वा जानाति । 'ब्रिटिश'जनाना शीघ्रमेव परिणामजनक किमपि वाछितम् । विदेशीयवस्त्रबहिष्कारस्तिष्ठतु । तस्य न कोप्याक्षेपो न निषेधे । परतु तेन सह इतोऽपि शीघ्रतर परिणाम साधन दीयताम् । इत्येतदेव समव्या मौलानाहसरतमोहानीमहाशयस्य वाद आसीत् । तस्य भाषण शृण्वत एव विदेशीयवस्त्रबहिष्कारेण सह किमप्यन्यन्नूतनमावश्यकमिति मनस्यस्फुरत । एत बहिष्कारमपि तत्क्षणमेव कर्तुमसाध्यमिति प्रथमात् । अपेक्षायामस्माक पर्याप्त खादीवस्त्रमुत्पादयितु शक्यमिति तस्मिन्काले न ज्ञातमासीत् । एतदस्माभि पश्चाद्दृष्टम् । परत्वस्य बहिष्कारस्य साधनाय निर्माणयत्रेण्वेव विश्वासिनश्चेद्वय वचिता स्यामेति तदानीमप्यस्माक विदितमासीत् । यावदहमुभयसकटे स्थितस्तावदेव मौलानामहाशय स्वभाषण समापयामास ॥

यत सम्यग् हिन्दीवचन अथवा उर्दुवचन नास्फुरत्तत सकटे स्थित । उत्तरदेशस्य मुसल्मानजनैर्बहुभिर्मिलितसभाया तार्किकभाषणमिद प्रथममेव कृतम् । कलकत्तानगरे मुसल्मानाना सभायामुर्दुभाषाया भाषण कृत परतु चतु पणनिमेषमात्रम् । तस्योद्देश केवल सभासदा हृदयावगाहनम् । अत्र तावत्सभा न मे विरोधवर्तिनी भवेद्यदि मम वाक्य विमर्शनदृष्ट्याप्यवदवीत । ईदृक् सभायामह ममाभिप्रायान्विवृत्य मनसि स्थापयेयम् । परतु मया लज्जावृतिरखिलापि समुत्सारिता । मम तत्र परिस्थितिर्मम योग्यतामतिक्रान्तेऽतिमिश्रहिंदीभाषाया तत्सभाया ममाशय व्यक्तीकर्तुमेव । न पुनर्दिल्लीनगरस्थमुसल्मानजनाना निर्दोषस्वच्छहिन्दीमाश्रित्य भाषण कर्तुम् । अस्मिन्नुद्देशेऽह कृतार्थो जात । हिंदी-उर्दुभाषाप्येकैव हिंदुस्थानस्य राष्ट्रभाषा भवितु योग्येतीय सभा मम प्रत्यक्षनिदर्शन ददौ । आग्लभाषाया भाषणेन तादृश गभीरपरिणाम जनयितुमशक्य मासीत् । मौलानामहाशय बहुश स्पर्धा नाकरिष्यत् । स्पर्धाकरणेनापि तस्य सम्यगुत्तर दातु शक्य न भवेत् ॥

तदा स्फुरितनूतनभाव व्यक्तीकर्तुं मम हिन्दीभाषाशब्दोऽथवा उर्दुभाषाशब्दो नास्फुरत । अनेनाह स्वल्प कुपित इव । पर्यंते त भाव 'नॉन-कोऑपरेशन' (असहकार) इति वाच समसूचयम् ।

तस्य प्रयोगोऽस्यां सभायामेव प्रथमः । मौलानामहाशये भाषणं कुर्वाणे मयेन्थं प्रयुक्तात् । अनेक-विषयेषु राज्याधिकारेण सहकारं कुर्वन्ति । अस्माभिरायुधपाणिभिर्भवितुमशक्यं चेद्यथानुचितं चेत्तादृशराज्याधिकारं सफलं विरोद्धुं केवलनिरर्थकम् । राज्याधिकारेण यथार्थो विरोधस्तेनासहकारः । 'नॉन कोऑपरेशन' इति वाच उत्पत्तिरेवम् । तस्य अनेकेङ्गितार्थास्तदा मे स्पष्टतया न विदिता आसन् । ततोऽहं विवरणं न गतः । मयोक्तमेतावन्मात्रम्—

मुसलमानैः संप्रति बहुमुल्यो निर्णयः स्वीकृतः । संवैर्नियमा यवन्याय्याः (तथा भवितुं भगवानवकाशं मा ददातु) ते राज्याधिकारेण सहकारं परित्यक्ष्यन्ति । एवं सहायसंबंधस्य निराकरणं प्रजानां जन्मसिद्धोऽधिकारः । राज्याधिकारस्य प्रजाभिः स्वीकृतानां 'बिरुद'संमानादीनां रक्षणं वा राजकीयसेवायामासक्तिर्वा नास्मत्कर्तव्यम् । 'खिलाफत'सदृशे महाविषये राज्याधिकारिणो-ऽस्माकं द्रोहं कुर्युश्चेदस्माकं तैरसहकारं विना नान्यो मार्गो विद्यते । अतो राज्याधिकारः स्वीयवाचा स्खलति चेत्तैरसहकारं कर्तुमस्माकमधिकारोऽस्तीति ॥

परंतु 'नॉन-कोऑपरेशन' इति वाक् साधरणोपयोगमागन्तुं केचिन्मासा व्यतीयुः । तत्कालभावं सभायाः कार्यकलापेष्वदृश्यतां गतः । तावता किम् । तत एकमासानंतरममृतसरनगरे मिलितराष्ट्रमहासभायां राज्याधिकारेण सह कर्तव्यमिति निर्णयसमर्थनं राज्याधिकारः स्ववाक्यं मृषा न करोतीत्याशयैव ॥

सप्तत्रिंशोऽध्यायः

## अमृतसरनगरस्य महासभा

**युद्धशासनप्रचारे** परःशताः पंजाबप्रदेशस्थजना निर्बद्धा एतद्विचारकाणि न्यायस्थानानि नाममात्रन्यायस्थानान्यभवन् । तान्यत्यल्पसाक्ष्यमाश्रित्य कारागृहवासदंडः सर्वेषामेव व्यधीयत । एतान् परःशताञ्जनान् पंजाबराज्याधिकारेण चिरकालं कारागृहबद्धान् विधातुं न शक्यमासीत् । सर्वत एतत्परमान्यायविषये लोकापवादप्रसंगादेताञ्जनान् कारागृहे स्थापयितुमसाध्यमासीत् । महासभायाः प्रारंभात्पूर्वं प्रायः सर्वे बंद्यो विमुक्ताः । महासभायां प्रवर्तमानायामेव लालाहरिकिसन-लालमहाशयप्रभृतयो नायका व्यमुच्यन्त । 'अली'भ्रातरौ कारागृहात्सद्यस्तत्रागत्यावतीर्णौ । जनस्य संतोषः पारावारशून्य आसीत् पंडितमोतीलालनेहरूमहाशयः सभाध्यक्ष आसीत् । अयमत्युत्कृष्टागमां 'वकील'वृत्तिं परित्यज्य स्वकीयनष्टमनवधाय पंजाबप्रदेशमागत्य तत्रावस्थाय देशसेवां चचार । स्वामीश्रद्धानंदः स्वागतसमितेरध्यक्ष आसीत् । अद्ययावन्महासभाया वार्षिक-संमेलनेषु मम भाग एतावानेवासीत्—

राष्ट्रभाषायां भाषणद्वारा हिन्दीभाषाप्रचारः। अपि च तद्भाषणे विदेशस्थितभारतीयविषयस्य सभाग्रे स्थापनम्। अस्मिन्वर्षे कार्यमधिकमस्तीति न मया गणितम्। परंतु पूर्वमनेकशः संवृत्तमिवाद्यापि पर्यनुयोजनीयं कार्यमकस्मात् मम शीर्षे पर्यपतत्॥

नवीनसुधारणा अधिकृत्य चक्रवर्तिनः प्रसिद्धपत्रिका तदानीमेव प्रकटीकृता बभूव। ममापि तद्गतं संपूर्णं सम्यक् नासीत्। इतरेषां सर्वेषामपि तद्दर्शनं स्वल्पमासीत्। यद्यपि सुधारणाः सदोषास्तथापि स्वीकारयोग्या इति तदा मम प्रत्यभात्। मम तद्भाषायां तत्प्रसिद्ध-पत्रिकायां च लॉर्डसिंहमहाशयस्य हस्तक्षेपोऽस्तीत्यदृश्यत। एतन्ममाशाजनकमस्फुरत्। परंतु लोकमान्यतिलक-लोकबंधुचित्तरंजनदासमहाशयप्रभृत्यनुभविनो नायकाः शिरःकम्पं चक्रुः। पंडितभारतभूषणमालवीयजीमहाशयस्तटस्थः स्थितः॥

पंडितभारतभूषणमालवीयजीमहाशयो मह्यं स्वप्रकोष्ठे आश्रयमदात्। हिन्दुविश्वविद्या-लयस्य स्थापनकाले तस्य जीवनं बहुमूल्यमिति विदितमासीत्। परंत्वस्मिन्संदर्भे तस्य प्रकोष्ठ एव मया विद्यमानत्वात्तस्य दिनचर्यामत्यंतसूक्ष्मतया द्रष्टुं ममावकाशो लब्धः। यन्मदीयचक्षुःपतितं तन्ममाश्चर्येण संतोषेण च पूरयामास। तस्य प्रकोष्ठेऽकिंचनाना धर्मसत्रमिव दृश्यते स्म। एकान्तादपरान्तं गंतुमिव दुष्करमासीत्। यतस्तावद्भिर्जनैः पूर्णमासीत्। यः कोऽपि वा भवतु। या काचिद्वेला वास्तु। तत्रागन्तुं शक्यम्। तत्रागतानां तेन सह वर्तितुं कालनियमो नासीत्। अस्य कुटीरस्यैकस्मिन् कोणे मम मंचो गाम्भीर्येण प्रकाशते स्म। परंतु सर्वमध्यायं मालवीयस्य जीवनसंप्रदायस्य वर्णनेन पूरयितुं नाहम्। अतः प्रकृतविषयं गमिष्यामः॥

एवं मम प्रत्यहं मालवीयेन चर्चयितुं साध्यमभूत्। सोऽयं यथा ज्येष्ठभ्रातानुजं प्रति तथा विविधपक्षाणामभिप्रायान्मम वर्णयति स्म। सुधारणानां संबद्धनियमस्योपरि चर्चायां मया भागिना भवितव्यमेवेति दृष्टम्। पंचनददेशस्यात्याचारानधिकृत्य महासभाया आख्याने लेखने मम पर्यनु-योजनाप्यासीदतस्तत्संबंधे कर्तुमवशिष्टानामनेकविषयाणां मम लक्ष्यं दातुमावश्यकमिति मम प्रत्यभात्। अस्मिन्विज्ञाने राज्याधिकारेण सह व्यवहर्तव्यमप्यासीत्। अपि चैवमेव 'विश्वास'प्रश्नश्च स्थितः। एतन्मुक्त्वा तदा मांटेग्युमहाशयो भरतखंडं न वंचयति इतरेऽपि तं तथा कर्तुमनु-जानन्तीत्यासीद्विश्वासः। 'अली'भ्रातृप्रभृतिबंदीनां बंधविमोचनं मया शुभसूचनेति दृष्टम्। एवं स्थिते सुधारणा अपरित्यज्य स्वीकारनिर्णय एवोचित इति मम प्रत्यभात्। देशबंधुचित्तरंजनदास-महाशयस्तु सुधारणाः केवलमल्पा असमर्पकाश्च भ्रान्तीयतस्ते निराकर्तव्या इति दृढाभिप्रायवानासीत्। लोकमान्यतिलकमहाशयस्तटस्थः स्थित इति वक्तव्यम्। परंत्वसौ स्वमतं देशबन्धुमहाशयस्य अनुमतनिर्णयस्य दातुं निश्चित आसीत्॥

एतादृशास्मानुभविभिः सहसमरेषु कृतपरिश्रमे सर्वैरन्यैर्नायकैर्मतभेदः महत्तरो न आसीत्। परंत्वनोऽन्तःमालिन्य आशा स्वादामवत्। महासभाविशेषनरपरिषदोरेकत्रे तत्कालुरिष्य-

तिरेव क्षेमकारिणी एव कृतेऽह तादृशमान्य प्रमुखैर्भिन्नाभिप्रायोऽहमिति वक्तुमावश्यकता परिहियते इति पंडितमालवीयजीमहाशयस्य पंडितमोतीलालमहाशयस्याप्यमूचयम् ॥

परतु ज्येष्ठवेतो न समेनाते। इय सूचना लालाहरिकिशनलालमहाशयस्य कथचिज्ज्ञाताभूत्। स चोक्तवान्यथा–तत्सर्वं न भवितुमर्हति। तेन पजाबदेशवासिना खेदो भविष्यतीति। ममाय विषयो लोकमान्य श्रीणा-देशबधुमहाशयै सह चर्चित। सकट परिहर्तु मार्ग कोऽपि न दृष्ट। पर्यंते मम दु ख मालवीयजीमहाशयस्य व्यज्ञापयम्। उभयपक्षयो सम्मतिर्मे न शक्या प्रतिभाति। मम निर्णय प्रस्तावनीयो यदि तद्विषये सभाया मत निर्धारयितु 'वोट'(मतसूचनम्) ग्रहीतव्य भवति। तस्यात्र न किमपि सविधान दृश्यते। महासभाया अधिनिवेशने हस्तोद्यमनेनैव 'वोट' ग्रहणमद्यावधिकोऽभ्यास। अस्य फल च सदस्याना प्रेक्षकाणा च व्यत्यासो न कर्तुं शक्य एतादृशमहासमूहेषु 'वोट' गणयितु साधनमेव नास्ति। सर्वस्यास्य साराशोऽय भवति यद्यप्यह 'वोट' गणयितुमिच्छेय तस्यानुकूल्य नास्ति। अर्थोऽपि न। परतु लालाहरकिशनलालमहाशय सहायार्थमागत। अस्य कर्तव्यसविधानस्य भारमग्रहत्। तेनोक्त यथा—'वोट'ग्रहणदिवसे प्रेक्षकान्न प्रवेशयाम। गणनाविचारो ममास्तु। भवता महासभा त्यक्त्वा न गतव्यमिति ॥

पर्यंतेऽह पराजित। मम निर्णय व्यरचयम्। त सभाग्रे स्थापयितुममसि। हृदयमधैर्येण कपमानमासीत्। पंडितमालवीयजीमहाशयश्चेम निर्णय सभाया पुष्टीकुर्यातामिति निर्धारितम्। यद्यप्यस्म मतभेदे तिलकोऽपि जठरसकट नासीत्। अस्मद्भाषणेषु च तर्क विहाय नान्यदासीत्। तथाप्यस्मासु भेदस्यावस्थितिरेव जनाना समता नासीदिति मम मनोगोचरमागतम्। एतत्तेषा मनसि क्लेशमजनयत्। ऐकमत्य हि तैरपेक्षितम् ॥

भाषणेषु विद्यमानेष्वस्मदातिरिक्त भेदमपनेतु वेदिकोपरि प्रयत्ना भवन्ति स्म। एतदुद्देशेन नायकेषु पत्रखडा एकैकश प्रचलन्ति स्म। मालवीयजीमहाशय समाधानमुत्पादयितु सर्वसाहस चकार। तत्कालमेव जयरामदासमहाशयो निर्णयस्य शोधन मम हस्ते प्रदायास्मिसदर्भे प्रतिनिधीन् 'वोट'प्रदान् सकटादुत्तारयितव्यमिति प्रार्थयामास। तस्य शोधन ममोचितमेव प्रत्यभात्। मालवीयस्य दृष्टिरत्तावदाशाकिरणान् क्षेपयन्ती चतुर्दु कालेष्वपि निपतति स्म। जयराममहाशयस्य शोधनमुभयपक्षसमाधानकर मम प्रतिभातीति मालवीयजीमहाशयो मदग्रमब्रवीत्। ततश्च लोकमान्यमहाशयस्य प्रादर्शयाम। देशबधु महाशयो मन पूर्वक समन्यते यदि ममापि मम्मत इत्युवाच ॥। देशबधुमहाशयो विपिनचद्रपालजीमहाशयमैक्षत। मालवीयजीमहाशय आशापूर्णोऽभवत्। मालवीयजीमहाशयस्य शोधनपत्रखडमाक्षिप्य देशबधुमहाशयस्य स्पष्टमेव तथास्त्विति वचनोद्गीरणापूर्वमेव मालवीयजीमहाशय प्रतिनिधिसहोदरा सर्वे समापितमित्युधैर्योचत्। ततो यसवृत्त तद्वर्णयितु न शक्यम्। करास्फोटनशब्देनोपरितनमावरणमकम्पत। तत्रावर्पयंतं निराशायाग्रस्तानि सभासदा मुखान्यानदेन प्रचकाशिरे ॥

शोधनविषय विशदीकृत्य वक्तु नावश्यकम् । एतत्प्रकरणविषयभूतेषु मम प्रयोगेषु एकेन निर्णयभार कथ मया वोढ इति निवेदनमेव ममोद्देश । इय समाहितिर्मम पर्यनुयोज्यतामविक-मवर्धयत् ॥

अथत्रिंशोऽध्याय:

# महासभाप्रवेशः

अमृतसरस्य महासभा मन्त्रिगानेषु या महासभा सा नीतिशास्त्रे प्रथमोपदेश इति मया मन्तव्यम् । व्यतीतमहासभासु ममोपस्थितिर्मम महासभानुशासनस्य वार्षिक नवीकरण नान्यथा । निविक-जनस्य कार्यं विना कार्यान्तर ममावस्थिन भवतीति न कदाप्यहममसि । न च मयाभिरमपेक्षितम् ।

अमृतसरे ममानुभव प्रादर्शयद्यया यत्राह यादृश विशेषमावयान्येन च महासभाया उपयोगो भवेत्तादृशानि एकद्विवस्तूनि ममासन्निति । मम तावल्लक्षयितु शक्यम् । यथा लोकमान्य – देशबन्धु – पण्डितमोतीलालजीमहाशया अपि चेतरे नायका पञ्चनददेशविचारणमवये मम कार्येण सतुष्टा इति । तेषामभ्यन्तरस्थितमेलनेषु यत्र विषये समितेर्निर्णया समुपन्ना मामाह्वयन्ति स्म । प्रमुखाना यत्र महती श्रद्धा यत्र च तेषा सेवावश्यकी बभूव । कदाचिदन्तविचारिणोऽप्येषु मेलनेषु प्रवेश लेभिरे ॥

आगामिवर्षमवधे विषयद्वये ममासी कुतूहलम् । यतस्तत्रावधे मम प्रायो योग्यताविशेष आसीत् । अत्र ' जलियावाला'हत्याकाण्डस्मारकमेक महासभैतद्दस्मारकमावश्यकमिति निर्णयस्यात्युत्साहेन समतिं ददौ । एतदर्थं पञ्चलक्षरूप्यका सग्रहीतव्या आसन् । अहमेको धर्मदर्शीति नियुक्त । सार्वजनिककार्यार्थं भिक्षाटनप्रसगे प्राप्ते माल्वीयजीमहाशयो भिक्षुकचक्रवर्तीति विरुदमाप । परतु विषयेऽस्मिन्तदपेक्षयाह नान्तर इति मम विदितमासीत् । ममैषा योग्यता पर्यन्ताने दक्षिणाफ्रिकादेशे । हिन्दुस्थानस्य राजमहाराजेभ्य पर सहस्राणि रूप्यकाणि ग्रहीतु माल्वीयजी-महाशये विधनविद्यावाल्मन्य मयि नासीत् । परतु ' जलियावाला ' स्मारकविषये राज-महाराजाना सविधि गतु नास्ति प्रमेयमिति मम विदितमासीत् । एव निरीक्षितरीत्या धनसचयस्य मुख्यपर्यनुयोग्यता ममोपरि पतिता । मोऽहमस्यामुदारनागरिका हस्तपूर्णं धनमदु । इदानीमेनस्मारकस्य नाम्ना कोशे निक्षिप्तद्रव्यमल्प नास्ति । परत्ववनवस्त्ननसमस्या कथमिति चेद्धिन्दुमुसल्मानशीख जनाना समिश्रितरक्तेन पवित्राया तस्या भूमौ कया रीत्या मदिर निर्मातव्यमिति । निम मस्था एता मैत्र्या प्रेम्णा चैकीभविनव्या । पर वहिर्दृश्यमानेण परस्परमभियोगे मग्ना भवन्ति । एत मध्ये जनाग निधि कथमुपयोक्तव्य इति मोहित नि शब्द तिष्ठति ॥

मम योग्यताविशेषद्वये द्वितीयो विषयो लेखनम्। य कोऽपि वा विषयोऽस्तु । तस्य सक्षेपेण व्यक्तीकरणशक्तिर्मय्यासीदिति महासभाप्रमुखानामवधाने स्थितम्। अथ गुणविस्तरस्य भ्यासेन सपादितस्तदानीं महासभाया अगविधान गोखलेमहाशयेन निर्मितमासीत। तैर्विरचित कतिपयसूत्राणामाधारेण महासभायत्र चलति स्म । एषा सूत्राणामुद्भवस्य सुरतहल्लमिति हासमह गोखलेमुखादेवाशृणवम्। परतु महासभाया कार्यक्लापो वर्षे वर्षे वर्धमान इतीमानि सूत्राण्य समर्पकाणि बभूवुरिति सर्वेषा प्रतिभाति स्म। अथ प्रश्न प्रतिवर्षं चर्चास्पद भवति स्म। तदानीं महासभाया अधिवेशनेषु कार्यव्यवस्था वा वर्षमध्ये सभ्यनायानिरीक्षितमनिवेशाना पर्याप्तकार्यक्रम निर्धारयितु सविधान वा नासीत् । तदानीं विद्यमाननियमानतुसृत्य त्रयाणा कार्यदर्शिना स्थानमासीत् । एषामप्येक एव वस्तुत कार्यं करोति स्म। अयमेकोऽपि वर्षपूर्णं कार्यं न चक्रे। तेऽयसहाय विना महासभाया कार्यं चालयद्भि पुरस्तादालोचयद्भि पूर्व महासभाया बोढ पर्यनुयोज्यता वर्तमानसवसरे निर्वाहयितु कथ साध्यम्। तस्मिन्वर्षेऽय प्रश्न इतोऽप्यधिकमहत्वमाप्नोतीति सर्वैर्निरीक्षितम् । सार्वजनिकविचाराश्चर्चयितु महासभायगाधा सीत्। महासभाया सदस्या इयत इति वा ईदृगीदृक्प्रातेनैतावदेतावज्जनप्रतिनिधय प्रेक्षणीया इति वा नियमो नासीत्। एवस्थितामनायकपरिस्थितिमुत्तमा कर्तुं किमपि सविधानमावश्यकमिति सर्वेषा दृश्यते स्म। अह महासभाया व्यवस्थाक्रम रचयितु समतिमदाम् । एक नियममनुरुध्य तदनधथा जनानामुपर्य यत्प्रभावशालिनौ नायकौ द्वौ लोकमान्य देशबधुमहाशयाविति दष्टम्। जनतापक्षे तौ द्वावप्यगविधानरचनासमितौ मया सह सदस्यौ भवतामिति प्रार्थितवान्। परतु तावेतौ व्यक्तितो रचनाभागिनौ भवितुमसाध्यमिति स्पष्टमासीत्। अतस्तौ मुक्त्वा तद्विश्वासपात्रौ द्वौ मया सह समितेर्नियोक्तव्यावस्या च समितौ केवल त्रिभिरेव भवितव्यमित्यहमसूचयम्। अस्य दिवगत लोकमान्यदिवगतदेशबधुमहाशयौ समर्ति ददतु । लोकमान्यमहाशय स्वपक्षीय श्री केलकर महाशय देशबधुमहाशयश्च आई बी सेनमहाशय न्ययोजयताम्। समिते सदस्याना सकृदपि समिलितु न शक्यमासीत्। परतु पत्रव्यवहारेण परस्परमभिप्रायान् वेदितु साध्यमासीत्। पर्यंतेऽस्माभिरेकमयाख्यान समर्पितम् । ममास्मिन् व्यवस्थाक्रमे किंचिदभिमानोऽस्ति। तच्चेत् सपूर्णं कार्यरूपेऽवतारित तदास्माक स्वराज्य लप्स्यत इति मेऽभिप्राय । यस्मादिनादिय पर्यनुयोज्यता मया वोढा ततो मे वास्तविको महासभाप्रवेश इति वक्त शक्यम् ॥

सङ्कटाना परपरा ददृशे । तानस्चक्र वा तनुवायान् वा कथ तातत्र करणीयमिति शिक्ष- यितुमलभेमहि । आश्रमे वय कतिपयराटानुपायोजयाम । किंत्वेतान् 'चरखा'रूपेणोपयोक्तु साध्यमिति कल्पनैवास्माक नासीत् । एकस्मिन् दिने कालिदासरकीऊमहाशय कथ तातत्र करणीयमिति प्रदर्शयन्तीं स्त्रिय दृष्टवानहमिति न्यवेदयत् । नूतनत्रियाणा सौलभ्येन शिक्षणे प्रवीण इति ज्ञातमेकमस्मदाश्रमादस्या पार्श्वे प्राहैष्म । किंतु सोऽप्येतत्कलामर्मण्यस्वीकृत्य प्रतिनिवृत्त ॥

इत्थ कालोऽपयात । एतेन सह ममौत्सुक्यमपि वर्धमानमासीत् । अकस्मादाश्रमगन्तानस्मि न्विषये एतेभ्य किमपि ज्ञातेन न भाव्यमिति तातत्र प्रतिष्ठम्यमासीत् । किं तु वस्त्रया स्त्रिय केवलमभ्यस्यन्ति स्म । तास्त्रपि सान्तिमास्थामागता । देशस्य कचिदपि कोणे एका द्वौ वा स्थितौ यदि तानन्वेपयितु स्त्रिय एवापेक्ष्यन्त ॥

सप्तदशोत्तरैकोनविंशे वर्षे भरूचपत्तने सद्वृत्तशिक्षणपरिषदध्यक्षो भवितु सुहृदस्तत्र माम नैषु । तत्रैवाह ता महासाहसिनीं गगाबाईमहाशयामदर्शम् । सा विधवा । तथापि तस्या साहस निरवधिकमासीत् । सामान्यगणनया सा यद्यपि तावच्छिक्षिता नासीत्तथापि धैर्ये ज्ञाने च सास्मत् सुशिक्षितस्त्रीजनमनीवातिक्राता । सा न केवलमस्पृश्यताकलङ्क परित्यक्तवती पर निर्भयेनास्पृश्यै र्मिलित्वा तत्सेवामकरोत् । तस्या स्वीय विषयमासीत् । यदस्या आवश्यक तदत्यल्पम् । सा सुघटितशरीरा सहचर विना सर्वत्र सचार करोति स्म । अश्वारोहण नाम तस्या सामान्यम् । गोधरानगरे सद्वृत्तपरिषदि मम तया सह गाढ परिचयोऽभूत् । 'चरखा'सबधे मम दु खमस्य न्यवेदयम् । अह राट परिशोधयितु निरतर प्रयतिष्य इत्युक्त्वा सा मम भारमल्पीचकार ॥

चत्वारिंशोऽध्यायः

# पर्यंते लब्धम्

**अनेकदिनानि** गुजरातदेशे पर्यट्य गायकवाडसस्थानवर्तिनि विजापुरनामके ग्रामे गगाबाई- महाशया पर्यन्ते 'चरखम्' लेभे । तत्रानेकजनाना समीपे 'चरखा' बभूवु । परतु बहो कालात् पूर्वमेव सर्वे कच्चरमिव्युपरिकोष्ठेषु प्राक्षिपन् । यदि कश्चिदस्माकमनारत तूलपिंडान् दद्याद्यदि च वीतनानत्र क्रीणीयात्तदा वय पुनस्तातराय सिद्धा स्म इति गगाबाईमहाशयामब्रुवन् । इम मतोपवृत्तात गगाबाईमहाशया मह्य न्यवेदयत् । तूलपिंडसप्राप्तिर्दुष्करा प्रत्यभात् । अहमेतत्काष्ट दिवगत उमरसुबानीमहाशय न्यवेदयम् । स च स्वीययत्रात् प्रेषयिष्यामीति प्रतिपद्यातस्तमेक पर्यहार्षीत । सुबानीमहाशयात्प्राप्तस्तूलपिंडान् गगाबाईमहाशयायै प्राहैषम् । अल्पेनैव कालेन

सूत्रमागतुमुपाक्रमत् । अस्य प्रवाहः कियत् त्वरित आसीदिति चेत्त निर्वोढुं मे एका समस्या बभूव ॥

उमरसुवानीमहाशयस्यौदार्यं तावदगाधमासीत् । परन्तु तेनापरिमितं प्रयोजनं लब्धुं नोचितमासीत् । सर्वदा तन्मूलकं तूलपिंडानामानयनं मम मनःसंकोचस्य कारणमभूत् । एतदधिकं यन्त्रनिर्मिततूलपिंडानुपयोक्तुमेव प्रथमतो दोष इति मम भासते स्म । यन्त्रनिर्मिततूलपिंडानुपयोजयेद्यदि यन्त्रनिर्मितसूत्रं कस्मान्नोपयोजयेत् । अस्मत्पूर्वजानां न कुतश्चिद्यन्त्रात्तूलपिंडा लभ्यन्ते स्म । एवं चेत्ते तूलपिंडान् कथं कुर्वन्ति स्म । मम मनस्येवंविचारेषु सत्सु तूलपिंडप्रापका ऊर्णमार्जका अन्वेषणीया इति गंगाबाईमहाशयाया असूचयम् । सा सविश्वासं कार्यं स्वीचकार । सा ऊर्णमार्जकं तूलमार्जने सज्जीकृत्य नियोजयामास । स च प्रतिमासं पंचत्रिंशद्रूप्यकाणां तदधिकं वा वेतनममार्गत् । अहं तत्काले यद्वा तद्वा मूल्यमस्तु तदधिकमिति नैवागणयम् । समृष्टतूलात् तूलपिंडं कर्तुं सा कतिपयबालकाननशिक्षयत् । अहं मोहमय्यां तूलार्थं भिक्षामयाचे । श्री यशवन्तप्रसाददेसाईमहाशयस्तत्क्षणमिमं भारमुवाह । एवं गंगाबाईमहाशयाया साहसं निरीक्षितादधिकं प्रवृद्धम् । विजापुरग्रामे वीतसूत्रस्य वयनाय जनमन्वैषयत् । शीघ्रमेव विजापुरं 'खादी' प्रसिद्धमभूत् ॥

एतेषु सर्वेषूद्यमेषु विजापुरे निर्वृत्ते आश्रमे 'चरखो' त्वरितगत्या प्रमुखस्थानं लेभे । स्वस्य सहजां यन्त्रनिर्माणशक्तिं सर्वामुपयुज्य मगनलालगान्धिमहाशयस्तातचरखमनेकविधयोत्तमं चकार । चक्राणि तत्सहायकेतरसामग्री चाश्रमे सिद्धानि भवितुमुपचक्रमिरे । आश्रमे प्रथमतो निर्मितं 'खाद्या' 'गजस्य' सप्तदशाणका मौल्यमासीत् । एतदतिस्थूलं 'खादी' तन्मूल्येन क्रेतव्यमिति मित्राणां चक्षु न निकम्पितं मया ॥

अहं मोहमय्यां रुग्ण आसम् । तथापि मम तत्र चक्रमन्वेषयितुं पर्याप्तं चैतन्यमासीत् । पर्यन्ते द्वौ सूत्रकारौ मम चक्षुःपथमागतौ । तौ एकं 'सेर' चतुर्विंशति 'तोलानि' अथवा प्रायः ¾ 'पौंड'सूत्रस्यैकं रूप्यकं मौल्यमगृहीताम् । तदानीं मे 'खाद्या' अर्थशास्त्रं न विदितम् । तदानीं हस्तनिर्मितसूत्रं लब्धुं मूल्यं यद्वा तद्वा भवतु तदधिकमिति नाहमगणयम् । विजापुरग्रामे प्रचलितमूल्यं एतन्मूल्यं च तुलयित्वा परीक्ष्यमाणे मां वंचयन्ति स्मेति ज्ञातम् । ते सूत्रकाराः स्वीयमूल्यमन्नीकर्तुं न समेनिरे । ततोऽहं तान् परित्यक्तवान् । किंतु तेभ्य उपयोगः विना नासीयत । ते श्रीमती अवन्तिकाबाई-रमाबाईकामदार-महाशयाभ्यां श्री-शंकरलालबैंकरमहाशयस्य मातापि च श्रीमती वसुमतीबाईमहाशयायै च सूत्रं शिक्षयामासुः । चक्रं मम प्रकोष्ठे आनंदेन गातुमुपाक्रमत । अहं पुनरारोग्यस्थितिं प्राप्तुं तस्य मधुरनादेन कृतसाहाय्यं नाल्पमिति उक्तिर्नातिशयिनी । तस्य परिणामः शारीरिकापेक्षया मानसिकोऽधिक-मासीदित्यंगीकरोमि । परन्त्वेतन्मनुष्यस्य शरीरोपरि मानसिकपरिणामस्य प्रभावः कियानिति

व्यक्तीभवति । अहमपि चक्रस्य हस्तमाक्षिप्तवान् परंतु तत्कालेऽधिकं मया न कृतम् । पुनर्मोहमय्यामपि सैव पुराणी समस्या । हस्तनिर्मिततानस्य संपादनं प्राप्तम् । प्रतिदिनमेकं तूलमार्जकं स्वधनुः ‘ठें’ इति शब्दयन् श्रीरेवाशंकरजवेरीमहाशयस्य गृहस्याग्रे गच्छति स्म । स तस्मिन्नाहूय विचार्यमाणे शय्यापूरणाय कार्पासमार्जनीति विदितमासीत् । तूलपिंडं कर्तुं कार्पासमार्जनाय स समेने । तेन मार्गिना भृतिरधिकासीत् । तथाप्यहं तद्दत्तवान् । एवं निर्मितसूत्रं पवित्रैकादशीपूजार्थं मालिका कर्तुं मम वैष्णवमित्रेभ्यः प्रादाम् । शिवजीमहाशयो मोहमयीनगरे एकां तानवश्रेणीमुद्घाटयत् । एभ्यः प्रयोगेभ्यो बहुधनं व्ययीकृतम् । किंतु तत्सर्वं ‘खादी’विश्वासिनो देशभक्ताः सुहृदः सतोऽवेणोढुः । एवं व्ययीकृतं धनं न व्यर्थमासीदिति मम नम्राभिप्रायः । तेनास्माभिरमूल्योऽनुभवो लब्धः । ‘चरखं’स्य सभाग्योपयोगः स्पष्ट आसीत् ॥

इदानीमहं मम परिधानार्थं सर्वां ‘खादी’मेवोपयोक्तुमातुरोऽभवम् । मम ‘धोती’ अद्यापि स्वदेशीयन्त्रस्यैवासीत् । आश्रमे विजापुरग्रामे च निर्मीयमाणं ‘खादी’ विशालता त्रिंशदंगुलमात्रा बभूव । एतस्मिन्मासे पंचचत्वारिंशदंगुलखादी धोत्रं न लभ्यते चेदहं स्थूलां ‘खादी’ धोतीमेव परिधास्य इति गंगाबाईमहाशयायै सूचनामदाम् । एतेन साकस्मात्त्रासिता तथापि मे प्रार्थना तद्योग्यता नातिक्रान्ता । सा एकमासाभ्यन्तरेणैकं धोत्रयुगलं ५० विशालं प्राहैषीत् । यद्येवं सा नाकरोत्तदा मम सन्निवेशः कष्टोऽभविष्यत् । एतेन सा मामुद्धृतवती ॥

प्रायशोऽस्मिन्नेव समये श्रीलक्ष्मीदासमहाशयो ‘रामजी’नामकतन्तुवायं तस्य भार्यां गंगाबाईमहाशया च ‘लाठी’ नामकग्रामादाश्रममानीयाश्रमे ‘खादी’मवाययत् । ‘खादी’प्रसारं एतद्दंपतीभ्यां योढं पात्रं नागण्यमासीत् । गुजरातदेशे तद्बहिश्च । बहूनामेतौ हस्ततानवसूत्रस्य वयनं शिक्षयामासतुः । गंगाबाईमहाशया वेमशालायन्त्रीमुपविष्टा द्रष्टुं विस्मयदृश्यमभूत् । निरक्षरापीयं स्वाधीनचित्तसहोदरी वेमशालायन्त्र्युपविष्टा चेत्तस्या मानसीदृष्टिस्तस्मिन्नेव लीना भवति । तदानीं तल्लक्ष्यमितरत्राकृष्टुं दुष्करम् । वेमानं विहाय यथा तद्दृष्टिरितरत्र पतेत्तथा कर्तुमितोऽपि कष्टतरम् ॥

हिन्दुस्थानस्यावश्यकतापेक्षयात्र सञ्जीभवद्वस्त्रमतीवाल्पमित्यवधातव्यम् । अत स्वदेशीप्रश्न इति चेत्प्राधानतया वस्त्रसंपादनप्रश्न इति परिणमति । पर्याप्त वस्त्राणि संपाद्य तस्य गुणमुत्तम विधाय तत्क्षणमेव विदेशीवस्त्राणामागमन स्वयमेव विरंस्यति । अतो मम सूचनेयती । इदानीं विद्यमानरीत्या स्वगतिप्रचारो निरोधनीय । भवल्लक्ष्य नूतनयन्त्रकार्यस्थापने परिवर्त्यताम् । अस्माक यदावश्यक तत्पर्याप्तवस्त्रनिर्माणमेव । अस्मद्वस्त्राना ग्राहकापेक्षा न विद्यते ॥

पूर्वमेव मया तदेतत्कार्यं क्रियते चेद्यूय मम प्रयत्नमाशिषा योजयथ खलु । इति पृष्टो मया किंचिदाश्चर्यभरित प्राह यथा–कथमिद साध्यम् । भवान्नूतनयन्त्राणा स्थापनोद्यममालोचयतीति मन्ये । एव चेद्भवानभिनन्दनार्ह इति ॥

मया तन्न क्रियते । सूत्रनिर्माणचक्रस्य पुनरुज्जीवनप्रवृत्तोऽस्मीति मया निवृत्योक्तम् ॥

किमेतद्भवतोच्यते इति दिग्भ्रान्त पप्रच्छ ॥

अह तस्य 'चरख' विचार सर्वं मया दीर्घकालेनान्वेषणकथाजातमाख्याय पुनरुक्त मया यथा भवत इव ममाप्यभिप्रायो विद्यते । अह वस्तुतो यन्त्राणा प्रतिनिधिर्भवितु नेच्छामि । तेन न किंचित्प्रयोजनमस्तु । तेन देशस्य गुणापेक्षया दोष एव भविता । इतोऽपि बहुकाल यन्त्राणा ग्राहकाल्पता न भविष्यति । हस्तसूत्रवस्त्राणा निर्माणाय व्यवस्थाय तद्विनियोगाय पर्याप्तमुपायमधिगतु मम कर्तव्यम् । अत खाद्या उत्पत्तिमुद्दिश्य संपूर्णमवधान मया दीयते । एतद्विधस्वदेश्यामस्ति मे परमो विश्वास । यन एतद्वारा क्षुधार्तानामुद्योगशून्याना स्त्रीणामुद्योगलाभो भवेत् । आभि स्त्रीभि सूत्रमुत्पाद्य ततो निर्मित'खादी' हिन्दुस्थानजनाना वेषकल्पन ममोद्देश । अयमुद्यम नियत् फलिष्यतीति वक्तुमशक्यम् । इदानीं तत्केवलमारम्भदशाया वर्तते । किंतु मे तत्र संपूर्णविश्वासो विद्यते । यत्किंचिद्वा भवतु । तेनापक्रान्त न किमपि स्यात् । तथानलोकिते देशोत्पन्नवस्त्रमल्पमपि देशस्य लाभ एव । एवमस्मदुपक्रमे भवदुक्तदोषा केऽपि न सन्तीति स्पष्टमिति ॥

तेनोत्तर दत्त यथा–भवतो व्यवस्थापनाया देशवस्त्रोत्पत्तेर्वर्धनमेव भवदुद्देशश्चेन्मया तद्व्यतिरिक्त व्याख्यातव्य न किंचिदस्ति । एतन्नैसर्गिकताल्पचलिते यन्त्रयुगे सूत्रचक्रप्रगति साध्येत्यन्य प्रश्न । अह तावद्भवतो विजयमिच्छामि ॥

द्विचत्वारिंशोऽध्यायः

# प्रवाहोद्गमः

इतः 'खादी' अभिवृद्धिप्राप्तेर्विषये मयाधिकं न लिख्यते । मम विविधकार्यकलापानां लोकाग्रगानागमनात्परं तेषां वृत्तान्तलेखनमेषामध्यायानां नोचितम् स्यात् । तथा मया लेखनप्रयत्नोऽपि न शक्यः । यतः कारणान्तरे सत्यपि तथा कर्तुमेकं ग्रन्थ एवापेक्ष्यते । मया सत्यव्रते प्रवर्तितेषु तेषु कतिपयविषया स्वयमेव मम लक्ष्यमागता इति वर्णनमात्राय एषामध्यायानां लेखनोद्देशः ॥

एवं चेदसहयोगप्रचारकथामग्रतो निरूपयिष्यामः । अलीभ्रातृभ्यां प्रवर्तितप्रचण्डप्रचारे सम्पूर्णरभसेन चलिते सति एतद्विषयेऽह विशेषतो मुसल्मानानां अहिंसानियमान् कियत्पर्यन्त-माचरितुं शक्नुवन्तीति विषयमुद्दिश्य दिवंगतमौलाना-अब्दुल-बार्यादिमहाशयैः सह उलेमाभिश्च चर्चामकरवम् । पर्यन्त एते सर्वेऽपि ऐकमत्येन इस्लामधर्म धर्मेऽहिंसाव्यवहारनीतिरूपेणानुसरणं न विरोत्स्यतीति । तन्नीतिनिमित्तेरनन्तरं तां वचनां विना सम्पूर्णतया चालयितुं मुसल्मानानां सद्धा इति चाभिप्रायं ददुः । पर्यन्तेऽसहयोगस्य निर्णयं खिलाफतसभायां निवेशितं । दीर्घचर्चानन्तरं सम्मतिं प्राप । एकदाल्लाहाबादनगरं एतत्र समितिरेतद्विषयमधिकृत्य सर्वां रात्रिं चर्चितमित्यहं स्पष्टं स्मरामि । प्रथमतो दिवंगतहकीममाहेजमहाशयोऽहिंसात्मकोऽसहयोगं कार्यरूपे साध्यं न वेति संशेते स्म । संशयनिवृत्तेरनन्तरमसहकारं पूर्णमनसा प्रविष्टः । तस्य साहाय्येन तस्यामूल्यलाभः संवृत्तः ॥

इतः स्वल्पेनैव कालेन मिलितायां गुजरातराजकीयपरिषत्महासदसि निर्णयं समार्पे न्यवेशयम् । राष्ट्रमहासभायाः पूर्वमेव निर्णयमङ्गीकर्तुं प्रान्तीयपरिषदो नाधिकारः इति प्रतिपक्षस्य प्रथम आक्षेपः । अस्योत्तरं मया सूचितं यथा—अयं निर्णयः पश्चाद्गमनाय न पुनरग्रे गन्तुमस्त्येवेति । अग्रे गन्तुमस्मत्साधीनसंस्था न केवलं पूर्णाधिकारं प्राप्ता परन्तु स्वेच्छावश्यकं धैर्यं स्थैर्यमात्मविश्वासश्च यदि विद्यन्तस्तदा प्रगतिभागानुसरणं तेषां कर्तव्यमेवेति । प्रधानसंस्था यद् गौरवं वर्धयितुं प्रयतनस्य परानुज्ञयावश्यकता नास्ति । तेन समाधिप्राप्तस्य स्वयं विना प्रधानसंस्थायाः पर्यनुयोगो नास्तीति मया वादः कृतः । अनन्तरं निर्णयस्य गुणदोषाणां चर्चा बभूव । अस्य विशेषांशो यथा चर्चायास्तीक्ष्णतापि च परस्परमादरेण गौरवेण च परिवेष्टिताचरणम् । 'मत'सूचीनां गणनायां निर्णयोऽत्यधिकबहुमतेनाङ्गीकृतोऽभूत् । अस्यसंगीकारे । श्रीवल्लभभाईमहाशयोऽपि च अब्बासतय्यबजी इति अनयोर्व्यक्तिप्रभावो न प्रान्तसाहाय्य नाल्पमासीत् । द्वितीयोऽध्यक्ष आसीत् । तस्यैवाभिप्रायपूर्णेन निर्णयं परमेवासीत् ॥

एत प्रश्नमधिकृत्यालोचयितुं निशायुत्तरैकोननिंशत्यंस्य 'सप्टेम्बर'मासे कल्कत्तानगरेऽखिल-भारतराष्ट्रमहासभाया अधिवेशनविशेष मेलयितुं महासभा समितिर्निरधारयत् । सञ्जीकरणकार्यं महदासीत् । लालालजपतराय अध्यक्ष कृत । मोहमयीत कल्कत्तानगर प्रति 'काग्रेस' अपि च 'खिलाफत' इत्येतयोर्विशिष्टा 'रैल'शकटी प्रस्थापयन् । कल्कत्ताया प्रतिनिधीना प्रेक्षमाणाना च स्तोमो मिलित मौलानाशौकतअलीमहाशयेन प्रार्थितोऽह असिमचालितशकत्यामसहकारनिर्णय मलिखम् । एतावत्पर्यन्तमहमस्य सबद्धनिर्णयेष्वहिंसामक इति पद प्रायशो न प्रयुक्तवान् । भाषणेषु स शब्दोऽस्यमेवोपयुज्यते स्म । एतद्विषयक शब्दकोश पूर्णो नासीत् । अहिंसामकशान्तिमय इति एतत् सस्कृतपदद्वारा मुसल्मानबन्धुस्थनिवेदयितुमशक्यं प्रत्यभात् । अतोऽहमब्दुलकलाम आझादमहाशयमेतदर्थप्रतिपादक शब्द सूचयितुमपृच्छम् । सोऽस्य 'बा-अमोन' इति शब्दमं-तद्वीत्यासहकारस्य 'तर्के मवालत' इति पद चासूचयत् ॥

एवमद्यापि मयि 'हिंदी'-'गुजराती' अपि च 'उर्दू' इत्येतासु भाषास्वसहकारस्य सबद्धा शब्दसामग्रीमुपस्थापयितु सञ्जीभवति सत्येतदतरे मिलत्या महासभाया अधिवेशनेऽसहयोग-रचनाभारो ममोपर्यपतत् । मया पूर्वलिखितनिर्णयेऽहिंसामक इति वाक्परित्यक्तासीत् । इद मम दृष्टि नैवागतम् । निर्णयस्तथैव तस्य शकत्यामेव प्रमाण कुर्वतो मौलानाशौकतअलीमहाशयस्य वशे दत्त आसीत् । तद्रात्रौ मम अहिंसामक इति पदस्याभावोऽस्फुरत् । प्रातरह महादेव-देसाईमहाशय निर्णयस्य मुद्रणात्पूर्वमेवैत स्खलित समीकृत यथा स्यात्तथा कर्तव्यमिति प्राहैषम् । परतु तदनुष्ठानात्पूर्वमेव मुद्रितमासीदिति स्मरामि । विषयनिर्धारकसमितिस्तद्दिने साय मिलति स्म । अतो मुद्रितप्रतिलिपि परिवर्तनीया आसीत् । निर्णयस्य शब्दरूप न सञ्जीकृत चेद्बहुकष्टमभविष्यदिति मम पश्चाद्विदितमासीत् ॥

तथापि मम स्थिति करुणाजनका बभूव । निर्णयस्यानुमोदका के विरोद्धार के इति नावगत मया । लालाजीमहाशय एतत् कया रीत्या पश्यतीति न ज्ञातम् । सप्रामाणा शतेऽनुभवशालिना वीरयोधाना गभीरव्यूह कल्कत्तानगरे योद्धु सञ्जीभूय स्थितमहमपश्यम् । डॉ. बेसट-पं मालवीय-श्री विजयराघवाचार्य-प मोतीलालमहाशयश्च केचिदेपामासन् ॥

मम प्रस्तावे पजाबदेशस्यात्याचारस्य खिलाफतवचनभगस्य च चिकित्सायै केवलमसहयोग प्रस्तावित आसीत् । परतु तत् श्रीविजयराघवाचार्यस्य मनस सम्मत नासीत् । तेनैव वाद कृतो यथा—असहयोग प्रसारणीयश्चेत् सर्वव्यापकस्य महत्तमान्यायस्य सबधे प्रसारण विना एकद्वि अन्यायान् वृत्वा तावन्मात्र किमिति प्रसारणीयम् । स्वराज्यस्याभाव एव राष्ट्रस्य सर्वाधिकारोऽन्याय । अत सहकार स्वराज्यसाधनायैवोपयोक्तव्य इति । पडितमोतीलालश्च स्वराज्यसाधन निर्णयान्प्रवेष्टुमैच्छत् । अहमेतमाशय तक्षणमेव स्वीकृत्य स्वराज्यसाधन निर्णये लिखितवान् । निर्णयस्य चर्चा समग्रतया पर्यनुयोक्तव्यताबुद्ध्या प्रवृत्ता । वातावरण किंचिदशात-

# समाप्तिः

**एतानध्यायानन्तं** गमयितु काल प्राप्त । इत पर मम जीवन कियद्बहिरग जातमिति चेत्तत्र जनानामविदितोंऽशो नास्त्येवेति वक्तु शक्यम् । अपर चैकत्रिंशत्यधिकोनविंशति मिताद्वर्षात् प्रभृति राष्ट्रमहासभाया प्रमुखै सहायासमन्वेन कार्यस्य विहितत्वात्तदितो मम जीवमाने प्रवृत्ता काचिदपि मघटना तत् मम्बन्धमनिकृत्य लेखन विना विवरीतु न शक्यम् । यत स्वामीश्रद्धानन्दो देशबन्धुमहाशयो हकीमसाहेबमहाशयोऽपि च लालजीमहाशयो यद्यप्येतेऽद्य न जीवन्ति तथाप्यस्मत्सुदैवेन महासभाया इतरयोगाग्रण्यैरस्माभि सह कार्य निर्वहतो जीवन्ति । मयोपरि विवृतमहासुधारणाभ्योऽर्वाचीन महासभाचरितमद्यापि न पक्व भवति । अतो मया मम प्रयोगानित पर च वर्णयितुमपक्रम्यते चेत् प्रमुखै सह मम सबन्ध न विवरीतु न शक्यम् । एतदह सत्य एवापि न कुर्यामौचित्यदृष्ट्या । चरम कारण चेदानीं मिलितानां प्रयोगाणा विषये मया कृतनिर्णया सुनिश्चिता इति वक्तु न शक्यम् । अतो वृत्तान्तगेतमत्र समापयितु ममेष्टकर्तव्य प्रतिभाति । किमेतावता मम लेखन्येन सहनशा सना निश्चलता प्राप्ता । पाठका परिहर्तव्या इति स्थितिमभिगतस्य मम संकट नास्तीति न । मम प्रयोगाणामधिक मूल्यमाधास्ये । तेषा योग्यतानुरूप मया ते विवृता न वेति न जाने । विश्वासयोग्य वृत्तान्त लेखितु यावच्छक्ति मया प्रयत्न कृत इति ब्रूयाम् । यथा सत्य मे दृष्टिगोचरो यथा येन मार्गेण तदद्राक्ष तत्सर्व यथा तथा वर्णयितुमेव मम निरतप्रयत्नो भवति । एतेनाभ्यासेन ममानिर्वर्णनीया मन शान्तिरलभ्यत । यत एतेन सहायामना सत्येऽहिंसायां च भक्तिरुदियादित्याशा ममोत्पन्ना ॥

मम सर्वत्रानुभवे सत्य विना न कोऽपि देवोऽस्तीति मनसि रूढ भवति । सत्य साधनायाहिंसैक एव मार्ग इत्येतत्कथा प्रत्येक पुट न सारयेयादि मयैषा सर्वेषामध्यायाना लेखनश्रमोऽपि व्यर्थ इति गणयामि । कदाचिदस्मिन् श्रमे निष्फले परिणमत्यपि तत्र कारण मूलतत्त्वमहमेव । न पुनस्तत्तत्त्वमिति ज्ञायताम् । अहिंसा साधयितुं मे प्रयत्ना श्रद्धान्विता यद्यपि तेऽपूर्णा अपक्वाश्च भवन्तीत्येव वक्तव्यम् । अस्माभि प्रतिदिन दृश्यमानस्य सूर्यस्य प्रभापेक्षया सत्यस्य तेजो दशलक्षाधिक भवति तस्य प्रकाशो वर्णयितुमशक्य । तस्य सहस्र कोटिकिरणेष्विदानीमेकस्त्विदानीमेक इति मम दृष्टिगोचर मवृत्त । अत सत्यस्य निजस्वरूप परिमाणमभ्यूहितु न शक्यम् । वस्तुतो यन्मे दृष्टान्तरहित तत्प्रचण्डतेजोराशेर्मन्दद्युतिर्भवति । परतु मत्प्रयोगाणा फलितांश प्रकृत्यैवात्र मात्रविश्वासेन वक्तु समर्थो यत सत्यस्य पूर्णसाक्षात्कार नापूर्णमहिंसा पूर्णरीत्या साधनीया ॥

महासभाया व्यवस्थाक्रमस्य प्रतिपरिशीलनं प्रकृत्य यो निर्णय सोऽप्यस्मिन्नेवाधिवेशने चर्चास्पदीकृतमासीत्। उपसमित्या सूचितो निर्णय कलकत्तानगराधिवेशन एव महासभाया अग्रे स्थापित । अतस्तद्विषयेऽभिप्रायप्रकटन चर्चा च सपूर्णतया प्रवृत्तम्। यदा नागपुरस्याधिवेशने एतदतिमनिर्णयायागत तदा श्रीविजयराघवाचार्योऽध्यक्षोऽभूत्। विषयनिर्धारकसमितिर्निर्णयमेवा एकेनैव मुख्यपरिवर्तनेन स्वीचकार। मया लिखितनिर्णये प्रतिनिधीना सख्या पचशतोत्तर-साहस्रमासीत्। विषयनिर्धारकसमितिरेतत् षट्साहस्रमिति परिवर्तयामास। एव साहसेन कृतो निर्णय इति मम गणना। एतेषु वर्षेषु मम सर्वोऽनुभवो मम॑तमभिप्राय स्थिरीकरोति। प्रतिनिधिय-धिकसख्याकेषु कार्यनिर्वाहस्य साहाय्य भवतीति वैतप्रजाप्रमुत्वतत्त्व रक्षतीति वा विश्वास केवल भ्रान्तिरेवेत्यह ब्रवीमि । यथा कथ वा भवत्विति परिगृहीते फले सपदि पर्यनुयोगशून्यजनापेक्षया प्रजाहितरक्षका विशालमानसा सत्यशीलाश्च पचदशशत-प्रतिनिधयेऽतीवोत्तमा प्रजातत्ररक्षका भवन्ति । प्रजातत्ररक्षणाय जनेषु प्रखरस्वातत्र्येच्छा स्वाभिमान ऐक्यभावश्च भवितुमर्हन्ति । अपर च ते सत्यशीलान् प्रामाणिकानेव स्वप्रतिनिधीन् वरितु करुणबद्धा भवितुमर्हति । परतु विषयनिर्धारकसमिते सख्या भ्रमेण प्रस्ततया तस्या षट्सहस्रमतिक्रम्य गन्तुमपि इष्टमासीत्। तथा च समत स्वस्वात् निविविवर्तनेन ॥

महासभाया ध्येयमधिकृत्य विशेषतश्चर्चा सवृत्ता। मया महासभाया समर्पितव्यवस्था-क्रमाख्याने ध्येय शक्य चेत् ब्रिटिशचक्राधिपत्यस्यातो नो चेत्तद्बहि स्वराज्य साधनीयमित्यासीत्। महासभाया एक पक्ष एतद्ध्येय साम्राज्यस्यात स्वराज्यसाधनाय केवल व्यवस्थापयितु-मैच्छत्। अस्य पक्षस्याभिप्रायान् प. मालवीयजीमहाशयो झीणामहाशयश्च व्यक्तीचक्रतु। तथापि ताभ्यामविकसतसूचयो न लब्धा। तस्मिन्नाख्याने स्वराज्यसाधन च शातवादेन न्यायवादेन भवितव्यमित्यासीत्। साधनमार्गो नियमैर्न नियत्रयितव्य इति वादेनैला प्रगति विरुद्धा। परतु एतद्विषयिणी चर्चा शिक्षाप्रदा निसकोचा च यदा प्रवृत्ता तदनतर महासभा मूलनिर्णय-मेवागीचकार। एतद्व्यवस्थायत्र प्रजाभि प्रामाणिकतया चातुर्येणोत्साहेन च चलित चेत्तप्रजा-शिक्षण प्रसारयितु प्रबलसाधन भवति स्म। अपि च कार्यनिर्वाह एवास्माक स्वराज्यमानेष्यति स्मेति ममाभिप्राय । परत्वेतद्विषयमधिकृत्य चर्चयितुमप्रस्तुत न भवति ॥

हिंदुमुसल्मानानामैक्यमस्पृश्यतानिवारण खादीप्रचार एतद्विषयानधिकृत्यास्मिन्नधि-निवेशने निर्णया अगीकृता बभूवु । तदाप्रभृति हिंदुसदस्या हिंदुधर्मेणास्पृश्यताकलक दूरीकर्तु पर्यनुयोगता स्वोपरि वहन्ति। अपि च महासभा भरतखडस्य सजीवास्थिपजरै सह 'खादी'द्वारा चैतन्यदायकसंबधं स्थापितवती। 'खिलाफत'मुद्दिश्याहयोगाचरण महासभायामगीकृत्न महत्वार्थक्य प्रयत्न आसीत् ॥

# समाप्तिः

**एतानध्यायानन्तं** गमयितु काल प्राप्त । इत पर मम जीवन कियद्बहिरग जातमिति चेत्तत्र जनानामविदितोंऽशो नास्त्येवेति वक्तु शक्यम् । अपर चैकत्रिंशत्यधिकोनविंशति मिताब्दर्यात् प्रभृति राष्ट्रमहासभाया प्रमुखै सहात्यासन्नत्वेन कार्यस्य विहितत्वात्तदितो मम जीवमाने प्रवृत्ता काचिदपि सघटना तत् सत्रधर्मानकृत्य लेखन विना विवरीतु न शक्यम् । यत स्वामीश्रद्धानदो देशबधुमहाशयो हकीमसाहेबमहाशयोऽपि च लालजीमहाशयो यद्यप्येतेऽद्य न जीवन्ति तथाप्यस्मत्सुदैवेन महासभाया इतरयोराग्रण्यैरस्माभि सह कार्य निर्वहतो जीवन्ति । मयोपरि विवृतमहासुधारणाभ्योऽर्वाचीन महासभाचरितमद्यापि न पक्व भवति । अतो मया मम प्रयोगानित पर च वर्णयितुमपक्रम्यते चेत् प्रमुखै सह मम सबध न निवरीतु न शक्यम् । एतदह सब एनापि न कुर्यामौचित्यदृष्ट्या । चरम कारण चेदानीं मिलिताना प्रयोगाणा विषये मया कृतनिर्णया सुनिश्चिता इति वक्तु न शक्यम् । अतो वृत्तातमेतमत्र समापयितुं ममेष्टकर्तव्य प्रतिभाति । किमेतावता मम लेखन्येन सहजज्ञा सती निश्चलता प्राप्ता । पाठका परिहर्तव्या इति स्थितिमधिगतस्य मम संकट नास्तीति न । मम प्रयोगाणामधिकं मूल्यमाधास्ये । तेना योग्यतानुरूप मया ते विवृता न वेति न जाने । विश्वासयोग्य वृत्तात लेखितु यावच्छक्ति मया प्रयत्न कृत इति ब्रूयाम् । यथा सत्य मे दृष्टिगोचरो यथा येन मार्गेण तदद्राक्ष तत्सर्व यथा तथा वर्णयितुमेव मम निरतप्रयत्नो भवति । एतेनाभ्यासेन ममानिर्वर्णनीया मन शातिरलभ्यत । यत एतेन राशयात्मना सत्येऽहिंसाया च भक्तिरुदियादित्याशा ममोत्पन्ना ॥

मम सर्वत्रानुभवे सत्य विना न कोऽपि देवोऽस्तीति मनसि रूढ भवति । सत्यसाधनायाहिंसैक एव मार्ग इत्येतत्कथा प्रत्येक पुट न सारयेद्यदि मयैषा सर्वेषामप्यध्यायाना लेखनश्रमोऽपि व्यर्थ इति गणयामि । कदाचिदस्मिन् श्रमे निष्फले परिणमत्यपि तत्र कारण मूलतत्त्वमहमेव । न पुनस्तत्तत्त्वमिति ज्ञायताम् । अहिंसा साधयितु मे प्रयत्ना श्रद्धान्विता यद्यपि तेऽपूर्णा अपकाश्च भवन्तीत्येव वक्तव्यम् । अस्माभि प्रतिदिन दृश्यमानस्य सूर्यस्य प्रभापेक्षया सत्यस्य तेजो दशलक्षाधिक भवति तस्य प्रकाशो वर्णयितुमशक्य । तस्य सहस्र कोटिकिरणेष्विदानीमेकत्वदानीमेक इति मम दृष्टिगोचर सवृत्त । अत सत्यस्य निजकान परिमाणमभ्यूहितु न शक्यम् । वस्तुतो यन्मे दृष्टातरहित तत्तप्रचंडतेजोराशेर्मंदसुनिर्भवति । परतु मत्प्रयोगाणा फलितांश प्रकृत्यैताव मात्रविश्वासेन वक्तु समर्थो यत सत्यस्य पूर्णकातेर्दर्शनात्पूर्वमहिंसा पूर्णरीत्या साधनीया ॥

सर्वव्यापी सत्यनारायण प्रत्यक्षीकर्तव्यो यद्येतज्जगतोऽतिहीनप्राणिनमप्यात्मवदनुरागेण द्रष्टु योग्यो भवेत् । एतत्साधयितुमिच्छुर्जीवनस्य किमपि क्षेत्रं त्यक्तु न समर्थ । एतेनैव मम सत्योपासना मा राजकीयरगमाचकर्ष । राजकारस्य धर्मस्य च नास्ति सबन्ध इति ये प्राहुस्ते धर्म किमिति न जानन्तीत्यह नि सदेह नम्रतया वक्तु शक्नोमि ॥

आत्मशुद्धि विना सकलप्राणिष्वप्यात्मीयतादर्शनमसाध्यम् । आत्मशुद्धि विनाहिंसाचरण नाम केवल स्वप्न एव । यस्यात शुद्धिर्नास्ति स ईश्वरसाक्षात्कार न कदाप्यधिगच्छेत् । अत आत्मशुद्धिस्तावज्जीवनस्य सकलक्षेत्रेष्वपि शुद्धतास्थापनमित्यदोषो भवितुमर्हति । शुद्धिरिति वेगेन प्रसरणस्वभावात आत्मशुद्धिरवश्यमेवापरशुद्धि करिष्यति ॥

किंत्वात्मशुद्धे पथा कठिनो दुरारोहश्च । सपूर्णशुद्धिसाधक कायेन वाचा मनसापि निर्विकारो भवितुमर्हति । रागद्वेषौ नाम परस्परविरुद्धौ प्रवाहावतिक्रामेत् । अह निरतरप्रयत्नवानप्येषा त्रिमुखशुद्धिर्मया नार्जितेत्यह जाने । अत एव जगत प्रशसा मा न सतोषयति । पुनर्दृष्टे तदनेकशो मनोव्यथा जनयति । शस्त्रयुद्धेन बाह्यप्रपचविजयापेक्षयाप्यान्तरौ सूक्ष्मगती रागद्वेषा जेतुं दु साध्य मे प्रतिभाति । मम भरतखड प्रति निवर्तनात्प्रभृति मदतो निगूढशायिनावेतौ विकारौ ममानुभवमागतौ स्त । अस्य ज्ञानेनाह लज्जितोऽस्मि । न पुनर्हृदयभगो जात । एतेऽनुभवा प्रयोगाश्च मम जीवितभारमपनिन्यु । अत्यानदमजनयन् । किंत्वद्यापि ममाग्रतो दुर्गमो मार्गो विद्यत इति मया ज्ञातम् । मया शून्येन भवितव्यम् । स्वय सर्वेभ्यो हीन इति स्वतन्त्रबुद्ध्यावगमनपर्यंत कस्यापि नास्ति मोक्ष । अहिंसा हि नम्रभावस्य चरम सीमा ॥

इत पाठकानामनुज्ञया एतद्वृत्तात तात्कालिक वापि समापयिष्यामि । तैरनुज्ञापितोऽहमेव विज्ञापये सत्यमूर्तिरीश्वरो मम कायेन वाचा मनसाहिंसावर प्रदेयादिति प्रार्थनाया तेऽपि मया सह भागिनो भवन्त्विति ॥

इति श्रीगाधीमहात्मन
सत्यशोधनाख्यायामात्मकथाया
पञ्चमो भाग
समाप्त